# काव्यसंग्रहः।

## प्रथमोभागः।

बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विरचितया व्याख्यया समलङ्कृतः।

तृतीयसंस्करणम्।

कलिकाताराजधान्याम्।

सरस्वतीयन्त्रे

मुद्रितः।

ई १८८८।

# श्रीजीवानन्दविद्यासागरकृत व्याख्यान-सहितस्य काव्यसंग्रह-प्रथमभागस्य सूचीपत्रम्।

काव्यसंग्रहस्य प्रथमे भागे स्थितानाम् एतेषां सप्तत्रिंशत्-

संख्यकानां काव्यानां टीकाकर्त्ता

श्रीजीवानन्दविद्यासागरभट्टाचार्य्यः ।

———

# आर्य्यासप्तशती।

पाणिग्रहे पुलकितं वपुरैशं भूतिभूषितं जयति।
अङ्कुरित इव मनोभूर्यस्मिन् भस्मावशेषोऽपि ॥ १ ॥
मा वम संवृणु विषमिदमिति सातङ्कं पितामहेनोक्तः।
प्रातर्जयति सलज्जः कज्जलमलिनाधरः शम्भुः ॥ २ ॥

पाणिग्रहे इति। भूतिभिर्भस्मभिः भूतिर्भस्मनि सम्पदीत्यमरः। भूषितम् अलङ्कृतम् ऐशं शैवं वपुः शरीरं पाणिग्रहे परिणयविधौ पार्वत्या इति शेषः। पुलकितं रोमाञ्चितं पार्वतीकरस्पर्शेन सत्त्वोदयादिति भावः। जयति सर्वोत्कर्षेण वर्त्तते। भस्मावशेषोऽपि दग्धत्वात् भस्ममात्रावशिष्टोऽपि मनोभूः कामः यस्मिन् वपुषि अङ्कुरित इव सञ्जाताङ्कुर इव आसीदिति शेषः। उत्प्रेक्षालङ्कारः। उक्तञ्च दर्पणे। भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति। अस्य ग्रन्थस्य आर्य्याच्छन्दोनिबद्धसप्तशतीसङ्ख्यकपद्यमयत्वेनार्य्यासप्तशतीत्वं बोध्यम्। आर्य्याच्छन्दश्च यथा। यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति ॥ १ ॥

मेति। कज्जलेन अञ्जनेन पार्वतीनयनचुम्बनलग्नेनेति भावः मलिनः कृष्णः अधरः वदनच्छदः यस्य तथाविधः अतएव प्रातः सलज्जः सञ्जातत्रपः शम्भुः पितामहेन ब्रह्मणा इदं विषं हलाहलं मा वमः न उद्गिर संवृणु उदरसात्करणेन पिधेहीत्यर्थः इति सातङ्कं सभयं जगद्विध्वंससम्भवादिति भावः उक्तः कथितः जयति। भ्रान्तिमानलङ्कारः। तदुक्तं दर्पणे, साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति ॥ २ ॥

जयति प्रियापदान्ते गरलग्रैवेयकः स्मरारातिः ।
विषमविशिखे विशन्निव शरणं गलबद्धकरवालः ॥ ३ ॥
जयति ललाटकटाक्षः शशिमौलेः पक्ष्मलः प्रियाप्रणतौ ।
धनुषि स्मरेण निहितः सकण्टकः केतकेषुरिव ॥ ४ ॥
जयति जटाकिञ्जल्कं गङ्गामधु मुण्डवलयवीजमयम् ।
गलगरलपङ्कसम्भवमम्भोरुहमाननं शम्भोः ॥ ५ ॥
सन्ध्यासलिलाञ्जलिमपि कङ्कणफणिपीयमानमविजानन् ।

जयतीति । गरलं विषं ग्रैवेयकं ग्रीवाभूषणं यस्य तथोक्तः नीलकण्ठ इत्यर्थः स्मरारातिः मदनान्तकः प्रियायाः गौर्य्याः पदान्ते पदतले पतित इति शेषः अतएव गलबद्धकरवालः गलधृतासिः सन् विषमविशिखे कामे पराजितशत्रावित्ति भावः शरणं विशन्निव गच्छन्निव हे काम ! त्वं मे त्राता भवेति ब्रुवाणेवेति भावः जयति मानिन्याः कामिन्याः मानभञ्जने कामस्यैव प्रभुत्वमिति तस्मात् शरणागतत्वं युक्तमिति व्यज्यते । अन्योऽपि गलबद्धशस्त्रः शरणं गच्छतीति प्रसिद्धिः । उत्प्रेक्षालङ्कारः ॥ २ ॥

जयतीति । प्रियायां गौर्य्यां प्रणतौ तत्पादपतने इत्यर्थः शशिमौलेः चन्द्रशेखरस्य पक्ष्मलः प्रशस्तलोमराजित इत्यर्थः ललाटकटाक्षः तृतीयनयनापाङ्गदर्शनं स्मरेण कामेन धनुषि निहितः योजितः सकण्टकः कण्टकान्वितः केतकेषुरिव केतककुसुमरूपशर इव जयति ॥ ४ ॥

जयतीति । जटा एव किञ्जल्काः केशरा यस्य तथोक्तं गङ्गा शिरश्चारिणी मन्दाकिन्येव मधु मकरन्दः यस्य तथाविधं मुण्डानां कपालानामिति भावः वलयं मण्डलमेव बीजं तस्मात् तद्वलयकृतमिति भावः शम्भोर्हरस्य गलगरलपङ्कसम्भवं गलस्थितं गरलमेव पङ्कः तदुत्पन्नं तद्गतस्थितमित्यर्थः अम्भोरुहं पद्ममिव आननं वदनं जयति ॥५॥

सन्ध्येति । गौर्य्याः रुष्टे कुपितम् अभिनिविष्टं मनो येन तथाभूतः

गौरीमुखार्पितमना विजयाहसितः शिवो जयति ॥ ६ ॥

प्रतिबिम्बितगौरीमुखविलोकनोत्कम्पशिथिलकरगलितः ।
स्वेदभरपूर्य्यमाणः शम्भोः सलिलाञ्जलिर्जयति ॥ ७ ॥

प्रणयकुपितप्रियापदलाक्षासन्ध्यानुबन्धमधुरेन्दुः ।
तद्वलयकनकनिकषग्रावग्रीवः शिवो जयति ॥ ८ ॥

पूर्णनखेन्दुर्द्विगुणितमञ्जीरा प्रेमशृङ्खला जयति ।

अतएव सन्ध्यायां यः सलिलाञ्जलिः देवतोद्देशेन दीयमानमञ्जलिपूर्णं जलमित्यर्थः तमपि कङ्कणफणिना वलयीभूतभुजङ्गेन पीयमानम् अविजानन् अबुध्यमानः शिवः विजयया प्रियासख्या हसितः सन् जयति ॥ ६ ॥

प्रतिबिम्बितेति । प्रतिबिम्बितस्य स्वस्मिन् प्रतिबिम्बं गतस्य गौर्य्या मुखस्य विलोकनेन दर्शनेन य उत्कम्पः सत्त्वजनितो वेपथुः तेन शिथिलः दृढबन्धरहित इत्यर्थः यः करः हस्तः तस्मात् गलितः भ्रष्टः स्वेदानां घर्मसलिलानां सत्त्वजनितानामिति भावः भरेण अतिशयेन पूर्य्यमाणः पूर्णतामापाद्यमानः सलिलाञ्जलिः सन्ध्यावन्दनावसरे इति भावः जयति सर्वोत्कर्षेण वर्त्तते करात् भ्रंशनेऽपि स्वेदसलिलपूर्य्यमाणत्वकथनात् चमत्कारित्वेन सर्वोत्कर्ष इति भावः ॥ ७ ॥

प्रणयेति । प्रणयेन कुपितायाः प्रियायाः गौर्य्याः पदलाक्षा चरणालक्तकरस एव सन्ध्या तस्या अनुबन्धेन सम्बन्धेन मधुरः मनोहरः इन्दुलोहित्ययोगादिति भावः इन्दुः शिरःस्थितचन्द्रो यस्य तथाभूतः पादपतनकाले इति भावः तथा तस्या वलयकनकस्य कङ्कणकाञ्चनस्य निकषग्रावा निकषोपलभूता ग्रीवा कण्ठः यस्य तथाभूतः मानभञ्जनानन्तरमालिङ्गने इति भावः कण्ठस्य कृष्णत्वात् निकषग्रावत्वमिति बोध्यम् ॥ ८ ॥

पूर्णेति । गौर्य्याश्चरणयोः अङ्गुलिषु मध्ये गुल्फे च पूर्णः

हरशशिलेखा गौरीचरणाङ्गुलिमध्यगुम्फेषु ॥ ९ ॥

श्रीकरपिहितं चक्षुः सुखयतु वः पुण्डरीकनयनस्य ।
जघनमिवेक्षितुमागतमब्जनिभं नाभिसुषिरेण ॥ १० ॥

श्यामं श्रीकुचकुङ्कुमपिञ्जरितमुरो मुरद्विषो जयति ।
दिनमुखनभ इव कौस्तुभविभाकरो यद् विभूषयति ॥ ११ ॥

प्रतिबिम्बितप्रियातनु सकौस्तुभं जयति मुरभिदो वक्षः ।
पुरुषायितमभ्यस्यति लक्ष्मीर्यद् वीक्ष्य मुकुरमिव ॥ १२ ॥

प्रभापुष्ट इत्यर्थः नखेन्दुः नखचन्द्रः यया तथोक्ता, द्विगुणितः द्विराकृतः मञ्जीरः नूपुरः यया तादृशी तथा प्रेम्णः शृङ्खला बन्धनरज्जुरूपेत्यर्थः हरस्य शशिलेखा शिरस्थचन्द्रकला जयति सर्वोत्कर्षेण वर्त्तते ॥ ९ ॥

श्रीकरेति । नाभिसुषिरेण नाभिगर्त्तेन पथेति भावः जघनं कटिपुरोभागं लक्ष्म्या इति शेषः स्त्रीकट्याः जघनं पुर इत्यमरः । ईक्षितुं द्रष्टुमिव आगतं प्रसारितमिति यावत् अतएव श्रियाः कराभ्यां पिहितम् आच्छादितम् अब्जनिभं कमलसदृशं पुण्डरीकनयनस्य पुण्डरीकाक्षस्य कृष्णस्य चक्षुः वः युष्मान् सुखयतु सुखीकरोतु ॥ १० ॥

श्याममिति । कौस्तुभं तदाख्यं रत्नमेव विभाकरः सूर्य्यः दिनमुखस्य दिवसारम्भस्य नभः आकाशमिव यत् विभूषयति रञ्जयति नभसो नीलत्वात् उरसः, प्रातःकालीनसूर्य्यस्य च सौम्यदर्शनत्वात् कौस्तुभस्य साम्यम् । श्यामं तथा श्रिया लक्ष्म्याः कुचकुङ्कुमेन स्तनाङ्गरागकुङ्कुमेन पिञ्जरितं पिशङ्गितं मुरविद्विषः कृष्णस्य उरः वक्षःस्थलं जयति ॥ ११ ॥

प्रतिबिम्बितेति । सकौस्तुभं कौस्तुभमणिना उद्भासितम् अतएव प्रतिबिम्बिता प्रियायाः लक्ष्म्याः आत्मन इति भावः तनुः शरीरं यस्य तादृशं मुरभिदः नारायणस्य वक्षः जयति, मुकुरमिव आदर्शमिव

केलिचलाङ्गुलिलम्भितलक्ष्मीनाभिर्मुरद्विषश्चरणः ।
स जयति येन कृता श्रीरनुरूपा पद्मनाभस्य ॥ १३ ॥
रोमावली मुरारेः श्रीवत्सनिषेविताग्रभागा वः ।
उन्नालनाभिनलिनच्छायेवोत्तापमपहरतु ॥ १४ ॥
आदाय सप्ततन्त्रीचितां विपञ्चीमिव त्रयीं गायन् ।
मधुरं तुरङ्गवदनोचितं, हरिर्जयति हयमूर्धा ॥ १५ ॥
स जयति महावराहो जलनिधिजठरे चिरं निमग्नापि ।
येनान्त्रैरिव सह फणिगणैर्बलादुद्धृता धरणी ॥ १६ ॥

यत् वक्षः दृष्ट्वा लक्ष्म्याः पुरुषायितं विपरीतरतम् अभ्यस्यति अकथनेऽपि तद्दर्शनेन स्वामिनस्तथाविधाभिलाषस्य बोधादिति भावः ॥ १२ ॥

केलीति । केलौ क्रीडायां चलया चञ्चलया अङ्गुल्या पादस्येति शेषः लम्भितः स्पृष्टः लक्ष्म्याश्चरणसेविन्या इति भावः नाभिर्येन तथाविधः स सुरद्विषः कृष्णस्य चरणः जयति, येन चरणेन पद्मनाभस्य कृष्णस्य अनुरूपा उपयुक्ता श्रीः शोभा कृता ॥ १३ ॥

रोमावलीति । श्रीवत्सो नाम चिह्नविशेषः भृगुचरणकल्पितः तेन निषेविता अधिष्ठिता अग्रभागा यस्यास्तथोक्ता अतएव उन्नालम् उद्गतनालं यत् नाभिनलिनं नाभिपद्मं तस्य छायेव प्रतिबिम्बमिव, छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातप इत्यमरः । मुरारेः कृष्णस्य रोमावली वः युष्माकम् उत्तापं सन्तापम् अपहरतु नाशयतु ॥ १४ ॥

आदायेति । हयमूर्धा हयग्रीवो हरिः सप्ततन्त्रीचितां सप्तभिस्तन्त्रीभिर्वीणातन्तुभिः अन्यत्र यज्ञविशेषैः चितां व्याप्तां विपञ्चीमिव वीणामिव त्रयीम् ऋग्यजुःसामाख्यवेदत्रयम् आदाय गृहीत्वा तुरङ्गवदनाः किन्नराः तदुचितं तत्सदृशमित्यर्थः मधुरं यथा तथा गायन् जयति ॥ १५ ॥

स इति । स महावराहः जयति सर्वोत्कर्षेण वर्त्तते, येन

ब्रह्माण्डकुम्भकारं भुजगाकारं जनार्दनं नौमि ।
स्फारे यत्फणचक्रे धरा शरावश्रियं वहति ॥ १७ ॥
चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रिये जयति ।
शङ्करपर्य्यन्तजितो विजयस्तम्भः स्मरस्येव ॥ १८ ॥
उन्नालनाभिपङ्केरुह इव येनावभाति शम्भुरपि ।
जयति पुरुषायितायास्तदाननं शैलकन्यायाः ॥ १९ ॥
अङ्कनिलीनगजाननशङ्काकुलबाहुलेयहृतवसनौ ।
सस्मितहरकरकलितौ हिमगिरितनयास्तनौ जयतः ॥२०॥

जलनिधिजठरे समुद्रगर्भे चिरं निमग्नापि बन्धैरिव जठरशिराभि-रिव फणिगणैः नागकुलैः आहृतेति शेषः धरणी पृथिवी बलात् दंष्ट्राबलेनेति भावः उद्धृता उद्धारं नीता । उपमालङ्कारः ॥ १६ ॥

ब्रह्माण्डेति । ब्रह्माण्डं जगदेव कुम्भः तं करोतीति तथोक्तं जगत्कर्त्तारं भुजगाकारं सर्परूपिणं जनार्दनम् अनन्तदेवमित्यर्थः नौमि स्तौमि । स्फारे विशाले यस्य फणचक्रे फणमण्डले धरा पृथिवी शरावस्य श्रियं शोभां वहति । निदर्शनालङ्कारः । उक्तञ्च दर्पणे । सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानु-बिम्बत्वं बोधयेत् सा निदर्शनेति ॥ १७ ॥

चण्डीति । प्रिये हरे शिरसा चरणस्पृशि पादयोः प्रणते सति चण्डीजङ्घाकाण्डः गौर्य्याः जङ्घवंशः शङ्करपर्य्यन्तजितः आशङ्करजयिनः स्मरस्य कामस्य विजयस्तम्भ इव जयति ॥ १८ ॥

उन्नालेति । पुरुषायितायाः विपरीतरतवर्त्तिन्याः शैलकन्यायाः तत् आननं मुखं जयति, येन मुखेन शम्भुरपि उन्नालम् उद्गतनालं नाभौ पङ्केरुहं पद्मं यस्य तादृश इव विष्णुरिव वा अवभाति राजते । एतेन देव्या अङ्गस्य कमलत्वात् नालसाम्यं मुखस्य च पद्मसाम्यं व्यज्यते ॥ १९ ॥

अङ्केति । अङ्के क्रोड़े निलीनः गूढ़ं स्थितः यः गजाननः

कण्ठोचितोऽपि हुङ्कृतिमात्रनिरस्तः पदान्तिके पतितः।
यस्याश्चन्द्रशिखः स्मरभल्लनिभो जयति सा चण्डी॥ २१॥
देवेऽर्पितवरणस्रजि बहुमाये वहति कैटभीरूपम्।
जयति सुरासुरहसिता लज्जाजिह्मेक्षणा लक्ष्मीः॥ २२॥
तानसुरानपि हरिमपि तं वन्दे कपटकैटभीरूपम्।

गणेशः तस्य यद्रूपया स्तनयोर्गजकुम्भसाम्यादिति भावः आकुलः कातरः कथं मां विहाय सङ्गोप्य अस्मै स्तन्यं प्रयच्छतीति धिया दुःखित इति यावत् यः बाहुलेयः स्कन्दः तेन हृतम् अपनीतं गजाननभिषयार्थमिति भावः वसनम् आच्छादनं ययोः तथोक्तौ तदानीमेव सस्मितेन मन्दं हसता हरेण कराभ्यां कलितौ धृतौ हिमगिरितनयायाः पार्वत्याः स्तनौ जयतः सर्वोत्कर्षेण वर्त्तेते॥ २०॥

कण्ठोचित इति। चन्द्रशिखः चन्द्रचूड़ः शिवः कण्ठोचितः कण्ठालिङ्गनयोग्योऽपि पक्षे अर्द्धचन्द्राकारतया कण्ठकर्त्तनयोग्योऽपि हुङ्कृतिमात्रेण न तु तर्जनादिनेति भावः निरस्तः अतएव यस्याः पदान्तिके पतितः सन् स्मरस्य कामस्य भल्लनिभः भल्लाख्यास्त्रसदृशः चरणपतनेन मानहरणात् कामास्त्रसाम्यं द्योतितम्। भवतीति शेषः। सा चण्डी कोपना गौरी जयति॥ २१॥

देवे इति। बहुमाये विविधमायाशालिनि अर्पिता दत्ता वरणस्रक् पतित्वेन वरणमाल्यं यस्मै तादृशे देवे नारायणे कैटभीरूपं मोहिनीमूर्त्तिमित्यर्थः वहति धारयति सति, दैत्यवञ्चनायेति भावः सुरासुरैः देवदैत्यैः हसिता कथं सर्वानेवास्मान् विहाय अयमीदृशो-ऽनया वृतः अविमृश्यकारिणीयमिति उपहासास्पदीकृतेत्यर्थः अतएव लज्जया जिह्मे कुञ्चिते ईक्षणे नेत्रे यया तादृशी किमियं कामिन्येव पुरुषभ्रमान्मया वृतेति कुत्सेति भावः लक्ष्मीः जयति॥ २२॥

तानिति। तान् असुरान् अपि तं कपटकैटभीरूपं माया-

येर्यद्बिम्बाधरमधुलुब्धैः पीयूषमपि मुमुचे ॥ २३ ॥

तल्पीकृताहिरगणितगरुडो हाराभिहतविधिर्जयति ।
फणशतपीतश्वासो रागान्धायाः श्रियः केलिः ॥ २४ ॥

स्मेराननेन हरिणा सस्पृहमाकारवेदिना कलितम् ।
जयति पुरुषायितायाः कमलायाः कैटभीध्यानम् ॥ २५ ॥

मोहिनीरूपं हरिमपि वन्दे प्रणमामि, यैः असुरैः यस्य हरेर्मोहिनीमूर्त्तिधरस्येति भावः बिम्बमिव यः अधरः तस्य मधुलुब्धैः रसास्वादलोलुपैः सद्भिः पीयूषमपि अमृतमपि मुमुचे परित्यक्तम् । पुरा समुद्रमन्थनादुत्थितस्य अमृतस्य वण्टनाय एकपङ्क्तौ देवान् अपरपङ्क्तौ असुरान् समुपवेश्य भगवान् नारायणः ईदृशीं मोहिनीमूर्त्तिमग्रहीत् यत् अमृतवण्टनकारिणीं तां मोहिनीं प्रति समासक्तमनोहृदयोऽसुरा अमृतं देवैः पीयमानमलक्षयन्तः स्वयं विप्रलब्धा बभूवुरिति पौराणिकी गाथात्रानुसन्धेया ॥ २२ ॥

तल्पीकृतेति । रागेण प्रेमातिशयेन अन्धाया विवेकशून्याया इत्यर्थः श्रियः लक्ष्म्याः केलिः सुरतलीला तल्पीकृतः शयनीकृतः अहिः शेषः यत्र तथोक्तः तथा अगणितः अवज्ञातः गरुडः पक्षिराजः यत्र तथाविधः तथा हारेण कटिस्थेनेति भावः रशनयेत्यर्थः अभिहतः ताडितः विधिः ब्रह्मा यत्र तथाभूतः तथा फणशतैः अत्र शतशब्दो बहुत्ववाचकः अनन्तनागस्य सहस्रशीर्षत्वादिति बोध्यं पीतः श्वासः सुरतश्रमजनित इति भावः यत्र तादृशः अतएव जयति सर्वोत्कर्षेण वर्त्तते । अतिरागिणी कामिनी निर्लज्जा भवतीति भावः ॥ २४ ॥

स्मेराननेति । स्मेरं मन्दहासयुक्तम् आननं यस्य तादृशेन आकारवेदिना भावाभिज्ञेनेत्यर्थः हरिणा नारायणेन सस्पृहं साभिलाषं कलितम् अवबुद्धं पुरुषायितायाः विपरीतरतवर्त्तिन्याः कमलायाः कैटभीध्यानं पत्युर्मायारचितमोहिनीमूर्त्तिचिन्तनं जयति ॥ २५ ॥

कृतकान्तकेलिकुतुकश्रीशीतश्वाससेकनिद्राणः।
घोरितविततालिरुतो नाभिसरोजे विधिर्जयति ॥ २६ ॥
एकरद द्वैमातुर निस्त्रिगुण चतुर्भुजापि पञ्चकर।
जय षण्मुखनुत सप्तच्छदगन्धिमदाष्टतनुतनय ॥ २७ ॥
मङ्गलकलशद्वयमयकुम्भमदम्भेन भजत गजवदनम्।
यद्दानतोयतरलैस्तिलतुलनालम्बि रोलम्बैः ॥ २८ ॥

कृतेति। कृतं कान्तेन पत्या सह केलिकुतुकं सुरतोत्सवः यया तादृशी या श्रीः लक्ष्मीः तस्याः शीतः शीतलः यः श्वासः निःश्वासमारुतः तस्य सेकेन स्वशरीरे पातेनेति भावः निद्राणः निद्रां गच्छन् नाभिसरोजे नारायणस्य नाभिपद्मे स्थित इति शेषः तथा घोरितं सर्वतः प्रसृतं विततं विस्तृतम् अलिरुतं भ्रमरगुञ्जनं पद्मसौरभसम्पर्कादिति भावः यस्य तथाभूतः विधिः ब्रह्मा जयति सर्वोत्कर्षेण वर्त्तते नाभिसरोजे स्थित्या मनोज्ञरम्यकुसुमजातसौरभेण लक्ष्म्याः शीतनिःश्वाससम्पर्केण च निद्रासुखातिशयानुभवादिति भावः ॥ २६ ॥

एकेति। एकरद! एकदन्त! द्वयोर्मात्रोरपत्यं पुमान् द्वैमातुरः तत्सम्बोधने पार्वतीगङ्गोभयमातृकत्वादिति भावः चत्वारः भुजा बाहवो यस्य तथाभूतः तत्सम्बुद्धौ अपि पञ्चकर इति विरोधः पञ्च करा भुजचतुष्टयम् एकस्य शुण्डादण्डः यस्येति परिहारः। षण्मुखनुत कार्त्तिकेयस्तुत ज्येष्ठत्वादिति भावः सप्तच्छदस्येव गन्धो यस्य तादृशो मदः दानवारि यस्य तथाभूत: तत्सम्बुद्धौ निस्त्रिगुण त्रैगुण्यातीत अष्टौ तनवः मूर्त्तयः यस्य सः अष्टतनुः शिवः तस्य तनयः पुत्रः तत्सम्बोधने। जय सर्वोत्कर्षेण वर्त्तस्व ॥ २७ ॥

मङ्गलेति। मङ्गलकलशद्वयमयौ माङ्गलिककुम्भतुल्यावित्यर्थः कुम्भौ शिरसः पार्श्वपिण्डौ यस्य तथाभूतम् एतेन गणपतिभजनं मङ्गलायेति सूचितं गजवदनं गणेशम् अदम्भेन अकपटेन भजत

याभिरनङ्गः साङ्गीकृतः स्त्रियोऽस्त्रीकृताश्च ता येन ।
वामाचरणप्रवणौ प्रणमत तौ कामिनीकामौ ॥ २९ ॥
विहितघनालङ्कारं विचित्रवर्णावलीमयस्फुरणम् ।
शक्रायुधमिव वक्रं वल्मीकभुवं कविं नौमि ॥ ३० ॥
व्यासगिरां निर्य्यासं सारं विश्वस्य भारतं वन्दे ।

बोद्धव्यं शिष्यान् प्रत्युक्तिरियम् । यस्य दानतोयेन मदजलेन तरलैः चपलैः मत्तैरिति यावत् रोलम्बैः भ्रमरैः तिलतुलना तिलसाम्यम् आलम्बि गृहीतं तस्य श्यामत्वेऽपि मदयोगात् समधिकश्यामत्वलाभात् तिलसाम्यमिति बोध्यम् ॥ २८ ॥

याभिरिति । याभिः स्त्रीभिः अनङ्गः अङ्गरहितः कामः हरकोपानलदग्धत्वादिति भावः साङ्गीकृतः अङ्गवान् कृतः ताश्च स्त्रियः येन अस्त्रीकृताः अस्त्रविजयसाधनत्वेनेति भावः वामं सुन्दरम् अनुकूलमिति यावत् यत् आचरणं तस्मिन् प्रवणौ तत्परौ तौ कामिन्यश्च कामश्च तौ प्रणमत । कामिनीकामाविति द्वन्द्वे बहुवचनौ-चित्येऽपि द्विवचनं कविप्रयोगात् सोढव्यमिति ॥ २९ ॥

विहितेति । विहिता विन्यस्ता घना बहुला अलङ्काराः उपमानुप्रासादयो येन तथोक्तम् अन्यत्र विहितः कृतः घनेषु मेघेषु अलङ्कारः शोभा येन तथोक्तं विचित्रं चमत्कृतिसाधनं वर्णावलीमयम् अक्षरपङ्क्तिरचनात्मकं स्फुरणं यस्य तथाविधम् अन्यत्र विचित्राणि विविधानि वर्णावलीमयानि नीलपीतलोहिताद्यात्मकानि स्फुरणानि यस्य तादृशं वक्रं वक्रोक्तिरूपालङ्कारकुशलमित्यर्थः अन्यत्र कुटिलाकारं वल्मीकभुवं वाल्मीकिम् अन्यत्र वल्मीकभूमेरुपरि उत्पद्यमानं प्रसिद्धिरियं तथाच वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्येति कालिदासः । अतएव शक्रायुधमिव इन्द्रधनुरिव कविं काव्यप्रणेतारं नौमि स्तौमि । उपमालङ्कारः ॥ ३० ॥

व्यासेति । विश्वस्य जगतः सारं परममुत्कृष्टं वस्तु इत्यर्थः

भूषणतयैव संज्ञां यदङ्कितां भारती वहति ॥ ३१ ॥
सति काकुत्स्थकुलोन्नतिकारिणि रामायणे किमन्येन।
रोहति कुल्या गङ्गापूरे किं बहुरसे वसति ॥ ३२ ॥
अतिदीर्घजीविदोषाद् व्यासेन यशोऽपहारितं हन्त।
कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः ॥ ३३ ॥

व्यासस्य द्वैपायनस्य गिरां वाचां निर्यासं निःसृतरसभूतमित्यर्थः भारतं तदाख्यमाख्यानमित्यर्थः वन्दे सेवे भारती वाणी भूषणतयैव अलङ्कारत्वेनैव यदङ्कितां येन भारतेन अङ्कितां चिह्नितां संज्ञां भारतीति नामाख्यामित्यर्थः वहति धारयति ॥ ३१ ॥

सतीति। ककुदि तिष्ठतीति ककुत्स्थः तस्यापत्यं काकुत्स्थः रामः तस्य कुलं वंशः तस्य उन्नतिकारिणि अभ्युदयसम्पादके रामायणे सति वर्त्तमाने अन्येन काव्येनेति शेषः किम्? न किमपि प्रयोजनमस्तीत्यर्थः। तथाहि बहुरसे प्रभूतरसशालिनि गङ्गापूरे भागीरथीप्रवाहे वर्त्तते सति कुल्या कृत्रिमा क्षुद्रा नदी, कुल्याल्पा कृत्रिमा सरिदित्यमरः। किं रोहति उत्पद्यते? शोभते किं नैवेत्यर्थः। अत्र दृष्टान्तालङ्कारः। तदुक्तं दर्पणे। दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति ॥ ३२ ॥

अतिदीर्घेति। अतिदीर्घजीविदोषात् चिरजीवित्वदोषादित्यर्थः व्यासश्चिरजीवीति प्रवादादिति भावः। अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः। कृपः परशुरामश्च सप्तैते चिरजीविनः॥ इति व्यासस्य चिरजीवित्वोक्तेः। व्यासेन यशः कीर्त्तिः अपहारितं नाशितं हन्त खेदे। तथाहि गुणाढ्यः बहुगुणसम्पन्नः बृहत्कथाग्रन्थकर्त्ता स एव व्यास एव जन्मान्तरापन्नः स्वीकृतजन्मान्तरः कैः जनैः न उच्येत कथ्येत अपितु सर्वैरेव उच्येतेत्यर्थः। यदि व्यासस्य चिरजीवित्वं न स्यात् तदा बृहत्कथाग्रन्थकर्त्तुः गुणाढ्यस्य व्यास एव जन्मान्तरापन्नः कर्त्ता इति यशः प्रख्यायते तत्तु व्यासस्य चिरजीवित्वेन नष्टमिति निष्कर्षः ॥ ३३ ॥

श्रीरामायणभारतबृहत्कथानां कवीन् नमस्कुर्मः ।
त्रिस्रोता इव सरसा सरस्वती स्फुरति यैर्भिन्ना ॥ ३४ ॥
साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये ।
शिक्षासमयेऽपि मुदे रतलीलाकालिदासोक्ती ॥ ३५ ॥
भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥ ३६ ॥
जाता शिखण्डिनी प्राग् यथा शिखण्डी तथावगच्छामि ।

श्रीरामायणेति । श्रीरामायणं भारतं बृहत्कथा तासां कवीन् कर्त्तृन् प्रणेतॄनित्यर्थः नमस्कुर्मः वन्दामहे । यैः कविभिः भिन्ना पृथक्कृता वैचित्र्यमापादितेति भावः अतएव सरसा रसवती भारती वाणी त्रिस्रोता इव त्रिविधस्रोतस्वती गङ्गेव भागीरथीभोगवती-मन्दाकिनीरूपभेदादिति भावः स्फुरति शोभते ॥ ३४ ॥

साकूतेति । साकूतं साभिप्रायं मधुरं मनोहरं यत् विलासिन्याः कामिन्याः कण्ठकूजितं कण्ठरवः अन्यत्र कण्ठकूजितमिव शब्दविन्यासः तत्प्राये तद्बहुले रतलीला सुरतव्यापारश्च कालिदासोक्तिश्च ते शिक्षासमयेऽपि किमुतान्यत्र समये इत्यपिशब्दार्थः मुदे आनन्दाय वर्त्तेते इति शेषः ॥ ३५ ॥

भवभूतेरिति । भवभूतेः तदाख्यस्य कवेः अन्यत्र भवस्य हरस्य भूतेः सम्पदः, भूतिर्भस्मनि सम्पदीत्यमरः । सम्बन्धात् सङ्गात् भारती वाणी भूधरभूरेव पार्वत्येव भाति राजते, अन्यथा एतत्कृतकारुण्ये एतेन भवभूतिना कृते कारुण्ये करुणरसप्रधाने काव्ये अन्यत्र एतेन हरेण कृते कारुण्ये अनुकम्पायां पार्वतीपाणिग्रहणानन्तरं खण्डे पार्वत्या नयने ग्रावा पाषाणम् अन्यत्र शैलः हिमाद्रिः, ग्रावाणौ शैलपर्वतावित्यमरः । किं कथं रोदिति । भवभूतेः कारुण्यरसप्रधानो-त्तरचरितादिश्रवणपठनयोर्निरन्तराश्रुपातनस्येति भावः ॥ ३६ ॥

जातेति । प्राक् पूर्वं शिखण्डिनी द्रुपदराजपुत्री यथा शिखण्डी

प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥ ३७ ॥
यं गणयन्ति गुरोरनु यस्यास्ते धर्मकर्म सङ्कुचितम् ।
कविमहमुशनसमिव तं तातं नीलाम्बरं वन्दे ॥ ३८ ॥
सकलकलाः कल्पयितुं प्रभुः प्रबन्धस्य कुमुदबन्धोश्च ।
सेनकुलतिलकभूपतिरेको राकाप्रदोषश्च ॥ ३९ ॥
काव्यस्याक्षरमैत्रीभाजो न च कर्कशा न च ग्राम्याः ।
शब्दा अपि पुरुषा अपि साधव एवार्थबोधाय ॥ ४० ॥

द्रुपदपुत्रः जाता । अत्र उद्देश्यस्य प्राधान्यविवक्षा । तथा वाणी वाग्देवी अधिकं प्रागल्भ्यं वैचक्षण्यम् आप्तुं लब्धुं बाणः कादम्बरी-कविः बभूव इति अवगच्छामि मन्ये ॥ ३७ ॥

यमिति । यं गुरोः प्रभाकरात् बृहस्पतेर्वा अनु पश्चात् गणयन्ति यः प्रभाकरसदृशो बृहस्पतिसदृशश्च लोकैः कथ्यते, यस्य अन्ते अवसाने नाशे इत्यर्थः धर्मकर्म सङ्कुचितं विनष्टप्रायमित्यर्थः अहम् उशनसमिव शुक्रमिव कविं तातं पितरं तं नीलाम्बरं वन्दे प्रणमामि ॥ ३८ ॥

सकलेति । एकः केवलः सेनकुलतिलकभूपतिः प्रवरसेनाख्यः नृपतिरित्यर्थः राकाप्रदोषः पौर्णमासीरजनीमुखञ्च, प्रदोषो रजनी-मुखमित्यमरः । प्रबन्धस्य काव्यविशेषस्य कुमुदबन्धोः चन्द्रस्य च सकल-कलाः समग्राः कलाश्चतुःषष्टिप्रकारा षोड़शकलाश्च कल्पयितुं रचयितुं प्रकटयितुञ्च प्रभुः समर्थः नान्य इत्यर्थः ॥ ३९ ॥

काव्यस्येति । अक्षराणां वर्णानां मैत्रीं लालित्यव्यञ्जकसङ्गतिं भजन्ते इति तथोक्ताः अन्यत्र अक्षरा अविनाशिनी अकृत्रिमेति यावत् या मैत्री प्रणयविशेषः तां भजन्ते इति तथोक्ताः न च कर्कशाः न श्रुतिकटवः अन्यत्र न निष्ठुराः न च ग्राम्याः अविदग्ध-प्रयोज्याः अन्यत्र न च विदग्धाः अचतुरा इति यावत् साधवः विशुद्धाः च्युतसंस्कारादोषरहिता इति यावत् अन्यत्र विशुद्धमतयः

वंशे घुण इव न विशति दोषो रसभाविते सतां मनसि।
रसमपि तु न प्रतीच्छति बहुदोषः सन्निपातीव॥ ४१॥
विगुणोऽपि काव्यबन्धः साधूनामाननं गतः स्वदते।
फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति॥ ४२॥
स्वयमपि भूरिच्छिद्रश्चापलमपि सर्वतोमुखं तन्वन्।
तितउस्तुषस्य पिशुनो दोषस्य विवेचनेऽधिकृतः॥ ४३॥

काव्यस्य शब्दाः आप पुरुषा अपि अर्थबोधाय एव अर्थान् बोधयितुं समर्था एव भवन्तीत्यर्थः अन्यत्र प्रयोजनबोधाय प्रभवन्तीत्यर्थः। अत्र प्रस्तुतानां शब्दानाम् अप्रस्तुतानां पुरुषाणाञ्च धर्मसम्बन्धात् दीपकालङ्कारः। तदुक्तं दर्पणे, अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यत इति॥ ४०॥

सरसतोर्गुणदोषावाह वंशे इति। रसभाविते रसभाववबोधक्षमे अन्यत्र सरसे वंशे इव सतां साधूनां मनसि घुण इव कीटविशेष इव दोषः न विशति। बहुदोषः दोषप्रचुरो जनः अन्यत्र कफवात-पित्तादिदोषाकुलः सन्निपातीव त्रिदोषजज्वराभिभूत इव रसमपि काव्यपाठश्रवणजमलौकिकानन्दमपि अन्यत्र औषधविशेषमपि न प्रतीच्छति न गृह्णाति। उपमालङ्कारः॥ ४१॥

विगुण इति। काव्यबन्धः काव्यरचनाविशेषः विगुणोऽपि माधुर्य्यादिगुणरहितोऽपि साधूनाम् आननं गतः सज्जनमुखोच्चरित इत्यर्थः स्वदते सुस्वादो भवति मनो हरतीति यावत्। तथाहि, सुवंशैः सुष्ठु वेणुभिः अन्यत्र सत्कुलप्रसूतैर्जनैः अनूद्यमानः क्रियमाण इत्यर्थः फूत्कारः अव्यक्तध्वनिविशेषोऽपि श्रुतिं हरति, श्रवणसुखं जनयतीत्यर्थः। प्रतिवस्तूपमालङ्कारः। तदुक्तं दर्पणे, प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक्॥ इति॥ ४२॥

स्वयमिति। स्वयं भूरिच्छिद्रः बहुरन्ध्रः अन्यत्र बहुदोषः अपि

अन्तर्गूढानर्थानव्यञ्जयतः प्रसादरहितस्य।
सन्दर्भस्य नदस्य च न रसः प्रीत्यै रसज्ञानाम् ॥ ४४ ॥
यदसेवनीयमसतामसृतप्रायं सुवर्णविन्यासम्।
सुरसार्थमयं काव्यं त्रिविष्टपं वा समं विद्मः ॥ ४५ ॥
सत्कविरसनाशूर्पीनिस्तुषतरशब्दशालिपाकेन।

तथा सर्वतोमुखं सर्वप्रकारं चापलं चालनाविशेषम् अन्यत्र यथेच्छाचारं तन्वन् प्राप्नुवन् अन्यत्र विस्तारयन् अपि तितउश्चालनी, तितउर्ना चालनी स्त्रियामित्यमरः। तुषस्य पिशुनः खलः, पिशुनौ खलसूचकावित्यमरः। दोषस्य विवेचने निःसारणे अन्यत्र निर्द्धारणे प्रकटने इति भावः अधिकृतः अधिकारी। अत्र प्रकृतस्य पिशुनस्य अप्रस्तुता याश्चालन्याश्च एकधर्माभिसम्बन्धात् दीपकालङ्कारः ॥ ४३ ॥

अन्तरिति। अन्तर्गूढान् अभ्यन्तरस्थितान् अर्थान् अभिधेयवस्तूनि पदार्थांश्च अव्यञ्जयतः अप्रकटयतः प्रसादरहितस्य, चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः। स प्रसादः समस्तेषु रसेषु रचनासु चेत्युक्तप्रसादगुणवर्जितस्य सन्दर्भस्य प्रबन्धस्य नदस्य जलाशयविशेषस्य च रसः स्वादविशेषः जलञ्च रसज्ञानां सामाजिकानां द्रव्यास्वादाभिज्ञानां प्रीत्यै सन्तोषाय न भवतीति शेषः। अत्रापि दीपकालङ्कारः ॥ ४४ ॥

यदिति। असतां खलानां पापिनाञ्च असेवनीयम् अनालोचनीयम् अनधिगम्यञ्च अमृतप्रायं पीयूषसदृशम् अतिमधुरमिति यावत् पीयूषबहुलञ्च सुष्ठु वर्णानाम् अक्षराणां विन्यासः योजनविशेषः यत्र तथाभूतं काञ्चनमयञ्च शोभनरसार्थाभ्यां पूर्णमित्यर्थः देवसङ्कुलञ्च यत् काव्यं त्रिविष्टपं स्वर्गञ्च तत् समं तुल्यं विद्मः मन्यामहे। अत्रापि दीपकालङ्कारः ॥ ४५ ॥

सत्कवीति। सत्कवेः शोभनकाव्यप्रणेतुः एतेनासत्कवेर्निरासः सूचितः। रसना जिह्वा एव शूर्पी प्रस्फोटनयन्त्रविशेषः, प्रस्फोटनं

तृप्तो दयिताधरमपि नाद्रियते का सुधा दासी॥ ४६ ॥
अकलितशब्दालङ्कृतिरनुकूला स्खलितपदनिवेशापि।
अभिसारिकेव रमयति सूक्तिः सोत्कर्षशृङ्गारा॥ ४७ ॥

शूर्पमस्त्रीत्यमरः। तया निस्तुषतरः अतिशयेन तुषरहितः निर्दोष इति यावत् यः शब्द एव शालिधान्यं तस्य पाकेन सुप्रयुक्तशब्दपर्य्यालोचनया तादृशसुपक्वान्नभोजनेन चेति भावः उक्तञ्च एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञातः स्वर्गे लोके च कामधुग् भवतीति। तृप्तः परितोषं गतः जनः दयितायाः कान्तायाः अधरमपि न आद्रियते न बहु मन्यते सुधा दासी का? अतितुच्छेति भावः। अत्र रूपकार्थापत्त्योः संसृष्टिः। रूपकं रूपितारोपात् विषये निरपह्नवे इति, दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते इति च साहित्यदर्पणः॥ ४६ ॥

अकलितेति। अकलिताः अस्पृष्टाः शब्दालङ्कृतयः अनुप्रासयमकादयः यया तथोक्ता शब्दालङ्काराणां रसोद्बोधपरिपन्थित्वादिति भावः अन्यत्र अकलितः अस्पृष्टः शब्दो ध्वनिर्यया तादृशी अलङ्कृतिरलङ्कारः नूपुरादिर्यया तथोक्ता अलङ्काराणां सशब्दत्वे प्रकाशसम्भवादिति भावः। अनुकूला झटित्यर्थविबोधवती अन्यत्र अनुरागिणी, स्खलितः दार्ढ्यशून्यः कोमल इति यावत् पदानां सुप्तिङन्तानां निवेशः विन्यासः यत्र तथाभूता अन्यत्र स्खलितः द्रुतगमनात् स्वस्थानात् भ्रष्टः पदविन्यासः चरणनिक्षेपः यस्याः तथाभूता "अथवा अस्खलितः च्युतसंस्कृतिदोषविरहितः पदनिवेशः यस्यां तथाभूता अन्यत्र अस्खलितः अवधानवशात् स्खलनरहितः पदविन्यासः यस्यास्तथाविधा सोत्कर्षशृङ्गारा उत्कृष्टशृङ्गाररसवती अन्यत्र प्रबलशृङ्गाराभिलाषवती सूक्तिः शोभना उक्तिः सत्काव्यमित्यर्थः अभिसारिकेव कान्तार्थिनी नायिकेव। तदुक्तं दर्पणे, अभिसारयते कान्तं या मन्मथवशंवदा। स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिकेति। कान्तार्थिनी तु या याति सङ्केतं साभिसारिकेत्यमरश्च।

अध्वनि पदग्रहपरं मदयति हृदयं न वा न वा श्रवणम्।
काव्यमभिज्ञसभायां मञ्जीरं केलिवेलायाम्॥ ४८॥
आस्वादितदयिताधरसुधारसस्यैव सूक्तयो मधुराः।
अकलितरसालमुकुलो न कोकिलः कलमुदञ्चयति॥४९॥
बालाकटाक्षसूत्रितमसतीनेत्रत्रिभागकृतभाष्यम्।
कविमाणवका दूतीव्याख्यातमधीयते भावम्॥ ५०॥

रमयति आनन्दयति एकत्र सामाजिकम् अन्यत्र कान्तमिति शेषः। उपमालङ्कारः॥ ४७॥

अध्वनीति। ध्वनिर्व्यङ्ग्यं तद्रहितम् अन्यत्र ध्वनिर्झणत्कारः तद्रहितं पदग्रहपरम् अनुप्रासयमकादिना पदरचनाबहुलम् अन्यत्र चरणमात्रलग्नं काव्यम् अभिज्ञसभायां सामाजिकसंसदि मञ्जीरं नूपुरं केलिवेलायां सुरतव्यापारसमये हृदयं न वा श्रवणं श्रोत्रेन्द्रियं न वा मदयति नैवानन्दयतीत्यर्थः। अत्र दीपकालङ्कारः॥ ४८॥

आस्वादितेति। आस्वादितः परिपीतः दयितायाः कान्तायाः अधरस्य सुधारसः अमृतद्रवः येन तथाभूतस्य जनस्य एव नान्यस्येति भावः सूक्तयः शोभनसन्दर्भाः मधुराः मनोहराः कृतरसास्वाद एव रसव्यक्तीकरणे प्रभुरिति भावः। तथाहि अकलितम् अनास्वादितं रसालमुकुलं चूताङ्कुरः येन तादृशः कोकिलः कलं मधुरं न उदञ्चयति नोद्गिरति तथाच चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूजेति कुमारसम्भवे कालिदासः। अत्र वैधर्म्येण प्रतिवस्तूपमालङ्कारः॥ ४९॥

व्यवहारज्ञानं काव्यस्य करणे ज्ञाने च हेतुरिति दर्शयति, बालेति। कविषु माणवकाः बालकाः व्यवहारानभिज्ञा इति भावः बालायाः नवीनायाः कटाक्षेण सूत्रितं सूचितं लज्जापरत्वात् न तु प्रकटितमिति भावः असत्याः व्यभिचारिण्याः नेत्रत्रिभागेण नयनकोणविशेषेण कृतं भाष्यं स्थूलव्याख्यानविशेषः यस्य तादृशम्

मसृणपदरीतिगतयः सज्जनहृदयाभिसारिकाः सुरसाः।
मदनाद्वयोपनिषदो विशदा गोवर्धनस्यार्याः॥ ५१॥
वाणी प्राकृतसमुचितरसा बलेनैव संस्कृतं नीता।
निम्नानुरूपनीरा कलिन्दकन्येव गगनतलम्॥ ५२॥

अनन्तरदूत्या घटिकया व्याख्यातं स्पष्टमवबोधितं भावम् आशयम् अर्थञ्च, भावोऽभिप्राय आशय इत्यमरः। अधीयते अवगच्छन्तीत्यर्थः। यथा बालाः प्रथमं सूत्रं पठन्तः किञ्चित् ज्ञानं ततस्तस्य भाष्यरूपवृत्तिं पठन्तः ततोऽपि अधिकं ज्ञानं ततश्च व्याख्यानभूतां टीकां पठन्तः सम्यक् अवबुध्यन्ते तथा काव्यकर्त्तारोऽपि क्रमेण लोकव्यवहाराभिज्ञानेन नैपुण्यं लभन्त इति भावः॥ ५०॥

मसृणेति। मसृणाः कोमलाः पदानां सुप्तिङन्तानां रीतिगतयः रचनाविशेषाः, पदसङ्घटनारीतिरङ्गसंस्थाविशेषवदिति साहित्यदर्पणः। यासां ताः अन्यत्र मसृणाः कोमलाः पदानां पदविन्यासानां रीतिर्नियमः यत्र तादृशी गतिः गमनं यासां तथोक्ताः, सज्जनानां रसिकानां हृदयम् अभिसरन्ति अभिमुखीकुर्वन्ति प्रीणयन्तीति यावत् तथोक्ताः सुरसाः शोभनास्वादशालिन्यः रसातिशयवत्यश्च तथा विशदाः निर्मलाः श्रुतिकट्वादिदोषरहिता इत्यर्थः अन्यत्र परिष्कृतदेहाः गोवर्द्धनस्य आर्य्याः छन्दोविशेषनिबद्धाः सन्दर्भाः अन्यत्र श्रेष्ठा माननीया इत्यर्थः मदनस्य कामस्य अद्वयोपनिषदः अद्वितीयोपदेशशास्त्राणि। यथा वर्णितगुणवत्यः कान्ताः कामिनां कामोद्दीपिन्यः तथा गोवर्द्धनस्य आर्य्याः शृङ्गाररसमयत्वात् कामोद्दीपनकारिण्य इति भावः। अत्र श्लेषालङ्कारः॥ ५१॥

वाणीति। प्राकृते प्राकृतकाव्ये समुचितः सम्यग् उचितः प्रभूत इत्यर्थः रसः स्वादः यस्यास्तादृशी अथवा प्राकृतानां सामान्यजनानां समुचितः रसः यस्यां तथोक्ता वाणी भारती निम्नानुरूपाणि निम्नगामीनि नीराणि जलानि यस्यास्तथाभूता कालिन्दकन्या सूर्य-

आर्यासप्तशतीयं प्रगल्भमनसामनादृता येषाम् ।
दूतीरहिता इव ते न कामिनीमनसि निविशन्ते ॥ ५३ ॥
रतरीतिवीतवसना प्रियेव शुद्धापि वाङ्मुदे सरसा ।
अरसा सालङ्कृतिरपि न रोचते शालभञ्जीव ॥ ५४ ॥

---

तनया यमुनेत्यर्थः बलेन एव बलात्कारेणैव अन्यत्र बलभद्रेण गगन-तलमन्तरीक्षमिव संस्कृतं संस्कारं नीता प्रापिता । प्राकृतसप्तशतीं तिरस्कृत्य मयेयमार्य्यासप्तशती संस्कृता रचितेति भावः ॥ ५२ ॥

आर्य्येति । इयम् आर्य्यासप्तशती सप्तशतसंख्यकार्य्यासन्दर्भः येषां प्रगल्भमनसां प्रौढ़मतीनां कर्त्तरि षष्ठी अनादृता आदरेण न गृहीतेत्यर्थः ते दूतीरहिता इव कामिनीनां मनसि न निविशन्ते न प्रविशन्ति । कामिनीरञ्जनोऽयं सन्दर्भ इति भावः ॥ ५३ ॥

रतेति । रतरीतौ सुरतव्यापारे वीतं विगतं वसनं वस्त्रं यस्या-स्तथाभूता प्रियेव कान्तेव शुद्धापि निरलङ्कारापि सरसा रसवती वाक् मुदे आनन्दाय भवतीति शेषः । अरसा रसशून्या सालङ्कृतिरपि अलङ्कारा अनुप्रासोपमादयः अन्यत्र कटककुण्डलादयः तद्वत्यपि शाल-भञ्जीव प्रतिमेव न रोचते न प्रीतिं जनयतीत्यर्थः ॥ ५४ ॥

---

## अकारादिः ।

अवधिदिनावधिजीवाः प्रसीद जीवन्तु पथिकजनजायाः ।
दुर्लङ्घ्यवर्त्मशैलौ स्तनौ पिधेहि प्रपापालि ॥ १ ॥
अतिवत्सला सुशीला सेवाचतुरा मनोऽनुकूला च ।
अजनि विनीता गृहिणी सपदि सपत्नीस्तनोद्भेदे ॥ २ ॥

यौवनभराक्रान्तां प्रपापालिकां कश्चिदाह अवधीति । प्रपा पथिकजनानां जलदानार्थं स्थानं तां पालयति रक्षतीति तत्सम्बुद्धौ प्रसीद प्रसन्ना भव, अवधिदिनम् अमुकस्मिन् दिने मया आगन्तव्यं त्वं सुस्थिरा गृहे वस इत्याश्वास्य प्रियां पथिको देशान्तरं याति इत्येवं व्यवस्थितदिनमित्यर्थः अवधिः सीमा शेष इत्यर्थः यस्य तादृशो जीवः जीवनं यासां ताः अवधिदिनगणनया जीवन्त्य इत्यर्थः पथिकानां जनानां जायाः कान्ताः जीवन्तु प्राणान् रक्षन्तु । अत्र हेतुमाह दुर्लङ्घेति । दुर्लङ्घौ लङ्घितुमशक्यौ वर्त्मशैलौ मार्गस्थितपर्वतौ तत्सदृशाविति यावत् स्तनौ पिधेहि आच्छादय । त्वत्कुचपर्वतदर्शने पथिका अत्रैव स्थास्यन्ति न तु गृहं प्रति गमिष्यन्ति अतस्तत्कान्तानामवश्यमेव मृत्युर्भविष्यति तदवधिदिने पत्युरनधिगम इति त्वत्प्रसादस्तासां जीवनदायीति व्यज्यते ॥ १ ॥

कृतपरिणयान्तरं कान्तमसूयमानां कामिनीं काचिदुपदिशति, अतिवत्सलेति । गृहिणी गृहस्वामिनी सपत्न्याः स्तनोद्भेदे स्तनविकासे सति अतिवत्सला अतिशयेन स्नेहवती सुशीला सुचरित्रा सेवाचतुरा सेवायां परिचर्यायां स्वामिन इति शेषः मनोऽनुकूला पत्युः मनोऽभिमतकार्य्यकारी विनीता विनयवती सपदि सहसा अजनि अभवत् । अपरकान्तासङ्गमे यदा पत्युः स्वस्मिन् विरागसम्भावना स्यात् तदा नार्य्या सौभाग्याभिलाषिण्या यथा पत्युः प्रीतिर्भवेत् तथा सर्वथा व्यवहर्त्तव्यमिति निष्कर्षः ॥ २ ॥

अयि कूलनिचुलमूलोच्छेदनदुःशीलवीचिवाचाले।
वकविघसपङ्कसारा न चिरात्कावेरि भवितासि॥ ३॥
अयि विविधवचनरचने ददासि चन्द्रं करे समानीय।
व्यसनदिवसेषु दूति क्व पुनस्त्वं दर्शनीयासि॥ ४॥
अस्तु ग्लानिर्लोको लाञ्छनमपदिशतु हीयतामोजः।
तदपि न मुञ्चति स त्वां वसुधाच्छायामिव सुधांशुः॥५॥

काञ्चित् स्वकुलद्वेषेण नीचभुक्तसम्पदं कामिनीं भङ्ग्या वक्ति, अयीति। अयीति कोमलामन्त्रणे। कूलनिचुलः तटस्थितो वृक्षभेदः तस्य मूलोच्छेदनं मूलोत्पाटनं तेन दुःशीलाः दुर्वृत्ताः वीचयस्तरङ्गाः तैः वाचाले अव्यक्तशब्दवति अन्यत्र मुखरे कावेरि तदाख्ये नदि! त्वं न चिरात् शीघ्रमेव वकानां नीचपक्षिविशेषाणां न तु हंसादि-सत्पक्षिणामिति भावः विघसो भुक्तशेषः यः पङ्कः वकैस्तु त्वयि स्थिता मत्स्यकर्कटादयः शीघ्रमेव भक्षयितव्याः पश्चात् केवलं तव पङ्कमात्रं स्थास्यतीति भावः। सारः स्थिरांशः सारो बले स्थिरांशे चेत्यमरः। यस्याः तादृशी भवितासि भविष्यसि। शीघ्रमेव स्वकुलद्वेषिणस्तव सम्पदं लुब्धा भक्षयिष्यन्तीति प्रकृतभङ्गं ध्वन्यते॥ ३॥

कयाचित् साहसोपदेशिनीं दूतीं प्रत्युच्यते अयीति। अयि विविधा नानाप्रलोभनविषया वचनरचना यस्याः तथाभूते दूति! त्वं चन्द्रं करे हस्ते समानीय ददासि पुनः किन्तु व्यसनदिवसेषु विपत्समयेषु त्वं क्व कुत्र दर्शनीयासि? कुत्र तव दर्शनं प्राप्स्यामि? नैव तदा त्वं प्राप्स्यामीति भावः॥ ४॥

अपकीर्त्यादिना नायकेन स्वत्यागं सम्भावयन्तीं नायिकां प्रति दूत्या उक्तिः, अस्त्विति। ग्लानिः क्लेशः अस्तु भवतु, लोकः लाञ्छनं कलङ्कं, कलङ्काङ्कौ लाञ्छनञ्चेत्यमरः। अपदिशतु प्रकटयतु ओजः तेजः मान इत्यर्थः हीयतां नश्यत्वित्यर्थः, तदपि तथापि सः पुमान् सुधांशुश्चन्द्रः वसुधाच्छायामिव कलङ्कत्वेनारोपितामपीति भावः। तथा-

अतिचापलं वितन्वन्नन्तर्निविशन्निकामकाठिन्यः।
मुखरयसि स्वयमेतां सद्वृत्तां शङ्कुरिव घण्टाम् ॥ ६ ॥
अङ्गेषु जीर्य्यति परं खञ्जनयूनोर्मनोभवप्रसरः।
न पुनरनन्तर्गर्भितनिधिनि धरामण्डले केलिः ॥ ७ ॥
अन्धत्वमन्धसमये बधिरत्वं बधिरकाल आलम्ब्य।
श्रीकेशवयोः प्रणयी प्रजापतिर्नाभिवास्तव्यः ॥ ८ ॥

चोक्तं, भूमेर्हि छाया शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिरिति रघुवंशे कालिदासः। त्वां न मुञ्चति नैव त्यजतीत्यर्थः ॥ ५ ॥

कश्चित् कान्तया दुर्वचसा विरक्तीकृतं कान्तं प्रति तस्या एव सख्या उक्तिरियम्, अतिचापलमिति। स्वयम् अन्तर्निविशन् प्राक् अतिप्रणयेन हृदयं गच्छन् ततः अतिचापलम् अत्यन्तं चपलकर्म अन्यसङ्गादिकं वितन्वन् प्रकटयन् अतएव निकामकाठिन्यः भिन्नरां निर्दयः सन् शङ्कुः लोहकीलः घण्टामिव सद्वृत्तां सदाचाराम् एतां कामिनीं मुखरयसि वाचालयसि तवैवायमपराधो न तस्या इति भावः ॥ ६ ॥

खञ्जनपक्षिणां निधिरहिते स्थाने सङ्गमो नास्तीति प्रसिद्धिमाश्रित्य योग्यस्थानविरहे न सङ्गमः कर्त्तव्य इत्याह अङ्गेष्विति। खञ्जनयूनोः खञ्जनपक्षिणोः मनोभवप्रसरः कामासक्तिः परम् अत्यन्तम् अङ्गेषु जीर्य्यति विलयं गच्छतीति यावत्। परमित्यत्र वरमिति पाठान्तरम्। न अन्तर्गर्भितः अन्तःस्थितः निधिश्चिरनिखातं धनं यत्र तादृशे निधिशून्ये इत्यर्थः धरामण्डले प्रदेशे इत्यर्थः न पुनः केलिः नैव सङ्गमव्यापारः। यदा खञ्जनयूनोस्तिर्य्यक्जातितया विवेकशून्यत्वेऽपि प्रबलकामावेशेऽपि यथायोग्यस्थानं विना न रतिस्तदा किं वक्तव्यं विवेकवतोर्मनुष्यदम्पत्योरिति सूचितम् ॥ ७ ॥

अन्धत्वमिति। अन्धसमये यदा अन्धो भवितुमुचितः तदा सुरतसमये इति यावत् तस्य अवलोकनानर्हत्वादिति भावः। तथा बधिरकाले श्रवणशक्तिविहीनसमये यदा रतौ व्रीडाजनकाश्लील-

अयि कोषकार कुरुषे वनेचराणां पुरो गुणोद्गारम् ।
यत्र विदार्य्य विचारितजठरस्त्वं स खलु ते लाभः ॥ ९ ॥
अगणितमहिमा लङ्घितगुरुरधनेहः स्तनन्धयविरोधी ।
दृष्टाकीर्त्तिस्तस्यास्त्वयि रागः प्राणनिरपेक्षः ॥ १० ॥

वाक्यप्रयोगश्चेति तदा निधुवनकाले अश्लीलवाक्यप्रयोगश्च कामशास्त्रे अभिधानात् । उक्तञ्च, द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्त्विति । वधिरत्वं श्रवणेन्द्रियशून्यत्वम् आलम्ब्य अवलम्ब्य दृष्ट्वापि न पश्यति श्रुत्वापि न शृणोतीत्येवं भूत्वेति भावः नाभौ वास्तव्यं वसतिर्यस्य तथाविधः प्रजापतिः ब्रह्मा श्रीकेशवयोः लक्ष्मीनारायणयोः प्रणयी प्रीतिपात्रम् आसीदिति शेषः । नाभिस्थितो ब्रह्मा सुरतसमये सन्निधौ स्थित्वापि लक्ष्मीनारायणयोस्तत्तत्सुरतव्यापाराश्लीलवाक्यप्रयोगदर्शनश्रवणयोरपि यथा अन्धवत् वधिरवच्च व्यवहरति तथा स्वामिसन्निधाने स्वामिनोः कार्य्याकार्य्यदर्शनश्रवणयोर्भृत्येन व्यवहर्त्तव्यमिति ध्वन्यते ॥ ८ ॥

अयीति । अयि कोषकार कीटविशेष ! त्वं वनेचराणां विवेकशून्यानामिति भावः पुरः अग्रतः गुणानां तन्तूनां विद्याविशेषाणामिति ध्वनिः उद्गारं निःसारणं प्रकटनमिति ध्वनिः । कुरुषे, विदार्य्य विचारितं कुत एते गुणा निःसरन्तीति चिन्तितमित्यर्थः जठरम् उदरं यस्य तथाभूतः यत् न असि, स खलु स एव ते तव लाभः । मूर्खाणामग्रे गुणप्रकटनं न केवलं फलजनकम् अपितु अनर्थकरमिति भावः ॥ ९ ॥

अगणितेति । तस्याः कान्तायाः त्वयि रागः प्रेम, अगणितः अविचारितः महिमा कुलप्रतिष्ठा यत्र तादृशः, लङ्घिताः अवज्ञाताः गुरवः पितृश्वशुरादयः यत्र तथाभूतः, नास्ति धनेहा धनचेष्टा धनप्राप्त्यभिलाष इति यावत् यत्र तथाविधः, स्तनन्धयानां स्तन्यपायिनां शिशूनां विरोधी तन्निरपेक्ष इति भावः स्तनन्धयं शिशुं परित्यज्यापि प्रवृत्त इति भावः तथा दृष्टा सानन्दं स्वीकृतेति भावः अकीर्त्तिः

अपराधादधिकं मां व्यथयति तव कपटवचनरचनेयम्।
शस्त्राघातो न तथा सूचीव्यधवेदना यादृक्॥ ११॥
असतीलोचनमुकुरे किमपि प्रतिफलति यन्मनोवर्त्ति।
सारस्वतमपि चक्षुः सतिमिरमिव तन्न लक्षयति॥ १२॥
अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः।
इतरेन्धनजन्मा यो धूमः सोऽगुरुभवो धूपः॥ १३॥

अयशः परपुरुषसङ्गजनितकलङ्क इत्यर्थः यत्र तथाभूतः, किं बहुना प्राणनिरपेक्षः प्राणापेक्षाशून्यः प्राणा यान्ति चेत् यान्तु तथापि न परित्याज्य इति भावः। उपनायकं प्रति दूत्या उक्तिरियम्॥ १०॥

अपराधादिति। तव इयं कपटवचनरचना प्रतारणावाक्यप्रयोगः माम् अपराधात् अधिकं व्यथयति पीडयति, त्वया कृतोऽपराधस्तथा मां न तापयति यथा ते तदपराधपरिहाराय अलीकवाक्प्रपञ्च इति भावः। तथाहि, शस्त्राघातः शस्त्रप्रहारः तथा न पीडक इति शेषः सूचीव्यधवेदना पुनः पुनः सूचीवेधनपीडा यादृक् पीडादायिनीति शेषः। कृतापराधं कान्तं प्रति कस्याश्चित् मानिन्या उक्तिरियम्॥११॥

असतीति। असत्याः व्यभिचारिण्याः लोचनमेव मुकुरः दर्पणः तस्मिन् यत् किमपि अनिर्वचनीयं मनोवर्त्ति अन्तर्गतं हृद्गतो भाव इति यावत् तस्या इति शेषः प्रतिफलति प्रतिबिम्बितं भवति प्रकाशते इति भावः। सारस्वतमपि चक्षुः सरस्वत्या देव्या अपि नयनं किं वक्तव्यमपरेषामित्यपिशब्दार्थः। सतिमिरमिव अन्धकाराच्छन्नमिव तत् असतीमनोगतमिति भावः न लक्षयति नावबुध्यते इत्यर्थः॥१२॥

अन्यमुखे इति। अन्यस्य जनस्य अप्रियस्येत्यर्थः मुखे दुर्वादः दुष्टवाक्यं यः स एव दुर्वाद एव प्रियस्य वदने मुखे परिहासः प्रमोदजं वाक्यमित्यर्थः। तथाहि इतरेन्धनजन्मा अपरकाष्ठसम्भवः यः धूमः, सः अगुरुभवः अगुरुकाष्ठजश्चेत् धूपो भवतीति शेषः। कान्तस्य दुर्वचसा खिन्नां कान्तां प्रति सख्याः सान्त्वनोक्तिः॥ १३॥

अयि सुभग कुतुकतरला विचरन्ती सौरभानुसारेण।
त्वयि मोहाय वराकी पतिता मधुपीव विषकुसुमे ॥१४॥
अयि मुग्ध गन्धसिन्धुरशङ्कामात्रेण दन्तिनो दलिताः।
उपभुञ्जते करेणूः केवलमिह मत्कुणाः करिणः ॥ १५ ॥
अतिविनयवामनतनुर्विलङ्घते गेहदेहलीं न वधूः।
अस्याः पुनरारभटीं कुसुम्भवाटी विजानाति ॥ १६ ॥

अयीति। अयि सुभग! सुष्ठु भाग्यं यस्य तत्सम्बोधने कथमन्यथा तादृशी कान्ता त्वय्यनुरागिणीति भावः कुतुकं कौतुकम् आनन्दोद्भवः तत्र तरला लोलुपेत्यर्थः तदर्थिनीति यावत् सौरभानुसारेण प्रेमबाहुल्यया अन्यत्र सौगन्ध्यानुसरणया विचरन्ती स्पृहयन्ती अन्यत्र भ्रमन्ती वराकी तपस्विनी अनुकम्पार्हेति भावः सा कान्तेति भावः विषकुसुमे मधुपीव भ्रमरीव मोहाय मोहादित्यर्थः त्वयि पतिता आसक्तेत्यर्थः। दुष्टस्वभावं कान्तं प्रति कान्तासख्या उक्तिरियम् ॥ उपमालङ्कारः ॥ १४ ॥

अयीति। अयि मुग्ध मूढ़! दन्तिनः प्रबलदन्तशालिनः गजाः गन्धसिन्धुरस्य गन्धगजस्य गजेन्द्रविशेषस्य शङ्कामात्रेण तद्गन्धाघ्राणेनैवेत्यर्थः दलिताः पलायन्ते इत्यर्थः किन्तु केवलं करिणः शुण्डशालिन इत्यर्थः न तु दन्तिन इति भावः मत्कुणाः कीटविशेषाः इह जगति करेणूः हस्तिनीः, करेणुरिभ्यां स्त्रीत्यमरः। उपभुञ्जते सम्भुञ्जन्ते। कश्चित् महाजनस्त्रियं प्रति समासक्तं परं तद्भयात् निवृत्तं प्रति कौशलेन क्षुद्रा अपि महत् वस्तु भोक्तुं शक्नुवन्तीति केनचिदुपदिश्यते ॥ १५ ॥

अतीति। अतिविनयेन अतिलज्जयेति भावः वामनवत् तनुर्यस्याः तथाभूता अवनताङ्गीत्यर्थः वधूः गेहस्य देहलीम् आधारदारुविशेषं न विलङ्घते नोल्लङ्घ्य यातीत्यर्थः पुनः किन्तु कुसुम्भवाटी सङ्केतभूमिविशेषः अस्या आरभटीं प्रौढिविशेषं निर्लज्जत्वमित्यर्थः विजानाति विशेषेण

अन्तर्गतैर्गुणैः किं द्विता अपि यत्र साक्षिणो विरलाः।
स गुणो गीतेर्यदसौ वनेचरं हरिणमपि हरति ॥ १७ ॥

अतुलितसकलविभूषां प्रातर्बालां विलोक्य मुदितं प्राक्।
प्रियशिरसि वीक्ष्य यावकमथ निःश्वसितं सपत्नीभिः ॥१८॥

अयि लज्जावति निर्भरनिशीथरतनिःसहाङ्गि सुखसुप्ते।
लोचनकोकनदच्छदमुन्मीलय सुप्रभातं ते ॥ १९ ॥

वेति। अनया रहे एवं विनयं प्रदर्श्य श्वशुरादीन् प्रतार्य्य कुसुम्भयाच्ञाम् उपनायकेन सह सुरतक्रीडा क्रियते इति भावः ॥ १६ ॥

अन्तर्गतैरिति। अन्तर्गतैः अप्रकटितैरिति भावः गुणैः विद्यादिभिः किम्? न किमपि प्रयोजनमस्तीत्यर्थः यत्र गुणेषु द्वित्रा अपि द्वौ त्रयोऽपि साक्षिणः ज्ञातारः विरलाः न सन्तीति यावत्। यत्र असौ गुणः गीतेः कीर्त्तनादित्यर्थः वनेचरं हरिणमपि हरति रञ्जयति स गुणः। लोकरञ्जनमेव गुणप्रयोजनं नोचेत् गुणसद्भावो व्यर्थ इति भावः ॥ १७ ॥

अतुलितेति। सपत्नीभिः प्रातः अतुलिता अदृष्टाः सकलाः समग्रा विभूषाः स्रक्चन्दनानुलेपाः अङ्गरागा इति यावत् यस्याः तथाभूताम् असम्भुक्तामिति भावः बालां नवोढां सपत्नीमिति शेषः विलोक्य दृष्ट्वा प्राक् प्रथमं मुदितं हृष्टम्, अथ अनन्तरं प्रियस्य शिरसि यावकम् अलक्तकं वीक्ष्य निःश्वसितं दुःखातिशयादिति भावः। प्रथमं सम्भोगविरहेण सपत्न्यां प्रियप्रेमराहित्यनिर्णयेन सन्तुष्टा पश्चात् प्रियमस्तके यावकदर्शनेन प्रियस्य चरणपतनेनापि नानया मानः परित्यक्त इति परमसौभाग्यमस्या इति दुःखेन निःश्वास इति भावः ॥ १८ ॥

अयीति। अयि लज्जावति सलज्जे निर्भरम् अत्यन्तं यत् निशीथरतं मध्यरात्रसुरतं तेन निःसहानि अवस[न्ना]नि [अङ्गा]नि यस्याः तादृशि! अतएव सुखसुप्ते! सुखेन निद्रिते! स[...] [...]कोकनदच्छदं

अमिलितवदनमपीडितवक्षोरुहमतिविदूरजघनोरु।
शपथशतेन भुजाभ्यां केवलमालिङ्गितोऽस्मि तया ॥२०॥
अतिपूजिततारेयं दृष्टिः श्रुतिलङ्घनक्षमा सुतनु।
जिनसिद्धान्तस्थितिरिव सवासना कं न मोहयति ॥२१॥
अलमविषयभयलज्जावञ्चितमात्मानमियमियत्समयम्।
नवपरिचितदयितगुणा शोचति नालपति शयनसखीः ॥२२॥

नयनरक्तोत्पलपत्रं नयनस्य रक्तोत्पलसाम्यं दीर्घरात्रजागरणेन रतिव्यापारेण चेति बोध्यम्। उन्मीलय प्रकटय ते तव सुप्रभातम् अस्त्विति शेषः। नायिकां प्रति सख्या उक्तिरियम् ॥ १९ ॥

कश्चित् सखायं प्रति मानिन्याः कान्तायाश्चरितं वक्ति अमिलितेति। शपथशतेन नाहं कदापि एवं तव विप्रियं करिष्यामि तदर्थमसकृत् शपथः कृत इत्येवं निर्बन्धेन हेतुना तया कान्तया केवलम् अमिलितम् अनुत्तोलितम् अवनतमित्यर्थः वदनं यत्र तत् यथा तथा अपीडितौ अश्लिष्टौ वक्षोरुहौ स्तनौ यत्र तत् यथा तथा, तथा अतिविदूरौ अतिदूरस्थितौ जघनोरू यत्र तत् यथा तथा आलिङ्गितः अस्मि ॥ २० ॥

अतीति। हे सुतनु ! शुभाङ्गि ! अतिपूजिता अतिशयेन प्रशंसिता तारा महती विशालेत्यर्थः अथवा तारा कनीनिका यस्यां तादृशी अन्यत्र अतिशयेन पूजिता तारा तदाख्या जिनसम्प्रदायसेविता देवता यस्यां तथाभूता श्रुतिलङ्घनक्षमा कर्णान्तविस्तृतेत्यर्थः अन्यत्र वेदविरोधिनी सवासना कज्जलादिसंस्कारवती अन्यत्र जिनमतविहितहेतुमती इयं तव दृष्टिः जिनसिद्धान्तस्थितिरिव जिनानां बौद्धानां सिद्धान्तस्य स्थितिः मर्यादेव कं जनं न मोहयति न हरति अपि तु सर्वमेवेत्यर्थः ॥ २१ ॥

अलमिति। इयं कामिनी नवपरिचितदयितगुणा नूतनास्वादितप्रियसङ्गसुखेत्यर्थः इयत्समयम् एतावत्कालं व्याप्येत्यर्थः, व्याप्तौ

अनुरागवर्तिना तव विरहेणोग्रेण सा गृहीताङ्गी।
त्रिपुररिपुणेव गौरी वरतनुरर्धावशिष्टैव॥ २३॥

अन्यप्रवणे प्रेयसि विपरीते स्रोतसीव विहितास्थाः।
तद्गतिमिच्छन्त्यः सखि भवन्ति विफलश्रमा हास्याः॥२४॥

द्वितीया। अविषयाभ्यां निर्विषयाभ्याम् अहेतुकाभ्यामिति यावत् भयलज्जाभ्यां वञ्चितम् एतावत्कालं मया वृथा भयेन लज्जया च स्वामिसङ्गसुखं नानुभूतमिति विप्रलब्धमित्यर्थः आत्मानम् अहम् अलघु शोचामि अनुतपामि तथा शयनसख्यः न व्यालपन्ति एताभिः समानान्तरङ्गाभिरपि कथमहम् ईदृशं सुखमस्तीति नावबोधिताऽस्मि कथं वा नाहं प्रियसङ्गप्रकारं न शिक्षितेति क्रोधादिति भावः। नवोढा-मकृतपतिसङ्गां लज्जाभयवतीं नायिकां प्रलोभयितुं तत्सख्याः कस्याश्चिदनुतापवर्णनमिदम्॥ २२॥

अनुरागेति। सा वरतनुः वराङ्गी अनुरागेण वर्त्तते इति तथोक्तेन अन्यत्र अनुरागाधीनेन उग्रेण उत्कटेन असह्येनेति भावः अन्यत्र नटाख्येन त्रिपुररिपुणा स्वर्गमर्त्यपातालवैरिणा कुत्रचिदपि लोके स्वास्थ्यमकुर्वतेति यावत् अन्यत्र असुरपुरत्रयध्वंसिना तव विरहेण गृहीताङ्गी पीड़ितदेहा अन्यत्र हृतशरीरा गौरी पाण्डुवर्णा अन्यत्र पार्वतीव अर्धावशिष्टैव अतिक्षीणेत्यर्थः अन्यत्र अर्धाङ्गी अर्द्ध-नारीश्वरत्वयोगादिति भावः। श्लेषानुप्राणितोपमालङ्कारः॥ २३॥

अन्यप्रवणे इति। हे सखि! विपरीते स्वगन्तव्यविरोधिदिग्वर्त्तिनि स्रोतसि प्रवाहे तद्गतिं सा गतिः तां विपरीतगतिमित्यर्थः स्रोतस इति भावः इच्छन्त्य इव अन्यप्रवणे अन्यासक्ते प्रेयसि पत्यौ तद्गतिं तदासक्तिमित्यर्थः इच्छन्त्यः विहितास्थाः कृतप्रयत्नाः विफलश्रमाः हास्याः लोकैरुपहसनीयाश्च भवन्ति। परनायिकासक्तचेतसं नायकं वशीकर्तुमुद्यतां काञ्चित् प्रति तत्सख्या उक्तिरियम्॥ २४॥

अधिकः सर्वेभ्यो यः प्रियः प्रियेभ्यो हृदि स्थितः सततम्।
स लुठति विरहे जीवः कण्ठेऽस्यास्त्वमिव सम्भोगे ॥२५॥
अनयनपथे प्रिये न व्यथा यथा दृश्य एव दुष्प्रापे।
म्लानैव केवलं निशि तपनशिला वासरे ज्वलति ॥ २६ ॥
अविभाव्यो मित्रेऽपि स्थितिमात्रेणैव नन्दयन् दयितः।
रहसि व्यपदेशादयमर्थ इवाराजके भोग्यः ॥ २७ ॥

अधिक इति। यः सर्वेभ्यः प्रियेभ्यः वस्तुभ्यः अधिकः प्रियः सततं हृदि स्थितः, स जीवः जीवात्मा प्राणवायुर्वा सम्भोगे सुरतसङ्गे त्वमिव अस्यास्तव नायिकाया इति शेषः कण्ठे लुठति तव विरहे कण्ठागतप्राणासाविति नायकं विदेशस्थं प्रति कस्याश्चिद् उक्तिरियम्। उपमालङ्कारः ॥ २५ ॥

अनयनपथे इति। प्रिये अनयनपथे अदृष्टिगोचरे तथा व्यथा पीड़ा न दृश्ये दर्शनगोचरे सति दुष्प्रापे दुर्लभे यथा। तथाहि, तपनशिला सूर्य्यकान्तमणिः निशि रात्रौ सूर्य्यदर्शने इति भावः केवलं म्लाना एव मलिना एव, वासरे दिवसे सूर्य्योदये इति भावः ज्वलति सन्तपति। कस्याश्चित् सन्निहितपतिकाया अपि तत्सङ्गमलभमानायाः सखीं प्रति खेदवचनमिदम्। दृष्टान्तालङ्कारः ॥ २६ ॥

अविभाव्य इति। स्थितिमात्रेणैव सन्निधिमात्रेणैवेति भावः नन्दयन् प्रीतिं जनयन् दयितः प्रियः मित्रेऽपि किन्तु वक्तव्यं यत्राविलपिशब्दार्थः अविभाव्यः अभावनीयः मित्रसन्निधावपि तादृशप्रियभावना न कार्य्येति फलितार्थः। यद्वा मित्रे सूर्य्येऽपि एतेन रात्रावेव तद्भावना उचिता, अन्यथा प्रकाशः स्यादिति ध्वनिः। अयं दयितः अराजके राजशासनरहिते देशे इति यावत् अर्थ इव परकीय इति शेषः रहसि विजने व्यपदेशात् व्याजात् कौशलेनेति भावः भोग्यः। परकामां नारीं परधर्मासक्तां प्रति कस्यचित्सख्या उक्तिरियम् ॥ २७ ॥

अश्रौषीरपराधान् मम तथ्यं कथय मन्मुखं वीक्ष्य ।
अभिधीयते न किं यदि न मानचौराननः कितवः ॥२८॥

अन्योन्यमनु स्रोतसमन्यदथान्यत्तटात्तटं भजतोः ।
उदितेऽर्केऽपि न माघस्नानं प्रसमाप्यते यूनोः ॥ २९ ॥

अयि चूतवल्लि फलभरनताङ्गि विष्वग्विकासिसौरभ्ये ।
श्वपचघटकर्पराङ्का त्वं किल फलितापि विफलैव ॥३०॥

अश्रौषीरिति । मम अपराधान् अश्रौषीः श्रुतवत्यसि, मम मुखं वीक्ष्य मत्समक्षमित्यर्थः तथ्यं सत्यं कथय । इति नायकोक्तिः । यदि कितवः धूर्त्तस्त्वं मानस्य चौरम् अपहर्त्तृ इत्यर्थः आननं मुखं यस्य तथाविधः न भवसीति शेषः तदा किं न अभिधीयते नोच्यते । तव मुखदर्शनेनैव मे मानो गतस्तत् कथं ते अपराधान् वक्तुं शक्नुयामिति नायिका प्रतिवक्ति ॥ २८ ॥

अन्योन्यमिति । स्रोतसं प्रशस्तं स्रोतः, स्वार्थे ष्यप्रत्ययः । अन्यत् अपरं तथा तटात् अन्यत् तटम् अनु अनुलक्ष्येत्यर्थः अन्योन्यं परस्परं भजतोः सेवमानयोः विविधप्रकारेण सुरतप्रसक्तयोरिति भावः यूनोः दम्पत्योः अर्के सूर्य्ये उदितेऽपि माघस्नानं न प्रसमाप्यते माघस्नानस्य अनुदयकालीनत्वादिति भावः । समस्तरात्रिसम्भोगेऽपि नानयोस्तृप्तिर्जाता इदानीं सूर्य्योदयेऽपि तथा प्रसङ्गदर्शनादिति भावः ॥ २९ ॥

अयीति । अयि फलभरेण फलातिरेकेण नताङ्गि ! आनतावयवे ! यौवनभरेण आनताङ्गि इति ध्वन्यते । विष्वक् समन्तात् विकासि विस्तारि सौरभ्यं सौगन्ध्यं यस्यास्तत्सम्बुद्धौ अन्यत्र सौरभ्यं सौन्दर्य्यकीर्त्तिरिति ध्वन्यते । त्वं फलितापि फलवत्यपि भोगार्हापीति व्यज्यते श्वपचानां चाण्डालानां घटकर्पराङ्का कलसकर्परैश्चिह्निता चूतस्यैतद्दोहदेनाचिरात् फलोत्पत्तिरिति लोकप्रसिद्धिः । नीचभुक्तेति ध्वन्यते, किलेति प्रसिद्धौ । अतएव विफलैव अस्माकमभोग्यैवेति ध्वन्यते ।

अञ्जलिरकारि लोकैर्ग्लानिमनाप्यैव रञ्जिता जगती।
सन्ध्याया इव वसतिः स्वल्पापि सखे सुखायैव॥ ३१॥

अगृहीतानुनयां मामुपेक्ष्य सख्यो गता वर्तैकाहम्।
प्रसभं करोषि मयि चेत्त्वदुपरि वपुरद्य मोच्यामि॥३२॥

अस्थिरराग: कितवो मानी चपलो विदूषकस्त्वमसि।
मम सख्याः पतसि करे पश्यामि यथा ऋजुर्भवसि॥३३॥

अयोग्यसङ्गमकारिणीं काञ्चित् युवतिं योग्यसमागममिच्छन्तीं प्रति कस्यचित् साध्वाक्तिरियम्। अप्रस्तुतप्रशंसालङ्कारः। उक्तञ्च दर्पणे, क्वचित् विशेषः सामान्यात् सामान्यं वा विशेषतः। कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम्। अप्रस्तुतात् प्रस्तुतञ्चेत् गम्यते पञ्चधा ततः। अप्रस्तुतप्रशंसा स्यादिति॥ ३०॥

अञ्जलिरिति। हे सखे! लोकैः अञ्जलिः अकारि लोका वशीकृता इति भावः। अन्यत्र वन्दनार्थमिति भावः ग्लानिं निस्तेजस्कत्वं क्षयमिति यावत अनाप्त्वा अप्राप्यैव जगती पृथिवी रञ्जिता तोषिता अन्यत्र स्वरागेणेति भावः अतः सन्ध्याया इव स्वल्पापि वसतिः स्थितिः अल्पकालजीवनमिति यावत् सुखाय एव। अल्पजीवनमपि लोकवशीकरणरञ्जनकरं सुखमेव न तु दीर्घजीवनं परपीड़ाकरमिति भावः। उपमालङ्कारः॥ ३१॥

अगृहीतानुनयामिति। अगृहीतः अनुनयः मानभञ्जनार्थं सान्त्वनं यया तथाभूतां माम् उपेक्ष्य विहायेति यावत् सख्यः वर्तेति खेदे एकाहं गताः। चेत् यदि त्वं मयि प्रसभं बलात्कारमित्यर्थः करोषि तदाहम् अद्य त्वदुपरि तव उपरि त्वत्समक्षमिति यावत् वपुः शरीरं मोच्यामि त्यक्ष्यामि अथच तवोपरि शरीरपातनेन विपरीतरतमाचरिष्यामीति ध्वन्यते॥ ३२॥

अस्थिरराग इति। त्वम् अस्थिररागः अस्थिरप्रणयः कितवः धूर्त्तः मानी अभिमानवान् चपलः चञ्चलः तथा विदूषकः विकृतवेशः

अकरुण कातरमनसो दर्शितनीरा निरन्तरालेयम् ।
त्वामनुधावति विमुखं गङ्गेव भगीरथं दृष्टिः ॥ ३४ ॥

अन्तःकलुषस्तम्भितरसया भृङ्गारनालयेव मम ।
अप्युन्मुखस्य विहिता वरवर्णिनि न त्वया तृप्तिः ॥ ३५ ॥

अयि सरले सरलतरोर्मदमुदितद्विपकपोलपालेश्च ।
अन्योन्यमुग्धगन्धव्यतिहारः कषणमाचष्टे ॥ ३६ ॥

भावाद्यैश्चांशुकरः अपि, यदि मम सख्याः करे पतसि तदा यथा ऋजुः सरलः भवसि तथा पश्यामि । मत्सख्या एतादृशो गुणवत्तास्ति यत् तत्समीपे कोऽपि चापल्यादिकं कर्त्तुं न शक्नुयादिति भावः । धूर्त्तं नायकं प्रति कस्याश्चित् उक्तिरियम् ॥ ३३ ॥

अकरुणेति । हे अकरुण ! निर्दय ! कातरं व्याकुलं मनो यस्याः तथाभूतायाः तव प्रयाणे खिन्नचित्ताया इत्यर्थः मत्सख्या दृष्टिः, दर्शितं नीरम् अश्रुजलमित्यर्थः यया तथोक्ता अश्रूणि वर्षन्तीति यावत् अन्यत्र जलाभिसारिणी निरन्तराला अविच्छिन्ना इयं दृष्टिः गङ्गा भगीरथमिव विमुखं परित्यज्य गच्छन्तमित्यर्थः अन्यत्र अग्रगामिनं त्वाम् अनुधावति अनुसरति । क्रोधात् परित्यज्य गच्छन्तं नायकं प्रति नायिकासख्याः सान्त्वनोक्तिरियम् । उपमालङ्कारः ॥३४॥

अन्तरिति । हे वरवर्णिनि ! उत्तमाङ्गने ! भृङ्गारस्य जलपात्रविशेषस्य नालयेव अन्तःकलुषेण आन्तराभिमानेन अन्यत्र अन्तःस्थितमलादिना स्तम्भितः अप्रकटितः रसः शृङ्गारानुरागः अन्यत्र जलं यया तथाभूतया त्वया उन्मुखस्य लालसस्यापि मम तृप्तिः परितोषः शृङ्गाराभिलाषपूरणमित्यर्थः अन्यत्र पिपासाहरणमित्यर्थः न विहिता न कृता । मानिनीं प्रति नायकस्योक्तिरियम् । उपमालङ्कारः ॥ ३५ ॥

अयीति । अयि सरले ! मुग्धे ! सरलतरोः सरलवृक्षस्य मदेन मुदितः प्रमत्तः यो द्विपः हस्ती तस्य कपोलपालेश्च गण्डप्रदेशस्य च

अस्याः कररुहखण्डितकाण्डपटप्रकटनिर्गता दृष्टिः।
पटविगलितनिष्कलुषा स्वदते पीयूषधारेव ॥ ३७ ॥
अस्याः पतिगृहगमने करोति माताश्रुपिच्छिलां पदवीम्।
गुणगर्विता पुनरसौ हसति शनैः शुष्करुदितमुखी ॥३८॥
अङ्के निवेश्य कूणितदृशः शनैरकरुणेति शंसन्त्याः।
मोक्ष्यामि वेणिबन्धं कदा नखैर्गन्धतैलाक्तैः ॥ ३९ ॥

अन्योन्यं परस्परं सुगन्धस्य मनोहरस्य गन्धव्यतिहारः सौरभविनिमयः कथयं सङ्घर्षणम् आचष्टे कथयति सूचयतीत्यर्थः। परस्परगुणप्रीतिरेव परस्परानुरागस्य कारणमिति भावः। कस्याश्चित् कस्मिन्नपि नायके अनुरागः स्वाभाविकः कथमिति पृच्छायां कस्यचिदप्रस्तुतवर्णनेन प्रतिवचनमिदम्। अप्रस्तुतप्रशंसालङ्कारः ॥ ३६ ॥

अस्या इति। अस्याः कान्तायाः कररुहेण नखेन खण्डितात् छिन्नात् काण्डपटात् जवनिकायाः प्रकटं स्पष्टं यथा तथा निर्गता दृष्टिः पटविगलिता वस्त्रशोधिता अतएव निष्कलुषा निर्मला पीयूषधारेव अमृतधारेव स्वदते प्रीतिं जनयति। कस्याचित् सखायं प्रति प्रणयिन्याः प्रभावलोकनवर्णनमिदम्। उपमालङ्कारः ॥ ३७ ॥

अस्या इति। अस्याः कान्तायाः पतिगृहगमने तत्काले इत्यर्थः माता जननी पदवीं पन्थानम् अश्रुभिः नयनवारिभिः पिच्छिलां पिच्छिलामिव यावत् करोति, पुनः किन्तु असौ कान्ता गुणैः सौन्दर्य-यौवनादिभिः गर्विता साहङ्कारा अनएव शुष्कं विरसं रुदितं रोदनं मुखे यस्यास्तथाभूता सती शनैः मन्दं मन्दं सनहसीति भावः हसति कथं मे माता पतिगृहसुखं जानात्यपि मम एतादृशसुखसमये रोदितीति धिक्रोति भावः ॥ ३८ ॥

अङ्क इति। कदाहम् अङ्के क्रोडे निवेश्य उपवेश्य गन्धतैलाक्तैः सुगन्धतैलसिक्तैः नखैः कूणिते कातरे दृशौ यस्याः तादृश्याः बहुदिनात् परं वेणीबन्धमोचने क्लेशोदयादिति भावः, हे अकरुण!

अलमनलङ्कृतिसुभगे भूषणमुपहासविषयमितरासाम्।
कुरुषे वनस्पतिलता प्रसूनमिव बन्ध्यवल्लीनाम्॥ ४०॥
अबुधा अजङ्गमा अपि कयापि गत्या परं पदमवाप्ताः।
मन्त्रिण इति कीर्त्यन्ते नयबलगुटिका इव जनेन॥ ४१॥
अतिशीलशीतलतया लोकेषु सखी मृदुप्रतापा नः।

निष्ठुर! इति शनैर्मन्दं मन्दं शंसन्त्याः कान्तायाः वेणीबन्धं प्रोषितभर्तृकायाः केशसंस्कारस्य निषिद्धत्वात् दीर्घकालसंयतकेशपाशं मोच्यामि अपनेष्यामि। कस्यचित् प्रवासिनः कान्तास्मरणेन खेदोक्तिरियम्॥ ३९॥

अलमिति। हे अनलङ्कृतिसुभगे! विनालङ्कारं पतिवाल्लभ्यशालिनि! प्रियवशीकरणगुणयोगादिति भावः वनस्पतिलता अपुष्पोऽपि फलवान् वृक्ष इत्यर्थः, अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृता इति मनुः। बन्ध्यवल्लीनां विफललतानां प्रसूनमिव पुष्पमिव इतरासां नारीणां भूषणम् अलम् अत्यर्थम् उपहासविषयं हास्यास्पदं करोषि। अलङ्कारा न सौभाग्यहेतवः किन्तु गुणा एव तथेति भावः। काचित् विनालङ्कारं कथं पतिसमीपं गमिष्यामीति वादिनीं प्रति तत्सख्या उक्तिरियम्। उपमालङ्कारः॥ ४०॥

अबुधा इति। अबुधाः अबोधाः अचेतना इत्यर्थः अपि अजङ्गमाः गतिशक्तिहीना अपि स्थावरा अपीत्यर्थः कयापि गत्या चालनविशेषेणेत्यर्थः दैवगत्या च परं पदम् आद्यपाक्षिकपदम् उत्कृष्टं स्थानञ्च अवाप्ताः प्राप्ताः जनाः नयः नीतिरेव बलं तस्य गुटिका इव जनेन मन्त्रिण इति कीर्त्यन्ते। यथा शतरञ्जाख्यक्रीड़ायां क्षुद्रा बलगुटिकाचालनप्रभावेण राजकीयस्थानं मन्त्रिस्थानञ्चावाप्य मन्त्रिण इति कीर्त्यन्ते तथा क्षुद्रा अपि जना बुद्धिबलेन दैवगत्या क्रमेण उत्कृष्टं पदं लभन्ते इति भावः। उपमालङ्कारः॥ ४१॥

अतीति। नः अस्माकं सखी अतिशीलशीतलतया स्वभावस्याति-

क्षणवाम्यदह्यमानः प्रतापमस्याः प्रियो वेद ॥ ४२ ॥

अन्यास्वपि गृहिणीति ध्यायन्नभिलषितमाप्नोति ।
पश्यन् पाषाणमयीः प्रतिमा इव देवतात्वेन ॥ ४३ ॥

अनुपेत्य नीचभावं बालक परितो गभीरमधुरस्य ।
अस्याः प्रेम्णः पात्रं न भवसि सरितो रसस्येव ॥ ४४ ॥

सौम्यतया लोकेषु जनसन्निधावित्यर्थः मृदुप्रतापा मन्दतेजाः स्वं प्रतापं न प्रकाशयतीति भावः किन्तु क्षणवाम्येन क्षणिकप्रातिकूल्येन स्वल्पकालिकमानेनेति भावः दह्यमानः सातिशयं तप्यमान इत्यर्थः प्रियः पतिः अस्याः प्रतापं वेद जानाति लोकसमीपे प्रतापाविष्करणं विफलं प्रत्युत गर्वितेति निन्दाकारणं प्रियसमीपे प्रतापाविष्करणं सौभाग्यनिदानमिति भावः। कस्याश्चित् सपत्नीसखीसमीपे सख्याः सौभाग्यवर्णनमिदम् ॥ ४२ ॥

अन्यास्विति । पाषाणमयीः प्रतिमाः देवप्रतिकृतीः देवतात्वेन पश्यन्निव मत्सखीप्रियः अन्यासु नारीषु अपि गृहिणी स्वकान्ता इति ध्यायन् चिन्तयन् अभिलषितं मनोरथम् आप्नोति । मत्सखी एतादृशी पत्युर्वल्लभा यत् अन्या अपि नारीस्तद्रूपेण चिन्तयन् स तासु आसक्तिं कुरुते इति फलितार्थः। तव सखी यदि एतादृश-गुणशालिनी तदा कथं तद्भर्त्ता अन्यास्वासक्त इति वादिनीं प्रति कस्याश्चित् नायिकासख्या उक्तिरियम् ॥ ४३ ॥

अनुपेत्येति । हे बालक! रसानभिज्ञ इति भावः परितः सर्वतः सर्वप्रकारेणेत्यर्थः नीचभावं विनयमित्यर्थः अन्यत्र नतभाव-मित्यर्थः अनुपेत्य अप्राप्य सरितः नद्याः रसस्येव जलस्येव गभीरम् अतिप्रभूतम् अगाधञ्च मधुरञ्च तथाभूतस्य अस्याः कान्तायाः प्रेम्णः प्रणयस्य पात्रं भाजनं न भवसि। बलात्कारेणास्याः प्रेम न लभ्यते प्रत्युत विनयेनेति कमपि शठनायकं प्रति तत्सख्या उक्तिरियम् ॥ ४४ ॥

अधिवासनमाधेयं गुणमार्गमपेक्षते न च ग्रथनाम् ।
कलयति युवजनमौलिं केतककलिका स्वरूपेण ॥ ४५ ॥
अपनीतनिखिलतापां सुभग स्वकरेण विनिहितां भवता ।
पतिशयनवारपालिज्वरौषधं वहति सा मालाम् ॥ ४६ ॥
अगणितगुणेन सुन्दर कृत्वा चारित्रमप्युदासीनम् ।
भवतानन्यगतिः सा विहितावर्तेन तरणिरिव ॥ ४७ ॥

अधिवासनमिति । केतककलिका केतककुसुमकोरकः, कलिका कोरकः पुमानित्यमरः । अधिवासनं गन्धादिना संस्कारं, संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनमिति सम्प्रदायः । आधेयं कर्त्तव्यमित्यर्थः गुणमार्गं गुणप्रकाशविधानमित्यर्थः ग्रथनां गुम्फनां च न अपेक्षते किन्तु स्वरूपेण निसर्गेणेत्यर्थः युवजनानां मौलिं धम्मिल्लं, मौलिः किरीटधम्मिल्लावित्यमरः । कलयति आश्रयति । स्वतःसिद्धगुणशालिनीनां न क्वापि आहार्य्यगुणापेक्षेति भावः । कामपि गुणशालिनीं कामिनीं गन्धमाल्यादिभिः संस्कारमभिलषन्तीं प्रति कस्याश्चिदुक्तिरियम् ॥ ४५ ॥

अपनीतेति । हे सुभग ! या तव कान्ता भवता स्वकरेण निजहस्तेन विनिहितां विरचितां ग्रथितामित्यर्थः अपनीतः नाशितः निखिलः समस्तः तापः यया तथाभूतां मालां पत्या सह शयनमेव वारपालिज्वरः तस्य औषधम् आरोग्यकरं द्रव्यं तदिवेत्यर्थः प्रतीयमानोत्प्रेक्षा वहति धत्ते । या त्वया सह शयनवारं पालिज्वरमिव क्लेशकरममन्यत सेदानीं त्वयि तथानुरक्ता जाता यत् त्वया ग्रथितां मालां प्राप्य तव शय्यायां शयनं तापहरं मन्यते इति कस्याश्चित् पतिसङ्गविद्वेषवत्या नायिकायाः पुनस्तत्समागमाभिलाषः सञ्जात इति तन्मत्वा नायकं प्रति उक्तिरियम् ॥ ४६ ॥

अगणितेति । हे सुन्दर ! अगणिता गुणाः स्त्रीवशीकरणकौशलानि येन तथाभूतेन भवता आवर्त्तेन जलभ्रमिविशेषेण, आदावर्त्तो-

अनुरक्तरामया पुनरागतये स्थापितोत्तरीयस्य ।
अप्येकवाससस्तव सर्वयुवभ्योऽधिका शोभा ॥ ४८ ॥

अर्धः प्राणित्येको मृत इतरो मे विधुन्तुदस्येव ।
सुधयेव प्रियया पथि सङ्गत्यालिङ्गितार्धस्य ॥ ४९ ॥

[illegible]मतां मम [illegible]मरः । [illegible] [illegible]रिव चरित्रमेव चारित्र्यं तदपि उदासीनस्य अपाङ्गमित्यर्थः [illegible]त्वा पातिव्रत्यमपि अपहायेति भावः [illegible] अन्या त्वदतिरिक्ता [illegible]रूपायो यस्यास्तादृशी सा कामि[illegible] वि[illegible]ता कृता । अन्यत्र सग[illegible]गुणेन अर्जितवसन-रञ्जनेति [illegible] त्यस्य विशेषणम् चारित्रमित्यस्य चकारप[illegible]त्यागेन अरित्रं वाहनदण्डमित्यर्थः । अनन्यगतिः निरुपायेति तराणित्रस्य विशेषणं बोध्यम् । उपमालङ्कारः । उपनायकं प्रति कस्याश्चित् परकीयायाः सख्या उक्तिरियम् ॥ ४७ ॥

अनुरक्तेति । अनुरक्तरामया अनुरक्तकान्तया पुनरागतये पुनरागमनाय स्थापितं रक्षितमित्यर्थः उत्तरीयं यस्य तादृशस्य एकवाससः अद्वितीयवस्त्रस्य तव सर्वेभ्यः युवभ्यः अधिका शोभा जातेति शेषः । काव्यलिङ्गानुप्राणितो व्यतिरेकाल-ङ्कारः । तदुक्तं दर्पणे, हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति, आधिक्यमुपमेयस्योपमानान्न्यूनताथवा । व्यतिरेक इति च ॥ ४८ ॥

अर्द्ध इति । सुधयेव प्रियया कयाचित् कान्तया पथि सङ्गत्य समागत्य आलिङ्गितः अर्द्धः विषमांशः, पुंस्यर्द्धोऽर्द्धं समेऽंशके इत्य-मरः । एतेन राहोरसमांशमुखरूपस्य उपमानता युज्यते । यस्य तथाभूतस्य विधुन्तुदस्येव राहोरिव मे मम एकोऽर्द्धः कियान् अंश इत्यर्थः यावान् प्रियया स्पृष्ट इति भावः प्राणिति जीवति इतरः मृतः । यथा प्राप्तयापि सुधया दुर्दैवात् राहोर्न सम्भोगस्तथा पथि प्राप्तयापि प्रियया न मम सम्यक् सम्भोग इति भावः । कस्यचित् सखायं प्रति पथि कान्तासम्भोगापरितोषवचनमिदम् । उपमालङ्कारः ॥ ४९ ॥

अवधीरितोऽपि निद्रामिषेण माहात्म्यमसृणया प्रियया ।
अवबोधितोऽस्मि चपलो वाष्पस्तिमितेन तल्पेन ॥ ५० ॥

अयि शब्दमात्रसाम्यादास्वादितशर्करस्य तव पथिक ।
स्वल्पो रसनाच्छेदः पुरतो जनहास्यता महती ॥ ५१ ॥

अभिनवयौवनदुर्जयविपक्षजनहन्यमानमानापि ।
सूनोः पितृप्रियत्वाद्बिभर्ति सुभगापदं गृहिणी ॥ ५२ ॥

अपमानितमिव सम्प्रति गुरुणा ग्रीष्मेण दुर्बलं शैत्यम् ।

अवधीरित इति । चपलः धूर्त्तः अहं माहात्म्येन औदार्य्येण मसृणया कोमलया अकठिनेत्यर्थः तया प्रियया निद्रामिषेण निद्राच्छलेन अवधीरितः अवज्ञातः अपि वाष्पेण अश्रुजलेन स्तिमितेन सिक्तेनेत्यर्थः आर्द्रेणेत्यर्थः तल्पेन शय्यातलेन अवबोधितः मानं ज्ञापितोऽस्मि । कस्यचित् सखायं प्रति कान्ताया मानवर्णनमिदम् ॥ ५० ॥

अयीति । अयि पथिक ! एतद्देशानभिज्ञ इति भावः शब्दमात्रसाम्यात् नारीति शब्दमात्रेण सादृश्यात् आस्वादिता भुक्ता शर्करा सिकता येन तथाभूतस्य शर्करायाः गुड़भवद्रव्यविशेषस्य भ्रमादिति भावः तव रसनाच्छेदः जिह्वात्रुटिः स्वल्पः सामान्यः अकिञ्चित्कर इत्यर्थः किन्तु पुरतः अग्रतः महती जनानां हास्यता उपहासः । त्वया यस्यां सङ्गतं सा अत्यन्तं हेयाहेति व्यज्यते । कश्चित् अयोग्यकान्तासङ्गकारिणं प्रति कस्यचिदुक्तिरियम् ॥ ५१ ॥

अभिनवेति । अभिनवेन यौवनेन दुर्जयः जेतुमशक्यः यो विपक्षजनः सपत्नीजन इति भावः तेन हन्यमानः ताड्यमानः मानो यस्यास्तथाभूतापि गृहिणी ज्येष्ठा भार्य्या सूनोः पुत्रस्य पितृप्रियत्वात् पितुः प्रीतिभाजनत्वात् सुभगापदं सौभाग्यवतीयमिति पदम् उपाधिं सम्मानमिति भावः बिभर्त्ति धत्ते । सपत्नीदुःखेन सन्तप्तां कामपि पुत्रवतीं प्रति कस्यचित् सान्त्वनवचनम् ॥ ५२ ॥

अपमानितमिति । सम्प्रति गुरुणा महता ग्रीष्मेण अपमानि-

स्नानोत्सुकतरुणीस्तनकलशनिबद्धं पयो विशति ॥ ५३ ॥
अलसयति गात्रमखिलं क्लेशं मोचयति लोचनं हरति ।
स्वाप इव प्रेयान्मम मोक्तुं न ददाति शयनीयम् ॥ ५४ ॥
अंसावलम्बिकरधृतकचमभिषेकार्द्रधवलनखरेखम् ।
धौताधरनयनं वपुरस्तमनङ्गस्य तव निशितम् ॥ ५५ ॥

र्त्तमिव तिरस्कृतमिव अतएव दुर्बलं क्षीणप्रभावं शैत्यं शीतलत्वं स्ना-
नाय उत्सुका या तरुणी युवतिः तस्याः स्तनकलशाभ्यां निबद्धं तद-
न्तर्गतमिति भावः पयः जलं विशति आश्रयति प्रबलग्रीष्मतप्तस्य
जलप्रवेश उचित इति, दुर्बलमित्यनेन प्रतीकारासामर्थ्यमिति च
व्यज्यते । ग्रीष्मे तरुणीस्तनयोरतिशीतलत्वं प्रसिद्धमेव । प्रबलग्रीष्मसन्त-
प्तस्य शैत्यस्येव प्रबलमदनानलसन्तप्तस्य मम तरुणीकुचकलशाश्रयः
कर्त्तव्य इति, यथा च अन्योऽपि बलपरूमानितः सन्तप्तः प्रतीकारा-
समर्थः कलसादिकं गले बद्धा जले देहं त्यजति तथा अहमपि एतद्
विना देहं त्यक्ष्यामीति च भावः । कस्यचित् कामसन्तप्तस्य प्रियालाभ-
भमानस्योक्तिरियम् ॥ ५३ ॥

अलसयतीति । मम प्रेयान् प्रियतमः स्वाप इव निद्रेव अखिलं
अमग्रं गात्रम् अलसयति उत्थानासमर्थं करोतीति यावत्, अखिलं
समस्तं क्लेशं सन्तापं मोचयति त्याजयति हरतीति भावः, लोचनं
हरति निमीलयति सुखातिशयात् इन्द्रियशैथिल्यजननाच्चेति भावः
तथा शयनं शय्यां मोचयितुं त्याजयितुं न ददाति । उपमालङ्कारः ।
कस्याश्चित् प्रियसङ्गनिवृत्त्या शयनात् चिरनिर्गतायाः कथमियती
वेला तव शयनान्निर्गताया इति पृच्छन्तीं सखीं प्रति उक्तिरियम्
॥ ५४ ॥

अंसेति । अंसे स्कन्धदेशे अवलम्बिनः करेण हस्तेन धृताश्च
कचाः केशा यस्य तत्, अभिषेकेण स्नानेन आर्द्राः धवलाः श्वेता
नखरेखा नखक्षतानि यस्य तथोक्तं तथा धौते क्षालिते अधरनयने

अविनिहितं विनिहितमिव युवसु स्वच्छेषु वारवामदृशः ।
उपदर्शयन्ति हृदयं दर्पणबिम्बेषु वदनमिव ॥ ५६ ॥

अतिलज्जया त्वयैव प्रकटः प्रेयानकारि निभृतोऽपि ।
प्रासादमौलिरुपरि प्रसरन्त्या वैजयन्त्येव ॥ ५७ ॥

अन्योन्यग्रथनागुणयोगाद्गावः पदार्पणैर्बहुभिः ।
खलमपि तुदन्ति मेढीभूतं मध्यस्थमालम्ब्य ॥ ५८ ॥

यस्य तथाभूतं तव वपुः शरीरम् अनङ्गस्य कामस्य निशितं तीक्ष्णं शस्त्रम् । कस्यचित् कामपि प्रत्युक्तिरियम् ॥ ५५ ॥

अविनिहितमिति । वारवामदृशः वाराङ्गनाः स्वच्छेषु निर्मलेषु अमायिष्विति भावः युवसु तरुणेषु दर्पणबिम्बेषु वदनमिव अविनिहितं विशेषेण अनर्पितमपि हृदयं प्रेमेति भावः विनिहितमिव विशेषेण अर्पितमिव उपदर्शयन्ति प्रदर्शयन्ति । कपटप्रेमाणो हि वेश्या इति भावः ॥ ५६ ॥

अतीति । अतिलज्जया अतिशयेन लज्जावत्या त्वयैव निभृतोऽपि अन्यैरनधिगतोऽपि प्रेयान् प्रसरन्त्या वायुवेगेन उड्डीयमानया वैजयन्त्या पताकया प्रासादमौलिरिव हर्म्यशिखरमिव प्रकटः प्रकाशः अकारि कृतः । इयमेनं दृष्ट्वा यदतिलज्जां प्रकटयति तस्मादस्याः कोऽप्यमस्तीति लोकैरधिगम्यते तत्तवायमपराध एव नत्वस्येति कामिनीं प्रति कस्याश्चित् सख्या वचनम् । उपमालङ्कारः ॥ ५७ ॥

अन्योन्येति । अन्योन्यग्रथनागुणः परस्पराविरोधिघटनारूपो धर्मः अन्यत्र अन्योन्यबन्धनरज्जुः तद्योगात् तत्सम्बन्धात् गावः वाचः पूर्वापराविरुद्धवाक्परम्परा इत्यर्थः, स्वर्गेषु पशुवाग्वज्रादिङ्नेत्रघृणि-भूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौरित्यमरः । अन्यत्र वृषभाः बहुभिः अनेकविधैः पदार्पणैः व्यवहारपदप्रयोगैः अन्यत्र अनेकैः पदविन्यासैः मेढीभूतम् आश्रयभूतं मध्यस्थं पक्षपातरहितं जनमित्यर्थः अन्यत्र मध्यभूमिस्थितम् आलम्ब्य आश्रित्य खलमपि दुर्जनमपि

अननुग्रहेण न तथा व्यथयति कटुकूजितैर्यथा पिशुनः।
रुधिरादानादधिकं दुनोति कर्णे क्वणन् मशकः॥ ५९ ॥
अग्रे लघिमा पश्चान्महतापि पिधीयते नहि महिम्ना।
वामन इति त्रिविक्रममभिदधति दशावतारविदः॥ ६० ॥
अङ्के स्तनन्धयस्तव चरणे परिचारिका प्रियः पृष्ठे।
अस्ति किमु लभ्यमधिकं गृहिणि यदाशङ्कसे बालाम् ॥६१॥

अन्यत्र धान्यमर्दनस्थानमपि तुदन्ति व्यथयन्ति अन्यत्र दलन्ति। व्यव- हारादिभिरुपायैर्दुर्जनगामनं भवतीति फलितम् ॥ ५८ ॥

दुर्जनवाक्यमपि दुःखयतीत्याह, अननुग्रहेणेति। पिशुनः खलः, पिशुनौ खलसूचकावित्यमरः। अननुग्रहेण अकृपया नैष्ठुर्य्येणेति यावत् तथा न कटुकूजितैः दुर्वचोभिः यथा व्यथयति तापयति। तथाहि, मशकः कर्णे क्वणन् रुवन् रुधिरादानात् रक्तपानात् अधिकं दुनोति व्यथयति। प्रतिवस्तूपमालङ्कारः साधारणधर्मस्य व्यथनस्य दवनस्य च एकरूपतया पृथङ्निर्देशात्। तदुक्तं दर्पणे, प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति ॥ ५९ ॥

अग्रे इति। अग्रे आदौ लघिमा लाघवं पश्चात् जातेनेति शेषः महतापि महिम्ना गौरवेण न हि पिधीयते नैव आच्छाद्यते। तथाहि, दशावतारविदः दश अवताराः मीनकूर्मवराहनृसिंहवामन- परशुरामरामकृष्णबुद्धकल्किरूपाः तान् विदन्तीति तथोक्ताः विष्णो- रवतारदशकज्ञा इत्यर्थः त्रिषु लोकेषु स्वर्गमर्त्यपातालेषु विक्रमः पादनिःक्षेपः पदाक्रमणमिति यावत् पराक्रमो वा यस्य तादृशं विष्णु- मपि वामनः क्षुद्रजीव इति अभिदधति कीर्त्तयन्ति। यदा जगदी- श्वरस्यापि वामनभावादेवमगौरवं तदा का कथान्येषामिति, प्रथमा अकीर्त्तिर्न केनापि परिहर्त्तुं शक्यते इति च भावः॥ ६० ॥

अङ्के इति। हे गृहिणि ! गृहस्वामिनि ! अङ्के क्रोड़े तवेति

अधर उदस्तः कूजितमामीलितमक्षि लोलितो मौलिः ।
आसादितमिव चुम्बनसुखमस्पर्शेऽपि तरुणाभ्याम् ॥ ६२ ॥
अतिरभसेन भुजोऽयं वृतिविवरेण प्रवेशितः सदनम् ।
दयितास्पर्शोल्लसितो नागच्छति वर्त्मना तेन ॥ ६३ ॥
अम्बरमध्यनिविष्टं तवेदमतिचपलमलघु जघनतटम् ।

शेषः स्तनन्धयः स्तन्यपायी शिशुः पुत्रवत्यसीति भावः, चरणे परिचारिका किङ्करी दासी तवाधीनेति भावः, प्रियः पतिः पृष्ठे पश्चाद्वर्त्ती अनुगत इत्यर्थः, एतस्मात् अधिकं लभ्यं तव किम् अस्ति ? यत् त्वं बालां नवोढां सपत्नीमिति शेषः आशङ्कसे । नवोढा सपत्नी मे सौभाग्यमपनेष्यतीति बिभेषि ? एतादृशप्रभुत्वे तथासम्भव इति भावः ॥ ६१ ॥

अधर इति । तरुणाभ्यां युवभ्याम् अस्पर्शे अङ्गस्पर्शाभावेऽपीत्यर्थः अनुयोगात् परकीयत्वादिति भावः अधरः उदस्तः उन्नमितः, कूजितं स्वरविशेषः कृतः, अक्षि नेत्रम् आमीलितं सुखातिशयादिति भावः, मौलिः शिरः लोलितः कम्पितः अलमलमिति परिलालनज्ञापनार्थमिति भावः, अतः चुम्बनसुखम् आसादितमिव प्राप्तमिव । तादृशाधरोदस्तत्वादिकस्य नान्यथा सम्भवादिति भावः । तरुणयोरत्यासक्तिवर्णनमिदम् ॥ ६२ ॥

अतिरभसेनेति । अतिरभसेन अत्युल्लासेन अत्यधिकमदनावेगेन वा, रभसो वेगहर्षयोरित्यमरः । दयितायाः कान्तायास्तवेति शेषः स्पर्शात् स्पर्शं प्राप्येत्यर्थः उल्लसितः उल्लासं प्राप्तः अयं भुजः हस्तः तव दयितस्येति भावः वृतिविवरेण वेष्टनच्छिद्रेण भित्तिरन्ध्रेण वा सदनं गृहं तवेति शेषः प्रवेशितः नीतः, तेन वर्त्मना मार्गेण न आगच्छति न इति शेषः प्रकाशभयादिति भावः । परकान्तां प्रति कस्याश्चित् दूत्या उक्तिरियम् ॥ ६३ ॥

अम्बरमिति । चातक इव पक्षिविशेष इव अहम् अम्बरस्य वसनस्य

चातक इव नवमभ्रं निरीक्षमाणो न तृप्यामि ॥ ६४ ॥
अयमन्धकारसिन्धुरभाराक्रान्तावनीभराक्रान्तः ।
उन्नतपूर्वाद्रिमुखः कूर्मः सन्ध्यास्रमुद्वमति ॥ ६५ ॥
अन्तर्भूतो निवसति जडे जडः शिशिरमहसि हरिण इव ।
अजडे शशीव तपने स तु प्रविष्टोऽपि निःसरति ॥ ६६ ॥

आकाशस्य च मध्ये निविष्टं स्थितं वसनावृतमित्यर्थः आकाशोदित-मित्यर्थश्च अतिचपलं रतविशेषात् स्पन्दमानमित्यर्थः गत्वरमित्यर्थश्च अलघु विशालं नवम् अभ्रमिव मेघमिव तव जघनतटं कटिपुरोभागं, स्त्रीकट्याः जघनं पुर इत्यमरः। निरीक्षमाणः पश्यन् न तृप्यामि न तृप्तिं लभे पुनः पुनर्द्रष्टुमिच्छामीति यावत्। नायिकां प्रति नायकस्योक्तिरियम् ॥ ६४ ॥

अयमिति। अन्धकारा एव सिन्धुराः गजाः तेषां भारेण आक्रान्ता या अवनी पृथ्वी तस्या भारेण गुरुत्वातिशयेन आक्रान्तः अभिभूतः अतएव उन्नतः पूर्वाद्रिः पूर्वाचलः उदयपर्वत इत्यर्थः एव मुखं यस्य तथाभूतः कूर्मः कमठः पृथिवीधरः विष्णोरवतारविशेष इत्यर्थः सन्ध्यास्रं प्रातःसन्ध्यारूपं रुधिरम् उद्वमति उद्गिरति। प्रतीयमानोत्प्रेक्षा। प्रातःसुरतासक्तौ तरुणौ प्रति तयोरुद्बोधनार्थं सख्या उक्तिरियम् ॥ ६५ ॥

अन्तर्भूत इति। जडः मूर्खः शिशिरमहसि शीतरश्मौ हरिण इव जडे मूर्खे अन्यत्र जलरूपे अन्तर्भूतः सन् निवसति जडे एव जडस्य समागतिरिति भावः। अजडे तेजोरूपे तपने शशीव चन्द्र इव स तु जडः प्रविष्टोऽपि अन्तर्गतोऽपि निःसरति निर्गच्छति अमावस्यायां चन्द्रमण्डलस्य सूर्यान्तर्हितत्वस्य शास्त्रीयत्वात्। पण्डित-सन्निधौ मूर्खस्य कथञ्चित् प्रवेशोऽपि शीघ्रमेव ततो भ्रंशः स्यादिति भावः। उपमालङ्कारः ॥ ६६ ॥

अगणितजनापवादा त्वत्पाणिस्पर्शहर्षतरलेयम् ।
आयास्यतो वराकी ज्वरस्य तल्पं प्रकल्पयति ॥ ६७ ॥

अप्येकवंशजनुषोः पश्यत पूर्णत्वतुच्छताभाजोः ।
ज्याकार्मुकयोः कश्चिद् गुणभूतः कश्चिदपि भर्ता ॥ ६८ ॥

अभिनवकेलिक्लान्ता कलयति बाला क्रमेण घर्माम्भः ।
ज्यामर्पयितुं नमिता कुसुमास्त्रधनुर्लतेव मधु ॥ ६९ ॥

अगणितेति । अगणितः अवज्ञातः जनापवादः लोकनिन्दा यया तथोक्ता तव पाणिस्पर्शे यः हर्षः सुखं तेन तरला लोलुपेत्यर्थः इयं वराकी तपस्विनी अनुकम्पार्हेति यावत् आयास्यतः आगमिष्यतः ज्वरस्य तल्पं शय्यां प्रकल्पयति विरचयति । ज्वरागमनव्याजेन कस्यापि चिकित्सकरूपोपनायकं प्रति समासक्तिवर्णनमिदम् ॥ ६७ ॥

अपीति । एकस्मिन् वंशे वेणुविशेषे कुले इति ध्वनिः जनुर्जन्म, जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव इत्यमरः । ययोः तथाभूतयोः पूर्णत्वं प्रधानत्वं तुच्छत्वं हीनत्वञ्च भजत इति तथोक्तयोः प्रधानाप्रधानयोरित्यर्थः ज्याकार्मुकयोः मौर्वीधनुषोः मध्ये कश्चित् ज्यारूप इत्यर्थः गुणभूतः अप्रधान इत्यर्थः अधीन इति यावत् कश्चिदपि अपर इत्यर्थः कार्मुकरूप इति यावत् भर्त्ता प्रधानं भवतीति शेषः एकवंशीयत्वेऽपि गुणप्रधानभावः दैवाधीनः घटनाधीनो वेति नात्र कस्यचिद् विषादः कार्य्य इति कश्चित् खिद्यमानं प्रति कस्यचित् प्रबोधवचनम् । अप्रस्तुतप्रशंसालङ्कारः ॥ ६८ ॥

अभिनवेति । अभिनवेन नूतनप्रकारेण विचित्रेणेति भावः केलिना सुरतव्यापारेण क्लान्ता श्रान्ता बाला नवीना कान्ता ज्यां मौर्वीम् अर्पयितुम् आरोपयितुं नमिता कुसुमास्त्रस्य कामस्य धनुर्लता पुष्पमयीति भावः मधु मकरन्दमिव क्रमेण कपोलाद्युत्क्रमेण घर्माम्भः स्वेदजलं कलयति धारयति त्यजति वा । उपमालङ्कारः । नायिकासख्या नायकं प्रति वचनमिदम् ॥ ६९ ॥

असती कुब्जा धीरा प्रौढ़ा प्रतिवेशिनी यदासक्तिम् ।
कुरुते सरसा च तदा ब्रह्मानन्दं तृणं मन्ये ॥ ७० ॥
अविरलपतिताश्रु वपुः पाण्डु स्निग्धं तवोपनीतमिदम् ।
शतधौतमाज्यमिव मे स्मरशरदाहव्यथां हरति ॥ ७१ ॥
अन्तर्निपतितगुञ्जागुणरमणीयश्चकास्ति केदारः ।
निजगोपीविनयव्ययखेदेन विदीर्णहृदय इव ॥ ७२ ॥

असतीति । असती एतेन पातिव्रत्यभङ्गात् परकीयेति व्यज्यते । कुब्जा कुलीना एतेन सुशीलत्वं व्यज्यते । धीरा चापल्यरहिता एतेन स्थिरप्रेमत्वं व्यज्यते । प्रौढ़ा प्रगल्भा एतेन विशिष्टरतज्ञत्वं सूच्यते । प्रतिवेशिनी एतेन अपरिचितापेक्षया भयानकत्वं नात्र तथेति व्यज्यते । सरसा च रसवती नत्वरसिकेति भावः यदा आसक्तिं सङ्गं कुरुते तदा ब्रह्मानन्दं परमात्मसाक्षात्कारजं सुखं तृणं तुच्छमिति भावः मन्ये । अत्र विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः तदुक्तं दर्पणे, उक्तिर्विशेषणैः साभिप्रायैः परिकरो मत इति ॥७०॥

अविरलेति । अविरलं घनं यथा तथा पतितानि अश्रूणि यस्य तथोक्तं पाण्डु धवलं स्निग्धं स्नेहमयम् उपनीतम् उपस्थितम् इदं तव वपुः शरीरं शतधौतं शतवारक्षालितम् आज्यमिव घृतमिव मे मम स्मरस्य कामस्य शरेण तत्प्रहारेणेति भावः यो दाहः तेन या व्यथा पीड़ा यातनेत्यर्थः तां हरति अपनयति । उपमालङ्कारः । चिरविरहेण खिन्नां कान्तां प्रति प्रोषितागतस्य नायकस्य वचनमिदम् ॥ ७१ ॥

अन्तर्निपतितेति । अन्तर्निपतितेन गुञ्जागुणेन गुञ्जादाम्ना गुञ्जासमूहेनेति भावः रमणीयः सुदर्शनीय इति यावत् केदारः क्षेत्रवाटीविशेषः निजा स्वीया या गोपी रक्षिता तस्या विनयः शिष्टाचारः पातिव्रत्यमिति भावः तस्य व्ययः नाशः एतत्प्रदेशे उपनायकसमागमेनेति भावः तेन यः खेदः दुःखं तेन हेतुना विदीर्णहृदय इव चकास्ति

अमुना हतमिदमिदमिति रुदती प्रतिवेशिनेऽङ्गमङ्गमियम्
रोषमिषदलितलज्जा गृहिणी दर्शयति पतिपुरतः ॥ ७३ ॥

---

## आकारादिः ।

आन्तरमपि वहिरिव हि व्यञ्जयितुं रसमशेषतः सततम् ।
असती सत्कविसूक्तिः काचघटीति त्रयं वेद ॥ १ ॥

राजते प्रभोरुत्कृष्टवस्तुदाभ्यां आश्रितस्य भृत्यस्य खेदो युक्त एव तेन हृदयविदारणं ततश्च रुधिरस्राव इति गुञ्जानां रक्तवर्णत्वादुत्प्रेक्षालङ्कारः ॥ ७२ ॥

अमुनेति । रोषमिषेण क्रोधव्याजेन कपटेन क्रोधेनेत्यर्थः दलिता नाशिता लज्जा यया तादृशी इयं गृहिणी पतिपुरतः पत्युः समक्षं प्रतिवेशिने कस्मैचिदिति शेषः अमुना जारेणेति भावः इदम् अङ्गम् इदम् अङ्गं वक्षःस्थलादिकमिति शेषः हतं दलितम् इति रुदती सती दर्शयति । न ममात्र दोषः अनेन मे इदमिदं कृतमिति पतिसमक्षं प्रतिवेशिने आत्मदोषशोधनार्थं व्याहरतीति फलितम् । सर्वथा निर्लज्जाया व्यभिचारिण्या अकार्य्यं नास्तीति भावः ॥ ७३ ॥

---

आन्तरमिति । असती व्यभिचारिणी नारी सत्कवेः सूक्तिः शोभना वाक् तथा काचघटी काचनिर्मितजलपात्रम् इति त्रयम् आन्तरमपि अन्तःस्थितमपि सततम् अविच्छिन्नं रसं रागम् अशेषतः कार्त्स्न्येन वहिरिव वाह्यमिव व्यञ्जयितुं प्रकटयितुं वेद हि जानात्येव । अन्तर्गतभावविशेषमपि रसम् असती वहिः प्रकाशयति नाहं तथेति कयाचित् नायिकया कथं मयि नानुरागं दर्शयतीति वादिनं नायकम् प्रति उच्यते । अत्र प्रस्तुताया असत्या अप्रस्तुतयोः सत्-

आलोक एव विमुखी क्वचिदपि दिवसे न दक्षिणा भवसि ।
छायेव तदपि तापं त्वमेव मे हरसि मानवति ॥ २ ॥
आज्ञा काकुर्य्याञ्चाक्षेपो हसितं च शुष्करुदितं च ।
इति निधुवनपाण्डित्यं ध्यायंस्तस्या न तृप्यामि ॥ ३ ॥
आज्ञापयिष्यसि पदं दास्यसि दयितस्य शिरसि किं त्वरसे ।
असमयमानिनि मुग्धे मा कुरु भग्नाङ्कुरं प्रेम ॥ ४ ॥

कविसूक्तिकाचचक्षोरेकधर्मसम्बन्धात् दीपकालङ्कारः । तदुक्तं दर्पणे, अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यत इति ॥ १ ॥

आलोक इति । हे मानवति मानिनि ! अन्यत्र परिमाणशालिनि ! त्वं छायेव आलोक एव दर्शन एव का कथा स्पर्शनादाविति एवकारार्थः । अन्यत्र प्रकाशे, आलोको दर्शनोद्द्योतावित्यमरः । विमुखी पराङ्मुखी न दर्शनं ददासीति भावः अन्यत्र अस्थायिनी । क्वचिदपि दिवसे दक्षिणा सरला अनुकूलेत्यर्थः अन्यत्र दक्षिणदिग्वर्त्तिनी न भवसि तदपि तथापि मे मम तापं मनोव्यथां अन्यत्र सौरकिरणोत्तापं हरस्येव नाशयस्येव । तव दर्शनेनैव मे तापशान्तिरिति भावः । उपमालङ्कारः । नायिकां मानिनीं प्रति नायकोक्तिः ॥ २ ॥

आज्ञेति । आज्ञा आदेशः एवं कुरु इत्यादिरूपः काकुः दैन्यवचनं याच्ञा इदमलङ्करणं मह्यं देयमित्यादिरूपा आक्षेपः भर्त्सनं हसितं सुखातिशयादिति भावः शुष्करुदितञ्च इत्येकं तस्या निधुवनपाण्डित्यं सुरतकालीनचातुर्य्यं ध्यायन् चिन्तयन् न तृप्यामि न तृप्तिं लभे पुनः पुनश्चिन्तनेऽपि न परितृप्यामीत्यर्थः । सखायं प्रति कस्यचिदुक्तिः ॥ ३ ॥

आज्ञेति । हे असमयमानिनि समयासमयज्ञानपूर्वकं मानो विधेयः तदनभिज्ञे ! अतएव मुग्धे सरले ! आज्ञापयिष्यसि कान्तम् आज्ञाधीनं करिष्यसि, दयितस्य कान्तस्य शिरसि पदं दास्यसि कान्तस्ते

आसाद्य भङ्गमनया द्यूते विहिताभिरुचितकेलिपणे।
निःसारयताच्चानिति कपटरुषोत्सारिताः सख्यः॥ ५॥

आदरणीयगुणा सखि महता निहितासि तेन शिरसि त्वम्।
तव लाघवदोषोऽयं सौधपताकेव यच्चलसि॥ ६॥

आर्द्रमपि स्तनजघनान्निरस्य सुतनु त्वयैतदुन्मुक्तम्।
स्वस्थमवाप्तुमिव त्वां तपनांशूनंशुकं पिबति॥ ७॥

चरणानतो भविष्यतीति भावः किं कथं त्वरसे? त्वरां मा कुरु, समये एष मनोरथः सेत्स्यतीति भावः साम्प्रतं प्रेम अनुरागं भग्नाङ्कुरं मा कुरु प्रेम्णः प्रथमाविर्भावसमये कान्ते इत्थं विरक्तीकृते न मानः फलिष्यतीति भावः॥ ४॥

आसाद्येति। अनया कान्तया विहितः कृतः अभिरुचितः वाञ्छितः केलिः सुरतलीला एव पणः यत्र तादृशे द्यूते अक्षक्रीडायां भङ्गं पराजयम् आसाद्य प्राप्य कपटरुषा कृत्रिमकोपेन अक्षक्रीड़ां प्रतीति भावः सख्या अक्षान् पाशान् निःसारयत अपसारयत इति सख्यः उत्सारिताः अपसारिताः। अक्षनिःसारणव्याजेन सखीः स्थानान्तरं प्रेष्य पणाकृतसुरतार्थं प्रवृत्तेति भावः। सखायं प्रति कस्यचित् स्वनायिकाचातुर्य्यवचनमिदम्॥ ५॥

आदरणीयगुणेति। हे सखि! त्वम् आदरणीया गुणाः सौन्दर्य्यादयः यस्यास्तादृशी असीति शेषः, यतः तेन महता उच्चेन गुणवतेत्यर्थः कान्तेनेति शेषः त्वं शिरसि निहितासि धृतासि स्वाधीनपतिकासीति भावः। किन्तु तव अयं लाघवः लघुत्वं यत् सौधपताकेव हर्म्यशिरसि निहिता वैजयन्तीव चलसि चञ्चला भवसि। अस्थिरस्वभावा ते मान इति भावः। सख्या नायिकां प्रति मानस्य दीर्घताजनकोपदेशवचनमिदम्। उपमालङ्कारः॥ ६॥

आर्द्रमिति। हे सुतनु शुभाङ्गि! आर्द्रमपि सजलमपि अत्यन्तप्रेमस्निग्धमपि त्वया स्तनजघनात् निरस्य अपसार्य्य उन्मुक्तं परित्यक्तम्

आरोपिता शिलायामश्मेव त्वं स्थिरा भवेति मन्त्रेण ।
मग्नापि परिणयापदि जारमुखं वीक्ष्य हसितैव ॥ ८ ॥
आयाति याति खेदं करोति मधु हरति मधुकरीवान्या ।
अधिदेवता त्वमेव श्रीरिव कमलस्य मम मनसः ॥ ९ ॥

एतत् [illegible] स्तनम् आकाशस्थितम् अन्यत्र आकाशे दण्डवत् वर्त्तमा[illegible] अप्राप्यमिव पुनः प्राप्यमिव तपनस्य सूर्य्यस्य संमु[illegible] यथा कश्चित् कस्यचिदभिलषितस्य वस्तुनो लाभा[illegible] तिष्ठन् सौरकिरणान् [illegible] दुश्चरं तपश्चरति तथा एतत् [illegible] स्तनस्तव स्तनजघनस्य लाभाय आकाशस्थित्या सौरतापसहनभवनात्वस्तव सम्भोगो दुश्चरतपःसाध्य इति कस्यचित् कामिन [illegible] प्रणयवचनमिदम् । उत्प्रेक्षानुप्राणिताप्रस्तुतप्रशंसा-लङ्कारः ॥ ७ ॥

आरोपितेति । त्वम् अश्मेव पाषाणमिव स्थिरा अचपला भव इति मन्त्रेण शिलायाम् आरोपिता निहिता परिणयापदि परिणयरूपायां विपत्तौ मग्नापि पतितापि जारस्य उपनायकस्य मुखं वीक्ष्य दृष्ट्वा हसितैव हास्यं कृतवत्येव । मन्त्रा एते मम विवाह-प्रयोजकाः तत्रापि स्थिरत्वसम्पादनाय शिलारोपणप्रयत्नः, सर्वमेतत् अकिञ्चित्करम् असामयिकत्वात् अधुना नाहं जारं परित्यक्तुं शक्नुयामिति हासव्याजेन कयापि द्योत्यते ॥ ८ ॥

आयातीति । अन्या नारी मधुकरीव भ्रमरीव आयाति आगच्छति, याति गच्छति, खेदं परिश्रमं करोति, मधु मत्सम्भोगज-आनन्दं मकरन्दञ्च हरति लभते, किन्तु त्वमेव नान्येति एवकारार्थः । कमलस्य पद्मस्य श्रीरिव मम मनसः अधिदेवता अधिष्ठात्री देवी, यद्यप्यहम् अन्याङ्गनां कदाचित् कामये तथापि त्वं मे मनसि चिर-स्थायिनीति पराङ्गनासङ्गखिन्नां कान्तां प्रति कस्यचित् कान्तस्य सान्त्वनवचनमिदम् ॥ ९ ॥

आसाद्य दक्षिणां दिशमविलम्बं त्यजति चोत्तरां तरणिः ।
पुरुषं हरन्ति कान्ताः प्रायेण हि दक्षिणा एव ॥ १० ॥
आदानपानलेपैः काश्चिद्गरलोपतापहारिण्यः ।
सदसि स्थितैव सिद्धौषधिवल्ली कापि जीवयति ॥ ११ ॥
आन्दोललोलकेशीं चलकाञ्चीकिङ्किणीगणक्वणिताम् ।
स्मरसि पुरुषायितां तां स्मरचामरचिह्नयष्टिमिव ॥ १२ ॥

आसाद्येति । तरणिः नौः, स्त्रियां नौस्तरणिस्तरिरित्यमरः । दक्षिणां दिशम् आसाद्य प्राप्य दक्षिणाभिमुखीभूयेत्यर्थः अविलम्बं विलम्बमकृत्वैवेत्यर्थः उत्तरां दिशं त्यजति च अथवा तरणिः सूर्य्यः दक्षिणां दिशम् आसाद्य दक्षिणायनमाश्रित्येत्यर्थः अविलम्बम् उत्तरां दिशम् उत्तरायणं त्यजती चेत्यपरोऽर्थः । तद्वत् कान्ताः कामिन्यः प्रायेण बाहुल्येन दक्षिणा एव दाक्षिण्ययुक्ता एव पुरुषं हरन्ति वशीकुर्वन्तीत्यर्थः । एतेन दक्षिणाया नायिकाया प्राप्तौ अपरायां नायिकायां पुरुषो न रमते इति दाक्षिण्यमेव नारीभिरवलम्बनीयमिति सन्दर्भोपदेशः ॥ १० ॥

आदानेति । काश्चित् वध्वः आदानं ग्रहणं शरीरे धारणमित्यर्थः पानं तद्रसस्य गलाधः करणं लेपः अङ्गेषु विलेपनं तैः गरलस्य विषस्य उपतापः सन्तापः तं हरन्तीति तथाभूताः सन्तीति शेषः । कापि सिद्धा विश्रुता ओषधिवल्ली सदसि गृहे स्थितैव एवशब्दोऽन्यप्रक्रियाव्यवच्छेदकः । जीवयति प्राणदायिनी भवतीत्यर्थः । अन्याः कान्ताः विविधविलासैः कान्तं सुखयन्ति परं कयापि परमसौभाग्यशालिन्या साहचर्य्येणैव कान्तस्य प्राणान् तोषयतीति अन्याङ्गनाभ्यस्तस्याः प्रशंसाधिकेति व्यतिरेको ध्वन्यते ॥ ११ ॥

आन्दोलेति । आन्दोलेन अङ्गचालनविशेषेण लोलाश्चपलाः इतस्ततो विक्षिप्ताः केशा यस्यास्तादृशीं चलायाः आन्दोलितायाः काञ्च्या रशनायाः किङ्किणीगणेन क्षुद्रघण्टीसमूहेन क्वणिता शब्दिता

आक्षिपसि कर्णमक्ष्णा बलिरपि बद्धस्त्वया त्रिधा मध्ये।
इति जितसकलवदान्ये तनुदाने लज्जसे सुतनु ॥ १३ ॥
आक्षेपचरणलङ्घनकेशग्रहकेलिकुतुकतरलेन।
स्त्रीणां पतिरपि गुरुरिति धर्मं न श्राविता सुतनुः ॥ १४ ॥
आगच्छतानवेक्षितपृष्ठेनार्थी वराटकेनेव।
मुषितास्मि तेन जघनांशुकमपि वोढुं नशक्तेन ॥ १५ ॥

तथोक्तां पुरुषायितां विपरीतरतिशालिनीं तां स्मरस्य कामस्य चामरचिह्ना चामराङ्किता या यष्टिः ध्वजदण्डः तामिव स्मरसि? उत्प्रेक्षालङ्कारः। कस्याश्चित् नायिकासख्या नायकं प्रति नायिकागुणस्मरणेन तदुन्मुखतासम्पादनवचनमिदम् ॥ १२ ॥

आक्षिपसीति। हे सुतनु! शोभनाङ्गि! त्वम् अक्ष्णा नेत्रेण कर्णं श्रवणं रोधात्तस्य आक्षिपसि स्पृशसि तिरस्करोषि च। त्वया मध्ये मध्यदेशे बलिरपि रेखात्रयरूपः दैत्यराजस्य बद्धः गृहीतः निर्जितश्च इतीत्थं जिताः पराभूताः सकलाः वदान्याः दातारः यया तथाभूते! तनुदाने शरीरदाने स्वल्पदाने च लज्जसे कुण्ठिता भवसि? अत्यौदार्य्यशालिन्या त्वया मदभिलाषपूरणे कथं कार्पण्यं क्रियते इति मुग्धां प्रति कस्यचित् कामिनो वचनमिदम् ॥ १३ ॥

आक्षेपेति। आक्षेपः निर्भर्त्सनं चरणलङ्घनं पदानतिः, केशग्रहः केशाकर्षणं तेषु यत् केलिकुतुकं क्रीडोल्लासः तत्र तरलेन चपलेन लोलुपेनेत्यर्थः कान्तेनेति शेषः सुतनुः शुभाङ्गी कान्ता स्त्रीणां पतिरपि कान्तोऽपि गुरुः इति धर्मं न श्राविता। उक्तञ्च, पतिरेको गुरुः स्त्रीणां सर्व्वस्याभ्यागतो गुरुरिति पतिशुश्रूषैव स्त्रीणां परो धर्म इति च। यदि हि स्त्री एतं धर्मं शृणोति तदा कदापि पत्युराक्षेपादिकं न करोति तदा च तादृशकेलिकौतुकं न स्यादिति कान्तेन कान्तासमीपे एतद्धर्मकीर्त्तनमयुक्तमिति भावः ॥ १४ ॥

आगच्छतेति। अनवेक्षितम् अदृष्टं पृष्ठं यस्य तेन लोचनपथ-

आकुञ्चितैकजङ्घं दराहृतोर्ध्वोरु गोपितार्धोरु ।
सुतनोः श्वसितक्रमनमदुदरस्फुटनाभि शयनमिदम् ॥१६॥
आदाय धनमनल्पं ददानया सुभग तावकं वासः ।
मुग्धा रजकगृहिण्या कृता दिनैः कतिपयैर्निःस्वा ॥ १७ ॥
आस्तां वरमवकेशी मा दोहदमस्य रचय पूगतरोः ।

मतिक्रान्तेन चिरप्रवासादिति भावः अन्यत्र च वैचित्र्यम् अदृष्ट
वच्छिद्रतयेति भावः पृष्ठं यस्य तेन वराटकेन कपर्देन अर्थीव याचक
इव आगच्छता तेन कान्तेन जघनांशुकमपि कटिपुरोभागवसनमपि
वोढुं नशक्तेन अक्षमेणेत्यर्थः रागातिशयादिति भावः मुषितास्मि
वञ्चितास्मि । भिक्षुको वराटकलालसया तत्प्राप्तौ तस्य सच्छिद्रा-
च्छिद्रादर्शनेन सहसा ग्रहणात् पश्चात् सच्छिद्रवराटकदर्शनेन यथा
आत्मानं वञ्चितं मन्यते तथा सहसोपस्थितेन तेनास्मि बलात्कृततया
प्रतारितेति भावः । उपमालङ्कारः ॥ १५ ॥

आकुञ्चितेति । सुतनोः शुभाङ्ग्याः इदं शयनं निद्रा, स्वापनिद्रा
शयनं स्वाप इत्यमरः । आकुञ्चिता एका जङ्घा यस्मिन् तथोक्तं दरम्
ईषत् आहृतः अर्द्धोरुः ऊरोरुपरिभागः यस्मिन् तादृशं गोपितः
आच्छादितः अर्द्धोरुर्यत्र तथाविधं तथा श्वसितक्रमेण निःश्वासपरम्प-
रया नमत् यत् उदरं तेन स्फुटा नाभिर्यस्मिन् तत् । प्रणयकुपितेयं
निद्रातीति भावः ॥ १६ ॥

आदायेति । हे सुभग ! अनल्पम् अधिकं धनं वेतनरूपं द्रव्यम्
आदाय गृहीत्वा तावकं त्वदीयं वासः वसनं ददानया धौतं कृत्वा
अर्पयन्त्येति भावः रजकगृहिण्या सा मुग्धा सुन्दरी सरला वा
कतिपयैः अल्पैरित्यर्थः दिनैः निःस्वा निर्धना कृता । तव वसनधौती-
करणेऽपि तस्याः प्रचुरधनव्ययागमनं किं पुनस्त्वत्सङ्गे इति भावः ।
कस्याश्चित् सख्या नायकं प्रति नायिकानुरागातिशयवर्णनमिदम् ॥१७॥

आस्तामिति । पूगतरुः वरम् अवकेशी निष्फलः आस्तां तिष्ठतु,

एतस्मात् फलितादपि केवलमुद्वेगमधिगच्छ ॥ १८ ॥
आरब्धमब्धिमथनं स्वहस्तयित्वा द्विजिह्वममरैर्यत् ।
उचितस्तत्परिणामो विषमं विषमेव यज्जातम् ॥ १९ ॥
आवर्जितालकालि श्वासोत्कम्पस्तनार्पितैकभुजम् ।
शयनं रतिविवशतनोः स्मरामि शिथिलांशुकं तस्याः ॥२०॥

वन्ध्योऽफलोऽवकेशी चेत्यमरः। अस्य पूगतरोः दोहदं फलजननसामर्थ्यमिति भावः मा रचय न विधेहीत्यर्थः। एतस्मात् पूगतरोः फलितादपि फलवतोऽपि केवलम् उद्वेगं तदाख्यं फलम् अन्यत्र सन्तापं, क्रमुक इत्यु पक्कस्य अस्य तु फलमुद्वेगमित्यमरः। अधिगच्छ जानीहि। दुर्जनं साहाय्येन समृद्धं कृत्वा पश्चात् ततः केवलं सन्तापागम इति भावः। अप्रस्तुतप्रशंसालङ्कारः॥ १८ ॥

आरब्धमिति। अमरैर्देवैः द्विजिह्वं सर्पं वासुकिमिति यावत् अन्यत्र द्विभाषिणम् एकां कथां निश्चयेन उक्त्वा पश्चात् अन्यथा वादिनमिति यावत् दुर्जनमिति भावः स्वहस्तयित्वा सहायीकृत्य यत् अब्धिमथनं समुद्रविलोडनं दुष्टकार्य्यानुष्ठानञ्च आरब्धम् उपक्रान्तं तत्र विषमं दारुणं विषमेव गरलमेव अन्यत्र विपदेवेत्यर्थः यत् जातम् उत्पन्नम् एष तत्परिणामः तस्य अब्धिमथनस्य दुष्टकार्य्यानुष्ठानस्य च परिणामः परिपाकः फलमिति यावत् उचितः योग्यः। दुर्जनाश्रयेण न किमपि कर्त्तव्यमिति कञ्चित् प्रति कस्यचित् सख्युरुपदेशः॥१९॥

आवर्जितेति। रत्या सुरतेन विवशा अवशा तनुः शरीरं यस्यास्तथाभूतायाः तस्याः कान्तायाः आवर्जिता आलोलिता अलकालयः केशनिचया यत्र तादृशं श्वासेन घननिश्वासेन उद्गतः कम्पः ययोस्तयोरुत्कयोः स्तनयोः अर्पितः दत्तः एकः भुजः करो यस्मिन् तथा शिथिलम् अङ्गात् स्खलितम् अंशुकं वसनं यस्मिन् तथाभूतं शयनं तल्पं स्मरामि। कञ्चित् सखायं प्रति कस्यचित् प्रोषितस्य कान्तास्मरणमिदम् ॥ २० ॥

आम्राङ्कुरोऽयमरुणश्यामलरुचिरस्थिनिर्गतः सुतनु।
नवकमठकर्परपुटान्मूर्धेवोर्ध्वं गतः स्फुरति॥ २१॥
आभङ्गुराग्रबहुगुणदीर्घास्वादप्रदा प्रियादृष्टिः।
कर्षति मनो मदीयं ह्रदमीनं वडिशरज्जुरिव॥ २२॥
आलप यथा यथेच्छसि युक्तं तव कितव किमपवारयसि।
स्त्रीजातिलाञ्छनमसौ जीवितरङ्का सखी सुभग॥ २३॥

आम्राङ्कुर इति। हे सुतनु! सुन्दरि! अरुणा रक्ता श्यामला च रुचिः कान्तिर्यस्य तथाभूतः अस्थिनिर्गतः अस्थि बीजं तस्मान्निर्गतः उत्थित इत्यर्थः अयम् आम्राङ्कुरः चूतकलिका नवः नवीनः यः कमठः कच्छपः तस्य कर्परपुटात् कुक्षिदेशात् ऊर्ध्वं गतः उद्गमित इत्यर्थः मूर्द्धेव स्फुरति राजते। एतेन प्रावृट्कालोऽयमुपस्थितः, तस्मात् ते पतिः शीघ्रमागमिष्यतीति कयाचित् सख्या नायिकाप्रबोधनवचनमिदम्। यद्वा ममायमधैर्यकरः समय उपस्थितः तन्मानिनि मानं मुञ्चेति कस्यचित् नायिकां प्रत्युक्तिरियम्। अथवा क्रीडाकरवस्तुन उद्गमकीर्त्तनेन सामान्यनारीसम्भाषणमिदम्॥ २१॥

आभङ्गुरेति। आभङ्गुरं कुटिलम् अग्रं यस्याः तथोक्ता बहवः गुणाः सौन्दर्यादयः सूत्ररज्ज्वादयो वा यस्यास्तथाभूता दीर्घा आयता स्वादप्रदा सुखदायिनी च प्रियायाः दृष्टिः तादृशी वडिशरज्जुरिव ह्रदमीनं जलाशयमत्स्यं मदीयं मनः कर्षति हरति। उपमालङ्कारः॥ २२॥

आलपेति। हे कितव! यथा यथा इच्छसि तथा तथा आलप कथय, तव युक्तम् उचितं वाच्यावाच्यविवेकराहित्येन यथेच्छकथनं तवैव युक्तं नान्यस्येति भावः। किं कथम् अपवारयसि गोपयसि? त्वदीयं दुश्चेष्टितमस्माभिर्ज्ञातमिति भावः। हे सुभग! असौ सखी स्त्रीजातिषु लाञ्छने कलङ्कभूता या एवं ते दुश्चेष्टितं सहते इति भावः। यतः असौ जीविते जीवने रङ्का दीना साभिलाषेत्यर्थः एता-

आस्वादितोऽसि मोहाद्वत विदिता वदनमाधुरी भवतः ।
मधुलिप्तक्षुर रसनाच्छेदाय परं विजानासि ॥ २४ ॥
आक्रष्टिभग्नकटकं केन तव प्रकृतिकोमलं सुभगे ।
धन्येन भुजमृणालं ग्राह्यं मदनस्य राज्यमिव ॥ २५ ॥
आरुह्य दूरमगणितरौद्रक्लेशा प्रकाशयन्ती स्वम् ।
वातप्रतीच्छनपटी वहित्रमिव हरसि मां सुतनु ॥ २६ ॥

दृगावस्थायामपि त्वत्प्राप्तिकामनया जीवितं धारयतीति तव युक्तं सुभगत्वमिति कयाचित् सख्या नायकं प्रति कथनमिदम् ॥ २३ ॥

आस्वादित इति । हे मधुलिप्तक्षुर ! एतेन वहिर्माधुर्य्यम् अभ्यन्तरे दारुणतेति व्यज्यते । मोहात् अज्ञानात् आस्वादितः भुक्तः असि तव गुणागुणावविदित्वैव त्वत्सङ्गतिः कृतेति भावः वत खेदे भवतः वदनमाधुरी वाङ्माधुर्य्यं विदिता ज्ञाता, वाक्येनैव केवलं मनो हरसीति भावः । परं केवलं रसनाच्छेदाय जिह्वाकर्त्तनाय परं केवलं विजानासि कथं मया दुष्कृतं कृतमिति मत्समीपे जिह्वां केवलं कृन्तसीति कयाचित् नायिकया नायकं दुश्चारिणं प्रत्युक्तिरियम् ॥ २४ ॥

आकृष्टीति । हे सुभगे ! सौभाग्यलक्षणवति ! केन धन्येन पुण्यवता अन्यत्र धनवता नृपतिना आकृष्ट्या आकर्षणेन विमर्दनेनेत्यर्थः अन्यत्र आक्रमणेन भग्नः कटकः वलयः सैन्यञ्च यस्य तथाभूतं, कटको वलयोऽस्त्रियामित्यमरः । प्रकृत्या स्वभावेन कोमलं मृदुलम् अन्यत्र प्रकृतयः प्रधानपुरुषा अमात्यादयः चन्द्रकौकिलादय इति भावः कोमला मृदवः यस्य तादृशं तव भुजमृणालं मदनस्य राज्यमिव ग्राह्यम् । काञ्चिदपरिणीतां सुन्दरीं प्रति सख्या वचनमिदम् ॥ २५ ॥

आरुह्येति । हे सुतनु ! शोभनाङ्गि ! त्वम् अगणितः अवज्ञितः रौद्रक्लेशः दुःसहक्लेशः आतपक्लेशो वा यया तादृशी सती दूरम् उन्नतं देशं प्रासादशिखरमिति भावः आरुह्य स्वम् आत्मानं प्रका-

आयासः परहिंसा वैतंसिकसारमेय तव सारः।
त्वामपसार्य विभाज्यः कुरङ्ग एषोऽधुनैवान्यैः॥ २७॥
आनयति पथिकतरुणं हरिण इह प्रापयन्निवात्मानम्।
उपकलमगोपि कोमलकलमावलिकवलनोत्तरलः॥ २८॥

शयन्ती वातप्रतीच्छपटी अनुकूलवायुग्रहणार्थम् उपरि उत्थापिता जवनिका पाटल इति प्रसिद्धा वहित्रं नावमिव मां हरसि आयत्तं करोषि प्रासादोपरि स्थितां काञ्चित् प्रति कस्यचित् कामिन उक्ति-रियम्॥ २६॥

आयास इति। वैतंसिकः मांसिकः मांसजीवी व्याध इति इति यावत् तस्य सारमेयः कुक्कुरः तत्सम्बुद्धौ तव आयासः परि-श्रमः परहिंसा परेषां जीवानां हरिणादीनां हिंसा वधः सारः नान्यत् किञ्चित्तव फलमिति भावः एष कुरङ्गः मृगः यस्त्वया निहत इति भावः अधुनैव त्वाम् अपसार्य्य दूरीकृत्य अन्यैः मांसिकैः विभाज्यः विभज्य ग्रहणीयः। तुभ्यं किञ्चिदपि अदत्त्वा अपरे एतं मृगं खण्ड-शः ग्रहीष्यन्ति त्वया केवलं प्राणिहिंसा कृतेति फलितार्थः। अकार्य्यं कदापि न कार्य्यं यदि चात्मोपकारार्थं क्रियते तदपि कथञ्चित् युज्यते, एकान्तनिष्फलं तत्कार्य्यं नैव कदाचन विधेयमिति अप्रस्तुत-वर्णनेन प्रस्तुतार्थप्रतिपादनात् अप्रस्तुतप्रशंसालङ्कारः॥ २७॥

आनयतीति। कोमला अपरिपक्वा इति भावः ये कलमाः धान्यविशेषाः तेषाम् आवलिः पङ्क्तिः तस्याः कवलने ग्रासे भक्षणे इति यावत् उत्तरलः उत्सुकः इह उपकलमगोपि कलमगोप्या धान्य-रक्षिकायाः कलमाश्रितरुण्या इति भावः समीपे आत्मानं प्रापयन्निव पथिकतरुणं पथिकं तरुणं युवानं पथिकेत्यनेन विरहखिन्नतास्य द्योत्यते। आनयति उपस्थापयति कलमगोपिकायाः पथिकतरुणा-वुभौ मद्विलोकनयत्नेन सद्यःगमागमो भविता तेन च मया सुखेन कलमा भक्षणीयाः तल्लोभेन चापि ततः पथिकागमनं ततश्च कलमगोपिका-

आसीदेव यदार्द्रः किमपि तदा किमयमाहतोऽप्याह।
निष्ठुरभावादधुना कटूनि सखि रटति पटह इव ॥ २९ ॥
आज्ञाकरस्य ताड़नपरिभवसहनस्य सत्यमहमस्याः।
न तु शीलशीतलेयं प्रियेतरदल्पमपि वेद ॥ ३० ॥
आधाय दुग्धकलशे मन्थानं श्रान्तदोर्लता गोपी।
अप्राप्तपारिजाता दैवे दोषं निवेशयति ॥ ३१ ॥

सक्तौ तत्क्षोभनिवृत्तिर्भविता तदत्र न मे कापि शङ्केति धियेति भावः। एवञ्चात्मरक्षासहकृतेष्टसिद्धिः पशुनापि कर्तुं शक्यते का कथा मनुष्याणां तस्मात् मनुष्यैरपि एवमेवं प्रवर्त्तितव्यमिति भावः। अप्रस्तुतप्रशंसालङ्कारः ॥ २८ ॥

आसीदिति। हे सखि! अयं नायकः यदा आर्द्रः प्रणयपरतन्त्र इत्यर्थः एवं आसीत् तदा आहतोऽपि मया ताड़ितोऽपि किं किमपि आह? न किमपि आहेत्यर्थः। अधुना निष्ठुरभावात् प्रेमापगमेनेति भावः अन्यत्र शुष्कभावादित्यर्थः पटह इव आनकः वाद्यभेद इव, आनकः पटहोऽस्त्रीत्यमरः। कटूनि दुर्वचांसि रटति वक्ति अन्यत्र निष्ठुरं ध्वनतीत्यर्थः। पटहस्य आर्द्रत्वे शब्दाभावः इत्यं प्रसिद्धम्। कस्याश्चित् सखीं प्रति विरक्तनायकव्यवहारकथनम्। उपमालङ्कारः ॥ २९ ॥

आज्ञाकर इति। अहम् अस्यास्तव सख्या इति शेषः आज्ञाकरस्य आज्ञाधारिणः ताड़नपरिभवसहस्य प्रहारापमानसहस्य सत्यं तत्त्वतः अस्मीति शेषः तु किन्तु शीलशीतला शीतलस्वभावा इयं प्रियेतरत् अप्रियं अल्पमपि न वेद न जानाति किमद्भुतं सखीं तव दुश्चेष्टितं सा किं किं करिष्यतीति वादिनीं प्रति नायकस्य स्वकान्ताप्रशंसनवचनमिदम् ॥ ३० ॥

आधायेति। गोपी काचिद् गोपाङ्गना दुग्धकलशे क्षीरकुम्भे अन्यत्र दुग्धोदधौ मन्थानं मन्थनदण्डम् आधाय निधाय श्रान्ता आलो-

आस्तां मानः कथनं सखीषु वा मयि निवेद्यदुर्विनये ।
शिथिलितरतिगुणगर्वा ममापि सा लज्जिता सुतनुः ॥३२॥
आवर्त्तैरातपशोभां डिण्डीरपाण्डुरैर्दधती ।
गायति मुखरितसलिला प्रियसङ्गममङ्गलं सुरसा ॥ ३३ ॥

ङ्गनेनेति भावः दोर्लता भुजलता यस्यास्तथाभूता सती अप्राप्तः पारिजातः सुरतरुविशेषः अन्यत्र नवनीतं यया तादृशी अतएव दैवे भाग्ये दोषं निवेशयति अर्पयति । सुरतप्रसङ्गेऽपि अकृतार्थायाः कस्याश्चिदुक्तिरिति ध्वन्यते । कृतप्रयत्नस्यापि अकृतकार्य्यता भाग्याधीनेति भावः ॥ ३१ ॥

आस्तामिति । निवेद्यः कथनीयः दुर्विनयः दुश्चेष्टा परनारीसङ्गादिरूपः यस्य तादृशे मयि मानः कोपः सखीषु वा कथनं मदपराधस्येति शेषः आस्तां तिष्ठतु नैव तया मानः कृतः न वा सखीषु मदपराधः कथित इति भावः । सा सुतनुः शोभनाङ्गी शिथिलितः श्लथतां नीतः रतिगुणानां गर्वो यया तादृशी सती अभिमानवशादिति भावः लज्जिता । मया सह यथायथं सुरतव्यापारः न कृत इति शेषेति भावः । एतादृशी सुशीला मत्प्रियेति कस्यचित् सखायं प्रत्युक्तिः ॥ ३२ ॥

आवर्त्तैरिति । काचित् सुरसा रसवती डिण्डीरपाण्डुरैः फेनशुभ्रैः, डिण्डीरोऽब्धिकफः फेन इत्यमरः । आवर्त्तैः जलभ्रमविशेषैः, स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः । आतपस्य सम्यक् तप्तैः सम्परितोषस्येत्यर्थः उल्लासस्येति यावत् शोभां दधती मुखरितं शब्दितं हस्ततालेनेति भावः सलिलं यया तथाभूता सती प्रियसङ्गमस्य अचिरभाविन इति भावः मङ्गलं गायति । भाविप्रियसङ्गमलाभोल्लासात् जलक्रीड़ाच्छलेन कस्याश्चित् मङ्गलगानवर्णनमिदम् ॥ ३३ ॥

---

## इकारादिः ।

इयमुन्नतिं हरन्ती नेत्रनिकोचं च विदधती पुरतः ।
न विजानीमः किं तव वदति सपत्नीव दिननिद्रा ॥ १ ॥

इदमुभयभित्तिसन्ततहारगुणान्तर्गतैककुचमुकुलम्
गुटिकाधनुरिव बालावपुः स्मरः श्रयति कुतुकेन ॥ २ ॥

इह शिखरिशिखरावलम्बिनि विनोददरतरलवपुषि
तरुहरिणे ।
पश्याभिलषति पतितुं विहगी निजनीडमोहेन ॥ ३ ॥

इयमिति । इयं दिननिद्रा दिवास्वप्नः सपत्नीव तव उन्नतिम् उत्थानम् अन्यत्र उन्नतिं हरन्ती नेत्रनिकोचं नयननिमीलनम् अन्यत्र नेत्रविक्षतिम् एकत्रालस्यादन्यत्र विद्वेषादिति भावः । विदधती कुर्वती पुरतः अग्रे। तवेति शेषः किं वदति कियन्तं तिरस्कारं करोति न जानीमः तस्मात् शयनात् उत्तिष्ठेति ध्वन्यते । नायिकां सुरतश्रान्तसुप्तां प्रति सख्या वचनमिदम् ॥ १ ॥

इदमिति । उभयभित्तौ उभयपार्श्वे सन्ततो विस्तृतो यो हारगुणः माल्यदाम तस्य अन्तर्गतः मध्यवर्त्ती एकः कुचमुकुलः यस्य तथाभूतं वैकक्षिकमालान्तर्गतस्तनमुकुलमिति भावः इदं बालायाः मुग्धायाः वपुः शरीरं स्मरः कामः गुटिकाधनुः गुटिकारूपं शस्त्रमिव कुतुकेन आनन्देन श्रयति अवलम्बते तादृशवपुषः स्मरोद्दीपकत्वादिति भावः ॥ २ ॥

इहेति । इह अस्मिन् विनोदेन उल्लासेन दरमीषत् तरलं चपलं वपुर्यस्य तथाभूते तरुहरिणे शाखामृगे शिखरिणः वृक्षस्य, तरुशैलौ शिखरिणाविव्यमरः । शिखरम् अग्रम् अवलम्बत इति तथोक्ते सति विहगी पक्षिणी निजं स्वत् नीडं कुलायः, कुलायो नीड़मस्त्रियामित्यमरः । तस्य मोहेन भ्रमेण पतितुम् अभिलषति पश्य ॥ ३ ॥

इक्षुर्नदीप्रवाहो द्यूतं मानग्रहश्च हे सुतनु ।
भ्रूलतिका च तवेयं भङ्गे रसमधिकमावहति ॥ ४ ॥
इन्दोरिवास्य पुरतो यद्विमुखी सापवारणा भ्रमसि ।
तत्कथय किं नु दुरितं सखि त्वया छाययेव कृतम् ॥ ५ ॥
इह कपटकुतुकतरलितदृशि विश्वासं कुरङ्ग किं कुरुषे ।
तव रभसतरलितेयं व्याधवधूर्वालधौ वलते ॥ ६ ॥

इक्षुरिति । हे सुतनु ! सुन्दरि ! इक्षुः नदीप्रवाहः द्यूतं ते तव मानग्रहश्च कोपावलम्बनश्च इयं भ्रूलतिका च भङ्गे चर्वणे तरङ्गस्खलने पराजयकरणे अपगमे वक्रतापादने च अधिकं रसम् आस्वादं शोभाम् उल्लासम् आनन्दं चारुत्वाश्च आवहति ददातीति । अत्र प्रस्तुताप्रस्तुतानामेकधर्मसम्बन्धात् दीपकालङ्कारः । नायिकां प्रति नायकस्योक्तिरियम् ॥ ४ ॥

इन्दोरिति । हे सखि ! इन्दोरिव चन्द्रस्येव अस्य प्रियस्य पुरतः अग्रतः विमुखी परावृत्तवदना अन्यत्र पराङ्मुखी सापवारणा कृतावगुण्ठना अन्यत्र तिरोधानं गता यत् भ्रमसि इतस्ततः सञ्चरसि तत् तस्मात् त्वया छाययेव किं नु वितर्के दुरितं दुष्कृतं कृतम् ? यथा छाया चन्द्रसन्निधाने विमुखी भवति तथा एतादृशकान्तसन्निधौ ते विमुखता दुष्कृतपाकजनितेति भावः तस्मात मानं त्यक्त्वा एनं रञ्जयेति नायिकां प्रति सख्या उक्तिः । उपमालङ्कारः ॥ ५ ॥

इहेति । हे कुरङ्ग ! हरिण ! कपटेन अलीकेन कृत्रिमेणेत्यर्थः कुतुकेन उल्लासेन तरलिते चञ्चलिते दृशौ नयने यस्याः तथाभूतायाम् इह अस्यां व्याधवध्वां किं कथं विश्वासं कुरुषे ? नैव विश्वासः कार्य्य इति भावः । रभसेन हर्षेण त्वत्प्राप्त्येति भावः तरलिता उल्लासिता इयं व्याधस्य मृगयोः वधूः कान्ता तव वालधौ पुच्छे वलते लगति त्वद्वधार्थं त्वां प्रलोभयतीति भावः । दुश्चारिण्या मायया लोकः प्रतार्य्यते तस्मात् तद्दूरवर्त्तिभिर्भवितव्यमिति अप्रस्तुतप्रशंसालङ्कारः ॥६॥

इह वहति बहुमहोदधिविभूषणा मानगर्वमियमुर्वी ।
देवस्य कमठमूर्त्तेर्न पृष्ठमपि निखिलमाप्नोति ॥ ७ ॥

---

## ईकारादिः ।

ईर्ष्यारोषज्वलितो निजपतिसङ्गं विचिन्तयंस्तस्याः ।
च्युतवसनजघनभावनसान्द्रानन्देन निर्वामि ॥ १ ॥

इहेति । बहवः महोदधयः समुद्राः विभूषणानि अलङ्काराः यस्याः तथाभूता इयम् उर्वी पृथिवी इह जगति मानगर्वं महती अहं न मत्तुल्या कापीति स्वपरिमाणस्य अहङ्कारं वहति करोतीत्यर्थः किन्तु कमठमूर्त्तेः कूर्मरूपिणः देवस्य विष्णोः निखिलं समग्रमपि पृष्ठं न आप्नोति न व्याप्नोति सर्वशरीरव्यापनं दूरापास्तमिति भावः । पक्षे बहवः महोदधयः उत्सवसमुद्राः महोत्सवा इति यावत्, मह उद्धव उत्सव इत्यमरः । विभूषणानि अलङ्काराः यस्याः महोत्सवश्रियं वहन्तीति भावः इयम् उर्वी महती नारी मानगर्वम् अहम् अतिमानवतीति गर्वम् अहङ्कारं वहति किन्तु कमठमूर्त्तेः कमठवत् कठिनदेहस्य निष्ठुरस्येति भावः देवस्य क्रीडाशीलस्य कान्तस्येति भावः निखिलं पृष्ठमपि साम्मुख्यं दूरापास्तमिति भावः न आप्नोति न लभते इत्यर्थः । पत्या अनादृतायाः मानो विफल इति भावः । अहङ्कारिणीं मानिनीं दुर्भगां प्रति कस्याश्चिदुक्तिः ॥ ७ ॥

---

ईर्ष्येति । तस्याः कान्तायाः निजपतिसङ्गं विचिन्तयन् भावयन् ईर्ष्या असहिष्णुता यः रोषः क्रोधः तेन ज्वलितः सन्तप्तः सन् तस्याः च्युतं स्खलितं वसनं वस्त्रं यस्मात् तथाभूतं यत् जघनं कटिपुरोभागः तस्य भावनेन ध्यानेन यः सान्द्रः निविडः आनन्दः तेन निर्वामि सन्तापं निवारयामि । कस्यचित् परनायिकासक्तस्य सखायं प्रत्युक्तिरियम् ॥ १ ॥

ईश्वरपरिग्रहोचितमोहोऽस्यां मधुप किं मुधा पतसि।
कनकाभिधानसारा वीतरसा कितवकलिकेयम्॥ २॥
ईषदवशिष्टजडिमा शिशिरे गतमात्र एव चिरमङ्गैः।
नवयौवनेव तन्वी निषेव्यते निर्भरं वापी॥ ३॥

---

ईश्वरेति। हे मधुप! भ्रमर! ईश्वरस्य हरस्य महाजनस्य च परिग्रहः अङ्गीकारः ग्रहणमिति यावत् तेन उचितः मोहः भ्रमः यस्य तादृशस्त्वं यतोऽयम् ईश्वरेण परिगृहीतः ततोऽयं विशिष्टगुण-शालिनीति अन्यत्र महाजनेन परिगृहीतेयं ततः समीचीनेति भ्रमश्च उचित एवेति भावः। अस्यां कितवकलिकायां किं कथं मुधा वृथा पतसि इयं कितवस्य धूस्तूरस्य कलिका, उक्तञ्च: कितवो धूर्त्तो धूस्तूरः कनकाह्वय इत्यमरः। कनकाभिधानं कनक इति संज्ञा सारः श्रेष्ठांशः यस्याः तादृशी अतएव वीतरसा नीरसा अन्तःसारशून्या इत्यर्थः। महत्परिगृहीतेति बुद्धा नास्यां प्रणयः कार्य्यः यतो नेयं रसवतीति कस्याश्चित् कश्चित् तथासक्तमनसं प्रत्युक्तिः। अप्रस्तुत-प्रशंसालङ्कारः॥ २॥

ईषदिति। शिशिरे शीतर्त्तौ गतमात्र एव समाप्तावेव वसन्ताविर्भावसमये इति भावः ईषत् अल्पं यथा तथा अवशिष्टः जडिमा जाड्यं शैत्यमित्यर्थः यस्यास्तथोक्ता नातिशीतोष्णेत्यर्थः नवयौवना तन्वी कृशाङ्गीव वापी दीर्घिका चिरं सततम् अङ्गैः सम्भोगाङ्गभूतैः स्रक्चन्दनादिभिः अवगाहनाङ्गभूतैः सन्तरणादिभिश्च निर्भरम् अत्यन्तं यथा तथा निषेव्यते भुज्यते। उपमालङ्कारः॥ ३॥

---

उकारादिः।

उल्लसितभ्रूधनुषा तव पृथुना लोचनेन रुचिराङ्गि।
अचला अपि न महान्तः के चञ्चलभावमानीताः॥ १॥
उपनीय यन्नितम्बे भुजङ्गमुख्यैरलम्भि विबुधैः श्रीः।
एकः स मन्दरगिरिः सखि गरिमाणं समुद्वहतु॥ २॥
उल्लसितलाञ्छनोऽयं ज्योत्स्नावर्षी सुधाकरः स्फुरति।
आसक्तकृष्णचरणः शकट इव प्रकटितक्षीरः॥ ३॥

उल्लसितेति। हे रुचिराङ्गि सुन्दरि! उल्लसिता भ्रूः धनुरिव यस्य तथाभूतेन तव पृथुना विशालेन लोचनेन अचला अपि चाञ्चल्य-रहिता अपि के महान्तः जना न चञ्चलभावं चापल्यम् अधैर्य्य-मित्यर्थः न आनीताः न सम्यक् प्रापिताः? अपितु सर्व एव अधी-रतां नीता इत्यर्थः। तव कटाक्षपातेन के धैर्य्यं न त्यजन्तीति न जानीम इति भावः। पृथुना राज्ञा महान्तः पर्वताः पृथिवीदोहन-समये समवेताः कृता इति च पौराणिकी वार्त्ता ध्वन्यते॥ १॥

उपनीयेति। हे सखि! विबुधैर्देवैः यस्य मन्दरगिरेः मन्थनदण्ड-भूतस्येति भावः नितम्बे कटके अन्यत्र यस्मिन् नितम्बे भुजङ्गं सर्पं वासुकिमिति यावत् अन्यत्र विटं कान्तमिति भावः उपनीय संलग्नं प्रापयित्वा च उच्चैः महती श्रीः लक्ष्मीः शोभा च अलम्भि प्राप्ता स एकः केवलः मन्दरगिरिः मन्दरपर्वतः विशालतया पर्वततुल्यो नितम्बस्य गरिमाणं गौरवं समुद्वहतु प्राप्नोतु। कान्तसम्भुज्यमाना एव कान्ता गौरवशालिनीति कस्याश्चित् काञ्चित् प्रत्युक्तिः। अप्रस्तुत-प्रशंसालङ्कारः॥ २॥

उल्लसितेति। उल्लसितम् उद्भासितं लाञ्छनं चिह्नं कलङ्क इत्यर्थः यस्य तथाभूतः ज्योत्स्नावर्षी चन्द्रिकावर्षणशीलः अयं सुधाकरः चन्द्रः आसक्तः संलग्नः कृष्णस्य चरणो यत्र तादृशः प्रकटितम् उद्गीर्णं क्षीरं येन तथोक्तः क्षीरवर्षीत्यर्थः शकट इव

उपचारानुनयास्ते कितवस्योपेक्षिताः सखीवचसा।
अधुना निष्ठुरमपि यदि स वदति कलिकैतवाद्यामि ॥४॥
उषसि परिवर्त्तयन्त्या मुक्तादामोपवीततां नीतम्।
पुरुषायितवैदग्ध्यं व्रीडावति कैर्न कलितं ते ॥ ५ ॥
उड्डीनानामेषां प्रासादात्तरुणि पक्षिणां पङ्क्तिः।

शकटनामा असुरविशेष इव स्फुरति दीप्यते। शकटासुरः क्षीरदानेन कृष्णं प्रलोभयितुमागतः तत्पदाघातेन निहत इति पौराणिकी वार्त्ता। नायम् अभिसारसमयः अधुना अभिसरणे कलङ्क एव भवितेति कस्याश्चित् काञ्चिदभिसरणोद्यतां प्रत्युक्तिरियम्। उपमालङ्कारः ॥ ३ ॥

उपचारेति। सखीवचसा सख्युपदेशेन कितवस्य धूर्त्तस्य कान्तस्येति भावः ते उपचारानुनयाः कपटसान्त्वनवचनानि उपेक्षिताः अगणिता इत्यर्थः तदीयमनुनयवचो न श्रुतमिति भावः अधुना स यदि निष्ठुरमपि सान्त्वनं दूरापास्तमिति अपिशब्दार्थः। वदति निर्भर्त्सयतीत्यर्थः तदपि कलिकैतवात् कलहव्याजात् यामि गच्छामि तत्समीपमिति शेषः। नाहमिदानीं तेन विना स्थातुं शक्नोमि किं मे मानेन सख्युपदेशकृतेन, तेन सह कलहं करिष्यामीति तच्छलेन तत्समीपं गच्छामीति कस्याश्चित् नायिकायाः स्वतोमानभञ्जनपूर्वकं तत्समीपगमनोक्तिरियम् ॥ ४ ॥

उषसीति। हे व्रीडावति लज्जाशीले! उषसि प्रभाते उपवीततां यज्ञसूत्रतां नीतं प्रापितं मुक्तादाम मौक्तिकहारं परिवर्त्तयन्त्या विपर्य्यासयन्त्या यथायथं विन्यस्यन्त्या इति भावः तवेति शेषः पुरुषायितवैदग्ध्यं विपरीतरतवैचित्र्यं कैः जनैः न कलितं नावधारितम् अपितु सर्वैरेवेत्यर्थः। उपवीतस्य पुरुषचिह्नत्वादिति भावः। सख्या नायिकां प्रति परिहासोक्तिरियम् ॥ ५ ॥

उड्डीनेति। हे तरुणि युवति! प्रासादात् हर्म्यस्थलविशेषात्

विस्फुरति वैजयन्ती पवनच्छिन्नापविद्धेव ॥ ६ ॥

उज्जागरितभ्रामितदन्तुरदलरुद्धमधुकरप्रकरे ।
काञ्चनकेतकि मा तव विकसतु सौरभ्यसम्भारः ॥ ७ ॥

उल्लसितभ्रूः किमतिक्रान्तं चिन्तयसि निस्तरङ्गाक्षि ।
क्षुद्रापचारविरसः पाकः प्रेम्णो गुडस्येव ॥ ८ ॥

उड्डीनानाम् उत्पतितानाम् एषां पक्षिणां पङ्क्तिः श्रेणी पवनेन वायुना छिन्ना अतएव अपविद्धा ध्वजदण्डात् विच्युता वैजयन्तीव पताकेव विस्फुरति विशेषेण राजते । नायिकां प्रति सख्या उपनायकस्य सङ्केतस्थलगमनं भङ्ग्या सूच्यते ॥ ६ ॥

उज्जागरितेति । हे काञ्चनकेतकि ! स्वर्णकेतकलते ! उज्जागरिता उन्निद्रीकृता अतएव भ्रामिता कारितभ्रमणा दन्तुरैः उन्नतैः दलैः छदैः रुद्धा निरोधं नीता मधुकरप्रकरा भ्रमरवृन्दा यया तादृशि ! तव सौरभ्यसंभारः सौगन्ध्यनिचयः सद्गुणनिकरश्च मा विकसतु न प्रसरतु । अप्रस्तुतप्रशंसया कस्यचित् काञ्चित् नायिकां विरक्तीकृतनायकां प्रति अभिशापवचनमिदम् ॥ ७ ॥

उल्लसितभ्रूरिति । नास्ति तरङ्गः अपाङ्गचलनादिव्यापारः ययोस्तथाभूते अक्षिणी नयने यस्यास्तत्सम्बुद्धौ । उल्लसिता उन्नीता भ्रूः यया तादृशी सती अतिक्रान्तम् अतीतं वस्त्विति शेषः किं कथं चिन्तयसि ? गतानुशोचनमनर्थकमिति भावः । गुडस्येव प्रेम्णः पाकः परिणामः क्षुद्रस्य नीचस्य अपचारेण दौःशील्याचरणेनेत्यर्थः अन्यत्र क्षुद्राणां मक्षिकाणाम् अपचारेण सम्बन्धेन विरसः विस्वादः भवतीति शेषः । क्षुद्रेण सह प्रेमकरणं परिणामविरसमिति फलितार्थः । त्वया क्षुद्रेण सह प्रणयः कृतः तस्मात्ते ईदृशी गतिरिति सख्या नायिकां प्रत्युक्तिः । श्लेषानुप्राणितोपमालङ्कारः ॥ ८ ॥

उद्दिश्य निःसरन्तीं सखीमियं कपटकोपकुटिलभ्रूः ।
एवमवतंसमाक्षिपदाहतदीपो यथा पतति ॥ ९ ॥
उदितोऽपि तुहिनगहने गगनप्रान्ते न दीप्यते तपनः ।
कठिनघृतपूरपूर्णे शरावशिरसि प्रदीप इव ॥ १० ॥
उद्गमनोपनिवेशनशयनपरावृत्तिवलनचलनेषु ।
अनिशं स मोहयति मां हृल्लग्नः श्वास इव दयितः ॥११॥

उद्दिश्येति । इयं कपटेन कृत्रिमेण कोपेन कुटिला भ्रूर्यस्या-स्तथाभूता सती निःसरन्तीं गृहात् निर्गच्छन्तीं सखीम् उद्दिश्य लक्ष-यित्वा एवम् इत्थम् अवतंसं कर्णभूषणीभूतं कुसुममिति शेषः आक्षि-पत् अक्षिपत् यथा येन प्रकारेण आहतश्चासौ दीपश्चेति आहत-दीपः दीप आहतः सन्नित्यर्थः पतति । परिहासतः निर्गच्छन्त्या अपि सख्यास्ताडनच्छलेन दीपनिर्वापणादस्या रतौत्सुक्यं व्यज्यते ॥९॥

उदित इति । उदितोऽपि तपनः सूर्य्यः तुहिनगहने हिमा-च्छन्ने गगनप्रान्ते कठिनेन घनेन घृतपूरेण घृतनिचयेन पूर्णे शरावस्य शिरसि प्रदीप इव न दीप्यते न राजते । शीतलप्रकृतौ न कदाचित् क्रोधादिरिपूणां विकास इति बहुषु सुजनेषु मध्ये एकेन दुर्जनेन न किमपि दौर्जन्यं कर्त्तुं शक्यते इति मूर्खबहुलेषु देशेषु नैकस्य विदुषः सम्माननेत्यादयो बहवो विषया व्यज्यन्ते ; कस्यचित् कमपि महान्तं नीचजनकृतानादरं प्रति सान्त्वनवाक्यम् ॥ १० ॥

उद्गमनेति । स दयितः कान्तः हृल्लग्नः हृदयस्थितः श्वास इव तदाख्यरोगविशेष इव उद्गमनम् उत्थानम् उपनिवेशनं शयनं परावृत्तिवलनं पार्श्वपरिवर्त्तनं चलनं गतिः तेषु अनिशं सततं मां मोहयति व्याकुलीकरोति । तस्याप्राप्तौ न मम क्वचिदपि विषये प्रवृत्तिरिति शीघ्रं तत्समागमाय यत्नः कार्य्य इति कयाचित् सखीं प्रत्युच्यते । उपमालङ्कारः ॥ ११ ॥

उज्झितसौभाग्यमदस्फुटयाच्ञानङ्गभीतयोर्यूनोः ।
अकलितमनसोरेका दृष्टिर्दूती निसृष्टार्था ॥ १२ ॥
उत्तमभुजङ्गसङ्गमनिस्पन्दनितम्बचापलस्तस्याः ।
मन्दरगिरिरिव विबुधैरितस्ततः कृष्यते कायः ॥ १३ ॥
उपनीय कलमकुडवं कथयति सभयश्चिकित्सके हलिकः ।
क्षीणं सोमार्धनिभं बधूस्तने व्याधिमुपजातम् ॥ १४ ॥

उज्झितेति । उज्झितस्त्याजितः सौभाग्यमदः वाल्लभ्यगर्वः यया तथाभूता या स्फुटा प्रकटा याच्ञा मन्मनोरथं पूरयेति प्रार्थना अनङ्गः कामश्च ताभ्यां भीतयोः स्फुटप्रार्थनायां सौभाग्यमदहानिः अस्फुटप्रार्थनायाञ्च मदनबाधेत्युभयथापि त्रस्तयोरिति यावत् अतएव अकलितम् अनिर्द्धारितं मनो ययोः तादृशयोरविदितभावयोरित्यर्थः, यूनोस्तरुणयोः एका केवला दृष्टिः परस्परावलोकनविशेष इत्यर्थः निसृष्टार्था उभयोर्भावप्रकाशिनो दूती । तदुक्तं दर्पणे । उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् । सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु स स्मृतः ॥ इति । दृष्ट्यैव तयोः परस्पराभिप्रायप्रकटनमिति भावः ॥ १२ ॥

उत्तमेति । तस्याः कान्तायाः कायः शरीरम् उत्तमेन उत्कृष्टेन भुजङ्गेन विटेन जारेणेति यावत् अन्यत्र सर्पेण वासुकिनेति यावत् यः सङ्गमः सम्बन्धः तेन निस्पन्दं निश्चलं गतमिति यावत् नितम्बस्य कटिदेशस्य अन्यत्र कटकस्य चापलम् अपरभुजङ्गसङ्गमे कौतुकयम् अन्यत्र अयथास्थितिरूपं यस्य तथाभूतः, भुजङ्गो विटसर्पयोरित्यमरः । विबुधैर्देवैः अन्यत्र सुरतक्रीड़ाशीलैः मन्दरगिरिरिव इतस्ततः कृष्यते । काचित् साधारणो अन्यैर्भुज्यमानापि एकस्मिन्नेव यूनि समासक्तेति भावः । उपमालङ्कारः ॥ १३ ॥

उपनीयेति । हलिकः कृषीजीवो कृषीवल इत्यर्थः कलमानां धान्यविशेषाणां कुडवं परिमाणविशेषं पलालनिचयं वा उपनीय

उन्मुकुलिताधरपुटे भूतिकणत्रासमीलितार्धाक्षि।
धूमोऽपि नेह विरम भ्रमरोऽयं श्वसितमनुसरति ॥ १५ ॥
उपरि परिप्लवते मम बालेयं गृहिणि हंसमालेव।
सरस इव नलिननाला त्वमाश्रयं प्राप्य वससि पुनः ॥१६॥

समीपं नीत्वा चिकित्सकस्येति शेषः सभयः सन् चिकित्सके चिकित्-सकं प्रतीत्यर्थः बध्वा मम जायाया इत्यर्थः स्तने शोणं रक्तवर्णं सोमार्द्धनिभम् अर्द्धचन्द्राकारं व्याधिं रोगम् उपजातं संवृत्तं कथ-यति। एतादृशोऽयं मूढः यत् बध्वाः परपुरुषभुक्तायाः स्तने नखक्षत-चिह्नं रोगत्वेन निरूपयति तस्मात् एतत्कान्तासङ्गमे नाल्पापि शङ्का कार्य्येति कांचित् प्रति कस्याश्चिद् दूत्या उक्तिरियम् ॥ १४ ॥

उन्मुकुलितेति। उन्मुकुलितम् उत्कृष्टं मुकुलमिवाचरितम् अधरपुटं यस्यास्तत्सम्बुद्धौ अग्निज्वालनाय फूत्कारकरणादिति भावः भूतीनां भस्मनां, भूतिर्भस्मनि सम्पदीत्यमरः। कणात् यस्त्रासः भयं तेन मीलितं अर्द्धाक्षिणी नेत्रार्द्धे यया तथाभूते! इह अस्मिन् प्रदेशे धूमोऽपि अपिरत्यान्ययव्यवच्छेदकः। न अस्तीति शेषः तस्मात् विरम निवर्त्तस्व मनःसङ्कल्पकर्मोगादिति भावः अयं भ्रमरः श्वसितं ते निःश्वासम् अनुसरति। एतेन पतिस्ते त्वदभिप्रायमवगच्छतीति सावधानया त्वया भवितव्यमिति कयाचित् सख्या काचित् जारसङ्गम-मननेन समुल्लसिता संबोध्यते ॥ १५ ॥

उपरीति। हे गृहिणि गृहस्वामिनि! एतेन आदरातिशयो व्यज्यते। इयं बाला हंसमालेव सरस इव मम उपरि परिप्लवते आसज्जते सन्तरति च। पुनः किन्तु त्वं सरसः नलिननाला पद्म-नालमिव मम आशयं हृदयम् अन्यत्र अभ्यन्तरमित्यर्थः प्राप्य वससि अधितिष्ठसि। त्वय्येव ममान्तरिकं प्रेम अस्यान्तु बालायां बाह्यमिति न त्वया शङ्कितव्यमिति कस्यचित् गृहिणीं प्रत्युक्तिः। उपमाल-ङ्कारः ॥ १६ ॥

उत्कम्पघर्मपिच्छिलदोःसाधिकहस्तविच्युतश्चौरः।
शिवमाशास्ते सुतनु स्तनयोस्तव चञ्चलाञ्चलयोः॥ १७॥
उत्क्षिप्तबाहुदर्शितभुजमूलं चूतमुकुल मम सख्या।
आकृष्यमाण राजति भवतः परमुच्चपदलाभः॥ १८॥
उच्चकुचकुम्भनिहितो हृदयं चालयति जघनलग्नाग्रः।
अतिनिम्नमध्यसंक्रमदारुनिभस्तरुणि तव हारः॥ १९॥

उत्कम्पेति। हे सुतनु सुन्दरि! उद्गतः कम्पो यस्य तथाभूतः तथा घर्मेण स्वेदेन पिच्छिलः सात्त्विकभावोदयादिति भावः दोःसाधिकस्य प्रहरिणः यः हस्तः तस्मात् विच्युतः विभ्रष्टः चौरः तस्करः चञ्चलम् अञ्चलं वसनप्रान्तभागः ययोः तथाभूतयोः तव स्तनयोः शिवं मङ्गलम् आशास्ते आकाङ्क्षति। अभिसरन्त्यास्तव तथाविधस्तनमण्डलदर्शनात् कामावेशेन सञ्जातोत्कम्पस्वेदात् प्रहरिणः हस्तात् तस्करः विच्युतः सन् त्वया कृतं स्वस्य प्राणरक्षणं मन्यमानः तव कुचावाशिषा सम्वर्द्धयतीति फलितम्। एतेन त्वया अभिसारः कृत इति कस्यचित् काञ्चित् प्रति वचनम्॥ १७॥

उत्क्षिप्तेति। उत्क्षिप्तेन उन्नमितेन बाहुना दर्शितं भुजमूलं यस्मिन् तद् यथा तथा मम सख्या आकृष्यमाण चूतमुकुल! भवतः परमतिशयेन उच्चपदलाभः उत्कृष्टगतिलाभः राजति शोभते मुकुलेति सम्बोधनेन नायकस्य अन्याङ्गनाभोगराहित्यं नवयौवनत्वञ्च ध्वन्यते। मत्सख्या त्वां प्रति समासक्तया तव सुखातिशय्यः अवश्यं भावीति कस्याश्चित् कञ्चित् युवानं प्रति वचनम्। मुकुलादेराकर्षणोत्तरमोचनात् ऊर्द्ध्वगतिर्जायते इति प्रसिद्धिरत्रानुसन्धेया। अप्रस्तुतप्रशंसालङ्कारः॥ १८॥

उच्चेति। हे तरुणि! उच्चयोरुन्नतयोः कुचकुम्भयोर्निहितः विन्यस्तः कुम्भपदेनाधिककाठिन्यं कुचयोर्द्योत्यते। जघने कटिपुरोभागे लग्नं संसक्तम् अग्रं यस्य तथाभूतः अयं तव हारः अतिनिम्नम्

उल्लसितशीतदीधितिकलोपकण्ठे स्फुरन्ति तारौघाः ।
कुसुमायुधविष्टतधनुर्निर्गतमकरन्दविन्दुनिभाः ॥ २० ॥
उपनीय प्रियमसमयविदं च मे दृप्यमानमपनीय ।
नर्मोपक्रम एव क्षणदे दूतीव चलितासि ॥ २१ ॥

अतिनतं यत् मध्यं तस्य निम्नदेशोल्लङ्घनाय यत् काष्ठं दीयते तत् संक्रमदारु तत्सदृशः सन् हृदयं मनः दृष्टिरिति शेषः आकुलयति चञ्चलं करोति । अन्योऽपि संक्रमदारुणा चलन् चञ्चलदेहो भवतीति प्रसिद्धिः । तव कुचयोरुपरि हारदर्शनेन लोकस्तत्सङ्गममाकाङ्क्षतीति कस्यचित् काञ्चित् प्रति वचनम् ॥ १९ ॥

उल्लसितेति । उल्लसितः सुरतसुखात् आनन्दपूर्ण इति भावः यः शीतदीधितिश्चन्द्रः नायिकाया मुखमित्यतिशयोक्तिः तस्य कलं मधुरं यत् उपकण्ठं कण्ठसमीपं तस्मिन् तारायां नक्षत्राणां ओघाः निचयाः स्वेदविन्दव इत्यतिशयोक्तिः । कुसुमायुधेन कामेन विष्टतं यत् धनुः पौष्पमिति भावः तस्मात् निर्गता ये मकरन्दविन्दवः कुसुमरसकणाः तन्निभाः तत्सदृशाः स्फुरन्ति प्रसरन्ति । सुरतश्रमार्त्तामपि एनां वीक्ष्य कामिनः पुनः सङ्गमाय यतन्ते इति भावः । कस्याश्चित् कश्चित् प्रत्युक्तिरियम् । अतिशयोक्तिरलङ्कारः । तदुक्तं दर्पणे, सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते इति ॥ २० ॥

उपनीयेति । हे क्षणदे क्षणम् उत्सवं ददातीति तत्सम्बुद्धौ हे निशे इत्यर्थः, त्रियामा क्षणदा क्षपेत्यमरः । असमयविदं कालानभिज्ञं प्रियम् उपनीय मत्सन्निधिमानीयेत्यर्थः मे मम दृप्यमानं विफलाभिमानम् अपनीय निरस्य च दूतीव नर्मणः विहारस्य उपक्रम एव आरम्भ एव चलितासि प्रभाता असि । उपमालङ्कारः । कस्याश्चित् प्रियतमप्राप्तावपि रात्र्यवसानात् अलब्धसमागमसुखायाः खेदवचनमिदम् ॥ २१ ॥

उत्तमवनितैकगतिः करीव सरसीपयः सखीधैर्य्यम् ।
आक्रान्तोरुणा त्वं हस्तेनैव स्पृशन् हरसि ॥ २२ ॥

——

## ऊकारादिः ।

ऊढामुनातिवाह्य पृष्ठे लग्नापि कालमचलापि ।
सर्वंसहे कठोरत्वचः किमङ्गेन कमठस्य ॥ १ ॥

उत्तमेति । उत्तमवनितानाम् एकगतिरद्वितीयाश्रयः अतिप्रिय इत्यर्थः त्वम् आक्रान्तौ मर्दितौ ऊरू जङ्घे येन तथोक्तेन अन्यत्र आक्रान्तः स्पृष्टः ऊरुः स्वजङ्घा येन तथोक्तेन अतिविशालेनेत्यर्थः । हस्तेनैव भुजेनैव अन्यत्र शुण्डादण्डेनैवेत्यर्थः करीव हस्तीव सरसीपयः सरोवरजलं सख्या धैर्य्यं हरसि । एवकारेणालिङ्गनादिषु का कथेति व्यज्यते । मत्सखी तव तादृशेन हस्तसंस्पर्शेनैव त्वयि अनुरक्ता जातेति कञ्चित् प्रति कस्याश्चिदुक्तिः । उपमालङ्कारः ॥२२॥

——

ऊढेति । हे सर्वंसहे पृथ्वि ! एतेन तव सर्वसहनक्षमत्वं सूच्यते । अमुना कमठेन ऊढ़ा उद्धृता अथच परिणीता त्वं पृष्ठे लग्नाऽपि पृष्ठोपरिस्थितापि अस्येति शेषः अथच पश्चात् कृतापि एतेन प्रणयाभावो व्यज्यते । अचलापि अचञ्चला एव अत्रावधारणार्थोऽपि-शब्दः । कालम् अतिवाह्य गमय । कठोरत्वचः कठिनचर्म्मणः कमठस्य कूर्मस्य अङ्गेन उत्सङ्गेन किम् ? न किमपि प्रयोजनमस्तीत्यर्थः । कोमले एव उत्सङ्गे उपवेशनं सुखाय एतदर्थमेव सर्वे उत्सङ्गं कामयन्ते नतु कठिने इति भावः । काञ्चित् केनचित् निष्ठुरेण नायकेन परिणीतां तत्प्रणयवर्जितां प्रति कस्याश्चित् सख्या प्रबोधवचनमिदम् । अप्रस्तुतप्रशंसालङ्कारः ॥ १ ॥

——

## ऋकारादिः।

ऋजुना निधेहि चरणौ परिहर सखि निखिलनागराचारम्।
इह डाकिनीति पल्लीपतिः कटाक्षेऽपि दण्डयति॥ १॥

ऋषभोऽत्र गीयत इति श्रुत्वा स्वरपारगा वयं प्राप्ताः।
को वेद गोष्ठमेतद्गोशान्तौ विहितबहुमानम्॥ २॥

---

## एकारादिः।

एको हरः प्रियाधरगुणवेदी दिविषदोऽपरे मूढाः।
विषममृतं वा सममिति यः पश्यन् गरलमेव पपौ॥ १॥

ऋजुनेति। हे सखि! ऋजुना सरलेन मार्गेणेति शेषः चरणौ निधेहि अर्पय, निखिलं समग्रं नागराचारं नगरोचितरीतिं परिहर परित्यज। इह अस्मिन् प्रदेशे पल्लीपतिः ग्रामाध्यक्षः कटाक्षेऽपि कुटिलदृष्टावपि का कथा अन्यनागराचारे इत्यपिशब्दार्थः डाकिनी इति बुद्धा इति शेषः दण्डयति शास्ति। काञ्चित् नागरिकां पल्लीं यान्तीं प्रति तत्सख्या अवधानार्थं शिक्षावचनमिदम्॥ १॥

ऋषभ इति। अत्र अस्मिन् प्रदेशे ऋषभः स्वरविशेषः, निषादर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वरा इत्यमरः। वृषश्च गीयते गानविषयीक्रियते गानेन कीर्त्यते च इति श्रुत्वा स्वरपारगाः स्वरज्ञानशालिनः वयं प्राप्ताः उपस्थिताः। गोशान्तौ गोवृषभस्य शान्तौ सान्त्वनविषये विहितः कृतः बहुमानः वृषस्येति भावः यत्र तादृशं गोष्ठं गवां स्थानमेतत् को जनः वेद जानाति। नामसादृश्यश्रवणात् वयमत्रागमनेन प्रतारिता इति भावः। सदालोचनकामनया समागतानां मूर्खसमागमप्राप्तावेतदुक्तिरिति बोध्यम्॥ २॥

---

एक इति। एकः केवलः, एके मुख्यान्यकेवला इत्यमरः। हरः

एष्यति मा पुनरयमिति गमने यदमङ्गलं मयाकारि ।
अधुना तदेव कारणमवस्थितौ दग्धगेहपतेः ॥ २ ॥
एकैकशो युवजनं विलङ्घमानाक्षनिकरमिव तरला ।
विश्राम्यति सुभग त्वामङ्गुलिरासाद्य मेरुमिव ॥ ३ ॥
एकः स एव जीवति स्वहृदयशून्योऽपि सहृदयो राहुः ।

शिवः प्रियाया अधरस्य गुणान् वेत्तीति तथाभूतः । अपरे दिवि स्वर्गे सीदन्तीति तथोक्ता देवा इत्यर्थः मूढ़ाः अनभिज्ञाः प्रियाधररसा॰ स्वादानभिज्ञा इत्यर्थः । यः हरः विषम् अमृतं वा समं इति पश्यन् विचारयन् गरलमेव विषमेव पपौ पीतवान् । श्रियां नारायणेनाधिगतायां हरस्य प्रियायाः श्रिया अधररसपानानधिकारित्वात् दुःखेन गरलपानं प्रियाधररसात् हीनस्यामृतस्य तुच्छीकरणम् । देवानान्तु अमृतलुब्धत्वेन तज्ज्ञानराहित्यात् मूढ़त्वमिति भावः ॥ १ ॥

एष्यतीति । अयं दग्धगेहपतिः गृहस्वामिहतकः पुनः मा एष्यति न आगमिष्यति इति धियेति मया गमने विदेशयात्रायाम् अस्येति शेषः यत् अमङ्गलम् अकल्याणम् अकारि कृतम् अधुना तदेव अमङ्गलाशंसनमेव अस्य दग्धगेहपतेः अवस्थितौ गृहे इति शेषः कारणं हेतुः । मदीयशापभियायं न विदेशं गत इति सखीं कथं ते पतिर्विदेशं न गत इति वादिनीं प्रति कस्याश्चित् विरहासहिष्णोरुक्तिः ॥ २ ॥

एकैकश इति । हे सुभग ! तरला युवजनविचारणे चपला सा अङ्गुलिः अक्षनिकरमिव जपमालामणिसमूहमिव एकैकशः एकादिक्रमेणेत्यर्थः युवजनं विलङ्घमाना लङ्घयन्ती सती मेरुमिव मालामध्यस्थितप्रधानमणिमिव त्वाम् आसाद्य प्राप्य विश्राम्यति नान्यं युवानं कामयते । त्वय्येवासक्ता सेति कञ्चित् प्रति कस्याश्चित् सख्या उक्तिरियम् । उपमालङ्कारः ॥ ३ ॥

एक इति । स्वं हृदयं वक्षःस्थलं मनश्च तेन शून्योऽपि रहितो-

यः सकललघिमकारणमुदरं न बिभर्ति दुष्पूरम् ॥ ४ ॥
एकेन चूर्णकुन्तलमपरेण करेण चिबुकमुन्नमयन् ।
पश्यामि बाष्पधौतश्रुति नगरद्वारि तद्वदनम् ॥ ५ ॥
एकं जीवनमूलं चञ्चलमपि तापयन्तमपि सततम् ।
अन्तर्वहति वराकी सा त्वां नासेव निःश्वासम् ॥ ६ ॥
एकं वदति मनो मम यामि न यामीति हृदयमपरं मे ।

ऽपि शिरोमात्ररूपत्वादिति भावः सहृदयः हृदयवान् प्रशस्तमना इत्यर्थः स एकः केवलो राहुः जीवति प्राणिति यः सकलानां लघिम्नां लाघवानां कारणं हेतुभूतं दुष्पूरं पूरयितुमशक्यम् उदरं जठरं न बिभर्त्ति न धत्ते । उदरपूरणार्थं ये याच्ञादिकमकार्य्यं कुर्वन्ति ते मृता एव राहुस्तु उदरविहीनत्वात् न तथा करोतीति तस्यैव जीवनमिति भावः ॥ ४ ॥

एकेनेति । नगरस्य द्वारि द्वारदेशे एकेन करेण चूर्णकुन्तलम् अलकावलिम् अपरेण करेण चिबुकं तस्या इति शेषः उन्नमयन् अहं बाष्पेण अश्रुजलेन धौते क्षालिते श्रुती श्रवणे यस्य तादृशं तस्या वदनं पश्यामि अवलोकयामि । प्रेमातिशयेन तस्या नगरद्वारपर्य्यन्तागमनमिति भावः । विरहिण उक्तिरियम् ॥ ५ ॥

एकमिति । सा वराकी तपस्विनी अनुकम्पार्हेति व्यज्यते । नासा निःश्वासमिव एकं मुख्यं जीवनमूलं जीवनहेतुभूतं सततं चञ्चलमपि परनायिकादिसङ्क्रमलोल्यादिति भावः अतएव तापयन्तमपि व्यथयन्तमपि त्वाम् अन्तर्वहति हृदये धारयति । त्वां विना नान्या गतिरिति सख्या कञ्चित् प्रति कान्ताप्रेमकथनमिदम् । उपमालङ्कारः ॥ ६ ॥

एकमिति । एकं मम मनः यामि इति अपरं मे हृदयं न यामीति कान्तसमीपमिति शेषः वदति इति नायिकयोक्ते दूती

हृदयद्वयमुचितं तव सुन्दरि हृतकान्तचित्ताया: ॥ ७ ॥
एरण्डपत्त्रशयना जनयन्ती खेदमलघुजघनतटा ।
धूलिपुटीव मिलन्ती स्मरज्वरं हरति हलिकवधू: ॥ ८ ॥

---

ककारादि:।

केलिनिलयं सखीमिव नयति नवोढां स्वयं न मां भजते।
इत्थं गृहिणीमर्यें स्तुवति प्रतिवेशिना हसितम्॥ १ ॥

वदति हृदयेति हे सुन्दरि! हृतं कान्तस्य चित्तं यया तथाभूताया-स्तव हृदयद्वयम् उचितमेव। एकं तव स्वं चित्तं द्वितीयं कान्तचित्तं त्वया हृतमिति तव द्विहृदयत्वादिति भाव:। दूतीनायिकयोरुक्ति-प्रत्युक्ती॥ ७॥

एरण्डेति। अलघु विशालं जघनतटं कटिपुरोभाग: यस्यास्ता-दृशी हलिकस्य नीचजातिविशेषस्य वधू: कान्ता एरण्डपत्त्रं शयनं यस्यास्तथोक्ता एरण्डपत्त्रास्तरणशायिनीत्यर्थ: मिलन्ती कान्तेन सङ्गच्छमाना खेदं जनयन्ती सुरतश्रमादिति भाव: धूलिपुटीव रेणुपो-टलीव स्मरज्वरं कामपीडां हरति स्वस्य कान्तस्य चेति शेष:। एरण्डपत्त्रान्तरिता धूलिपोटली मदनज्वरशान्तिदायिनीति वैद्यका:। उपमालङ्कार: ॥ ८ ॥

---

केलिनिलयमिति। इयं गृहिणी नवोढां सपत्नीमिति शेष: सखीमिव केलिनिलयं क्रीडागारं नयति स्वयं मां न भजते न सेवते इत्थम् अनेन प्रकारेण अर्यें वैश्ये, अर्य्य: स्वामिवैश्ययोरित्यमर:। गृहिणीं गृहस्वामिनीं ज्येष्ठां भार्य्यामित्यर्थ: स्तुवति प्रशंसति सति प्रतिवेशिना केनचित् हसितम्। गृहस्वामिनी ममानुरक्ता कथमपि

कालक्रमकमनीयक्रोडेयं केतकीति काशंसा ।
वृद्धिर्यथा यथास्यास्तथा तथा कण्टकोत्कर्षः ॥ २ ॥
कृतकस्वाप मदीयश्वासध्वनिदत्तकर्ण किं तीव्रैः ।
विध्यसि मां निःश्वासैः स्मरः शरैः शब्दवेधीव ॥ ३ ॥
क स निर्मोकदुकूलः कालङ्करणाय फणिमणिश्रेणी ।
कालियभुजङ्गगमनाद्यमुने विश्वस्य गम्यासि ॥ ४ ॥

सपत्नीं स्वामिना संयोज्य निश्चिन्ता मया विहरतीति अनेन मूर्खेन न ज्ञातमिति हासकारणं बोध्यम् ॥ १ ॥

कालेति । इयं केतकी केतककुसुमलता कालक्रमेण कुसुमसमया-विर्भावेणेत्यर्थः अन्यत्र यौवनप्रादुर्भावेणेत्यर्थः कमनीयः रमणीयः क्रोड़ः तत्प्रदेशः अन्यत्र भुजाभ्यन्तरदेशः यस्यास्तथाभूता इति हेतो का आशंसा प्रशंसा ? न कापीत्यर्थः यथा यथा अस्याः केतक्याः वृद्धिः, तथा तथा कण्टकानाम् उत्कर्षः प्राचुर्य्यादिति भावः अन्यत्र क्षुद्रशत्रूणां पिटानामिति भावः उत्कर्षः उल्लासः । कस्या-श्चित् साधारणीकन्याया दर्शनेन लोकानामुक्तिरियम् । अप्रस्तुत-प्रशंसालङ्कारः ॥ २ ॥

कृतकेति । हे कृतकस्वाप कृत्रिमनिद्र ! मदीयस्य श्वासस्य ध्वनौ दत्तौ अवस्थितौ कर्णौ येन तथाभूत ! शब्दवेधीव स्मरः शरैः तीव्रैः दारुणैः दीर्घैरिति यावत् निःश्वासैः किं कथं मां विध्यसि ? कश्चित् स्वकान्तां निद्रितां ज्ञात्वान्यनारीसविधे गन्तुकामं कपटनिद्रया कान्तया निःश्वासं प्रति दत्तकर्णं प्रति नायिकाया उक्तिरियम् । उपमालङ्कारः ॥ ३ ॥

क्वेति । हे यमुने कालिन्दि ! तदाख्ये नायिके च स निर्मोक एव सर्पकञ्चुक एव दुकूलः वसनं क ? अलङ्करणाय फणिनां मणिश्रेणी रत्ननिचयश्च क ? नास्तीत्यर्थः कालियस्य तदाख्यस्य भुजङ्गस्य गमनात् त्वत्परित्यागेनान्यत्र प्रस्थानादित्यर्थः विश्वस्य निःशङ्कतयेति भावः

किञ्चिन्न बालयोक्तं न सप्रसादा निवेशिता दृष्टिः ।
मयि पदपतिते केवलमकारि शुकपञ्जरो विमुखः ॥ ५ ॥
कृतहसितहस्ततालं मन्मथतरलैर्विलोकितां युवभिः ।
क्षिप्तः क्षिप्तो निपतन्नङ्के नर्तयति भृङ्गस्ताम् ॥ ६ ॥
कमलमुखि सर्वतोमुखनिवारणं विदधदेव भूषयति ।
रोधोऽरुद्धस्वरसास्तरङ्गिणीस्तरलनयनाश्च ॥ ७ ॥

गम्या चमि । काञ्चित् दुष्टचतुरुषभुक्तां साम्प्रतं तेन च परित्यक्तां कामिनीं प्रति अपरेषां विटानामुक्तिरियम् ॥ ४ ॥

किञ्चिदिति । मयि पदपतिते चरणनिपतिते सति मानापनयार्थमिति भावः बालया मुग्धया तया किञ्चित् सत् असद्वेति भावः न उक्तं तथा सप्रसादा प्रसन्नताव्यञ्जिका दृष्टिश्च न निवेशिता न मयि अर्पितेत्यर्थः, केवलं शुकपञ्जरः विमुखः अन्यदिङ्मुखः अकारि कृतः । शुकानां समक्षं रतिक्रीड़ायां कृतायां ते सर्वसमक्षं प्रकाशयन्तीति तेषां वैमुख्यमस्मादर्थं कृतं तेन मयि सुरतानुमतिर्दत्तेति व्यज्यते । सखायं प्रति कस्यचिदुक्तिरियम ॥ ५ ॥

कृतेति । भृङ्गः भ्रमरः लम्पटश्च मन्मथतरलैः कामचपलैः युवभिः कृतः हसितेन हस्ततालो यत्र तद् यथा तथा विलोकितां दृष्टां तां क्षिप्तः क्षिप्तः पुनः पुनस्ताड़ित इत्यर्थः अङ्के निपतन् नर्त्तयति । अत्र भृङ्गेण लतायाः नर्त्तनमिव कामुकेन कामिन्याः सर्वजनसमक्षं कुचादिषु स्पर्शनेन नर्त्तनं व्यज्यते । इयञ्च साधारणी ॥ ६ ॥

कमलेति । हे कमलमुखि पद्ममुखि ! सर्वतोमुखस्य जलस्य निवारणम् अवरोधनम् अन्यत्र सर्वतः सर्वस्मात् मुखस्य निवारणम् अप्रदर्शनं विदधदेव कुर्वदेव रोधः तटं लज्जया संगोपनञ्च अरुद्धः स्वः रसः जलम् इच्छा च याभिः तथाभूतास्तरङ्गिणीः नदीः

**कितव प्रपञ्चिता सा भवता मन्दाक्षमन्दसञ्चारा।**
**बहुदायैरपि सम्प्रति पाशकसारीव नायाति॥ ८॥**
**कः श्लाघनीयजन्मा माघनिशीथेऽपि यस्य सौभाग्यम्।**
**प्रालेयानिलदीर्घः कथयति काञ्चीनिनादोऽयम्॥ ९॥**
**किमशकनीयं प्रेम्णः फणिनः कथयापि या बिभेति स्म।**

तरले चपले नयने यासां तासु ललना इति शेषः भूषयति अलङ्करोति। काञ्चित् कामिनीं प्रति तत्सख्या स्वचरितशिक्षणमिदम्॥७॥

कितवेति। हे कितव धूर्त्त! सा तव कान्तेति शेषः भवता प्रपञ्चिता प्रकाशं नीता भवन्तं सानुरक्तेति प्रकाशं गतेति भावः अन्यत्र चालिता। मन्दाक्षेण लज्जया मन्दः सञ्चारो गतिर्यस्यास्तथाभूता लज्जया त्वत्सकाशमागन्तुमशक्तेति भावः अन्यत्र मन्दाक्षैः मन्दपाशकैः मन्दः अल्पः सञ्चारः गमनं स्थानात् स्थानान्तरप्राप्तिरित्यर्थः यस्यास्तथाभूता बहुदायैरपि बहुधनप्रलोभनैरपीत्यर्थः अन्यत्र बहुप्रयत्नैरपि पाशकसारीव पाशक्रीडनगुटिकेव न आयाति नागच्छति तव समीपमिति शेषः अन्यत्र स्वगृहमिति शेषः। श्लेषानुप्राणितोपमालङ्कारः। कथं सा मत्समीपं नायातीति वादिनं नायकं प्रति दूत्या उक्तिरियम्॥ ८॥

क इति। माघनिशीथेऽपि माघमासीयार्द्धरात्रेऽपि प्रबलशीतरजनीयोगेऽपीति भावः प्रालेयानिलेन शिशिरवातेन दीर्घः महान् सञ्चारित इति भावः अयं काञ्चीनिनादः रसनाध्वनिः अभिसारिणीपदसञ्चारादिति भावः यस्य सौभाग्यं कथयति सूचयति स श्लाघनीयं प्रशंसनीयं जन्म यस्य तथाभूतः युवेति शेषः कः? शीतनिशीथे अभिसरन्तीं कामिनीं काञ्चीनिनादेन ज्ञात्वा कस्यचिदभिसरणीययुवकस्य प्रशंसनमिदम्॥ ९॥

किमिति। प्रेम्णः प्रणयस्य अशकनीयम् असाध्यं किम्? न किमपीत्यर्थः या पार्वतीति शेषः फणिनः सर्पस्य कथयापि बिभेति

सा गिरिशभुजभुजङ्गमफणोपधानाद्य निद्राति ॥ १० ॥
कृत्रिमकनकेनेव प्रेम्णा मुषितस्य वारवनिताभिः।
लघुरिव वित्तविनाशक्लेशो जनहास्यता महती ॥ ११ ॥
किं पर्व्वदिवसमार्जितदन्तोष्ठि निजं वपुर्न मण्डयसि।
स त्वां त्यजति न पर्व्वस्वपि मधुरामिक्षुयष्टिमिव ॥१२॥
कष्टं साहसकारिणि तव नयनार्धेन सोऽध्वनि स्पृष्टः।

सा अद्य इदानीं गिरिशस्य हरस्य भुजे यः भुजङ्गमः सर्पः तस्य फणा उपधानं मस्तकावलम्बनविशेषः यस्यास्तथाभूता सती निद्राति शेते। यदि सत्यं प्रेम स्यात् तदा कापि भीतिर्न विद्यते इति कस्याश्चित् काञ्चित् प्रति उक्तिः ॥ १० ॥

कृत्रिमेति। वारवनिताभिः वेश्याभिः कृत्रिमकनकेनेव कल्पितकाञ्चनेनेव प्रेम्णा प्रणयेन मुषितस्य प्रतारितस्य वित्तस्य धनस्य विनाशक्लेशः क्षयजनितकष्टं लघुरिव अल्प इव जनानां लोकानां हास्यता महती अतिशयिनीत्यर्थः वाराङ्गनानां कृत्रिमप्रणये धनक्षयोऽस्तु लोका यत् हसन्ति तदेव महत् दुःखमुत्पादयतीति भावः। वेश्याहृतसर्व्वस्वस्यानुशोचनमिदम्। उपमालङ्कारः ॥ ११ ॥

किमिति। पर्व्वदिवसे अमावस्यादिदिनपञ्चके इत्यर्थः मार्जितौ विशोधितौ दन्तोष्ठौ यस्यास्तत्सम्बुद्धौ। किं कथं निजं वपुः शरीरं न मण्डयसि न भूषयसि ब्रह्मचर्य्याचरणं करिष्यामीति बुद्ध्येति भावः स कान्तः पर्व्वसु अमावास्यादिष्वपि त्वां मधुराम् इक्षुयष्टिमिव न त्यजति। पर्व्ववर्जं व्रजेदेतामिति शास्त्रात् पर्व्वसु गमनस्य निषिद्धत्वात्। पर्व्वाणि चक्षोराणि। अमावस्याष्टमी चैव चतुर्दश्यथ पूर्णिमा। पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव चेति ॥ नायिकां प्रति सख्या उक्तिरियम् ॥ १२ ॥

कष्टमिति। हे साहसकारिणि! अकार्य्यकारिणीत्यर्थः स

उपवीतादपि विदितो न द्विजदेहस्तपस्वी ते ॥ १३ ॥
क्लेशेऽपि तन्यमाने मिलितेयं मां प्रमोदयत्येव।
रौद्रेऽनभ्रेऽपि नभःसुरापगावारिवृष्टिरिव ॥ १४ ॥
कूपप्रभवाणां परमुचितमपां पट्टबन्धनं मन्ये।
याः शक्नुवन्ति लब्धुं न पार्थिवेनापि विगुणेन ॥ १५ ॥

युवेति शेषः अध्वनि पथि तव नयनार्द्धेन स्पृष्टः कटाक्षविषयीकृत इत्यर्थः द्विजदेहः ब्राह्मणशरीरः स तपस्वी वराकः अनुकम्पनीय इति भावः उपवीतात् यज्ञसूत्रधारणादपि न विदितः न ज्ञातः अयं भावः त्वत्कटाक्षाहतस्य तस्य त्वत्सङ्गमं विना प्राणवियोग एव भविता ततश्च ते ब्रह्महत्याभयमपि नास्तीति भावः। कस्याश्चित् काञ्चित् कृतचित् अनुरागिणीं कर्त्तुं प्ररोचनवचनमिदम्॥ १३ ॥

क्लेशेऽपीति। क्लेशे तन्यमाने विस्तीर्य्यमाणेऽपि क्लेशबाहुल्येऽपीत्यर्थः मिलिता सङ्गता इयं कान्ता मां प्रमोदयत्येव क्लेशाभावे मिलितेति किमु वक्तव्यमित्यपिशब्दार्थः। तत्सङ्गमे यदि मम क्लेशातिशयः स्यात् तदपि सुखमिति निष्कर्षः। अनभ्रे मेघशून्ये रौद्रे आतपेऽपीत्यर्थः नभसः सुरापगायाः स्वर्गङ्गाया वृष्टिरिव। यथा मेघाभावेऽपि सौरातपे मन्दाकिनीवृष्टिः प्रसिद्धा सुखयति तद्वत्। कश्चित् कथं ते दैवगायामस्तत्सङ्गमं प्रतीति वादिनं प्रति कस्यचित् कामुकस्योक्तिरियम्। उपमालङ्कारः॥ १४ ॥

कूपेति। कूपः प्रभवो यासां तासां कूपस्थितानामित्यर्थः अन्यत्र आवरणगृहस्थितानामिति ध्वनिः अपां जलानां पट्टेन अरघट्टेन अन्यत्र अवगुण्ठनवसनेन बन्धनं स्वगोपनमित्यर्थः परम् अत्यन्तम् उचितं मन्ये विवेचयामि। याः आपः कान्ताश्चेति ध्वनिः। पार्थिवेनापि पृथिवीविकारकुम्भादिनापि राज्ञापीति ध्वनिः विगु- णेन रज्जुशून्येन गुणरहितेनेति ध्वनिः लब्धुं प्राप्तुं न शक्नुवन्ति।

करलहशिखानिखात भ्रान्त्वा विश्रान्त रजनिदुरवाप।
रविरिव यन्त्रोल्लिखितः कृशोऽपि लोकस्य हरसि दृशम् ॥१६॥
किं करवाणि दिवानिशमपि लग्ना सहजशीतलप्रकृतिः।
हन्त सुखयामि न प्रियमात्मानमिवात्मनश्छाया ॥ १७ ॥
केशैः शिरसो गरिमा मरणं पीयूषकुण्डपातेन।
दयितवहनेन वक्षसि यदि भारस्तदिदमचिकित्स्यम् ॥१८॥

निर्गुणेनेयं कामिनी लभ्यते इति कस्याश्चित् दूत्याः कञ्चित् कामिनं प्रत्युक्तिरियम्। अप्रस्तुतप्रशंसालङ्कारः ॥ १५ ॥

करलहेति। हे करलहाणां नखानां शिखाभिरग्रैः निखातः क्षतः तत्सम्बुद्धौ। भ्रान्त्वा इतस्ततः गत्वा अन्याङ्गनास्विति भावः विश्रान्त प्राप्तविश्राम! रजनिषु दुराप दुर्लभ! त्वं यन्त्रेण शाणा-स्त्रविशेषेण उल्लिखितः उद्घर्षितः रविरिव सूर्य्य इव कृशोऽपि क्षीणोऽपि लोकस्य मद्विधस्येति भावः दृशं नयनं हरसि नेत्रानन्दं ददासीति भावः। पुरा किल सौरतेजः सोढुमशक्तया तत्पत्न्या संज्ञया प्रार्थितः पिता त्वष्टा सूर्य्यं यन्त्रमारोप्य क्षीणतेजसमकरोत्। ततः स मन्दतेजा आसीदिति पौराणिकी वार्त्तानुसन्धेया। खण्डि-ताया नायिकायाः नायकं प्रत्युक्तिरियम्। उपमालङ्कारः ॥ १६ ॥

किमिति। किं करवाणि दिवानिशं सततमित्यर्थः लग्नापि सङ्गता तथा सहजा स्वाभाविकी शीतला प्रकृतिः स्वभावो यस्यास्तथाभूतापि आत्मनः छाया आत्मानमिव प्रियं कान्तं न सुखयामि न सुखीकर्त्तुं पारयामीत्यर्थः हन्त खेदे। ईदृशसेवायामपि यद्यसौ न सुखी स्यात् तदाहं किं करोमि दुरदृष्टेनैवात्र प्रभवतीति भावः। कथं स्वामिनं न सुखयसीति वादिनीं प्रति कस्याश्चित् खेदोक्तिरियम्। उपमा-लङ्कारः ॥ १७ ॥

केशैरिति। केशैः शिरसः मूर्ध्नः गरिमा गौरवं भवतीति शेषः

किञ्चित्कर्कशतामनु रसं प्रदास्यन्निसर्गमधुरं मे।
इक्षोरिव ते सुन्दरि मानस्य ग्रन्थिरपि काम्यः॥ १९॥
केन गिरिशस्य दत्ता बुद्धिर्भुजगं जटावनेऽर्पयितुम्।
येन रतिरभसकान्ताकरचिकुराकर्षणं मुषितम्॥ २०॥
करचरणकाञ्चिहार प्रहारमविचिन्त्य बलगृहीतकचः।
प्रणयी चुम्बति दयितावदनं स्फुरदधरमरुणाक्षम्॥२१॥

न तु भारबुद्धिरिति भावः पीयूषकुण्डकातेन अमृतह्रदपतनेन मरणम् असम्भवं प्रत्युत चिरजीवनमेवेति भावः तथा वक्षसि दयितवहनेन कान्तधारणेन यदि भारः क्लेशबुद्धिरिति भावः तत् तदा इदम् अचिकित्स्यं चिकित्सनीयं न भवतीत्यर्थः अस्य रोगस्य चिकित्सा नास्तीति भावः। कथं कान्तं वक्षसि धारयसीति वादिनीं प्रति कस्याश्चिदुक्तिः॥ १८॥

किञ्चिदिति। हे सुन्दरि! ते तव मानस्य इक्षोरिव ग्रन्थिरपि किञ्चित् ईषत् कर्कशतां कठिनताम् अनु पश्चात् ईषत्काठिन्यानन्तर-मित्यर्थः निसर्गमधुरं स्वभावमनोहरं रसं प्रदास्यन् मे मम काम्यः काङ्क्षणीयः। अल्पकोपां मानिनीं प्रति नायकस्योक्तिरियम्। उपमा-लङ्कारः॥ १९॥

केनेति। केन जनेन जटावने जटाजूटे भुजगम् अर्पयितुं गिरिशस्य हरस्य बुद्धिः दत्ता येन बुद्धिदानेन रतौ सुरते रभसः वेगः हर्षो वा यस्यास्तथाभूता या कान्ता गौरी तस्याः करेण चिकुराणां केशानाम् आकर्षणं मुषितं हृतं शिरःस्थितसर्पभयादिति भावः। जटावने जटानाम् अवने रक्षणे निमित्तार्थे सप्तमी जटारक्षणार्थ-मित्यर्थ इति केचित्॥ २०॥

करेति। करेण हस्तेन चरणेन पादेन काञ्चिहारेण च यः प्रहारः तम् अविचिन्त्य अगणयित्वा बलेन गृहीताः कचाः केशा

कुरुतां चापलमधुना कलयतु सरसासि यादृशी तदपि।
सुन्दरि हरीतकीमनु परिपीता वारिधारेव ॥ २२ ॥
कज्जलतिलककलङ्कितमुखचन्द्रे गलितसलिलकणकेशि।
नवविरहदहनतूलो जीवयितव्यस्त्वया कतमः ॥ २३ ॥
कृच्छ्रानुवृत्तयोऽपि हि परोपकारं त्यजन्ति न महान्तः।
तृणमात्रजीवना अपि करिणो दानद्रवार्द्रकराः ॥ २४ ॥

यस्य तादृशः सन् प्रणयी प्रियः स्फुरन्तौ स्पन्दमानौ अधरौ यस्य तथाभूतम् अरुणे रक्ते अक्षिणी नयने यस्य तादृश कोपादिति भावः दयितायाः कान्तायाः वदनं चुम्बति। कान्तस्यान्याङ्गनासङ्गदर्शनेनातिमानवत्यास्वेदितमिदम् ॥ २१ ॥

कुरुतामिति। हे सुन्दरि! अधुना साम्प्रतं चापलम् अन्याङ्गनादिषु लालसारूपमिति भावः कुरुतां करोतु त्वं हरीतकीम् अनु पश्चात् हरीतकीभोजनानन्तरमित्यर्थः परिपीता सम्यक् पीता वारिधारेव यादृशी सुरसा सुरसिका असि तदपि कलयतु जानातु तव प्रिय इति शेषः। उपमालङ्कारः। कान्तस्यान्यासक्त्या विमनस्कां नायिकां प्रति सख्या उक्तिरियम् ॥ २२ ॥

कज्जलेति। कज्जलतिलकेन कलङ्कितः मुखचन्द्रः यस्यास्तत्सम्बुद्धौ तथा गलिताः सलिलानां जलानां कणाः येभ्यः तथाभूताः केशा यस्यास्तत्सम्बुद्धौ त्वया नवविरहदहनस्य नूतनविच्छेदानलस्य तूलः लघुदहनीयवस्तुविशेषस्वरूप इति भावः कतमः जन इति शेषः जीवयितव्यः। एतादृशत्वद्दर्शनेन विरहिणोऽपि कान्तासादृश्यावस्थानेन कथञ्चित् जीवन्तीति भावः। रूपकालङ्कारः ॥ २३ ॥

कृच्छ्रेति। कृच्छ्रेण अनुवृत्तिर्जीवनं येषां तादृशा अपि महान्तः जनाः परोपकारं न हि त्यजन्ति। तथाहि तृणमात्रं जीवनं येषां तथाभूता अपि करिणः हस्तिनः दानद्रवेण मदक्षरणेन आर्द्राः सिक्ताः

किं हसथ किं प्रधावथ किं जनमाक्षिपथ बालका विफलम्।
तदयं दर्शयति यथा रिष्टः कण्ठेऽमुना जगृहे ॥ २५ ॥

कातरताकेकरितस्मरलज्जारोषमसृणमधुराक्षी।
मोक्तुं न मोक्तुमथवा वलतेऽसावर्धलब्धरतिः ॥ २६ ॥

केतकगर्भे गन्धादरेण दूरादमी द्रुतमुपेताः।
मदनस्यन्दनवाजिन इव मधुपा धूलिमाददते ॥ २७ ॥

कराः शुण्डादण्डा येषां तथाभूताः भवन्तीति शेषः। विशेषेण सामा-न्यसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः। तदुक्तं दर्पणे। सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति ॥ २४ ॥

किमिति। हे बालकाः! किं कथं हसथ, किं कथं प्रधावथ, किं कथं विफलम् अनर्थकं जनं लोकम् आक्षिपथ? रिष्टः दैत्यविशेषः यथा अमुना कण्ठे जगृहे गृहीतः, अयं कृष्ण इति शेषः तद्वृत्तान्तमित्यर्थः दर्शयति। तत्त्वतो नायं गोपिकामालिङ्गति येन रूपेण दैत्यः गले धृतः तत्प्रदर्शनमेतदिति गोपीसख्या बालका अन्यथा बोधिता इति भावः ॥ २५ ॥

कातरेति। अर्द्धं यथा तथा लब्धा रतिर्यया तथाभूता असम्पूर्णसुरतेत्यर्थः असौ नारीति शेषः कातरतया सुरतश्रमजनितक्लेशेनेति यावत् केकरिते कुटिलीकृते तथा स्मरेण कामेन लज्जया रोषेण च मसृणमधुरे स्निग्धमनोहरे अक्षिणी यस्यास्तादृशी सती मोक्तुं परित्यक्तुम् अथवा न मोक्तुं पतिमिति शेषः वलते उद्युङ्क्ते। पतिं सम्पूर्णसुरतसुखं त्यक्तुमपि न पारयति अत्यक्तुमपि न पारयतीति भावः ॥ २६ ॥

केतकीति। केतकस्य कुसुमविशेषस्य गर्भे अभ्यन्तरे गन्धादरेण यतोऽस्मात् सौरभं वासते ततोऽत्र मधुप्राप्स्यामीति वासनयेति भावः

को वक्रिमा गुणाः के का कान्तिः शिशिरकिरणलेखानाम् ।
अन्तः प्रविश्य यासामाक्रान्तं पशुविशेषेण ॥ २८ ॥
कृतविविधमथनयत्नः पराभवाय प्रभुः सुरासुरयोः ।
इच्छति सौभाग्यमदात् स्वयंवरेण श्रियं विष्णुः ॥ २९ ॥

अथच गन्धे आदरो यस्य तथोक्तेन वायुनेत्यर्थः दूरात् दूरदेशात् द्रुतं शीघ्रम् उपेताः आगताः मधुपाः भ्रमरा मदनस्यन्दनवाजिन इव कामरथाश्वा इव धूलिं परागं पदच्युतं रजश्च आददते गृह्णन्ति । वाञ्छाकीर्त्तिमतां कीर्त्तिश्रवणात् याचका अर्थलोभेन दूरात् तत्समीपमागतास्तद्‌प्राप्त्या प्रतार्य्यन्ते इति भावः । यद्वा हे केतकगर्भे तदाख्ये कान्ते ! गन्धादरेण तव गुणलोभेन दूरात् आगता अमी मधुपा मद्यपाः विलासिन इति भावः धूलिं त्वच्चरणरेणुम् आददते । तस्मादनुग्राह्या एते इति कस्याश्चित् सख्या काञ्चित् वारवनितां प्रत्युक्तिरियम् । उपमालङ्कारः ॥ २७ ॥

क इति । पशुविशेषेण मृगेणेत्यर्थः अथच जडेन यासाम् अन्तः अभ्यन्तरं प्रविश्य आक्रान्तम् अधिष्ठितं तासां शिशिरकिरणलेखानां चन्द्रलेखानां वक्रिमा वक्रत्वं वैचित्र्यमित्यर्थः कः ? न कोऽपीत्यर्थः गुणाः के ? न केऽपीत्यर्थः कान्तिश्च का ? न कापीत्यर्थः । यासां नारीणां सौरभादिकं मूर्खेणास्वाद्यते न तु विदुषा तासां सौरभादिकं विफलमिति, ये च सज्जनसङ्गतिर्न कृता तेषाञ्च गुणा विफला इति भावः ॥ २८ ॥

कृतेति । कृतः विविधः बहुः मथने समुद्रस्येति भावः यत्नो येन तथोक्तः सुरासुरयोः देवदैत्ययोः पराभवाय प्रभुः समर्थः विष्णुः सौभाग्यमदात् सुभगत्वाभिमानात् स्वयंवरेण श्रियं लक्ष्मीम् इच्छति । समुद्रमन्थने कृतबलप्रकाशेन सुरासुरजयिना विष्णुना लक्ष्मीपरिग्रहे न बलात्कारः कृतः अपि तु लक्ष्मीः एव तं सौभाग्येन वृतव-

किं पुलि गण्डशैलभ्रमेण नवनीरदेषु निद्रासि ।
अनुभव चपलाविलसितगर्जितदेशान्तरभ्रान्तीः ॥ ३० ॥
कान्तः पदेन हत इति सरलामपराध्य किं प्रसादयथ ।
सोऽप्येवमेव सुलभः पदप्रहारः प्रसादः किम् ॥ ३१ ॥
कर्णगतेयममोघा दृष्टिस्तव शक्तिरिन्द्रदत्ता च ।
सा नासादितविजया क्वचिदपि नापार्थपतितेयम् ॥३२॥

तोष्यतः त्वया तस्यां न बलात्कारः प्रयोज्यः सा तु त्वद्गुणेनैव वशङ्गता त्वां वरिष्यतीति कस्याश्चित् कांश्चित् प्रति उक्तिः ॥ २९ ॥

किमिति । हे पुलि ! गण्डशैलभ्रमेण गण्डशैलोऽयं चिरं स्थास्यति इति मोहेनेत्यर्थः नवनीरदेषु अभिनवजलदेषु पथिकेष्विति ध्वनिः । किं कथं निद्रासि निद्रां गच्छसि पथिकानामाश्रये सुखं तिष्ठसीति ध्वनिः । चपलाया विद्युतः विलसितं स्फुरणं गर्जितं गर्जनं देशान्तरभ्रान्तिश्च ताः अनुभव भुङ्क्ष्व । पान्थेन सह प्रेम चञ्चलं तत्तस्याप्रेमिकतया तस्मात् निर्भत्सनादिकं ततस्तस्य त्वां परित्यज्य पलायनञ्चेति भावः । पथिकानुरक्तां प्रति कस्याश्चिदुक्तिरियम् । अप्रस्तुतप्रशंसालङ्कारः ॥ ३० ॥

कान्त इति । कान्तः पदेन हतः ताडितः त्वयेति शेषः इति हेतोः सरलाम् अकपटामित्यर्थः अपराध्य दूषयित्वा किं कथं प्रसादयथ प्रसन्नां कुरुथ यूयमिति शेषः सोऽपि पदप्रहाररूपः प्रसादः एवमेव किं सुलभः नैवेत्यर्थः । अस्याः पदप्रहारो न सुलभः प्रत्युत तस्य प्रसाद एवेति विगणयथेति भावः । नायिकासख्या नायकसखीः प्रत्युक्तिरियम् ॥ ३१ ॥

कर्णेति । हे सुन्दरि ! या कर्णगता आकर्णकृष्टेत्यर्थः अथच कर्णः अङ्गराजः दुर्योधनमित्रं तं गता तत्सन्निधौ स्थितेत्यर्थः अमोघा अव्यर्था यत्र ते दृष्टिपातः स तव चरणानत एवेति भावः अथच

क्लेशयसि किमिति दूतीयं दशक्यं सुमुखि तव कटाक्षेण।
कामोऽपि तव सायकमकीर्त्तिशङ्की न सन्धत्ते ॥ ३३ ॥
को वेद मूल्यमच्युते प्रभुणा पणीकृतस्य विधोः।
प्रतिविजये यत् प्रतिपणमधरं धरनन्दिनी विदधे ॥ ३४ ॥

च्यविफला इन्द्रेण परमेश्वरेण विधात्रेति यावत् दत्ता अथच इन्द्रेण देवराजेन दत्ता च इयं तव दृष्टिः शक्तिश्च, सा आसादितः प्राप्तः विजयो वा विशिष्टानां जयो यया तथाभूता न? अपितु विश्वजय-कर्त्रीत्यर्थः। तथा इयं क्वचिदपि अपगतोऽर्थो यस्याः सा व्यर्थेत्यर्थः पतिता च न अथच अपार्थे अर्जुनभिन्ने घटोत्कचे इति यावत् पतिता न? अपितु पतितैव। त्वत्कटाक्षपातेन यो न बाध्यते स पुरुष एव नेति भावः। कामिनीं प्रति कस्यचिदुक्तिः। अत्र प्रस्तु-ताया दृष्टेरप्रस्तुतायाः शक्तेश्च श्लेषेणैकधर्मसम्बन्धात् श्लेषानुप्राणित-दीपकालङ्कारः। तदुक्तं दर्पणे। अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते इति ॥ ३२ ॥

क्लेशयसीति। हे सुमुखि! किमिति कथं दूतीः क्लेशयसि क्लेशकरे कर्मणि नायकप्ररोचनादौ नियोजयसीति भावः। तव कटाक्षेण यत् अशक्यम् असाध्यं तत्र कर्मणि युवजनविजये इति भावः कामोऽपि अकीर्त्तिशङ्की अयशः शङ्कमानः सन् सायकं शरं न सन्धत्ते न विजयार्थं चेष्टत इति भावः। तव कटाक्षेणैव तव प्रियस्तवाधीनो भविष्यति नात्र ते दूतीप्रेषणप्रयासो कार्य्य इति कस्याश्चित् सख्या नायिकां कान्तानयनव्यग्रां प्रत्युक्तिरियम् ॥ ३३ ॥

क इति। धरस्य पर्वतस्य, महीध्रे शिखरिक्ष्माभृद्धार्य्यधरपर्वता इत्यमरः। नन्दिनी गौरी प्रभुणा हरेण अच्युते पाशक्रीड़ायां पणीकृतस्य पणत्वेन स्थापितस्य विधोश्चन्द्रस्य मूल्यं प्रतिविजये अधरं प्रतिपणं यत् विदधे कृतवती तत् को जनः वेद न कोऽपीत्यर्थः। यद्यहं द्यूते पराजयं लभे तदा इमं मम शिरःस्थं तव हारयिष्यामि

कुपितां चरणप्रहरणभयेन मुञ्चामि न खलु चण्डि त्वाम् ।
अलिरनिलचपलकिसलयताडनसहनो लतां भजते ॥२५॥
कोपाकृष्टभ्रू स्मरशरासने संवृणु प्रिये पततः ।
छिन्नज्यामधुपानिव कज्जलमलिनाश्रुजलविन्दून् ॥ २६ ॥
कामेनापि न भेत्तुं किमु हृदयमपारि बालवनितानाम् ।
मूढविशिखप्रहारोच्छूनमिवाभाति यद्वच्चः ॥ २७ ॥

इति हरेण प्रतिज्ञाते गौरी यद्यहं पराजिये तदा ममाधरं ते दास्या-मीति पणीचकार ततश्च चन्द्रस्य मूल्यम् अधरमपरः कोऽपि गौरीं विना न जानातीति भावः । कान्ताधरसुधापानमतिमहत् वस्त्विति भावः ॥ २४ ॥

कुपितामिति । हे चण्डि कोपने ! चण्डस्त्वत्यन्तकोपन इत्यमरः । कुपितां त्वां चरणप्रहरणात् पादताडनात् भयेन च खलु नैव मुञ्चामि त्यजामि, अलिः भ्रमरः अनिलेन वायुना चपलस्य कम्पितस्येत्यर्थः किसलयस्य पल्लवस्य यत् ताड़नं तस्य सहनः सन् लतां भजते न लतां त्यजतीति भावः । अत्र वैधर्म्येण दृष्टान्तालङ्कारः । तदुक्तं दर्पणे । दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनमिति । कोपनां कान्तां प्रति नायकस्योक्तिरियम् ॥ २५ ॥

कोपेति । हे प्रिये ! कोपेन आकृष्टा भ्रूरेव स्मरस्य कामस्य शरासनं धनुः यस्यास्तत्सम्बुद्धौ । छिन्ना ज्या मधुपा एव तान् कज्जलमलिनान् अश्रुविन्दून् संवृणु मा रोदिहीति भावः । रूप-काल्ङ्कारः । कस्यचित् विदेशादागतस्य नायकस्य कान्तां चिरविर-हार्त्तां रुदतीं प्रति वचनमिदम् ॥ २६ ॥

कामेनेति । कामेनापि का कथान्येषामित्यपिशब्दार्थः । बाल-वनितानां मुग्धाङ्गनानां हृदयं भेत्तुं विदारयितुं किमु न अपारि न शक्तं, यत् यतः वक्षः बालवनितानामिति शेषः मूढस्य अस्य प्रह-

किं परजीवैर्दीव्यसि विभ्रममधुराक्षि गच्छ सखि दूरम्।
अहिमधिचत्वरमुरगग्राही खेलयतु निर्विघ्नः॥ ३८॥
करचरणेन प्रहरति यथा यथाङ्गेषु कोपतरलाक्षी।
रोषयति परुषवचनैस्तथा तथा प्रेयसीं रसिकः॥ ३९॥
कस्तां निन्दति लुम्पति कः स्मरफलकस्य वर्णकं मुग्धः।
को भवति रत्नकण्टकमसृते कस्याश्चिदस्तीति॥ ४०॥

त्वमजानत इति यावत् यः विशिखप्रहारः शरघातनम् अथवा मूढः अल्पः यः विशिखप्रहारः तेन उच्छूनमिव स्फीतमिव आभाति राजते स्तनायतनाभिर्माराहिति भावः। लोके च यत्राघातेन न तद्भेदस्तत्र तस्याङ्गस्य स्फीतता भवतीति द्रष्टव्यम्। उत्प्रेक्षालङ्कारः॥ ३७॥

किमिति। विभ्रमेण मधुरे मनोहरे विस्फारत्वविशेषेणेति भावः अक्षिणी नयने यस्यास्तत्सम्बुद्धौ। परजीवैः परेषां प्राणैः अथच परप्राणिभिः सर्पैरिति भावः दीव्यसि क्रीडसि। हे सखि! शीघ्रं गच्छ कान्तसमीपमिति शेषः। उरगग्राही आहितुण्डिकः अधिचत्वरम् अङ्गनभुवि, विभक्त्यर्थेऽव्ययीभावः। निर्विघ्नः सन् अहिं सर्पं खेलयतु क्रीडयतु। त्वयात्र सर्पक्रीडादर्शने विलम्बे कृते सङ्केतितस्ते नायकः प्राणान् त्यक्ष्यति अस्य च सर्पजीविनस्तद्दर्शनेनापहृतचित्ततया स्वजीविकाच्छेदो भविष्यतीति च त्वया शीघ्रमितो गन्तव्यमिति नायिकां प्रति दूत्या वचनमिदम्॥ ३८॥

करचरणेनेति। कोपेन तरले चञ्चले अक्षिणी यस्यास्तथाभूता करचरणेन अङ्गेषु यथा यथा प्रहरति परुषवचनैः निष्ठुरवाक्यैः तथा तथा रोषयति कोपयति कामिनीमिति शेषः य इति शेषः स एव रसिकः॥ ३९॥

क इति। को जनः तां कान्तां निन्दति? न कोऽपीत्यर्थः। को मुग्धः मूढः स्मरफलकस्य मदनचित्रपटस्य वर्णकं चित्ररूपाम्

कोपवति पाणिलीलाचञ्चलचूताङ्कुरे त्वयि भ्रमति ।
करकम्पितकरवाले स्मर इव सा मूर्च्छिता सुतनुः ॥४१॥
कौलीन्यादलमेनां भजामि न कुलं स्मरः प्रमाणयति ।
तद्भावनेन भजतो मम गोत्रस्खलनमनिवार्यम् ॥ ४२ ॥
कुत इह कुरङ्गशावक केदारे कलममञ्जरीं त्यजसि ।
तृणबाणस्तृणधन्वा तृणघटितः कपटपुरुषोऽयम् ॥ ४३ ॥

आलेख्यमित्यर्थः लुम्पति प्रोञ्छतीत्यर्थः ? न कोऽपीत्यर्थः । को जनः रत्नकण्टकं रत्ननिन्दकः भवति । अत्र कण्टकशब्दो नपुंसकः । कस्य जनस्य अम्भते अरुचिर्भवति ? न कस्यापीत्यर्थः । नायकं नायिकायाः केनापि कृतालोकनिन्दाश्रवणादनुरागविमुखं प्रति नायिकासख्या नायिकायाः प्रशंसनेन तदभिमुखीकरणवचनमिदम् । दृष्टान्तालङ्कारः ॥ ४० ॥

कोपवतीति । कोपवति क्रुद्धे पाणौ लीलया विलासेन चञ्चलः चूताङ्कुरः आम्रमुकुलः यस्य तथाभूते स्मरे कामे इव करेण कम्पितः करवालो येन तादृशे त्वयि भ्रमति सति सा सुतनुः सुन्दरी मूर्च्छिता मोहमिता । कोपनं शत्रुजयायोद्यतं जगद्विजयायोद्यतं काममिव दृष्ट्वा सा नितरां कामार्त्ता जातेति नायकं प्रति स्वनायिकासख्या उक्तिरियम् । उपमालङ्कारः ॥ ४१ ॥

कौलीन्यादिति । अलम् अत्यर्थं कौलीन्यात् सत्कुलप्रसूतत्वात् एनाम् अतिसत्कुलप्रसूतामित्यर्थः न तु प्रेयसीमिति भावः भजामि सेवे, किन्तु स्मरः कामः कुलं न प्रमाणयति कुलीनेयमियमकुलीनेति विचारं न करोतीत्यर्थः तस्याः मम प्रेयस्याः भावेन भजतः इमां सेवमानस्य मम गोत्रस्खलनं नामभ्रंशनम् अनिवार्य्यं निवारयितुमशक्यम् । कथं मम सख्या सह सुरते तत्सपत्नीनाम त्वया कृतमिति वादिनीं सखीं प्रति नायकवचनमिदम् ॥ ४२ ॥

कुत इति । हे कुरङ्गशावक ! मृगपोत ! इह केदारे मञ्जरीं

## खकारादिः ।

खलसख्यं प्राङ्मधुरं वयोऽन्तराले निदाघदिनमन्ते ।
एकादिमध्यपरिणतिरमणीया साधुजनमैत्री ॥ १ ॥

---

## गकारादिः ।

गुणमधिगतमपि धनवान्न चिरान्नाशयति रक्षति दरिद्रः ।
मज्जयति रज्जुमम्भसि पूर्णः कुम्भः सखि न तुच्छः ॥ १ ॥

कुतः कस्मात् कलमस्य धान्यस्य मञ्जरीं त्यजसि ? अयं तृणबाणः तृणनिर्मितशरधरः तृणधन्वा तृणनिर्मितधनुर्धरः तृणेन घटितः निर्मितः कपटपुरुषः कृत्रिमः पुमान् । अत्तमपतिकाया अस्याः सकाशमागच्छ नात्र तव कापि भीतिरिति नायिकासख्या उपनायकं प्रत्युक्तिरियम् । अप्रस्तुतप्रशंसालङ्कारः ॥ ४२ ॥

---

खलसख्यमिति । प्राक् प्रथमतः खलेन दुर्जनेन सख्यं मैत्रम् अन्तराले मध्ये वयः यौवनम् अन्ते अवसाने निदाघदिनं ग्रीष्मदिवसावसानमित्यर्थः मधुरं मनोहरं सुखदमित्यर्थः । एका केवला साधुजनेन मैत्री आदौ प्रथमतः मध्ये परिणतौ अन्ते च रमणीया सुखदायिनीत्यर्थः । व्यतिरेकालङ्कारः । तदुक्तं दर्पणे । आधिक्यमुपमेयस्योपमानान्न्यूनताथवा । व्यतिरेक इति ॥ १ ॥

---

गुणमिति । हे सखि ! धनवान् जनः अधिगतमपि कथञ्चित् प्राप्तमपि गुणं विद्यादिकं न चिरात् अचिरेणैवेत्यर्थः नाशयति धनमदेन पर्य्यालोचनविरहादिति भावः दरिद्रस्तु रक्षति तदेकमात्रधनत्वादिति भावः । पूर्णः कुम्भः अम्भसि जले रज्जुं मज्जयति,

गुरुरपि लघूपनीतो न निमज्जति नियतमाश्रये महतः ।
वानरकरोपनीतः शैलो मकरालयस्येव ॥ २ ॥
गौरीपतेर्गरीयो गरलं गत्वा गले जीर्णम् ।
जीर्यति कर्णे महतां दुर्वादो नाल्पमपि विशति ॥ ३ ॥
गृहपतिपुरतो जारं कपटकथाकथितमन्मथावस्थम् ।
प्रीणयति पीडयति च बाला निःश्वस्य निःश्वस्य ॥ ४ ॥

तुच्छः अपूर्ण इति यावत् न मज्जयतीति शेषः । गुणवत्सङ्गतिरेव विशेषेति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १ ॥

गुरुरिति । गुरुर्महानपि लघुना क्षुद्रेण उपनीतः उपस्थापितः महतः जनस्य वानरेण उपनीतः आनीतः सेतुबन्धनार्थमिति भावः शैलः पर्वतः मकरालयस्येव समुद्रस्येव आश्रये अन्तःकरणे मध्ये च नियतं न निमज्जति । नीचाश्रयेण महतो महत्त्वस्य नाशात् महतोऽन्तःकरणाभिप्रायस्य बोधने अक्षमत्वं भवतीति सर्वथा नीचाश्रयो न कर्त्तव्य इति भावः । उपमालङ्कारः ॥ २ ॥

गौरीति । गरीयः अतिमहत् गरलं कालकूटं गौरीपतेः हरस्य गले कण्ठे गत्वा जीर्णं परिपाकं प्राप्तमित्यर्थः गरलस्य स्वदं गमनेन गौरीपतेस्तद्ग्रहणेच्छा यथा नासीत् तथा महद्भिः परदोषश्रवणे नोद्यमः क्रियते इति ध्वन्यते । दुर्वादः लोकापवादः महतां कर्णे जीर्य्यति अल्पमपि न प्रविशति । महान्तः परनिन्दां यदि कथञ्चित् शृण्वन्ति किन्तु सा तेषां हृदये स्थानं न लभते तत्क्षणादेव नश्यतीति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३ ॥

गृहेति । बाला मुग्धा कान्ता निःश्वस्य निःश्वस्य पुनः पुनर्निःश्वस्येत्यर्थः गृहपतेः गृहस्वामिनः गृहकार्य्येषु व्यापृतस्येति भावः पुरतः अग्रतः कपटकथाभिः मिथ्यावार्त्ताभिः मम कापि कान्ता नितरां मदनुरागिणी आसीत् अहन्तु तद्विरहेण संसारमसारं मन्यमानः

गतिगञ्जितवरयुवतिः करी कपोलौ करोतु मदमलिनौ ।
मुखबन्धमात्रसिन्धुर लम्बोदर किं मदं वहसि ॥ ५ ॥
गेहिन्याः शृण्वन्ती गोत्रस्खलितापराधतो मानम् ।
स्निग्धां प्रिये सगर्वां सखीषु बाला दृशं दिशति ॥ ६ ॥
ग्रीष्ममये समयेऽस्मिन् विनिर्मितं कलय केलिवनमूले ।

कथञ्चित् प्राणान् धारयामि इत्येवंरूपाभिरिति भावः कथिता प्रकटिता मन्मथावस्था कामावेशः येन तादृशं जारम् उपपतिं प्रीणयति त्वद्विना नाहं जीवामीति निःश्वासपरित्यागेनानुरागातिशय-प्रकटनादिति भावः पीड़यति च रहःपतिसमक्षं कथमधुनैव ते मनोरथं सम्पादयामीति द्वितीयनिःश्वासपरित्यागे कातरत्वसूचनादिति भावः ॥ ४ ॥

गतीति । गत्या गमनेन सुरतव्यापारेण च गञ्जिता तिरस्कृता पराजितेत्यर्थः वरा श्रेष्ठा युवतिः करिणी कामिनी च येन तथाभूतः करी गजः महाभुजस्य कपोलौ गण्डौ मदेन मलिनौ मदस्राविणा-वित्यर्थः करोतु तस्य तत्करणेऽधिकारोऽस्तीति भावः । मुखबन्ध-मात्रेण वदनयोजनेनैवेत्यर्थः सिन्धुर गज ! लम्बोदर ! गणपते ! किं कथं मदं वहसि ? पुरुषचिह्नसद्भावमात्रेण न पुरुषत्वम् अपितु पुरुषकर्त्तव्यसाधनक्षमत्वमिति अप्रस्तुतप्रशंसालङ्कारेण व्यज्यते ॥ ५ ॥

गेहिन्या इति । बाला नवोढ़ा कामिनी गेहिन्याः ज्येष्ठायाः सपत्न्या इति भावः गोत्रस्खलनं स्वकीयनामोच्चारणमिति भावः तदे-वापराधः तस्मात् मानं गेहिन्याः सकाशे प्रेयस्याः स्वस्याः सहसा नामकीर्त्तनरूपापराधजनितम् ईर्ष्याकोपमिति भावः शृण्वन्ती आकर्णयन्ती, अत्र नुनागमो महाकविप्रयोगात् बोढव्यः । अतो प्रिये स्वामिनि स्निग्धां स्वानुरागजनितामिति भावः सखीषु च सगर्वाम् अहमेवास्य प्रेयसी नान्येति साहङ्कारां दृशं दिशति अर्पयति ॥ ६ ॥

ग्रीष्मेति । अस्मिन् ग्रीष्ममये सन्तापबहुले समये केलिवनमूले

अलमालवालवलयच्छलेन कुण्डलितमिव शैत्यम् ॥ ७ ॥
गुणबद्धचरण इति मा लीलाविहगं विमुञ्च सखि मुग्धे ।
अस्मिन् वलयितशाखे क्षणेन गुणयन्त्रणं त्रुटति ॥ ८ ॥

क्रीड़ाकाननतले विशेषेण निर्मितं विहितं शैत्यम् आलवालमिषेण वृक्षसेचनार्थं तत्तलनिर्मितवृतिरूपजलाधारच्छलेन कुण्डलितमिव कलय अवधारय । तदत्र समये तादृशे एव प्रदेशे क्रीड़ितव्यमिति काञ्चित् प्रति कस्यचिदुक्तिः । अथवा अस्मिन् समये वर्षाकाले इति भावः ग्रीष्मसमये केलिवनमूले विनिर्मितं शैत्यं तद्वृक्षसेचनार्थमिति भावः आलवालवलयच्छलेन कुण्डलितमिव निरर्थकत्वेन निरूपित-मिव कलय वर्षोदकेन तत्सत्त्वादिति भावः अन्यदपि वस्तु निरर्थकं कुण्डलनया प्रतीयते इति लौकिकाः । वर्षाकालोऽयमुपस्थितः अतस्ते पतिः न चिरात्तामनुपक्षोप्स्यतीति कस्याश्चित् सख्या काञ्चित् नायिकां प्रत्याश्वासनवचनमिदम् । किंवा ग्रीष्मये समये केलिवनमूले आल-वालमण्डलच्छलेन विनिर्मितं शैत्यम् अस्मिन् पुरोवर्त्तिनि त्वत्कुच-मण्डले कुण्डलितमिव कुण्डलाकारेण स्थितमिव कलय अवधारय । अहं मदनानलसन्तप्तः त्वत्कुचमण्डलं विना न मे शान्तिरिति कस्याचित् नायकस्य काञ्चित् प्रत्युक्तिरियम् । उत्प्रेक्षालङ्कारः ॥ ७ ॥

गुणेति । मुग्धे बाले अनभिज्ञे इति यावत् सखि ! गुणेन रज्ज्वा शीलसौन्दर्य्यादिना च बद्धौ चरणौ यस्य तथाभूतः बद्धं निरुद्धं चरणम् अन्यत्र गमनं यस्य तथाभूतस्य इति स्थिरोऽति भावः लीलाविहङ्गं क्रीड़ापक्षिणं प्रणयिनञ्च मा विमुञ्च न त्यज । वलयिता मण्डलिताः शाखा यस्य तादृशे अस्मिन् वृक्षे इति शेषः अन्यत्र बहु-नायिकाकीर्णे प्रदेशे इति शेषः क्षणेन अचिरादेवेत्यर्थः गुणयन्त्रणं रज्जुबन्धनं शीलसौन्दर्य्यादिना वशीकरणञ्च त्रुटति नश्यति । सखि अवधानेन यथा ते कान्तः पराङ्गनासु नासज्जते तथा कार्य्यमिति सख्या नायिकां प्रत्युपदेशवचनमिदम् । श्लेषमूलाप्रस्तुतप्रशंसालङ्कारः ॥ ८ ॥

गुरुगर्जिसान्द्रविद्युद्भयमुद्रितकर्णचक्षुषां पुरतः ।
बाला चुम्बति जारं वज्रादधिको हि मदनेषुः ॥ ९ ॥
गृहिणीगुणेषु गणिता विनयः सेवा विधेयतेति गुणाः ।
मानः प्रभुता वाम्यं विभूषणं वामनयनानाम् ॥ १० ॥
गुणमान्तरमगुणं वा लक्ष्मीर्गङ्गा च वेद हरिहरयोः ।
एका पदेऽपि रमते न वसति निहिता शिरस्यपरा ॥११॥

गुर्विति । बाला कान्ता गुरुर्महान् गर्जिर्गर्जनं मेघध्वनिः सान्द्रा घना अनवरतोद्भासिनीत्यर्थः विद्युत् ताभ्यां यत् भयं तेन मुद्रिते मुकुलिते कर्णचक्षुषी येषां तथाभूतानां गुरुजनानां पुरतः अग्रतः जारम् उपपतिं चुम्बति । हि यतः मदनेषुः कामशरः तत्प्रहार इति भावः वज्रात् कुलिशात् तत्पातादिति भावः अधिकः प्रबलः । वज्रप्रहारोऽपि सह्यः मदनशरप्रहारस्तु नैवेति भावः । मेघगर्जित-विद्युतां चणिकत्वेन अतिशीघ्रमेतैर्नेत्रोन्मीलनेन द्रष्टव्यमिति विवेक-शून्यता साहसकारिता च मदनशरार्त्तानां भवतीति भावः ॥ ९ ॥

गृहिणीति । गृहिणी गृहस्वामिनी तस्या गुणेषु मध्ये विनयः शिष्टव्यवहारः सेवा पतिशुश्रूषा, विधेयता पतिवश्यता इति गुणाः धर्माः गणिताः प्रसंख्याताः प्राधान्येनेति भावः । वामनयनानां कुटि-लदृशां मानः प्रणयेर्ष्याजनितकोपः प्रभुता आधिपत्यं वाम्यं प्रति-कूलवर्त्तित्वं विभूषणं विशेषेण आत्मनः अलङ्करणम् इति गुणाः गणिता इति शेषः ॥ १० ॥

गुणमिति । लक्ष्मीः गङ्गा च हरिहरयोः आन्तरम् अन्तःस्थितं गुणम् अगुणं दोषञ्च वेद जानाति । एका लक्ष्मीः पदेऽपि पदसेवायां रतापीत्यर्थः रमते सानन्दं तिष्ठतीति भावः अपरा गङ्गा शिरसि नि-हितापि रक्षितापि न वसति न तिष्ठति । गुणवतः सतः अनादरोऽपि वरं नतु निर्गुणकृत आदर इति भावः । सती नारी पत्या अनादृतापि

गत्वा जीवितसंशयमभ्यस्तः सोढुमतिचिराद्विरहः ।
अकरुण पुनरपि दित्ससि सुरतदुरभ्यासमस्माकम् ॥ १२ ॥
गोत्रस्खलितप्रश्नेऽप्युत्तरमतिशीलशीतलं दत्त्वा ।
निःश्वस्य मोघरूपे स्ववपुषि निहितं तया चक्षुः ॥ १३ ॥
गन्धग्राहिणि शालोन्मीलितनिर्यासनिहितनिखिलाङ्गि ।
उपभुक्तमुक्तभूरुहशतेऽधुना भ्रमरि न भ्रमसि ॥ १४ ॥

न विमुखीभवति असाध्वी तु पत्या समाहृतापि न तिष्ठतीति च भावः ॥ ११ ॥

गत्वेति । हे अकरुण ! निर्दय ! जीवितसंशयं गत्वा अतिचिरात् अतिदीर्घकालात् विरहः सोढुम् अभ्यस्तः । पुनरपि अस्माकं सुरतदुरभ्यासं सुरतलीलाया दुष्टम् अभ्यासं दित्ससि दातुमिच्छसि । प्रवासादागतं पुनः प्रवासयायिनं रन्तुकामं कान्तं प्रति कान्ताया उक्तिरियम् ॥ १२ ॥

गोत्रेति । गोत्रस्य नाम्नः स्खलितं यत्र तथाभूते प्रश्ने कात्स्निनि कथमिदमिति प्रष्टव्ये सौदामिनि किमिदमित्यभ्यस्तकान्तानाम्ना पृच्छायामपीति भावः तया गेहिन्या इति शेषः अतिशीतलम् उत्तरं दत्त्वा न तत्र विरक्ष्येति भावः निःश्वस्य दुःखातिशयादिति भावः मोघरूपे विफलसौन्दर्य्ये स्ववपुषि निजशरीरे चक्षुः निहितम् अर्पितं दुर्भगाहमस्मीति धियेति भावः । सखायं प्रति कस्यचिदुक्तिः ॥ १३ ॥

गन्धेति । हे गन्धग्राहिणि सौरभाकाङ्क्षिणि ! उपभुक्तानि पश्चात् मुक्तानि त्यक्तानि भूरुहशतानि वृक्षसमूहा यया तथाभूते ! भुक्तबहुपुरुषे इति ध्वनिः । भ्रमरि ! अधुना इदानीं शालस्य वृक्षभेदस्य उन्मीलितः निःसृत इत्यर्थः यः निर्यासः रसविशेषः इत्यर्थः तत्र निहितम् अर्पितं निखिलं समग्रम् अङ्गं यस्यास्तथाभूते सति ! न भ्रमसि न इतस्ततः पर्य्यटसि । भुक्तबहुतरुणां पश्चात् कस्मिंश्चि-

गुरुषु मिलितेषु शिरसा प्रणमसि लघुषून्नता समेषु समा।
उचितज्ञासि तुले किं तुलयसि गुञ्जाफलैः कनकम् ॥१५॥
गेहिन्या क्रियमाणं निरुध्यमानं नवोढया पुरतः।
मम नौकाद्वितयार्पितगुण इव हृदयं द्विधा भवति ॥१६॥
गुण आकर्षणयोग्यो धनुष इवैकोऽपि लक्षलाभाय।
लूतातन्तुभिरिव किं गुणैर्विमर्दासहैर्बहुभिः ॥ १७ ॥

जनवति समासक्तां काञ्चित् वारनारीं प्रति कस्यचिदुक्तिः। अप्रस्तुत-प्रशंसालङ्कारः ॥ १४ ॥

गुरुष्विति। हे तुले तोलनदण्ड! गुरुषु महत्सु भारवत्-स्वित्यर्थः मिलितेषु सङ्गतेषु शिरसा गुरुसंयुतकोट्या इति भावः प्रणमसि गुरून् प्रणमसीति भावः, लघुषु क्षुद्रेषु मिलितेषु उन्नता तिष्ठसीति शेषः, समेषु तुल्येषु समा तुल्या, तस्मात् उचितज्ञा असि, किन्तु गुञ्जाफलैः कनकं काञ्चनं किं कथं तुलयसि समीकरोषि? एतदनुचितं तवेति भावः। पक्षे गुरुषु मिलितेषु समागतेषु शिरसा मस्तकेन प्रणमसि तानिति शेषः, लघुषु नीचेषु समागतेषु औन्नत्यं दर्शयसि, तुल्येषु समागतेषु तुल्यव्यवहारं करोषि अतः त्वम् उचितं व्यवहरसि, किन्तु कमपि महान्तं नीचवत् व्यवहरसीति नैतत् युक्तं तवेति अप्रस्तुतप्रशंसया व्यज्यते ॥ १५ ॥

गेहिन्या इति। मम हृदयं गेहिन्या पूर्वभार्य्ययेति भावः क्रियमाणम् आकृष्यमाणं पुरतः अग्रतः नवोढया निरुध्यमानञ्च सत् नौकाद्वितयं विपरीतगामीति भावः तत्रार्पितः निहितः गुण इव रज्जुरिव द्विधा भवति एकगुणबद्धं नौकाद्वयं परस्परविपरीतगमनेन यथा छिद्यते तथा मम मनः उभयोरासक्तमपि उभयोर्विपरीत-क्रियया दोलायमानं भवतीति भावः। कस्यचित् द्विभार्य्यस्य सखायं प्रत्युक्तिरियम्। उपमालङ्कारः॥ १६ ॥

गुण इति। धनुष इव आकर्षणयोग्यः विचारक्षम इति यावत्

गायति गीते शंसति वंशे वादयति सा विपञ्चीषु ।
पाठयति पञ्जरशुकांस्तव संवादाक्षरं बाला ॥ १८ ॥

गणयति न मधुव्ययमयमविरतमापिबतु मधुकरः कुमुदम् ।
सौभाग्यमानवान् परमसूयति द्युमणये चन्द्रः ॥ १९ ॥

गुणविधृता सखि तिष्ठसि तथैव देहेन किं तु हृदयं ते ।
हृतममुना मालायाः समीरणेनेव सौरभ्यम् ॥ २० ॥

पक्षे आकर्षणे धनुश्छिद्र इत्यर्थः एकोऽपि गुणः विद्यादिः मौर्वी च लक्ष्यलाभाय बह्वर्थप्राप्तये पक्षे वेध्यवस्तुलाभाय भवतीति शेषः लूतातन्तुभिरिव विमर्दासहैः विचारयोग्यैः आकर्षणासहैश्च बहुभिः गुणैः विद्यादिभिः रज्जुभिश्च किम् ? न किमपि प्रयोजनमस्तीत्यर्थः । एका विद्या सुशिक्षिता वरं न तु पल्लवग्राहित्वं बह्वीषु विद्यासु अवृत्तिविश्वद्दृष्टपरिणतिरिति भावः ॥ १७ ॥

गायतीति । सा बाला गीते तव संवादाक्षरं वार्त्ताक्षरं गायति, वंशे वेणुवाद्ये शंसति कथयति विपञ्चीषु वीणासु वादयति पञ्जरशुकान् पाठयति च । त्वय्यस्याः सर्वथासक्तिरिति कस्याश्चित् दूत्याः कमपि प्रत्युक्तिः । अत्रानेकक्रियास्वेककर्त्तृसम्बन्धात् दीपकालङ्कारः । तदुक्तं दर्पणे । अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेदिति ॥ १८ ॥

गणयतीति । अयं मधुकरः अविरतं निर्बाधमिति भावः कुमुदम् आपिबतु सम्यक् भुङ्क्तामित्यर्थः तत्र मधुव्ययं मधुक्षयं न गणयति न लक्षयति चन्द्रस्य कुमुदनायकत्वादिति भावः किन्तु सौभाग्यमानवान् सुभगत्वाभिमानीत्यर्थः परं केवलं द्युमणये सूर्याय असूयति भोक्तुं न ददातीति भावः ॥ १९ ॥

गुणेति । हे सखि ! त्वं गुणैः शीलविनयादिभिः सूत्रैश्च विधृता विशेषेण अवलम्बिता सती देहेन अवयवेन तथैव पूर्ववदेव तिष्ठसि, किन्तु अमुना यूनेति शेषः समीरणेन वायुना मालायाः सौरभमिव

गुरुसदने नेदीयसि चरणगते मयि च मूकयापि तया ।
नूपुरमपास्य पदयोः किं न प्रियमीरितं प्रियया ॥ २१ ॥
ग्रन्थिलतया किमिन्दोः किमपभ्रंशेन भवति गीतस्य ।
किमनार्जवेन शशिनः किं दारिद्र्येण दयितस्य ॥ २२ ॥
गेहिन्या चिकुरग्रहसमयससीत्कारमीलितदृशापि ।
बालाकपोलपुलकं विलोक्य निहतोऽस्मि शिरसि पदा ॥२३॥

ते तव हृदयं हृतम् । यद्यपि त्वं यथास्थितैव दृश्यसे किन्तु त्वच्चित्तं मदनशरविद्धमिव लक्ष्यते तदस्य तु स्वस्यागोपनमनुचितं शीघ्रं तन्मिलनाय यतः कार्य्य इति सख्या नायिकां प्रत्युक्तिरियम् । उपमालङ्कारः ॥ २० ॥

गुर्विति । गुरुसदने गुरूणां श्वशुरादीनां पित्रादीनां वा सदने गृहे नेदीयसि निकटवर्त्तिनि, मयि चरणगते पादपतिते च मूकयापि निःशब्दयापि गुरुभयादिति भावः तया प्रियया पदयोः नूपुरम् अपास्य त्यक्त्वा एकत्वमविपर्य्यस्तम् । किं प्रियं न ईरितं न कृतं सर्व्वमेव कृतमित्यर्थः । चरणपतनेन मयि मानमपहाय गुरुभयाच्च नूपुरं त्यक्त्वा मयि सुरतानुमतिदानं निःशब्दपदसञ्चारेण त्वयात्र रात्रावागन्तव्य-मित्यभिप्रायावेदनं चलितास्मि त्वमपि चलेति च बहुतरमागमनञ्च व्यज्यते । सखायं प्रति कस्यचिदुक्तिः ॥ २१ ॥

ग्रन्थिलतयेति । ग्रन्थिलतया ग्रन्थिमत्तया इन्दोः किम् ? अप-भ्रंशेन असंस्कृतपदप्रयोगेण गीतस्य किम् ? अनार्जवेन कौटिल्येन शशिनः चन्द्रस्य किम् ? दारिद्र्येण निर्धनतया दयितस्य प्रियस्य किम् ? स्वतःप्रियस्य यत्किञ्चिद् दूषणं न गण्यते इति भावः । कथं दरिद्रेऽनुरक्तासीति वादिनीं सखीं प्रति नायिकाया उक्तिरियम् । दृष्टान्तालङ्कारः । तदुक्तं दर्पणे । दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रति-बिम्बनमिति ॥ २२ ॥

गेहिन्या इति । चिकुराणां कुन्तलानां, चिकुरः कुन्तलो बालः

गुरुपक्ष्म जागरारुणघूर्णत्तारं कथञ्चिदपि वलते ।
नयनमिदं स्फुटनखपदनिवेशकृतकोपकुटिलभ्रु ॥ २४ ॥

---

घकारादिः ।

घटितजघनं निपीड़ितपीनोरु न्यस्तनिखिलकुचभारम् ।
आलिङ्गन्त्यपि बाला वदत्यसौ मुञ्च मुञ्चेति ॥ १ ॥

कचः केशः शिरोरुह इत्यमरः । चटुसमये चटुणकाले चुम्बनार्थ-मिति भावः सीत्कारं यथा तथा मीलिते सुखातिशयादिति भावः दृशौ नयने यया तथाभूतयापि गेहिन्या प्रौढ़या भार्य्यया बालायाः नवोढ़ायाः सपत्न्या इति भावः कपोलपुलकं गण्डलोमाञ्चं चुम्बनज-मिति भावः विलोक्य पदा शिरसि निहतः अस्मि रोषादिति भावः । कथं त्वं प्रियया पदाहत इति पृच्छन्तं सखायं प्रति कस्य-चिदुक्तिरियम् ॥ २३ ॥

गुर्विति । गुरूणि जागरणवशात् भारवन्ति पक्ष्माणि नेत्र-लोमानि यस्य तथोक्तं जागरेण अरुणे रक्ते घूर्णन्त्यौ च तारे कनीनिके यस्य तथोक्तं स्फुटेन स्पष्टेन नखपदनिवेशेन नखक्षतार्पणेन कृतः यः कोपः कान्तं प्रतीति भावः तेन कुटिले भ्रुवौ यस्य तथाविधम् इदं नयनं कथञ्चित् वलते चलति ॥ २४ ॥

---

घटितेति । असौ बाला मुग्धा कान्ता घटितं संसक्तं जघनं कटिपुरोभागः यत्र तत् निपीड़ितौ निःशेषेण दलितौ पीनौ स्थूलौ ऊरू यत्र तथोक्तं तथा न्यस्तः अर्पितः निखिलः समग्रः कुचभारः स्तनभारः यत्र तत् यथा तथा आलिङ्गन्ती अपि मुञ्च मुञ्च त्यज त्यज मामिति श्लेषः इति वदति । मुग्धास्वभाववर्णनमेतत् ॥ १ ॥

घटितपलाशकपाटं निशि निशि सुखिनो हि शेरते पद्माः।
उज्जागरेण कैरव कति शक्या रक्षितुं लक्ष्मीः॥ २॥
घूर्णन्ति विप्रलब्धाः स्नेहापायात् प्रदीपकलिकाश्च।
प्रातः प्रस्थितपान्थस्त्रीहृदयं स्फुटति कमलं च॥ ३॥

---

घटितेति। पद्माः कमलानि, वा पुंसि पद्ममित्यमरः। निशि निशि प्रतिरात्रं घटितं कृतं पलाशरूपं छदरूपं कपाटं यस्मिन् तद् यथा तथा छदनिमीलनरूपकवाटबन्धेनेति भावः सुखिनो निरुद्वेगा इति भावः सन्तः शेरते हि निद्रान्त्येव। हे कैरव! कुमुद! त्वया उज्जागरेण उत्कृष्टेन जागरणेन विकासेनेति भावः कति लक्ष्मीः सम्पद् रक्षितुं शक्या रजनीविकस्वरत्वात् कैरवाणा-मिति भावः। एतेन द्वारावरोधादिनैव दस्युभ्यः सम्पद्रक्षणं विधेयं न तु सर्वासु रात्रिषु जागरणेन तथा सति देहधारणं केवलं क्लेशाय भवतीति भावः। यास्वाङ्गनाः पुरुषान्तरगमनात् निरोद्धुमशक्या अतिसावधानेनापि ता रक्षितुं न शक्यन्ते इति भावः। व्यतिरेका-लङ्कारः॥ २॥

घूर्णन्तीति। प्रातः प्रातःकाले विप्रलब्धाः विरहिण्यः सङ्केतनिलये प्रियतमाप्राप्त्या प्रतारिता वा प्रदीपकलिकाश्च स्नेहस्य प्रणयस्य तैलस्य च अपायात् विच्छेदात् घूर्णन्ति रात्रिजागरात् निर्वाणोन्मुखत्वाच्चेति भावः। प्रस्थितस्य पान्थस्य पथिकस्य हृदयं स्फुटति विदीर्यते कमलञ्च स्फुटति विकसति। प्रातःकालवर्णनमिदम्॥ ३॥

---

## चकारादिः।

चपलस्य पलितलाञ्छितचिकुरं दयितस्य मौलिमवलोक्य।
खेदोचितेऽपि समये संमदमेवाददे गृहिणी ॥ १ ॥
चण्डि प्रसारितेन स्पृशन् भुजेनापि कोपनां भवतीम्।
तृप्यामि पङ्किलामिव पिबन्नदीं नलिननालेन ॥ २ ॥
चपलभुजङ्गीभुक्तोज्झित शीतलगन्धवह निशि भ्रान्त।
अपराशां पूरयितुं प्रत्यूषसदागते गच्छ ॥ ३ ॥

चपलस्येति। गृहिणी गृहस्वामिनी चपलस्य पराङ्गनालोलुपस्येति भावः दयितस्य पत्युः मौलिं शिरः पलितेन जराजनितशौक्ल्येन, पलितं जरसा शौक्ल्यं केशादाविस्यमरः। लाञ्छिताः चिह्निताः चिकुराः केशा यस्य तथाभूतम् अवलोक्य दृष्ट्वा खेदोचितेऽपि दुःखोचितेऽपि समये सम्मदमेव हर्षमेव आददे जग्राह चकारेत्यर्थः परनारीषु द्वेषातिशयादिति भावः; अयमेवात्मनातिकाङ्क्षेन परयात्वाभङ्ग इति द्रष्टव्यम् ॥ १ ॥

चण्डीति। हे चण्डि कोपने! प्रसारितेन विस्तारितेन भुजेन कोपनां भवतीं स्पृशन्नपि नलिननालेन पद्मनालेन नाच्छद्रेणेति भावः पङ्किलाम् आविलां नदीं पिबन्निव तृप्यामि परितुष्यामि। तवाङ्गस्पर्शेनापि मे सुखं किमुतान्यव्यापारैरेति भावः। मानिनीं प्रति नायकस्योक्तिरियम्। उपमालङ्कारः ॥ २ ॥

चपलेति। चपला या भुजङ्गी सर्पी तया भुक्तः पश्चादुज्झितः परित्यक्तः तत्सम्बुद्धौ, शीतलगन्धं वहतीति तत्सम्बुद्धौ, निशि रात्रौ भ्रान्तः इतस्ततः विचारन् प्रत्यूषसदागते प्रातःकालवायो! अपराशाम् अपरां दिशम् अन्याङ्गनामनोरथञ्च पूरयितुं गच्छ। अन्याङ्गनासक्तं नायकं प्रति नायिकाया वक्रोक्तिरियम्। अप्रस्तुतप्रशंसालङ्कारः ॥ ३ ॥

चिरपथिकद्राघिमनिम्नदलकलताशैवलावलिग्रथिता ।
करतोयेव मृगाक्ष्या दृष्टिरिदानीं सदानीरा ॥ ४ ॥
चण्डि दरचपलचेलव्यक्तोरुविलोकनैकरसिकेन ।
धूलिभयादपि न मया चरणाहतौ कुञ्चितं चक्षुः ॥ ५ ॥
चलकुण्डलचलदलकस्खलदुरसिजवसनसज्जदूरुयुगम् ।
जघनभरक्लमकूणितनयनमिदं हरति गतमस्याः ॥ ६ ॥

चिरेति । मृगाक्ष्या दृष्टिः इदानीं साम्प्रतं चिरपथिकः दीर्घप्रवासी पतिरिति भावः तस्य द्राघिम्ना दीर्घविलम्बेन निम्नाः संसक्तान्यः संस्काराभावादिति भावः याः अलकलताः केशावल्यः ताः शैवलावलय इव जलनीलीश्रेणय इव, जलनीली तु शैवालं शैवलमित्यमरः । ताभिः ग्रथिता युक्ता सदानीरा सततास्रुपूर्णेत्यर्थः अतएव करतोयेव करतोयानाम्नी नदीव वर्त्तते इति शेषः । करतोया सदानीरेत्यमरः । प्रवासिनं प्रति नायिकाप्रेरितदूत्या उक्तिरियम् । उपमालङ्कारः ॥ ४ ॥

चण्डीति । हे चण्डि हे कोपने ! दरचपलेन ईषच्चञ्चलेन चेलेन वसनेन व्यक्तयोः स्फुटयोः लक्ष्ययोरिति यावत् ऊर्वोः तवेति भावः विलोकने विशेषेणावलोकने एकरसिकः अतीव सतृष्ण इत्यर्थः तेन मया चरणाहतौ तव चरणप्रहारे धूलिभयादपि चक्षुः न कुञ्चितं न निमीलितम् ऊरुदर्शनविरामभयादिति भावः । तस्मात् मानं परित्यज्य मामनुगृहाणेति भावः । मानिनीं प्रति नायकस्य चाटूक्तिः ॥ ५ ॥

चलेति । अस्याः कान्तायाः चले दोलायमाने कुण्डले यत्र तथाभूतं चलन्तः कम्पमानाः अलकाः केशा यत्र तथोक्तं स्खलत् विगलत् उरसिजवसनं स्तनावरणं यस्मिन् तादृशं तथा सज्जत् सम्मिलत् ऊरुयुगं जङ्घाद्वयं यत्र तथाविधं तथा जघनभरेण यः क्लमः क्लान्तिः तेन कूणिते सङ्कुचिते नयने यत्र तथाभूतम् इदं गतं

चरणैः परागसैकतमफलमिदं लिखसि मधुप केतक्याः ।
इह वसति कान्तिसारे नान्तःसलिलापि मधुसिन्धुः ॥७॥
चिरकालपथिक शङ्कातरङ्गिताक्ष किमीक्षसे मुग्ध ।
त्वन्निस्त्रिंशाश्लेषव्रणकिणराजीयमेतस्याः ॥ ८ ॥
चपलां यथा मदान्धश्छायामयमात्मनः करी हन्ति ।

गमनं हरति वशीकरोति मामिति शेषः । सखायं प्रति कस्याश्चिदुक्तिरियम् ॥६॥

चरणैरिति । हे मधुप भ्रमर ! चरणैः पादैः केतक्याः इदं परागसैकतं रजोरूप पुलिनम् अफलं व्यर्थं लिखसि खनसि । कान्तिसारे दीप्तिमात्रसारवति इह परागसैकते अन्तःसलिला अन्तर्गतजला अन्यत्र अन्तर्गतास्रोत ध्वनिः अपि वाह्यभागेऽलवत्त्वं दूरापास्तमित्यपिशब्देन द्योत्यते । मधुसिन्धुः मकरन्दनदी न वसति न तिष्ठति अन्तःप्रेमशून्यं वाह्यसौन्दर्यं दृष्ट्वा न प्रवर्त्तितव्यमिति भावः । वेश्यानुरागप्रवणं प्रति कस्याश्चिदुक्तिरियम् । अप्रस्तुतप्रशंसालङ्कारः ॥ ७ ॥

चिरेति । हे चिरकालपथिक दीर्घप्रवासिन् ! शङ्कया किमियं मे प्रिया अन्यासक्ता इति संशयेन तरङ्गिते चञ्चलिते अक्षिणी यस्य तथाभूतः तत्सम्बुद्धौ, हे मुग्ध मूढ़ ! किम् ईक्षसे पश्यसि ? इयं दृश्यमानेति भावः एतस्याः त्वत्कान्तायाः तव निष्क्रान्तः त्रिंशद्-भ्यङ्गुलिभ्य इति निस्त्रिंशः खड्गः तस्य आश्लेषेण आलिङ्गनेन प्रोषितपतिकायाः एतदालिङ्गनेन कालातिपातस्य शास्त्रीयत्वादिति भावः । यत् व्रणं क्षतं तस्य किणराजी चिह्नपरम्परा । तयाच त्वत्कृतमविगणय्यानया एतदालिङ्गनेन त्वदालिङ्गनसुखमनुभवन्त्या कालोऽतिवाहितः । नैतस्यानन्यथा सम्भावनीयमिति भावः । प्रवासादागतं कान्तायाः परपुरुषभोगजनितनखक्षतादिचिह्नदर्शनेन भावान्तरमापन्नं प्रति सख्या उक्तिरियम् ॥ ८ ॥

चपलामिति । मदान्धः मदस्रावेण विवेकशून्य इति यावत्

आस्फालयति करं प्रतिगजस्तथायं पुरो रुद्धः ॥ ९ ॥

चुम्बनलोलुपमदधरहृतकाश्मीरं स्मरन्न तृप्यामि ।
हृदयद्विरदालानस्तम्भं तस्यास्तदूरुयुगम् ॥ १० ॥

चिकुरविसारणतिर्यङ्नतकण्ठी विमुखवृत्तिरपि बाला ।
त्वामियमङ्गुलिकल्पितकचावकाशा विलोकयति ॥ ११ ॥

करौ हस्तौ आत्मनः स्वस्य चपलां स्वचलनेन चञ्चलामिति यावत् छायां यथा हन्ति ताडयति, तथा अयं प्रतिगजः पुरः अग्रतः रुद्धः प्रत्यूहेन जनलज्जया चेति ध्वनिः अतएव करं शुण्डादण्ड हस्तञ्च आस्फालयति छायाप्रच्छादितं गजं प्रहर्त्तुमिति भावः । कश्चन स्वां कान्तां परपुरुषगामिनीं ज्ञात्वा प्रहरन्तं दृष्ट्वा जारोऽसौ लोकलज्जाभियात् तं प्रहर्त्तुकामः स्वं करम् आस्फालयति न तु किञ्चि-दपि कर्त्तुं शक्नोतीति व्यज्यते । अप्रस्तुतप्रशंसालङ्कारः ॥ ९ ॥

चुम्बनेति । चुम्बने लोलुपेन सतृष्णेन मम अधरेण हृतं विलुप्तं काश्मीरं गन्धविलेपनविशेषः यस्मात् तथाभूतम् ऊरुदेशेऽपि चुम्बनस्य कामशास्त्रीयत्वादिति भावः हृदयं मनः ममेति भावः एव द्विरदः हस्ती तस्य आलानस्तम्भः बन्धनस्तम्भः तं तस्याः कान्तायाः ऊरुयुगं स्मरन् न तृप्यामि न तृप्तिं लभे पुनः पुनः स्मरामीति भावः । अत्र परम्परितरूपकम् । हृदये द्विरदारोपणं प्रति ऊरुयुगे आलान-स्तम्भारोपणस्य हेतुत्वात् । तदुक्तं दर्पणे, यत्र कस्यचिदारोपः परा-रोपणकारणम् । तत् परम्परितमिति । सखायं प्रति कस्यचि-दुक्तिः ॥ १० ॥

चिकुरेति । इयं बाला चिकुराणां केशानां विसारणेन शोष-णार्थं विस्तारणेन तिर्य्यक् वक्रं यथा तथा नतः कण्ठो यस्याः तथोक्ता अतएव विमुखा पराङ्मुखा वृत्तिर्व्यापारो यस्यास्तथाभूतापि अङ्गुलिभिः कल्पितः कृतः कचानाम् केशानाम् अवकाशः अपसारणं

चुम्बनहृताञ्जनार्धं स्फुटजागररागमीक्षणं क्षिपसि।
किमुषसि वियोगकातरमसमेषुरिवार्धनाराचम् ॥ १२ ॥

---

## छकारादिः।

छायाग्राही चन्द्रः कूटत्वं सततमम्बुजं व्रजति।
छित्वोभयं सभायां स्तौति तवैवाननं लोकः ॥ १ ॥
छायामात्रं पश्यन्नधोमुखोऽप्युन्नतेन धैर्येण।
तुदति मम हृदयमिषुणा राधाचक्रं किरीटीव ॥ २ ॥

---

यथा तादृशो मनो त्वां विलोकयति पश्यति। नायकं प्रति सख्या नायिकानुरागकथनमिदम् ॥ ११ ॥

चुम्बनेति। चुम्बनेन हृतं विलुप्तम् अञ्जनार्धं यस्य तयोक्तं स्फुटः प्रकटः जागरेण रागः यस्य तादृशं शोणमित्यर्थः उषसि प्रभाते वियोगेन विच्छेदेन कातरम् ईक्षणं नयनम् असमेषुः पञ्चशरः अर्ध-नाराचमिव किं कथं क्षिपसि नायकं प्रतीति शेषः। उपमालङ्कारः। तव एतेन नयनपातेन पतिस्ते कामशरास्त इव जात इति भावः। सख्या नायिकां प्रत्युक्तिः ॥ १२ ॥

---

छायेति। चन्द्रः छायाग्राही कलङ्कीत्यर्थः कूटत्वं सङ्कोचभावः सततम् अम्बुजं पद्मं व्रजति गच्छति तस्मात् सभायां लोकः उभयं चन्द्रं पद्मञ्चेत्यर्थः छित्वा परित्यज्य तवैव आननं मुखम् अकलङ्कम् असङ्कुचितञ्चेति भावः स्तौति प्रशंसति। व्यतिरेकालङ्कारः। नायिकां प्रति कस्यचित् रागिण उक्तिरियम् ॥ १ ॥

छायेति। अयं प्रेयानिति शेषः अधोमुखः छायामात्रं पश्यति शेषः उन्नतेन विच्युतेनेत्यर्थः धैर्येण किरीटी अर्जुनः इषुणा यथेष

## जकारादिः।

जलबिन्दवः कतिपये नयनाद्गमनोद्यमे तव स्खलिताः।
कान्त मम गन्तव्या भूरेतैरेव पिच्छिलिता॥ १॥
जृम्भोत्तम्भितदोर्युगयन्त्रितताटङ्कपीडितकपोलम्।
तस्याः स्मरामि जलकणलुलिताञ्जनमलसदृष्टि मुखम्॥ २॥

राधाचक्रमिव मम हृदयं त्रुटति तापयति मम छायामात्रदर्शनेनायं विगतधैर्य्यः संवृत्त इति अहम् अतिशयेन परितप्ये इति भावः। पुरार्जुनेन पाञ्चालीस्वयंवरे अन्तरीक्षस्थितं राधाचक्रमदृष्टिगोचरम् अधःस्थितजले तत्रत्यस्य मीनस्य छायामवलोक्य तद् विव्याधेति पौराणिकी वार्त्ता। नायिकायाः सखीं प्रति काञ्चित् यूनि अनुरागकथनमिदम्। उपमालङ्कारः॥ २॥

---

जलेति। हे कान्ते! गमनोद्यमे मम प्रस्थानावसरे तव नयनात् कतिपये स्वल्पा इति भावः जलबिन्दवः स्खलिताः पतिताः। किन्तु एतैरेव मम जलबिन्दुभिः गन्तव्या गम्या भूः प्रदेशः पिच्छिलिता पिच्छला जाता। मम प्रस्थाने तव यादृशं दुःखमभूत् मम ततोऽप्यधिकमिति भावः। प्रवासादागतस्य नायकस्य नायिकां प्रति स्वदुःखावेदनमिदम्॥ १॥

जृम्भेति। जृम्भया गात्रभङ्गविशेषेण उत्तम्भितम् ऊर्द्धीकृतं यद् दोर्युगं भुजयुगलं तेन यन्त्रितं संघट्टितं यत् ताटङ्कं कर्णालङ्कारविशेषः तेन पीडितौ संश्लिष्टौ कपोलौ गण्डौ यस्य तथाभूतं जलकणैः अश्रुबिन्दुभिरिति यावत् लुलितं प्रसृतम् अञ्जनं यस्य तादृशं तथा अलसा मन्थरा दृष्टिर्यस्य तथोक्तं तस्याः कान्तायाः मुखं स्मरामि। दीर्घसुरतव्यापारानन्तरं निद्रावेशवर्णनमिदम्। सखायं प्रति कस्यचिदुक्तिः॥ २॥

जागरयित्वा पुरुषं परं वने सर्वतोमुखं हरसि ।
अयि शरदनुरूपं तव शीलमिदं जातिशालिन्याः ॥ ३ ॥
जीवामि लङ्घितावधिदिनेति लज्जावशेन गेहिन्या ।
मयि निह्नुतोऽपि बाष्पैरसंवरैर्व्यञ्जितो मानः ॥ ४ ॥
जाल्मो गुरुः सुधृष्टो वामेतरचरणभेद उपदेशः ।
ख्यातिर्गुणधवल इति भ्रमसि सुखं वृषभ रथ्यासु ॥ ५ ॥

जागरयित्वेति । अयि शरत् ! वने जले शयितमिति भावः पक्षे लीलाकानने परं श्रेष्ठं पुरुषं पुरोत्तमं विष्णुमिति यावत् पक्षे परम् अन्यं पुरुषं जारमिति भावः जागरयित्वा सुरतव्यापारेणेति भावः पक्षे शयनादुत्थाप्येत्यर्थः सर्वतोमुखं जलमित्यर्थः हरसि ह्रासयसीत्यर्थः वर्षावसानात् जलह्रास इति भावः पक्षे सर्वतः सर्वस्मात् जलादिति शेषः मुखं वदनं हरसि लज्जया कमपि वदनं न दर्शयसीति भावः । जातिशालिन्या जातिस्वभाववशवर्त्तिन्याः जातिभिः कुसुमलताविशेषैः शालते शोभते इति तथाभूतायाः पक्षे जात्या उत्कृष्टकुलप्रसूत्या शालते शोभते इति तथाभूतायाः सत्कुलप्रसूताया इति यावत् तव इदं शीलं चरितम् अनुरूपं युक्तम् । अप्रस्तुतप्रशंसालङ्कारः । काञ्चित् परपुरुषगामिनीं सलज्जां प्रति कस्याश्चित् सोल्लुण्ठनोक्तिरियम् ॥ ३ ॥

जीवामीति । लङ्घितम् अतिक्रान्तम् अवधिदिनं यदि त्वां निर्द्धारितदिने न प्राप्स्यामि तदा जीवितं त्यक्ष्यामीति प्रतिज्ञातदिनं यया तादृशी सती जीवामि इति लज्जावशेन गेहिन्या मत्कान्तया मयि निह्नुतः गोपितोऽपि मानः असंवरैः संवरितुमशक्यैः बाष्पैः अश्रुभिः व्यञ्जितः प्रकटितः । सखायं प्रति कस्यचित् कालातिक्रमेण प्रवासादागतस्योक्तिरियम् ॥ ४ ॥

जाल्म इति । वृषभ ! गुरुः उपदेष्टा तवेति शेषः जाल्मः मूर्खः सुधृष्टः अतिप्रगल्भः असमीक्ष्यकारीत्यर्थः उपदेशः तस्येति शेषः वामेतरचरणभेदे अयं वामः अयञ्च दक्षिण इति चरणयोर्भेदज्ञाने

ज्वर वीतौषधबाधस्तिष्ठ सुखं दत्तमङ्गमखिलं ते।
असुलभलोकाकर्षणपाषाण सखे न मोक्ष्यसि माम्॥ ६॥
जीवनहेतोर्मिलिता मुञ्चति करकर्षणेन न खलु त्वाम्।
नौरिव निम्नं सुन्दर मुग्धा तद्विरसतां मा गाः॥ ७॥
जघनेन चापलं तव वितन्वतेयं तनूकृताऽपि तनुः।
शाणेनेव क्षीणा स्मरासिपुत्री मनो विशति॥ ८॥

नान्यत्रेति भावः, गुणेन वर्णेन पक्षे सौन्दर्यादिना धवलः श्वेतः पक्षे उज्ज्वलः इति ख्यातिः तवेति शेषः तस्मात् रथ्यासु राजमार्गेषु सुखं भ्रमसि। अप्रस्तुतप्रशंसालङ्कारः॥ ५॥

ज्वरेति। हे ज्वर! त्वं वीता विगता औषधबाधा भेषजप्रतीकारो यस्य तथाभूतः अप्रतीकार्य इत्यर्थः सन् सुखं निर्बाधं तिष्ठ, ते तुभ्यं अखिलं समग्रम् अङ्गं दत्तम्। हे सखे! असुलभस्य दुर्लभस्य लोकस्य वैद्यस्येति भावः आकर्षणपाषाण! चुम्बकमणे! मां न मोक्ष्यसि न मुञ्चेत्यर्थः। वैद्याशङ्कायाः कस्याश्चित् ज्वरव्याजेन तदागमनप्रार्थनमिदम्॥ ६॥

जीवनेति। हे सुन्दर! मुग्धा सुन्दरी सेति शेषः, मुग्धः सुन्दरमूढयोरित्यमरः। जीवनहेतोर्जीवनार्थं पक्षे जलार्थं मिलिता सङ्गता, नौस्तरणिः निम्नमिव पक्षे नीचं त्वां करकर्षणेन हस्तमोचनेन कराभ्यां कर्षणेन च न खलु नैव मुञ्चति त्यजति तत् तस्मात् विरसतां वैरस्यम् अनुरागराहित्यमिति यावत् जलशून्यत्वञ्च मा गाः न गच्छ। त्वदायत्तजीवितामेनां न परित्यजेति काञ्चित् प्रति कस्याश्चित् नायिकायाः सख्या उक्तिरियम्। श्लेषानुप्राणितोपमालङ्कारः॥ ७॥

जघनेनेति। जघनेन कटिपुरोभागेन अपराङ्गनानामिति भावः चापलं चाञ्चल्यम् अनवरतसुरतमिति भावः वितन्वता कुर्वतेति यावत् सता तनूकृता क्षीणीकृतापि इयं तव तनुः शरीरं शाणेन

ज्योत्स्नाभिसारसमुचितवेषे व्याकोशमल्लिकोत्तंसे ।
विशसि मनो निशितेव स्मरस्य कुमुदत्सरुच्छुरिका ॥ ९ ॥
जड सुखयसि परतरुणीं गृहिणीं कारयसि केवलं सेवाम् ।
आलिङ्गति दिशमिन्दुः स्वां तु शिलां वारि वाहयति ॥ १० ॥

शाणयन्त्रघर्षणेनेति यावत् क्षीणा तीक्ष्णा स्मरस्य कामस्य असिपुत्रीव छुरिकेव मनः ममेति शेषः विशति प्रविशति तव एतादृशपराङ्ग-नाभुक्तमपि शरीरं मम कामसन्दीपयतीति भावः । तस्मात् मया मानः परित्यक्त इति कस्याश्चित् कामिन्याः कान्तमन्यासङ्गादागतं प्रत्युक्तिरियम् । उपमालङ्कारः ॥ ८ ॥

ज्योत्स्नेति । ज्योत्स्नासु चन्द्रिकासु यः अभिसारः कान्तार्थं सङ्केतगमनं तस्य समुचितः उपयुक्तः वेषः यस्यास्तत्सम्बुद्धौ, व्याकोश-मल्लिका विकसितमल्लिकाकुसुमम् उत्तंसः शिरोभूषणं यस्यास्तत्-सम्बोधने । व्याकोशविकचस्फुटा इत्यमरः । निशिता शाणघर्षिता स्मरस्य कामस्य कुमुदं त्सरुर्मुष्टिर्यस्याः तथाभूता छुरिकेव, त्सरुः खड्-गादिमुष्टौ स्यादित्यमरः । मनः मदीयमिति शेषः विशसि मम काम-सन्दीपयसीति भावः । अभिसारिणीं प्रति कस्यचित् कामुकस्योक्ति-रियम् । उपमालङ्कारः ॥ ९ ॥

जडेति । हे जड ! मूर्ख ! अथच जलमय ! परस्य तरुणीं युवतिं सुखयसि सङ्गमेनेति भावः गृहिणीं स्वां कामिनीं केवलं सेवां कार-यसि गृहकृत्येषु नियोजयसीति भावः न तस्यां रमसे इति भावः । तथाहि इन्दुश्चन्द्रः दिशं प्राचीप्रभृतिम् आलिङ्गति तु किन्तु स्वां शिलां चन्द्रकान्तपाषाणमिति यावत् वारि वाहयति रोदयतीति ध्वनिः । चन्द्रोदये चन्द्रकान्तमणिः स्रवतीति प्रसिद्धिः । एतत् जडकार्यं नैव कर्त्तव्यमिति कस्यचित् सख्युः कमपि स्वाङ्गनात्यागेन पराङ्गनासक्तं प्रति उक्तिः । दृष्टान्तालङ्कारः ॥ १० ॥

ज्योत्स्नागर्भितसैकतमध्यगतः स्फुरति यामुनः पूरः।
दुग्धनिधौ नागाधिपतल्पतले सुप्त इव कृष्णः॥ ११॥

---

झकारादिः।

झंकृतकङ्कणपाणिक्षेपैः स्तम्भावलम्बनैर्मौनैः।
शोभयसि शुष्करुदितैरपि सुन्दरि मन्दिरद्वारम्॥ १॥

---

ज्योत्स्नेति। ज्योत्स्नाभ्यां गर्भितम् अन्तर्हितमिति भावः यत् सैकतं वालुकामयदेशः, तोयोत्थितं तत् पुलिनं सैकतं सिकतामयमित्य-मरः। तस्य मध्यगतः मध्यस्थितः यामुनः यमुनासम्बन्धी पूरः प्रवाहः दुग्धनिधौ क्षीरसमुद्रे नागाधिपः शेष एव तल्पं शय्या तस्मिन् सुप्तः निद्रितः कृष्ण इव स्फुरति राजते। अतिमनोहर-मेतत् स्थलमिति कश्चित् काञ्चित् प्रति सङ्केतकथनमिदम्। उप-मालङ्कारः॥ ११॥

---

झङ्कृतेति। हे सुन्दरि! झङ्कृतं कङ्कणं यस्मिन् तत् यथा तथा पाणिक्षेपैः हस्ताकर्षणैरित्यर्थः, स्तम्भावलम्बनैः स्तम्भमाश्रित्य दण्डवत् स्थितिभिरित्यर्थः, मौनैः तूष्णीम्भावैः तथा शुष्करुदितैः निरश्रुरोदनै-रित्यर्थः मन्दिरद्वारं शोभयसि अलङ्करोषि। नवोढां प्रति नायक-स्योक्तिरियम्॥ १॥

---

## ढकारादिः ।

ढक्कामाहत्य मदं वितन्वते करिण इव चिरं पुरुषाः ।
स्त्रीणां करिणीनामिव मदः पुनः स्वकुलनाशाय ॥ १ ॥

---

## तकारादिः ।

तां तापयन्ति मन्मथबाणास्त्वां प्रीणयन्ति बत सुभग ।
तपनकरास्तपनशिलां ज्वलयन्ति विधुं मधुरयन्ति ॥१॥

तव सुतनु सानुमत्या बहुधातुजनितनितम्बरागायाः ।
गिरिवरभुव इव लाभेनाप्नोमि द्व्यङ्गुलेन दिवम् ॥ २ ॥

ढक्कामिति । पुरुषाः करिण इव ढक्कां यशःपटहम् आहत्य वादयित्वा चिरं मदं वितन्वते प्रकटयन्ति, स्त्रीणां करिणीनामिव मदः स्वकुलनाशाय निजकुलकलङ्कायेत्यर्थः, यथा करिणीनां मदविरहः तथा कामिनीनामपि तदुचितः, अन्यथा निजकुलकलङ्कः स्यादिति भावः । उपमालङ्कारः । सख्या नायिकां मत्तां प्रत्युपदेशवचनम् ॥ १ ॥

---

तामिति । हे सुभग ! मन्मथस्य कामस्य बाणाः शराः तां तव कान्तामिति शेषः तापयन्ति, बत खेदे त्वां प्रीणयन्ति तोषयन्ति । कथमन्यथा तां परित्यज्य तव स्थितिरिति भावः । तथाहि तपनस्य सूर्य्यस्य कराः किरणाः तपनशिलां सूर्य्यकान्तमणिमिति यावत् ज्वलयन्ति किन्तु विधुं चन्द्रं मधुरयन्ति मनोहरं कुर्वन्ति जलमये चन्द्रमसि सौरकिरणप्रवेशात् चन्द्रस्य मनोहारित्वमिति भावः । अत्र नायकस्य चन्द्रसाम्यं नायिकायाः सन्तापहरत्वं प्रतिपादयति । दूत्या नायकं प्रत्युक्तिरियम् ॥ १ ॥

तवेति । हे सुतनु ! सानुमत्या मदादेशकारिण्या इति यावत्

त्यक्तो मुञ्चति जीवनमुज्झति नानुग्रहेऽपि लोलत्वम्।
किं प्रावृषेव पद्माकरस्य करणीयमस्य मया॥ ३॥
त्वद्विरहापदि पाण्डुस्तन्वङ्गी छाययैव केवलया।
हंसीव ज्योत्स्नायां सा सुभग प्रत्यभिज्ञेया॥ ४॥
त्वयि विनिवेशितचित्ता सुभग गता केवलेन कायेन।
घनजालरुद्धमीना नदीव सा नीरमात्रेण॥ ५॥

स्वाधीनभर्तृकासीति भावः अन्यत्र प्रस्थवत्याः, स्नुः प्रस्थः सानुरस्त्रियामित्यमरः। बहुधा बहुप्रकारेण तु एव जनितः उत्पादितः नितम्बे रागः प्रीतिर्यस्यास्तथाभूतायाः अन्यत्र बहुभिर्धातुभिः गैरिकादिभिः जनितः नितम्बे कटके, कटकोऽस्त्री नितम्बोऽद्रेरित्यमरः। रागः लौहित्यादिर्यस्यास्तथाविधायाः गिरिवरभुव इव हिमालयभूमेरिव तव छद्मलेन अङ्गुलिद्वयपरिमितेनेत्यर्थः लाभेन दिवं स्वर्गम् आप्नोमि। नायिकां प्रति नायकस्योक्तिरियम्। उपमालङ्कारः॥२॥

त्यक्त इति। प्रावृषा पद्माकरस्येव सरोवरस्येव मया अस्य कान्तस्य किं करणीयम्? त्यक्तः मयेति शेषः मद्विहीन इत्यर्थः जीवनं प्राणान् जलञ्च मुञ्चति त्यजति जलह्रासतां प्राप्नोतीति च अनुग्रहे मदर्थं ग्रहणेऽपि पूरणेऽपि च लोलत्वं चापल्यं न उज्झति न त्यजति। कान्तम् अन्यासक्तं स्वानुरागिणञ्च दृष्ट्वा सखीं प्रति नायिकायाः कर्त्तव्यतानुयोगवचनमिदम्। उपमालङ्कारः॥ ३॥

त्वदिति। हे सुभग! तव विरह एव आपत् तत्र निमग्नेति शेषः पाण्डुः पाण्डुवर्णा तन्वङ्गी कृशाङ्गी सा केवलया छायया कान्त्या अन्यत्र प्रतिबिम्बेनैव ज्योत्स्नायां हंसीव प्रत्यभिज्ञेया सेयमिति ज्ञातुं शक्येत्यर्थः। उपमालङ्कारः। अत्यन्तं त्वद्विरहेण सा क्षीणेति नायकं प्रति सख्या उक्तिरियम्॥ ४॥

त्वयीति। हे सुभग! त्वयि विशेषेण निवेशितं चित्तं यया तादृशी सती सा घनेन निविड़ेन जालेन रुद्धा मत्स्या यस्यास्तथाभूता

त्वयि संसक्तं तस्याः कठोरतर हृदयमसमशरतरलम् ।
मारुतचलमञ्चलमिव कण्टकसंपर्कतः स्फुटितम् ॥ ६ ॥
त्वमसूर्य्यंपश्या सखि पदमपि न विनापवारणं भ्रमसि ।
छाये किमिह विधेयं मुञ्चन्ति न मूर्तिमन्तस्त्वाम् ॥ ७ ॥
तव विरहे विस्तारितरजनी जनितेन्दुचन्दनद्वेषे ।
विसिनीव माघमासे विना हुताशेन सा दग्धा ॥ ८ ॥

नीरमात्रेण जलमात्रेण उपलक्षिता नदीव केशलेन चित्तशून्येनेति भावः कायेन शरीरेण गता प्रस्थिता । उपमालङ्कारः । कथं सा मां परित्यज्य गतेति वादिनं कान्तं प्रति नायिकासख्या उक्तिरियम् ॥ ५ ॥

त्वयीति । हे कठोरतर ! अतिनिष्ठुर ! तस्याः असमशरेण कामेन तरलं चञ्चलं हृदयं त्वयि संसक्तं संलग्नं सत् मारुतचलं वायुना कम्पमानम् अञ्चलं कण्टकसम्पर्कात् इव कण्टकाविद्धमिवेत्यर्थः स्फुटितं विदीर्णं तदप्राप्त्येति भावः । त्वद्विरहेण त्यक्तप्राणा सेति सख्या नायकं प्रत्युक्तिरियम् । उपमालङ्कारः ॥ ६ ॥

त्वमिति । हे सखि छाये ! त्वम् असूर्य्यम्पश्या सूर्य्यदर्शनपर्य्यन्तविमुखेत्यर्थः अपवारणम् अन्तर्धानम् आच्छादनञ्च विना न पदमपि भ्रमसि चलसि किन्तु मूर्त्तिमन्तः देहवन्तः त्वां न मुञ्चन्ति न त्यजन्ति, तदिह अस्मिन् विषये किं विधेयं कर्त्तव्यम् । यदि च स्वमतिलज्जाशीला कुलवधूः तथापि बहुवल्लभामाकाङ्क्षन्तीति कस्याश्चित् दूत्या नायिकां प्रत्युक्तिः । अप्रस्तुतप्रशंसालङ्कारः ॥ ७ ॥

तवेति । तव विरहे सा तव कान्तेति शेषः विस्तारिता दीर्घेति यावत् रजनिर्यत्र तादृशे, जनितः इन्दौ चन्दने च द्वेषः येन अतिशीतलत्वादिति भावः तथाभूते, माघमासे विसिनीव पद्मिनीव हुताशेन अग्निना विना दग्धा, हिमागमे पद्मिनीविनाश इति प्रसिद्धिः । उपमाविभावनयोः संसृष्टिः । उक्तञ्च दर्पणे, साम्यं वाच्यमवैधर्म्यं

तरुणि त्वच्चरणाहतिकुसुमितकङ्केल्लिकोरकप्रकरम्।
कुटिलचरिता सपत्नी न पिबति बत शोकविकलापि ॥९॥

तल्पे प्रभुरिव गुरुरिव मनसिजतन्त्रे श्रमे भुजिष्येव।
गेहे श्रीरिव गुरुजनपुरतो मूर्त्तेव सा व्रीडा ॥ १० ॥

त्वमलभ्या मम तावन्मोक्तुमशक्तस्य संमुखं व्रजतः।
छायेवापसरन्ती भित्त्या न निवार्यसे यावत् ॥ ११ ॥

वाक्यैक्ये उपमाद्वयोरिति, विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते इति, मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते इति च। नायकं प्रति नायिकाया विरहातिशयवर्णनमिदम् ॥ ८ ॥

तरुणीति। हे तरुणि! कुटिलं वक्रं चरितम् आचरणं यस्यास्तथाभूता तव सपत्नी शोकविकलापि पत्यपराधजनितदुःखार्त्तापि तव चरणेन या आहतिः ताडनं तया कुसुमितः सञ्जातकुसुमः यः कङ्केल्लिरशोकः, पादाहतः प्रमदया विकसत्यशोक इति कविसमयप्रसिद्धेः। तस्य कोरकप्रकरं कलिकासमूहं न पिबति सापत्न्यद्वेषादिति भावः। अशोककलिकारसपानेन शोकहानिर्भवतीति लोकप्रसिद्धिः। त्वद्द्वेषात् तया तत्पानं परिहृतमिति तस्मात् त्वं मानं परित्यज्य त्वदेकायत्तं कान्तम् अनुगृहाणेति सख्या नायिकां प्रत्युक्तिरियम् ॥ ९ ॥

तल्पे इति। सा मम कान्ता तल्पे शय्यायां प्रभुरिव, मनसिजतन्त्रे कामशास्त्रे सुरतव्यापारे इति यावत् गुरुरिव उपदेष्टेव, श्रमे गृहकार्य्ये भुजिष्येव किङ्करीव, गेहे श्रीरिव लक्ष्मीरिव, तथा गुरुजनानां पुरतः अग्रतः मूर्त्ता मूर्त्तिमती व्रीडेव लज्जेव। सखायं प्रति कस्यचित् कान्तास्तुतिरियम्। उत्प्रेक्षालङ्कारः ॥ १० ॥

त्वमिति। त्वम् अपसरन्ती अपगच्छन्ती छायेव यावत् भित्त्या कुड्येन न निवार्य्यसे प्रतिबध्यसे तावत् मोक्तुमशक्तस्य सम्मुखं व्रजतः गच्छतः मम त्वम् अलभ्या न प्राप्येत्यर्थः। उपमालङ्कारः। कुतुमती कान्तां प्रति कस्यचिदुक्तिरियम् ॥ ११ ॥

तपसा क्लेशित एष प्रौढबलो न खलु फाल्गुनेऽप्यासीत् ।
मधुना प्रमत्तमधुना को मदनं मिहिरमिव सहते ॥ १२ ॥
त्वद्गमनदिवसगणनावलक्षरेखाभिरङ्किता सुभग ।
गण्डस्थलीव तस्याः पाण्डुरिता भवनभित्तिरपि ॥ १३ ॥
तस्याग्राम्यस्याहं सखि वक्रस्निग्धमधुरया दृष्ट्या ।
विद्धा तदेकनेया पोत्रिण इव दंष्ट्रया धरणी ॥ १४ ॥
त्वयि कुग्रामवटद्रुम वैश्रवणो वसतु वसतु वा लक्ष्मीः ।
पामरकुठारपातात् कासरशिरसेव ते रक्षा ॥ १५ ॥

तपसेति । तपसा माघेन तपश्चर्य्यया च क्लेशितः दुर्बलीकृत इत्यर्थः एषः मदनः मिहिरः सूर्य्यश्च फाल्गुने तदाख्ये मासे अर्जुने चापि न खलु नैव प्रौढबलः प्रबल इत्यर्थः आसीत् अधुना मधुना वसन्तेन चैत्रेण च प्रमत्तं प्रकृष्टबलं मदनं मिहिरमिव कः सहते सोढुं क्षमते न कोऽपीत्यर्थः । वसन्तकालीनमदनवेदना दुःसहेति भावः । उपमालङ्कारः । नायिकाया नायकं सखीं वा प्रत्युक्तिरियम् ॥ १२ ॥

त्वदिति । हे सुभग ! तव गमनदिवसानां गणनया संख्यानेन वलक्षाः धवलाः, वलक्षो धवलोऽर्जुन इत्यमरः । या रेखाः ताभिः अङ्किता चिह्निता तस्या गण्डस्थलीव भवनभित्तिरपि गृहकुड्यमपि पाण्डुरिता पाण्डुवर्णा जाता । तस्मादतःपरं विलम्बः कार्य्य इति नायकं प्रति सख्या उक्तिरियम् ॥ १३ ॥

तस्येति । हे सखि ! अग्राम्यस्य नागरस्य एतेन प्रेमयोग्यत्वं व्यज्यते । तस्य वक्रा कुटिला स्निग्धा मधुरा मनोहारिणी च तया दृष्ट्या दर्शनेन पोत्रिणः वराहस्य दंष्ट्रया धरणीव पृथिवीव विद्धा अहं तदेकनेया तत्समीपे एव नेतव्या । तत्प्रेमवत्येवाहं नान्यत्र ममानुराग इति सखीं प्रति कस्याश्चिदुक्तिः । उपमालङ्कारः ॥ १४ ॥

त्वयीति । हे कुग्रामवटद्रुम ! कुत्सितग्रामस्थितवटद्रुम !

तव मुखर वदनदोषं सहमाना मोक्तुमक्षमा सुतनुः ।
सा वहति विट भवन्तं घुणमन्तः शालभञ्जीव ॥ १६ ॥
तृणमुखमपि न खलु त्वां त्यजन्त्यमी हरिण वैरिणः शवराः ।
यशसैव जीवितमिदं त्यज योजितशृङ्गसङ्ग्रामः ॥ १७ ॥
त्रिपुररिपोरिव गङ्गा मम मानिनि जनितमदनदाहस्य ।

त्वयि वैश्रवणः कुबेरः वसतु, वा लक्ष्मीर्वसतु, किन्तु पामराणां मूर्खाणां कुठारपातात् तवोपरीति भावः कासरस्य महिषस्य शिरसैव ते तव रक्षा नान्योपायस्तव रक्षणे इति भावः। कुत्सितग्रामे यदि कश्चित् महाधनोऽपि वसति तस्य विपत्तौ तद्ग्रामीणचाण्डालादिभिरेव यदि रक्षा क्रियते तदैव रक्षा नान्यथेति भावः। अप्रस्तुतप्रशंसेयम्। वटतरौ कुबेरस्य लक्ष्म्याश्च वासः प्रसिद्धः ॥ १५ ॥

तवेति। हे मुखर! तव वदनदोषम् अयुक्तभाषणापराधं सहमाना मोक्तुं त्यक्तुं त्वामिति शेषः अक्षमा अपारयन्ती सतृकुलजत्वादिति भावः सा सुतनुः सुन्दरी हे विट! परस्त्रीलम्पटेत्यर्थः न केवलं दुर्वचसा पीडनं पराङ्गनासक्त्यापीति भावः, शालभञ्जीव काष्ठपुत्तलिकेव घुणम् अन्तः मनसि अभ्यन्तरे च भवन्तं वहति। एतादृशेऽप्रीतिकरेऽपि भर्त्तरि सा त्वय्यधीना वर्त्तते इति सख्याः कस्यश्चित् नायकं प्रति वचनम्। उपमालङ्कारः ॥ १६ ॥

तृणमुखमिति। हे हरिण! अमी वैरिणः शत्रवः शवराः व्याधाः तृणमुखं तृणभोजिनं निरपराधमिति भावः शरणागतं वा, शरणार्थिनः तृणं मुखे कृत्वा शरणं व्रजन्तीति प्रसिद्धिः। अपि त्वां न खलु नैव त्यजन्ति अवश्यमेव त्वां नाशयन्तीत्यर्थः, तस्मात् योजितः कृतः शृङ्गाभ्यां संग्रामो युद्धं येन तथाभूतः सन् यशसैव इदं क्षणभङ्गुरमिति भावः जीवितं त्यज, विना युद्धं शत्रुहस्ते मरणं कापुरुषलक्षणमिति भावः। अप्रस्तुतप्रशंसालङ्कारः ॥ १७ ॥

त्रिपुरेति। हे मानिनि! जनितः मदनेन दाहः यस्य तथो-

जीवनमर्पितशिरसो ददासि चिकुरग्रहेणैव ॥ १८ ॥

त्वत्संकथासु मुखरः सनिन्दसानन्दसावहित्थ इव ।
स खलु सखीनां निभृतं त्वया कृतार्थीकृतः सुभगः ॥१९॥

त्वयि सर्पति पथि दृष्टिः सुन्दर वृतिविवरनिर्गता तस्याः ।
दरतरलभिन्नशैवलजाला शफरीव विस्फुरति ॥ २० ॥

कृतस्य पक्षे जनितः कृतः मदनस्य कामस्य दाहो भस्मीकरणं येन तथोक्तस्य अर्पितं चरणयोरिति भावः शिरः येन तथोक्तस्य पक्षे अर्पितं दत्तं धारणार्थमिति भावः शिरः मस्तकं येन तथोक्तस्य त्रिपुररिपोः हरस्य गङ्गेव त्वं चिकुरग्रहेणैव केशाकर्षणेनैव जटासंश्रयणेनैव च जीवनं जीवितं जलञ्च ददासि, केशाकर्षणे न मम व्यथा, अपि तु त्वत्करस्पर्शेनैव सन्तापो मे निवृत्त इति भावः। चरणानतस्य कस्यचिदेकस्य कान्तस्य मानिनीं कामिनीं प्रति मानापनयनं वचनमिदम् । उपमालङ्कारः ॥ १८ ॥

त्वदिति । स सुभगः प्रणयार्ह इति भावः त्वया सखीनां निभृतं सखीभ्योऽपि संगोप्येति भावः, कृतार्थीकृतः सुरतव्यापारेण सन्तोषित इति भावः, खलु यतः सः तव संकथासु सदालापेषु प्रशंसावचनेष्विति भावः, मुखरः वाचालः सन् सनिन्द इव कथमधन्यैरस्मादृशैः सा लभ्यते इत्यात्मावज्ञाप्रदर्शनपर इव लोकगोपनार्थमिति भावः, सानन्द इव त्वत्सम्भोगस्मरणोल्लासादिति भावः, सावहित्थ इव मत्कृतं न केनापि विज्ञेयमिति धिया कृताकारगोपन इव, अवहित्थाकारगुप्तिरित्यमरः। दृश्यते इति शेषः। सख्या नायिकां सम्भोगं निह्नुवानां प्रति उक्तिरियम् ॥ १९ ॥

त्वयीति । हे सुन्दर ! त्वयि पथि सर्पति गच्छति सति तस्याः कान्तायाः वृतिविवरात् वेष्टनरन्ध्रात् निर्गता दृष्टिः दरतरला ईषच्चञ्चला भिन्नं शैवलजालं जलनीलीनिचयः यया तथाभूता शफरीव प्रोष्ठीव, प्रोष्ठी तु शफरी द्वयोरित्यमरः। विस्फुरति विशे-

ते सुतनु शून्यहृदया ये शठं शून्यहृदयमभिदधति ।
अङ्गीकृतकरपत्त्रो यस्तव हस्तग्रहं कुरुते ॥ २१ ॥
ते श्रेष्ठिनः क्व संप्रति शक्रध्वज यैः कृतस्तवोच्छ्रायः ।
ईषां वा मेढिं वाधुनातनास्त्वां विधित्सन्ति ॥ २२ ॥
तानवमेत्य छिन्नः परोपहितरागमदनसंघटितः ।
कर्ण इव कामिनीनां न शोभते निर्भरः प्रेमा ॥ २३ ॥

णेव प्रसरति, त्वय्यासक्तेयमिति भावः। सख्या नायिकां प्रत्युक्ति-रियम् । उपमालङ्कारः ॥ २० ॥

ते इति । हे सुतनु ! सुन्दरि ! ये जनाः शठं शून्यहृदयम् अचेतनमित्यर्थः अभिदधति वदन्ति ते शून्यहृदयाः अचेतनः मूर्खा इत्यर्थः । यः शठः अङ्गीकृतं स्वीकृतं करपत्त्रं क्रकचदारणमिति भावः येन तथाभूतः सन् तव हस्तग्रहं हस्तग्रहणं पाणिग्रहणमिति ध्वनिः, कुरुते । बहुतपस्यया कठोरव्रतेन तव प्राप्तिरिति कस्यचित् कान्तास्तुतिरियम् । अप्रस्तुतप्रशंसालङ्कारः ॥ २१ ॥

ते इति । हे शक्रध्वज ! यैः तव उच्छ्रायः अभ्युन्नतिः कृतः, ते श्रेष्ठिनः वणिजः सम्प्रति इदानीं क्व ? कुत्र गताः? मृता इत्यर्थः । अधुनातनाः आधुनिका जनाः त्वाम् ईषां लाङ्गलफलकं मेढिं स्तम्भं वा विधित्सन्ति करिष्यन्ति । गुणज्ञसमीपे एव गुणिनां सम्मानः न तु मूर्खाणां समीपे इति अप्रस्तुतप्रशंसया व्यज्यते ॥ २२ ॥

तानवमिति । तानवं तनुत्वं ह्रासमित्यर्थः एत्य प्राप्य छिन्नः विच्छेदं प्राप्तः परेण अन्येन उपहितः उत्पादितः रागो यस्य तादृशेन मदनेन कामेन सङ्घटितः पुनर्योजित इत्यर्थः अन्यत्र परेण द्रव्येण उपहितो जनितः रागो रञ्जनं यस्य तथोक्तः मदनेन मधू-च्छिष्टेन च सङ्घटितः संयोजितश्चेत्यर्थः कामिनीनां कर्ण इव निर्भरः भरशून्यः आधिक्यरहित इत्यर्थः प्रेमा प्रणयः न शोभते । यथा छिन्नः कर्णः कथञ्चित् स्वस्थाने संयोजितः न शोभते तथा

तस्मिन् गतार्द्रभावे वीतरसे शुण्ठिशकल इव पुरुषे ।
अपि भूतिभाजि मलिने नागरशब्दो विडम्बाय ॥ २४ ॥
तमसि घने विषमे पथि जम्बुकमुल्कामुखं प्रपन्नाः स्मः ।
किं कुर्मः सोऽपि सखे स्थितो मुखं मुद्रयित्वैव ॥ २५ ॥
त्वामभिलषतो मानिनि मम गरिमगुणोऽपि दोषतां यातः ।
पङ्किलकूलां तटिनीं पिपासतः सिन्धुरस्येव ॥ २६ ॥

सकृत् भग्नं प्रेम पुनः सन्धानेनापि न राजते इति निष्कर्षः । उपमालङ्कारः । नायिकां प्रति सख्याः कथमपि प्रणयभङ्गो न कर्त्तव्य इत्युपदेशवचनमिदम् ॥ २३ ॥

तस्मिन्निति । गतः आर्द्रभावः स्निग्धभावः सरसत्वञ्च यस्य तादृशे वीतरसे भग्नप्रणये नीरसे च शुण्ठिशकले शुण्ठिखण्डे इव पुरुषे भूतिभाजि ऐश्वर्यवति भस्मवति चापि मलिने पापाचारे अनुज्ज्वले च सति नागरशब्दः नगरे भवः नागरः स एव शब्दः अन्यत्र नागरशब्देनाख्यानं विडम्बाय लोकप्रतारणायेत्यर्थः । अथ शुण्ठी महौषधम् । स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजमित्यमरः । श्लेषानुप्राणितोपमालङ्कारः । निरनुक्रोशे धनशालिन्यपि नागरे प्रेम न कर्त्तव्यमिति कस्याश्चित् सख्या नायिकां प्रत्युक्तिरियम् ॥ २४ ॥

तमसीति । घने निबिडे तमसि अन्धकारे विषमे दुर्गमे इत्यर्थः पथि मार्गे उल्का आलोकविशेषः मुखे यस्य तादृशं जम्बुकं शृगालं प्रपन्नाः प्राप्ताः स्मः आश्रयामः स्मेत्यर्थः । हे सखे ! किं कुर्मः ? सोऽपि जम्बुकोऽपि मुखं मुद्रयित्वैव स्थितः । दुर्दैवे नीचाश्रयणमपि क्रियते न तु तत्रापि फलोत्पत्तिरिति भावः । सखायं प्रति कस्य-चिदुक्तिरियम् । अप्रस्तुतप्रशंसालङ्कारः ॥ २५ ॥

त्वामिति । हे मानिनि ! त्वाम् अभिलषतः आकाङ्क्षतः मम गरिमगुणोऽपि गौरवजनकगुणोऽपि प्रतिष्ठासम्भ्रमादिरिति भावः पङ्किलकूलां सपङ्कतटां तटिनीं नदीं पिपासतः पातुमिच्छतः सिन्धुरस्येव

तिमिरेऽपि दूरदृश्या कठिनाश्लेषे च रहसि मुखरा च।
शङ्खमयवलयराजी गृहपतिशिरसा सह स्फुटतु ॥ २७ ॥
तव वृत्तेन गुणेन च समुचितसंपन्नकण्ठलुठनायाः।
हारस्रज इव सुन्दरि कृतः पुनर्नायकस्तरलः ॥ २८ ॥

---

गजस्येव दोषतां प्राप्तः लोकैर्दूष्यत इति भावः, तस्मात् मानं परित्यज्य प्रतिष्ठागौरवादिकमपि अविगणय्य त्वदेकायत्तं मामनुगच्छाधेति भावः। कस्यचित् कामपि नीचकुलजां कामिनीं मानिनीं प्रत्युक्तिरियम् ॥ २६ ॥

तिमिर इति। तिमिरे अन्धकारेऽपि दूरात् दृश्या धावल्यादिति भावः आश्लेषे आलिङ्गने कठिना अङ्गक्लेशकरी रहसि एकान्ते च मुखरा वाचाला सशब्देत्यर्थः शङ्खमयवलयराजी शङ्खनिर्मितकङ्कणश्रेणी गृहपतेः मम स्वामिनः न तु प्रियस्येति भावः शिरसा सह स्फुटतु भग्ना भवतु इत्यर्थः। स्वामिनाशो भवतु तेन च शङ्खपरिधानं न पुनः कर्त्तव्यं येन मे एतादृशः स्वार्थसाधने विघ्न इति कस्याश्चित् परासक्तायाः कामिन्या उक्तिरियम ॥ २७ ॥

तवेति। हे सुन्दरि! समुचितं सम्यक् यथा तथा सम्पन्नं जातं कण्ठलुठनं कण्ठालिङ्गनं यस्याः तथाभूतायाः अतएव हारस्रज इव मुक्तामालाया इव तव वृत्तेन शीलेन चरित्रेणेत्यर्थः अन्यत्र वर्त्तुलेन गुणेन चातुर्य्यादिना अन्यत्र सूत्रेण नायकः कान्तः अन्यत्र मध्यमणिः पुनः वारंवारम् अतिशयेनेत्यर्थः तरलः चञ्चलः कृतः। तव गुणेन ते नायकः नितरां त्वदायत्तो जात इति भावः। सख्या नायिकां प्रत्युक्तिरियम्। उपमालङ्कारः ॥ २८ ॥

---

दकारादिः ।

दर्शनविनीतमाना गृहिणी हर्षोल्लसत्कपोलतलम् ।
चुम्बननिषेधमिषतो वदनं पिदधाति पाणिभ्याम् ॥ १ ॥
देहस्तम्भः स्खलनं शैथिल्यं वेपथुः प्रियध्यानम् ।
पथि पथि गगनाश्लेषः कामिनि कस्तेऽभिसारगुणः ॥ २ ॥
द्राघयता दिवसानि त्वदीयविरहेण तीव्रतापेन ।
ग्रीष्मेणेव नलिन्या जीवनमल्पीकृतं तस्याः ॥ ३ ॥

दर्शनेति । दर्शनेन विनीतः अपनीतः मानः कोपः यस्याः तथाभूता गृहिणी प्रायेण स्वामिनो दर्शनस्यापि दुर्लभत्वादिति भावः चुम्बननिषेधमिषतः चुम्बननिवारणच्छलात् हर्षेण कान्तलाभजनितेनेति भावः उल्लसत् कपोलतलं गण्डदेशः यस्य तथाभूतं वदनं मुखं पाणिभ्यां पिदधाति आच्छादयति । सख्या गृहपतेः सुभगां कान्तां प्रति विज्ञापनमिदम् ॥ १ ॥

देहस्तम्भ इति । हे कामिनि ! पथि पथि प्रतिपथं देहस्तम्भः स्तम्भरूपेणावस्थानं, स्खलनं पदच्युतिः, शैथिल्यम् अत्वरा, वेपथुः कम्पः लज्जाभयादिहेतोरिति भावः, प्रियध्यानं कान्तानुचिन्तनं तथा गगनाश्लेषः प्रियभ्रमेणाकाशालिङ्गनं तवेति सर्वत्र योज्यं दृश्यते इति शेषः, अतः ते तव अभिसारगुणः कान्तार्थं सङ्केतनिकेतनगमनप्रकारः कः ? एवंप्रकारेणाभिसरणे महान् विघ्नः सम्भवति तस्मात् अवहितया सत्वरमभिसर्त्तव्यमिति सख्या नायिकां प्रत्युक्तिः ॥ २ ॥

द्राघयतेति । ग्रीष्मेणेव तीव्रतापेन दुःसहसन्तापेन दिवसानि द्राघयता दीर्घीकुर्वता दुःखदिनं नातिक्रामतीति भावः त्वदीयविरहेण नलिन्या इव तस्याः कान्तायाः जीवनम् अल्पीकृतम् । यथा ग्रीष्मे नलिनी शोषमापद्यमाना म्रियते तथा तव कान्ता तव विरहेण मृतप्रायेति सख्या नायकं प्रत्युक्तिः । उपमालङ्कारः ॥ ३ ॥

दुर्जनसहवासादपि शीलोत्कर्षं न सज्जनस्त्यजति ।
प्रतिपर्वतपनवासी निःसृतमात्रः शशी शीतः ॥ ४ ॥
दयितप्रहितां दूतीमालम्ब्य करेण तमसि गच्छन्ती ।
स्वेदच्युतमृगनाभिर्दूराद्गौराङ्गि दृश्यासि ॥ ५ ॥
दयितागुणः प्रकाशं नीतः स्वस्यैव वदनदोषेण ।
प्रतिदिनविदलितवाटीवृतिघटनैः खिद्यसे किमिति ॥ ६ ॥

दुर्जनेति । सज्जनः दुर्जनानां सहवासादपि संसर्गादपि शीलोत्कर्षं सुशीलतामित्यर्थः न त्यजति । तथाहि शशी चन्द्रः प्रतिपर्वं पर्वणि पर्वणि अमायामायाम् अमावास्यायां तपने सूर्य्ये वसतीति तथोक्तः सूर्य्यमण्डलप्रविष्टोऽपि निःसृतमात्रः तस्मात् निर्गत एव शीतः शीतलः न तु सौरकिरणसम्पर्कात् उष्णः भवतीति भावः । अमावास्यायां चन्द्रमसः सूर्य्यमण्डले प्रवेशो ज्योतिःशास्त्रप्रसिद्धः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४ ॥

दयितेति । गौराङ्गि सखि ! दयितेन प्रियेण प्रहितां प्रेरितां दूतीं करेण आलम्ब्य तमसि गच्छन्ती त्वं स्वेदेन सत्त्वोद्रेकजनितेन श्रमजनितेन वा च्युता गात्रात् विश्लिष्टा मृगनाभिः कस्तूरी यस्या-स्तथाभूता अतएव दूरात् दृश्या असि, अन्धकारे कस्तूरीविलेपनेन गौराङ्गस्य विभावयितुमशक्यत्वं किन्तु स्वेदसलिलेन तदपनयनादिति भावः । नायिकां प्रति सख्या उक्तिरियम् ॥ ५ ॥

दयितेति । स्वस्यैव आत्मन एव वदनदोषेण मुखदोषेण स्वमु-खेन प्रशंसयेत्यर्थः दयितायाः स्त्रियाः गुणः सौन्दर्य्यादिः प्रकाशं नीतः प्रापितः । साम्प्रतं प्रतिदिनं विदलितायाः विघटितायाः वाटीवृतेः गृहावरणस्य घटनैः पुनःसन्धानैः किमिति कथं खिद्यसे खेदं प्राप्नोषि ? तव दयितायाः सौन्दर्य्यादेस्त्वत्कृतप्रशंसया तस्यां लम्पटानां लोभो जातः, तेन च ते प्रतिदिनं वृतिभङ्गं विधाय त्वत्कान्तां रमयन्तीति तवैवात्र दोष इति सख्या गृहस्वामिनं प्रत्यु-

दाक्षिण्यान्म्रदिमानं दधतं मा भानुमेनमवमंस्थाः ।
रौद्रीमुपागतेऽस्मिन् कः क्षमते दृष्टिमपि दातुम् ॥ ७ ॥

दृष्ट्यैव विरहकातरतारकया प्रियमुखे समर्पितया ।
यान्ति मृगवल्लभायाः पुलिन्दबाणार्दिताः प्राणाः ॥ ८ ॥

दूरस्थापितहृदयो गूढरहस्यो निकाममाशङ्कः ।
आश्लेषो बालानां भवति खलानां च संभेदः ॥ ९ ॥

क्लिरिदम् । एवञ्च कदाचित् स्त्रियाः प्रशंसा परसमीपे न कर्त्तव्येति भावः ॥ ६ ॥

दाक्षिण्यादिति । दाक्षिण्यात् दक्षिणायनवशात् अन्यत्र औदार्य्यात् म्रदिमानं मार्दवं दधतम् एनं भानुं सूर्य्यम् अन्यत्र तदाख्यं कञ्चन जनं मा अवमंस्थाः मा अवज्ञासीः, अस्मिन् भानौ रौद्रीं रुद्राधिष्ठिताम् ऐशानीं दिशमित्यर्थः अन्यत्र तीक्ष्णभावम् उपागते प्राप्ते सति दृष्टिमपि दातुम् अस्योपरीति शेषः कः क्षमते शक्नोति ? न कोऽपीत्यर्थः । अप्रस्तुतप्रशंसालङ्कारः ॥ ७ ॥

दृष्ट्यैवेति । मृगवल्लभायाः मृग्याः पुलिन्दस्य म्लेच्छजातिविशेषस्य व्याधस्येति भावः बाणैः शरैः अर्दिताः व्यथिताः प्राणाः विरहेण भाविचिरविच्छेदेन कातरा तारका यस्यास्तथाभूतया प्रियस्य मृगस्य मुखे समर्पितया दृष्ट्यैव यान्ति निर्गच्छन्ति विरहकातरदृष्ट्या प्रियं पश्यन्त्येव प्राणान् जहातीयं मृगीति भावः ॥ ८ ॥

दूरेति । दूरे स्थापितं हृदयं वक्षःस्थलम् अन्तःकरणञ्च यत्र तथाभूतः गूढं रहस्यं मनोजावेशजनितभावः मनोवृत्तिविषयं यत्र तथोक्तः निकामम् अत्यर्थम् आशङ्कः सभयः अविश्वासश्च बालानां नवोढानाम् आश्लेषः आलिङ्गनं खलानां दुर्जनानां सम्भेदश्च सङ्गश्च भवति मुग्धाङ्गनालिङ्गनं खलप्रणयश्च सम इति भावः । श्लेषोपमालङ्कारो व्यङ्ग्यः ॥ ९ ॥

द्वारे गुरवः कोणे शुकः सकाशे शिशुर्गृहे सख्यः ।
कालासह क्षमस्व प्रिय प्रसीद प्रयातमहः ॥ १० ॥
दधिकणमुक्ताभरणश्वासोत्तुङ्गस्तनार्पणमनोज्ञम् ।
प्रियमालिङ्गति गोपी मन्थश्रममन्थरैरङ्गैः ॥ ११ ॥
दलितोद्वेगेन सखि प्रियेण लग्नेन रागमावहता ।
मोहयता शयनीयं ताम्बूलेनेव नीतास्मि ॥ १२ ॥

द्वारे इति । हे कालं विलम्बं न सहते इति तथोक्तः तत्सम्बुद्धौ हे प्रिय ! द्वारे गुरवः श्वशुरादय इति यावत्, कोणे गृहस्येति शेषः शुकः पक्षिविशेषः, सकाशे समीपे शिशुः बालकः, गृहे सख्यः तिष्ठन्तीति शेषः, तस्मात् प्रसाद प्रसन्नो भव क्रोधं मा कुर्विति भावः, अहः दिनं प्रयातं गतप्रायमित्यर्थः । दिवसापगमे रजन्यां ते मनोरथं सम्पादयिष्यामि इदानीं निरुपायां मां क्षमस्वेति नायकं प्रति नायिकाया उक्तिः ॥ १० ॥

दधीति । गोपी गोपाङ्गना मन्थस्य दधिविलोडनस्य श्रमः तेन मन्थराणि क्लान्तानि तैः अङ्गैः दधिकणाः मन्थलग्नदधिबिन्दव एव मुक्ताभरणानि मौक्तिकहारा यत्र तथोक्तौ तथा श्वासेन दधिविलोडनजनितेन दीर्घेणेति भावः उत्तुङ्गौ यौ स्तनौ तयोरर्पणेन मनोज्ञं मनोहरं यथा तथा प्रियं कान्तम् आलिङ्गति । कथं श्रान्ताहं त्वया सह विहरामीति वादिनीं काञ्चित् प्रति कामातुरस्य प्रियस्योक्तिरियम् ॥ ११ ॥

दलितोद्वेगेनेति । हे सखि ! दलितः नाशितः उद्वेगः अन्यासङ्गादिजनितदुश्चिन्ता येन तथोक्तेन अन्यत्र दलितः खण्डितः उद्वेगः गुवाकः यत्र तथोक्तेन लग्नेन आसक्तेन अन्यत्र कण्ठलग्नेन रागम् अनुरागं कामावेशमिति यावत् अन्यत्र लौहित्यम् आवहता जनयता मोहयता मनोहरता अन्यत्र मोहं जनयता प्रियेण ताम्बूलेनेव शयनीयं शय्यां नीता अस्मि । प्रियसङ्गे मम अन्यत् विषय-

दृष्टमदृष्टप्रायं दयितं कृत्वा प्रकाशितस्तनया ।
हृदयं करेण ताडितमथ मिथ्या व्यञ्जितत्रपया ॥ १३ ॥
दर्शितयमुनोच्छ्राये भ्रूविभ्रमभाजि वलति तव नयने ।
चितहले हलधर इव सर्वं पुरमर्जितं सुतनु ॥ १४ ॥
दयितप्रार्थितदुर्लभमुखमदिरासारसेकसुकुमारः ।
व्यथयति विरहे वकुलः क्व परिचयः प्रकृतिकठिनानाम् १५

ज्ञानम् आसीदिति भावः । सखीं प्रति कस्याश्चित् प्रियसङ्गसुखकथन-मिदम् । उपमालङ्कारः ॥ १२ ॥

दृष्टमिति । दृष्टं दयितं प्रियम् अदृष्टप्रायम् अदृष्टमिवेत्यर्थः कृत्वा प्रकाशितौ स्तनौ यया तथाभूतया अथानन्तरं व्यञ्जिता प्रक-टिता त्रपा लज्जा स्तनप्रदर्शनजनितेति भावः यया तादृश्या मत्या मिथ्या निरर्थकं करेण हृदयं वक्षः ताडितम् आहत, कथं मया अनुचितं कृतमिति धियेति भावः । सखायं प्रति कस्यचिदुक्ति-रियम् ॥ १३ ॥

दर्शितेति । हे सुतनु ! सुन्दरि ! दर्शितः यमुनाया उच्छ्रायः आधिक्यं श्यामत्वेनेति भावः यत्र तथाभूते नीलोत्पलनिभे इति भावः, अन्यत्र दर्शितः यमुनाया उच्छ्रायः वृद्धिः हलाकर्षणादिति भावः येन तथाभूते भ्रूविभ्रमभाजि कटाक्षशालिनि अन्यत्र कोपात् भ्रुकुटिमति तव नयने चितहले चालितलाङ्गले युधिष्ठिरं प्रति कोपेन हस्तिनानगरध्वंसकरणाभिप्रायादिति भावः हलधरे बलदेवे इव वलति चलति सति सर्वं पुरं नगरम् अर्जितं स्वाधीनीकृतं त्वयेति शेषः । काञ्चित् कामिनीं प्रति कस्यचित् कामुकस्योक्तिरियम् । उपमालङ्कारः ॥ १४ ॥

दयितेति । दयितेन प्रियेण प्रार्थितः तथापि दुर्लभः तेनापि अप्राप्य इति यावत् यः मुखमदिरासारः मुखमधुधारा ममेति भावः तस्य सेकेन सुकुमारः सुकोमलः सञ्जातपुष्पपल्लवत्वादिति भावः शोकं

दिवसैरेष्यामि दिनैरिति किं तद्वचसि सखि तवाश्वासः ।
कथयति चिरपथिकं तं दूरनिखातो नखाङ्कस्ते ॥ १६ ॥
दयितस्पर्शोन्मीलितघर्मजलस्खलितचरणनखलाक्षे ।
गर्वभरमुखरिते सखि तच्चिकुरान् किमपराधयसि ॥ १७ ॥
दुष्टग्रहेण गेहिनि तेन कुपुत्रेण किं प्रजातेन ।

जहाति वकुलो मुखसीधुसिक्तो इति कविसमयप्रसिद्धिः । वकुलः विरहे व्यथयति मामिति शेषः उद्दीपकत्वादिति भावः तथापि प्रकृत्या स्वभावेन कठिनानां काष्ठमयत्वादिति भावः परिचयः उपकारज्ञानमिति यावत् क ? न कुत्राप्यस्तीति यावत् प्रकृतिकठिना अकृतज्ञा इति भावः । विरहिण्याः सखीं प्रत्युक्तिः । अर्थान्तरन्यासः ॥ १५ ॥

दिवसैरिति । हे सखि ! दिवसैः दिनैः एष्यामि आगमिष्यामीति तस्य तव कान्तस्य वचसि तव आश्वासः किम् ? नैवाश्वासः कर्त्तव्य इति भावः ते तव दूरनिखातः गाढं निहितः नखाङ्कः नखक्षतचिह्नं तं तव कान्तं चिरपथिकं दीर्घप्रवासिनं कथयति सूचयति । व्यथाधिक्येन सहसा अन्यासङ्गोऽनया न कारिष्यते इति दीर्घप्रवासिनां गम्भीरनखक्षतस्य कामशास्त्रीयत्वादिति भावः । तस्मात् त्वं निःशङ्का अन्यासङ्गं कुर्विति दूत्या नायिकां प्रत्युक्तिरियम् ॥ १६ ॥

दयितेति । दयितस्य कान्तस्य स्पर्शेन उन्मीलितम् उद्गतं यत् घर्मजलं सत्त्वोद्रेकादिति भावः तेन स्खलिता च्युता चरणनखानां लाक्षा अलक्तकरसः यस्यास्तथाभूते गर्वभरेण गौरवातिरेकेण मुखरिते मुखरे अतिगौरविणीत्यर्थः सखि ! तस्य कान्तस्य चिकुरान् केशान् किं कथम् अपराधयसि दूषयसि ? पादप्रणतस्यापि दयितस्य केशान् आकर्षन्तीं काञ्चित् मानिनीं प्रति सख्याः परिहासोक्तिरियम् ॥ १७ ॥

दुष्टेति । हे गेहिनि ! गृहस्वामिनि ! दुष्टः ग्रहः आग्रहः यस्य तथोक्तेन दुर्विनीतेनेत्यर्थः अन्यत्र दुष्टश्चासौ ग्रहश्चेति तथोक्तेन

भौमेनेव निजं कुलमङ्गारकवत् कृतं येन ॥ १८ ॥

दर्शितचापोच्छ्रायैस्तेजोवद्भिः सुगोत्रसंजातैः।
हीरैरप्स्वपि वीरैरापत्स्वपि गम्यते नाधः ॥ १९ ॥

दरनिद्राणस्यापि स्मरस्य शिल्पेन निर्गतासू मे।
मुग्धे तव दृष्टिरसावर्जुनयन्त्रेषुरिव हन्ति ॥ २० ॥

तेन कुपुत्रेण प्रजातेन उत्पन्नेन किम्? न किमपि प्रयोजनमस्तीत्यर्थः। येन पुत्रेण भौमेनेव भूमिसुतेन मङ्गलेनेव निजं कुलम् अङ्गारकवत् कृतं दग्धमित्यर्थः अन्यत्र अङ्गारक इति स्वनामवत् कृतम्। तस्मात् कुपुत्रो न जायतामिति दुःशीलपुत्रविरक्तस्य कस्यचिदुक्तिरियम्। उपमालङ्कारः ॥ १८ ॥

दर्शितेति। दर्शितः चापवत् इन्द्रधनुर्वत् उच्छ्रायः प्रभातिशयः औन्नत्यञ्च यैः तथोक्तैः तेजोवद्भिः प्रभापूर्णैः मानोन्नतैश्च सुगोत्रसञ्जातैः सुष्ठु गोत्रः पर्वतः गोत्रं वंशश्च तत्र सञ्जातैः तदुद्भवैरित्यर्थः हीरैः हीरकैः अप्सु जलेषु अपि वीरैः शूरैः आपत्सु अपि अधः न गम्यते विपन्ना अपि वीरा न नीचमाश्रयन्तीति भावः हीरकमणयश्च जले न निमज्जन्तीति हीरकपरीक्षा प्रसिद्धा। अत्र प्रस्तुतानां वीराणामप्रस्तुतानाञ्च हीरकाणाम् अधोगमनरूपैकधर्मसम्बन्धात् दीपकालङ्कारः। उक्तञ्च दर्पणे। अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते इति ॥ १९ ॥

दरेति। हे मुग्धे! दरम् ईषत् निद्राणस्य सुप्तत्वात् नातिस्फुटस्येति भावः स्मरस्य कामस्य तव मनसि स्थितस्येति भावः शिल्पेन कौशलेन चातुर्य्येणेत्यर्थः निर्गता असौ तव दृष्टिः अर्जुनस्य यन्त्रेषुरिव शिल्पबाण इव मे मम असून् प्राणान् हन्ति नाशयति, यथा अर्जुनशरः प्रक्षिप्तः लक्ष्यं भिनत्ति तथा तव दृष्टिर्मामिति निष्कर्षः। उपमालङ्कारः। कान्तां प्रति नायकस्योक्तिरियम् ॥ २० ॥

दुर्गतगृहिणी तनये करुणार्द्रा प्रियतमे च रागमयी ।
मुग्धा रताभियोगं न मन्यते न प्रतिक्षिपति ॥ २१ ॥
दुर्गतगेहिनि जर्जरमन्दिरसुप्तैव वन्दसे चन्द्रम् ।
वयमिन्दुवञ्चितदृशो निचुलितदोलाविहारिण्यः ॥ २२ ॥
दीपदशा कुलयुवतिर्वैदग्ध्येनेव मलिनतामेति ।
दोषा अपि भूषायै गणिकायाः शशिकलायाश्च ॥ २३ ॥

दुर्गतेति । दुर्गतस्य दरिद्रस्य गृहिणी एतेन दुग्धक्रयेण तनयपालनं न सम्भवतीति ध्वन्यते । तनये शिशौ करुणार्द्रा स्नेहवती प्रियतमे च रागवती पतिप्रेमाकाङ्क्षिणी चेत्यर्थः अतः किंकर्त्तव्यमूढेति यावत् रताभियोगं सुरतार्थं कान्तेन कृतमुद्योगं न मन्यते नानुमोदते पतिसङ्गे स्तन्यहानिशङ्कयेति भावः । न च प्रतिक्षिपति न निवारयति च पतिमङ्गल्याभिलाषादिति भावः ॥ २१ ॥

दुर्गतेति । हे दुर्गतगेहिनि ! दरिद्रकान्ते ! त्वं जर्जरं भग्नं यत् मन्दिरं गृहं तत्र सुप्तैव शायितैव चन्द्रं वन्दसे सेवसे गृहाच्छादनस्य स्थाने स्थाने दृषोत्पातानां राहित्यात् अनुत्थानेनैव चन्द्रं पश्यसीति भावः । वयं धनिगृहिण्य इति भावः निचुलितायाम् आच्छादितायां दोलायां विहारिण्यः अतएव इन्दौ वञ्चिते दृशौ यासां तथोक्ताः आवरणाभ्यन्तरवर्त्तित्वात् चन्द्रं द्रष्टुं न शक्ता इति भावः । त्वम् अनायासेनैव परपुरुषभोगसुखं करोषि न वयमिति कासाञ्चित् कामपि दुर्गतकामिनीं प्रत्युक्तिरियम् । अप्रस्तुतप्रशंसालङ्कारः ॥ २२ ॥

दीपेति । दीपस्य दशा वर्त्तिः, दशा वर्त्तावस्थायामित्यमरः । कुलयुवतिः कुलीना कामिनी वैदग्ध्येनेव विशेषदग्धत्वेन चातुर्य्येण च मलिनतां कज्जलादिमत्त्वं पापित्वञ्च एति गच्छति प्राप्नोतीत्यर्थः । दोषाः चातुर्य्यजनिताकार्य्याणि रात्रयश्च गणिकायाः वेश्यायाः शशिकलायाः चन्द्रकलायाश्च भूषायै शोभायै भवन्तीति शेषः । अत्राप्रस्तुतप्रस्तु-

दीर्घगवाक्षमुखान्तर्निपातितस्तरणिरश्मयः शोणाः ।
नृहरिनखा इव दानववक्षः प्रविशन्ति सौधतलम् ॥ २४ ॥
दरतरलेऽक्षिणि वक्षसि दरोन्नते तव मुखे च दरहसिते ।
आस्तां कुसुमं वीरः स्मरोऽधुना चित्रधनुषापि ॥ २५ ॥
दुष्टसखीसहितेयं पूर्णेन्दुमुखी सुखाय नेदानीम् ।
राकेव विष्टियुक्ता भवतोऽभिमताय निशि भवतु ॥ २६ ॥

तयोर्दीपदशाकुलयुवत्योस्तथा गणिकाशशिकलयोरेकधर्मसम्बन्धात् दीपकालङ्कारः । कस्याश्चित् सख्याः कुलकामिनीं चातुर्य्यचाकार्य्यकरणोद्यतां प्रति उपदेशवचनम् ॥ २३ ॥

दीर्घेति । दीर्घगवाक्षस्य वातायनस्य मुखान्तरभ्यन्तरे निपातितः निपतिताः शोणाः रक्ताः प्रातस्तनत्वादिति भावः तरणिरश्मयः सूर्यकिरणाः नृहरेः नरसिंहस्य नखाः दानवस्य हिरण्यकशिपोः वक्ष इव सौधतलं हर्म्याभ्यन्तरं प्रविशन्ति । उपमालङ्कारः ॥ २४ ॥

दरेति । अधुना साम्प्रतं चित्रेण अद्भुतेन लोकातीतेनेति यावत् धनुषापि पुष्पमयेनेति भावः सह कुसुमं शरभूतमिति भावः आस्तां तिष्ठतु न तेन किमपि प्रयोजनमिति भावः । दरतरले ईषच्चञ्चले अक्षिणि चक्षुषि, दरोन्नते ईषदुन्नते स्तनाविर्भावादिति भावः वक्षसि, दरहसिते मन्दहासिनि मुखे च तवेति सर्वत्र योज्यं वसति स्मरः कामः वीरः । त्वं स्मरस्य जगद्विजयसाधनमन्त्रं नान्यत् तस्य प्रयोजनमिति काञ्चित् मुग्धां प्रति कस्यचित् कामुकस्य कस्याश्चित् सख्या वा उक्तिरियम् ॥ २५ ॥

दुष्टेति । दुष्टा या सखी तया सहिता तद्वशङ्गेत्यर्थः इयं पूर्णेन्दुरिव मुखम् अन्यत्र पूर्णेन्दुरेव मुखं यस्यास्तथाभूता कामिनी विष्टियुक्ता विष्टिभद्रायुता राकेव पौर्णमासीव इदानीं दिवसे इति भावः भवतः सुखाय न निशि रजन्याम् अभिमताय मनोरथपूरणाये-

दलिते पलालपुञ्जे वृषभं परिभवति गृहपतौ कुपिते।
निभृतनिभालितवदनौ हलिकवधूदेवरौ हसतः॥ २७॥
दीप्यन्तां ये दीप्त्यै घटिता मणयश्च वीरपुरुषाश्च।
तेजः स्वविनाशाय तु नृणां तृणानामिव लघूनाम्॥२८॥

—

धकारादिः।

धूमैरश्रु निपातय दह शिखया दहन मलिनयाङ्गारैः।
जागरयिष्यति दुर्गतगृहिणी त्वां तदपि शिशिरनिशि॥१॥

त्यर्थः भवतु। उपमालङ्कारः। नायकं प्रति तत्सख्या वचनमिदम्॥ २६॥

दलितेति। पलालपुञ्जे पलालराशौ दलिते इतस्ततः विक्षिप्ते सति कुपिते गृहपतौ हलिके इति यावत् वृषभं परिभवति ताड़यति सति निभृतं गुप्तं यथा तथा निभालितं परस्परमवलोकितं वदनं याभ्यां तथाभूतौ सन्तौ हलिकवधूदेवरौ हलिकस्य गृहपतेर्वधूर्भार्य्या तस्या देवरश्च हसतः हास्यं कुरुतः आवाभ्यां पलालपुञ्जोपरि सुरतक्रीड़ायां कृतायां पलालपुञ्ज इतस्ततो विक्षिप्तः, तदज्ञात्वा अयं मूर्खः वृषभं निरपराधं ताड़यतीति भावः। कस्याश्चित् कामपि प्रति व्यभिचारिणोर्यूनोर्व्यापारकथनमिदम्॥ २७॥

दीप्यन्तामिति। ये मणयः रत्नानि च वीरपुरुषाश्च दीप्त्यै दीप्तिप्राप्तये घटिताः निर्मिताः विधात्रेति शेषः ते दीप्यन्तां दीप्तिं प्राप्नुवन्तु तु किन्तु लघूनां क्षुद्राणां नृणां मानवानां तृणानामिव तेजः स्वविनाशाय आत्मविनाशायैव। उपमालङ्कारः॥ २८॥

—

धूमैरिति। हे दहन! त्वं धूमैः अश्रु नयनजलं निपातय,

धैर्य्यं निधेहि गच्छतु रजनी सोऽप्यस्तु सुमुखि सोत्कण्ठः ।
प्रविश हृदि तस्य दूरं धनुधृतमुक्ता स्मरेषुरिव ॥ २ ॥
धवलनखलक्ष्म दुर्बलमकलितनेपथ्यमलकपिहिताक्ष्याः ।
द्रक्ष्यामि मदवलोकद्विगुणाश्रु वपुः पुरद्वारि ॥ ३ ॥

शिखया इव भस्मीकृत्य, अङ्गारैः मलिनय मालिन्यं जनय, तदपि तथापि दुर्गतगेहिनी दरिद्रकामिनी शिशिरनिशि शीतरजन्यां त्वां जागरयिष्यति गात्रावरणाभावेन शीतत्राणार्थं दुःखिनी नारी अग्निं प्रज्वाल्य रात्रिं यापयतीति भावः । कश्चित् नायकं कोपदायिनं प्रति कथ्या स्वत् नायिकामसह्यास्त्वां कथमपि सा न त्यक्ष्यतीति वचनमिदम् । अप्रस्तुतप्रशंसालङ्कारः ॥ १ ॥

धैर्य्यमिति । हे सुमुखि ! धैर्य्यं निधेहि अवलम्बस्व, रजनी गच्छतु, सोऽपि तव नायक इत्यर्थः सोत्कण्ठः उत्सुकः रात्रिगता तत्सकाशमहं न गतः सा किं मनसि करोतीति चिन्ताकुल इति भावः अस्तु भवतु । अथ धृता पश्चात् मुक्ता त्यक्ता स्मरस्य कामस्य इषुरिव शर इव तस्य कान्तस्य हृदि दूरम् अत्यन्तं प्रविश । एवञ्च कामशरार्त्तः स त्वयि अत्यन्तासक्तिं करिष्यतीति उक्त्या नायिकां प्रत्युक्तिरियम् । उपमालङ्कारः ॥ २ ॥

धवलेति । अलकैः चूर्णकुन्तलैः पिहिते आवृते अक्षिणी नयने यस्यास्तथाभूतायाः प्रोषितभर्तृकायाः संस्कारनिषेधादिति भावः । प्रियाया इति शेषः धवलानि शुभ्राणि पुराणत्वादिति भावः नखलक्ष्माणि नखक्षतानि यत्र तथाभूतं दुर्बलं क्षीणं विरहादिति भावः अकलितनेपथ्यम् अस्वीकृतालङ्करणं मम अवलोकनात् दर्शनात् द्विगुणानि अश्रूणि यस्य तादृशं पुरद्वारि गृहद्वारि उपस्थितमिति शेषः औत्सुक्यादिति भावः वपुः शरीरं द्रक्ष्यामि ? सखायं प्रति नायकस्य प्रवासिन आशंसनमिदम् ॥ ३ ॥

धर्मारम्भेऽप्यसतां परहिंसैव प्रयोजिका भवति ।
काकानामभिषेकेऽकारणतां दृष्टिरनुभवति ॥ ४ ॥

---

नकारादिः ।

नीरावतरणदन्तुरसैकतसम्भेदमेदुरैः शिशिरे ।
राजन्ति तूलराशिस्थूलपटैरिव तटैः सरितः ॥ १ ॥
निजकायच्छायायां विश्रम्य निदाघविपदमपनेतुम् ।
वत विविधास्तनुभङ्गीर्मुग्धकुरङ्गीयमाचरति ॥ २ ॥

धर्मारम्भे इति । असताम् असाधूनां धर्मारम्भे धर्मकार्य्य-करणोद्यमेऽपीत्यर्थः कार्य्ये कृते किमु वक्तव्यमित्यपिशब्दार्थः । पर-हिंसा एव प्रयोजिका भवति परहिंसार्थमेवासाधवः धर्ममनुतिष्ठ-न्तीति भावः । तथाहि काकानां अभिषेके स्नाने सति दृष्टिः अका-रणताम् अहेतुताम् अनुभवति दृष्टिर्न भवतीति भावः । काकस्नाने दृष्टभाव इति वृद्धानां प्रसिद्धिरनुसन्धेया । विशेषेण सामान्यसम-र्थनरूपोऽर्थान्तरन्यासः ॥ ४ ॥

---

नीरेति । नीराणां जलानाम् अवतरणेन क्रमशो ह्रासेनेत्यर्थः दन्तुरम् उन्नतानतं यत् सैकतं तस्य सम्भेदेन सङ्गेन मेदुरैः स्निग्धैः तूलानां कार्पासानां राशिः समूहो येषु तादृशैः स्थूलपटैरिव तटैः सरितः नद्यः शिशिरे राजन्ति शोभन्ते । तथाच शिशिरे शीत-बाहुल्येनान्यजनागमनशङ्काभावद्योतनात् तटानां स्थूलपटसाम्येन शीतवायुप्रवेशाभावव्यञ्जनाच्च सङ्केतस्थानमेतदिति कस्याश्चित् नायिकां प्रति वचनमिदम् ॥ १ ॥

निजेति । इयं मुग्धकुरङ्गी मूढा मृगी निदाघविपदं ग्रीष्मसन्ताप-मित्यर्थः अपनेतुं दूरीकर्त्तुं निजकायच्छायायां स्वशरीरच्छायायां

न हसन्ति शठ इति व्रजवनिता नमन्ति नन्दमपि ।
सखि स यशोदातनयो नित्यं कन्दलितकन्दर्पः ॥ ३ ॥
नीता स्वभावमर्पितवपुरपि वाम्यं न कामिनी त्यजति ।
हरदेहार्धग्रथिता निदर्शनं पार्वती तत्र ॥ ४ ॥
नागरभोगानुमितस्वबधूसौन्दर्यगर्वतरलस्य ।

विश्रम्य वत खेदे विविधा नानाप्रकाराः तनुभङ्गीः शरीरचेष्टाः व्याघ-रति करोति । यथा निजशरीरच्छायायां विश्रामे ग्रीष्मसन्तापश्चा-निवृत्तिः तथा पतिशङ्के मदनसन्तापश्चानिवृत्तेरुपनायकान्तरग्रहणं विधेयमिति कस्याश्चित् कामपि नायिकां प्रत्युक्तिरियम् । अप्रस्तुत-प्रशंसालङ्कारः ॥ १ ॥

नेति । हे सखि ! यत् यतः स यशोदातनयः कृष्णः नित्यं प्रतिदिनं कन्दलितः वर्द्धितः कन्दर्पः कामो येन तथाभूतः, अतएव व्रजवनिताः गोप्यः नन्दं शठः दुष्टः रसानभिज्ञ इति यावत् इति कृत्वा न हसन्ति प्रत्युत तमपि प्रणमन्ति । कारणगुणाः कार्यगुण-मारभन्ते इति न्यायात् यदा तनय एतादृशरसिकस्तदा तत्पितु-स्तथात्वमिति भावः । दयितानुरागे कर्त्तव्ये तद्गुरवोऽपि मान-नीयाः सन्तोष्याश्चेति कस्याश्चित् काञ्चित् प्रत्युक्तिरियम् । अप्रस्तुत-प्रशंसालङ्कारः ॥ २ ॥

नीतेति । स्वस्य आत्मनः भावं धर्मं नीता प्रापिता स्वानुरूपी-कृतेत्यर्थः तथा अर्पितवपुः दत्तशरीरापि कामिनी वाम्यं प्रातिकूल्यं वामभागवर्त्तित्वञ्च न त्यजति, तत्र तस्मिन् विषये स्त्रीणां वाम्य-सहजरूपे इति भावः हरस्य देहार्द्धेन ग्रथिता हरेणार्द्धाङ्गीकृतेति यावत् पार्वती गौरी निदर्शनं दृष्टान्तः । स्त्रियो विविधोपचारैः सेविता अपि विक्रियन्ते तस्मात्ताः यत्नतः संरक्षणीया इति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३ ॥

नागरेति । नागरः नगरसम्बन्धी यो भोगः स्रक्चन्दनाद्युप-

निपतति पदं न भूमौ ज्ञातिपुरस्तन्तुवायस्य ॥ ५ ॥

निपतति चरणे कोणे प्रविश्य निशि यन्निरीक्षते कस्तत् ।
सखि स खलु लोकपुरतः खलः स्वगरिमाणमुद्गिरति ॥६॥

न विमोचयितुं शक्यः क्षमां महाक्षोभितो यदि कथञ्चित् ।
मन्दरगिरिरिव गरलं निवर्तते ननु समुत्थाप्य ॥ ७ ॥

भोग इत्यर्थः तेन अनुमितं यत् स्वबधूसौन्दर्य्यं यतोऽयं नागरः सुख-भोगरतः ततोऽस्य भार्य्या अवश्यमेव सुन्दरी भवितुमर्हतीत्यनुमान-मिति भावः । तेन यः गर्वः अहङ्कारः तेन नरस्य चपलस्य अस्थिरस्य तन्तुवायस्य कुविन्दस्य पदं ज्ञातीनां पुरः अग्रतः भूमौ न निपतति । यतोऽयं भार्य्यायाः सौन्दर्य्येण गर्वितः नानुरागेण, ततोऽस्य भार्य्यायां त्वयासक्तव्यम् एतज्जातीयपुरुषाणां परपुरुषेण स्वाङ्ग-नाभोगे न विरक्तिरिति कश्चित् कामुकं प्रति कस्याश्चिदुक्तिः ॥ ५ ॥

निपततीति । निशि रात्रौ कोणे एकदेशे इति शेषः प्रविश्य तस्करवत् आत्मगोपनेन स्थित्वेति भावः चरणे ममेति शेषः निपतति अनुरक्तोऽयं जन इति धियेति भावः कः तत् निरीक्षते पश्यति ? तस्य तथाचरणं नाहं गणयामीति भावः हे सखि ! खलु यतः स खलः दुर्जनः लोकानां पुरतः अग्रतः स्वस्य गरिमाणं गौरवम् अह-मेतादृक् गुणवान् यदियं सुन्दरी मां कामयते इत्येवंरूपम् उद्गिरति कथयति । तस्मादनेन सङ्गतिर्न विधेयेति कस्याश्चित् सखीं तदु-द्बोधनकारिणीं प्रत्युक्तिरियम् ॥ ६ ॥

नेति । महान् जनः यदि कथञ्चित् क्षमां शान्तिं परित्यज्य क्षोभितः त्याजितः स्यादिति शेषः तदा मन्दरगिरिरिव विमोचयितुं न शक्यः यन् गरलं हलाहलं समुत्थाप्य निवर्त्तते नतु शाम्यति एव । महान्तः प्रायेण न कुप्यन्ति, कोपे कृते तु भूयाननर्थं उत्पद्यते इति भावः । उपमालङ्कारः ॥ ७ ॥

नियतैः पदैर्निषेव्यं स्खलितेऽनर्थावहं समाश्रयति ।
सम्भवदन्यगतिः कः संक्रमकाष्ठं दुरीशं च ॥ ८ ॥
निजपदगतिगुणरञ्जितजगतां करिणां च सत्कवीनां च ।
वहतामपि महिमानं शोभायै सज्जना एव ॥ ९ ॥
नोत्तपते न स्नेहं हरति न निर्वाति न मलिनो भवति ।
तस्योज्ज्वलो निशि निशि प्रेमा रत्नप्रदीप इव ॥ १० ॥

नियतैरिति । सम्भवन्ती अन्या गतिरुपायो यस्य तथाभूतः अन्योपायवानित्यर्थः कः नियतैः मन्दं मन्दं निक्षिप्तैः नियमितैश्च पदैः चरणविन्यासैः कार्य्यैश्च निषेव्यं गम्यम् आराधनीयञ्च स्खलिते पदच्युतौ त्रुटौ च अनर्थावहम् अनिष्टकरं संक्रमकाष्ठं पारगमनार्थं जलोपरिस्थापितं काष्ठमित्यर्थः दुरीशं दुष्टप्रभुञ्च समाश्रयति ? अव-लम्बते ? न कोऽपीत्यर्थः । प्रस्तुतयोरप्रस्तुतयोर्वा पदार्थयोः संक्रमकाष्ठदुरीशयोरेकधर्मसम्बन्धात् तुल्ययोगितालङ्कारः । तदुक्तं दर्पणे । पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एकधर्माभि-सम्बन्धः स्यात्तदा तुल्ययोगितेति ॥ ८ ॥

निजेति । सज्जनाः साधव एव निजपदानां स्वचरणानां सुपन्तिङन्तानाञ्च गतिः विक्षेपः यथायथं विन्यासश्च एव गुणः धर्मविशेषः तेन रञ्जितानि सन्तोषितानि जगन्ति यैः तथोक्तानाम् अतएव महिमानं महत्त्वं गौरवञ्च वहतामपि सतां इति शेषः शोभायै गौरवप्रकाशायेत्यर्थः भवन्तीति शेषः । अत्राप्रस्तुतानां करिणां प्रस्तुतानां कवीनाञ्चैकधर्मसम्बन्धात् दीपकालङ्कारः ॥ ९ ॥

नेति । रत्नप्रदीप इव तस्य प्रियस्येति शेषः प्रेमा प्रणयः न उत्तपते न सन्तापयतीत्यर्थः, स्नेहम् आर्द्रभावं तैलञ्च न हरति न त्यजति न नाशयति च, न निर्वाति न निवर्त्तते न नश्यति च, न मलिनः न कालुष्यमापद्यते न कज्जलादिरूपं मलं जनयति च, प्रस्तुत

निहितान्निहितानुज्झति नियतं मम पार्थिवानपि प्रेम।
भ्रामं भ्रामं तिष्ठति तत्रैव कुलालचक्रमिव ॥ ११ ॥
निर्भरमपि सम्भुक्तं दृष्ट्वा प्रातः पिबन्न तृप्यामि।
जघनमनंशुकमस्याः कोक इवाशिशिरकरबिम्बम् ॥ १२ ॥
निविड़घटितोरुयुगलां श्वासोत्तब्धस्तनार्पितव्यजनाम्।
तां स्निग्धकुपितदृष्टिं स्मरामि रतनिःसहां सुतनुम् ॥१३॥

निशि निशि प्रतिरात्रम् उज्ज्वलः उत्कृष्टदीप्तिशाली भवतीति शेषः।
उपमालङ्कारः। सखीं प्रति नायिकायाः पत्यनुरागकथनमिदम् ॥१०॥

निहितानिति। मम प्रेम कुलालचक्रमिव कुम्भकारस्य कुम्भा-
दिनिर्माणसाधनं चक्रमिव निहितान् निहितान् पुनः पुनः सख्यादि-
प्ररोचनया मनसि प्रवेशितान् स्वस्योपरि स्थापितांश्च पार्थिवानपि
राज्ञोऽपि पृथ्वीविकारान् घटादींश्चापि उज्झति त्यजति, किन्तु
भ्रामं भ्रामं पुनः पुनः भ्रान्त्वा तत्रैव तस्मिन्नेव जने स्वाभिमते इति
भावः स्वस्थाने च तिष्ठति। को मे अभिमतः प्रियः स्यादिति बहुनां
पर्यालोचनया स एव मे प्रेयानिति अवधारितः। नान्यमहं कामये
इति कयाचित् सखीं प्रत्युच्यते। उपमालङ्कारः ॥ ११ ॥

निर्भरमिति। कोकश्चक्रवाकः अशिशिरकरबिम्बमिव सूर्य-
मण्डलमिव अस्याः कान्तायाः निर्भरम् अत्यर्थं सम्भुक्तमपि अनंशुकं
विवसनं जघनं कटिपुरोभागं दृष्ट्वा प्रातः पिबन् सादरं पश्यन्नित्यर्थः
न तृप्यामि न परितुष्यामि, प्रातरित्यनेन रतविरतावपि तद्दर्शने
एतादृशीच्छा किमु वक्तव्यं रतकाल इति ध्वन्यते; रात्रौ चक्रवाकाणां
विरहस्य प्रसिद्धेः सूर्यबिम्बदर्शने तेषां नितरां परितोष इति बोध्यम्।
उपमालङ्कारः। सखीं प्रति नायकस्य नायिकाकाङ्क्षवर्णनमिदम्
॥ १२ ॥

निविड़ेति। निविड़ं गाढ़ं यथा तथा घटितं संयोजितम्
ऊरुयुगलं यया तथोक्तां, श्वासेन विपरीतरतजनितेन दीर्घनिःश्वासेन

निर्गुण इति मृत इति च द्वावेकार्थाभिधायिनौ विद्धि ।
पश्य धनुर्गुणशून्यं निर्जीवं तदिह शंसन्ति ॥ १४ ॥
निजसूक्ष्मसूत्रलम्बी विलोचनं तरुण ते क्षणं हरतु ।
अयमुद्गृहीतवड़िशः कर्कट इव मर्कटः पुरतः ॥ १५ ॥

त्वर्थः उत्तब्धयोः स्पन्दितयोः स्तनयोः अर्पितं सञ्चालितं व्यजनं तालवृन्तं यया तथाभूतां, स्निग्धा प्रेमार्द्रा कुपिता रतक्लेशप्रदानात् मां प्रतीति भावः इष्टियस्यास्तादृशीं, रतनिःसहां सुरतव्यापारेण अवशाम् अलसामिति यावत् तां तन्वङ्गीं सुन्दरीं स्मरामि । प्रोषितस्य सखायं प्रति कान्तावृत्तकथनमिदम् ॥ १३ ॥

निर्गुण इति । न सन्ति गुणाः शीलसौन्दर्य्यादयः यस्य तथोक्तः निर्गुण इति मृत इति च द्वौ शब्दाविव्यर्थः एकं समम् अर्थम् अभिधत्त इति तथोक्तौ विद्धि जानीहि । तथाहि गुणशून्यं मौर्वीरहितं धनुः पश्य अवलोकय, इह जगति तत् धनुः निर्जीवं ज्यारहितं जीवनरहितञ्चेति ध्वनिः शंसन्ति कथयन्ति लोका इति शेषः, जीवा ज्या शिञ्जिनीत्यपीति कोषः । तस्मात् निर्गुणजीवनं मरणमिति भावः । कस्यचित् कमपि प्रति उपदेशवचनमिदम् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १४ ॥

निजेति । हे तरुण युवक ! निजेन स्वकीयेन सूक्ष्मेण सूत्रेण लम्बते इति तथोक्तः अयं पुरतः अग्रतः दृश्यमान इति शेषः मर्कटः, लूता लूता स्त्री तन्तुवायोर्णनाभिमर्कटकाः समा इत्यमरः । उद्गृहीतं वड़िशं येन तथाभूतः, वड़िशं मत्स्यवन्धनमित्यमरः । कर्कट इव कुलीर इव, स्यात् कुलीरः कर्कटक इत्यमरः । ते तव विलोचनं नयनं क्षणं हरतु, एनं क्षणं पश्येति निष्कर्षः । यथा अतिक्षुद्रकीटोऽपि स्वकौशलेन सूत्रं निर्माय तत्रावलम्बमानः स्वकार्य्यं साधयति, त्वं मनुष्यः प्राणी सुचतुरोऽपि मत्स्यकृतिं स्वचातुर्य्येण कर्त्तुं यतस्वेति भावः । नायिकाया नायकं प्रत्युक्तिरियम् ॥ १५ ॥

नागर गीतिरिवासौ ग्रामस्थित्यापि भूषिता सुतनुः।
कस्तूरी न मृगोदरवासवशाद्विस्रतामेति॥ १६॥
नखलिखितस्तनि कुरवकमयपृष्ठे भूमिलुलितविरसाङ्गि।
हृदयविदारणनिःसृतकुसुमास्त्रशरेव हरसि मनः॥ १७॥
नीता लघिमानमियं तस्यां गरिमाणमधिकमर्पयसि।
भार इव विषमभार्य्यः सुदुर्वहो भवति गृहवासः॥ १८॥

नागरेति। हे नागर! नगरवासिन् रसिकेत्यर्थः असौ सुतनुः शुभाङ्गी गीतिरिव सङ्गीतमिव ग्रामस्थित्यापि पल्लीनिवासेऽपि अन्यत्र ग्रामः स्वरसमूहः स्यान्मूर्च्छनादेः समाश्रय इत्युक्तलक्षणः तत्र स्थित्यापि तदनुसरण एवेत्यर्थश्च भूषिता शोभिता। तथाहि कस्तूरी मृगनाभिः मृगाणाम् उदरे वासः अवस्थितिः तद्वशात् विस्रतां दुर्गन्धतां न एति न प्राप्नोति। दृष्टान्तालङ्कारः। कमपि युवानं ग्रामीणेयं न रसिकेति वादिनं नायकं प्रति नायिकासख्या उक्तिरियम्॥ १६॥

नखेति। नखैः लिखितौ स्तनौ यस्यास्तत्सम्बुद्धौ, कुरवकमयं कुरवकपुष्पप्रचुरं पृष्ठं यस्यास्तत्सम्बुद्धौ, भूमौ लुलितानि लुठितानि विरसानि शुष्काणि अङ्गानि यस्यास्तत्सम्बुद्धौ, हे सखि! हृदयविदारणात् परं निःसृताः निर्गताः कुसुमास्त्रस्य कामस्य शरा यस्याः तादृशीव मनः हरसि मनःप्रीतिं जनयसीत्यर्थः। कुरवककुसुमशय्यायां सुरतक्रीडया पृष्ठे तत्पुष्पसङ्गात् स्तनयोर्नखक्षतार्पणात् सुरतमर्द्दने भूमिलुण्ठनाच्च शरविद्धत्वेनोत्प्रेक्षा। सख्याः नायिकां नायकसकाशात् सम्भोगानन्तरमागतां प्रत्युक्तिरियम्॥ १७॥

नीतेति। इयं कान्ता लघिमानम् अगौरवमित्यर्थः नीता आपिता तस्यां कान्तायाम् अधिकं गरिमाणं गौरवम् अर्पयसि। अतस्ते तव विषमे परस्परं विरुद्धे भार्य्ये यस्य तथाभूतः गृहवासः गार्हस्थ्यं विषमभार्य्यः विषमं यथा तथा धृतः भार इव सुदुर्वहः

न च दूती न च याञ्चा न चाञ्जलिर्न च कटाक्षविक्षेपः।
सौभाग्यमानिनां सखि कचग्रहः प्रथममभियोगः॥ १९ ॥
निशि विषमकुसुमविशिखप्रेरितयोर्मौनलब्धरतिरसयोः।
मानस्तथैव विलसति दम्पत्योरशिथिलग्रन्थिः॥ २० ॥
निजगात्रनिर्विशेषस्थापितमपि सारमखिलमादाय।
निर्मोकं च भुजङ्गी मुञ्चति पुरुषं च वारवधूः॥ २१ ॥

अतिशयेन वोढुमशक्यः वहति। तस्मात् सर्वासु भार्य्यासु समरागः कर्त्तव्य इति कस्यचित् कमपि प्रत्युपदेशवचनम्। उपमालङ्कारः॥१८॥

न चेति। हे सखि! सौभाग्यमानिनां सुभगम्मन्यानां नायकानां कचग्रहः केशस्पर्शः केशाकर्षणं वा प्रथमम् अभियोगः आक्रमणम् अनुरागप्रदर्शनमिति भावः, तेषां दूती न च, याच्ञा प्रार्थना न च, अञ्जलिः करद्वययोजनं न च, कटाक्षविक्षेपश्च न च। सुभगानां नायकानां दूत्यादिषु प्रयोजनं नास्ति, अत एव नायिकास्तेषां प्रेम्णि यतन्ते इति भावः॥ १९ ॥

निशीति। निशि रात्रौ विषमेण दुःसहेन कुसुमविशिखेन कामेन प्रेरितयोः रत्यर्थं नियुक्तयोः अतएव अगत्या मौने तूष्णीम्भावेऽपि मानवशादिति भावः लब्धः रतौ सुरतव्यापारे रसोऽनुरागो याभ्यां तथाभूतयोः मौनेन रतिं कृतवतोरिति भावः दम्पत्योः युवयोः अशिथिलः अलघुरित्यर्थः ग्रन्थिर्यस्य तथाविधः मानः तथैव पूर्ववदेव विलसति स्फुरति। मानिनावपि कामावेशवशात् मौनभावेन सुरतं चक्रतुः, परं मानः पूर्ववदेव स्थित इति भावः। कामावेशातिशयो मानेन न निवार्य्यत इति भावः॥ २० ॥

निजेति। भुजङ्गी सर्पी वारवधूर्वेश्या च निजगात्रेषु निर्विशेषं निजगात्राभिन्नमित्यर्थः यथा तथा स्थापितमपि स्वशरीरांशत्वेन रक्षितमपि यत्नेन दर्शितानुरागमपि चेति भावः निर्मोकं कञ्चुकं पुरुषञ्च अखिलं समग्रं सारं रसं धनञ्च आदाय मुञ्चति त्यजति।

नृत्यश्रमघर्माद्र्रं मुञ्चसि कृच्छ्रेण कञ्चुकं सुतनु ।
मकरन्दोदकलुप्टं मदनधनुर्वल्लिरिव चोलम् ॥ २२ ॥

नाहं वदामि सुतनु त्वमशीला वा प्रचण्डचरिता वा ।
प्रेमस्वभावसुलभं भयमुदयति मम तु हृदयस्य ॥ २३ ॥

न निरूपितोऽसि सख्या नियतं नेत्रत्रिभागमात्रेण ।
हारयति येन कुसुमं विमुखे त्वयि कण्ठ इव देवे ॥ २४ ॥

यथा सर्पो निर्मोकम् असारं त्यजति तथा वारवनिता गृहीतसर्वस्वम् असारं पुरुषं त्यजति तस्मात् वाराङ्गनायामासक्तिर्न विधेयेति कस्यचित् सखायं तदासक्तं प्रत्युपदेशवचनमिदम् । दीपकालङ्कारः ॥ २१ ॥

नृत्येति । हे सुतनु ! सुमाङ्गि ! मदनस्य कामस्य धनुर्वल्लिरिव धनुर्लतेव मकरन्दोदकेन पुष्परसवारिणा लुप्टं चोलं स्वावरणं, त्वं नृत्यश्रमेण यो घर्मः स्वेदः तेन आर्द्रं स्तिमितं कञ्चुकं गात्रावरणं कृच्छ्रेण क्लेशबुद्ध्येति यावत् मुञ्चसि त्यजसि । सुरतश्रमे त्वया किं क्रियते इति न जाने इति सख्या नायिकां नर्तकीं प्रति परिहासोक्तिः । उपमालङ्कारः ॥ २२ ॥

नाहमिति । हे सुतनु ! त्वम् अशीला दुःशीला वा प्रचण्डम् उग्रं चरितं यस्यास्तथाभूता वा इति न अहं वदामि, तु किन्तु मम हृदयस्य प्रेमस्वभावेन प्रीतिस्वभावेन त्वय्युपरि मम प्रीतिरस्तीति हेतोरिति भावः सुलभं भयम् उदयति जायते त्वदाचरणं दृष्ट्वेति शेषः । तस्मात् सावधानया परपुरुषेण सह व्यवहर्त्तव्यमिति सख्या नायिकां प्रत्युक्तिरियम् ॥ २३ ॥

नेति । सख्या नेत्रत्रिभागमात्रेण कटाक्षेणेत्यर्थः नियतं केवलं न निरूपितः अवलोकितः असि, येन देवे इव त्वयि विमुखे तदननुरागिणीति भावः सति कण्ठे कुसुमं पुष्पं पुष्पमालामिति यावत् कण्ठपदसामर्थ्यादिति भावः हारयति त्याजयति सख्या इति शेषः त्वदप्राप्त्या स्वयं तत्स्पर्शनेऽपि इच्छाराहित्यादिति भावः । देवे

नखदशनमुष्टिपातैरदयैरालिङ्गनैश्च सुभगस्य ।
अपराधं शंसन्त्यः शान्तिं रचयन्ति रागिण्यः ॥ २५ ॥

न गुणे न लक्षणेऽपि च वयसि च रूपे च नादरो विहितः ।
त्वयि सौरभेयि घण्टा कपिलापुत्रीति बद्धेयम् ॥ २६ ॥

निष्कारणापराधं निष्कारणकलहरोषपरितोषम् ।
सामान्यमरणजीवनसुखदुःखं जयति दाम्पत्यम् ॥ २७ ॥

इत्युपमानेन त्वदुपेक्षणं दैवप्रातिकूल्यमिति ध्वन्यते । तस्मात् नितरां त्वय्यावेशितचित्ता सा नोपेक्षणीयेति सख्या नायकं प्रत्युक्तिरियम् । उपमालङ्कारः ॥ २४ ॥

नखेति । रागिण्यः अनुरागवत्यः कान्ताः सुभगस्य वल्लभस्य अपराधं कथं त्वया इयतो दिवसान् मयि उपेक्षितं वा कथं तत्र गतमित्येवमादिकं दोषं शंसन्त्यः वदन्त्यः सत्यः नखदशनमुष्टिपातैः नखाघातैः दन्ताघातैः मुष्टिप्रहारैश्चेत्यर्थः तथा अदयैः गाढैः आलिङ्गनैः शान्तिं कोपोपशमं रचयन्ति कुर्वन्ति । अत्यनुरागिणीनां मुग्धानामयमेव स्वभाव इति कश्चित् तथा प्रहृतस्य सखायं कथं त्वमनया ताडित इति पृच्छन्तं प्रत्युक्तिः ॥ २५ ॥

नेति । हे सौरभेयि ! सुरभिकन्ये ! गुणे बहुदुग्धवत्त्वादिके कलाकौशले च न, लक्षणे शुभचिह्ने सामुद्रोक्ते इति शेषः न, वयसि यौवने न, रूपे सौन्दर्य्यादौ च न तवेति सर्वत्र योज्यम् आदरः विहितः कृतः, गुणादिवत्त्वात् त्वं नादृतेत्यर्थः त्वं कपिलायाः तदाख्यप्रशंसनीयायाः गोः पुत्रीति हेतोः त्वयि इयं घण्टा बद्धा । तव सत्कुलप्रसूततया तेन त्वं स्वीकृता न तु गुणादिमत्तया, तस्मात् किमिति गर्वमावहसीति कामपि प्रति कस्याश्चिदुक्तिरियम् । अप्रस्तुतप्रशंसालङ्कारः ॥ २६ ॥

निष्कारणेति । निष्कारणः अहेतुकः अपराधो यत्र तथोक्तं, निष्कारणः कलहः रोषः परितोषश्च यत्र तथाभूतं तथा सामान्यं

न प्राप्यसे कराभ्यां हृदयान्नापैषि वितनुषे बाधाम्।
त्वं मम भग्नावस्थितकुसुमायुधविशिखफलिकेव ॥ २८ ॥
नाथेति परुषमुचितं प्रियेति दासेत्यनुग्रहो यत्र।
तद्दाम्पत्यमितोऽन्यन्नारी रज्जुः पशुः पुरुषः ॥ २९ ॥
निह्नितायामस्यामपि सैवैका मनसि मे स्फुरति।

बाधारूपं मरणजीवनयोः सुखं दुःखञ्च यत्र तथाविधं दाम्पत्यं स्त्रीपुंभावः स्त्रीपुरुषचरितं वा जयति ॥ २७ ॥

नेति। हे प्रिये इत्यध्याहार्य्यम्। त्वं कराभ्यां न प्राप्यसे त्वां हस्ताभ्यां न प्राप्नोमीत्यर्थः, किन्तु हृदयात् न अपैषि अपगच्छसि त्वं मम हृदये वर्त्तसे इत्यर्थः, सततं त्वां स्मरामीति भावः, अतएव बाधां विरहयन्त्रणां वितनुषे विस्तारयसि ददासीत्यर्थः। तस्मात् त्वं मम भग्नः सन् अवस्थितः कियदंशेनेति भावः यः कुसुमायुधस्य कामस्य विशिखः शरः तस्य फलिकेव अग्रमिव असीति शेषः। विशिखफलिका हृदयनिहिता भग्ना चेत् कराभ्यां निष्क्रष्टुं न शक्यते सुतरां हृदयात् न अपगच्छति पीड़ां ददाति च तद्वत् त्वमिति निष्कर्षः। उपमालङ्कारः। कस्यचित् नायकस्य सकृदृष्टतमस्यां ततो दुर्लभां ततश्च कथञ्चित् प्राप्तां कामपि नायिकां प्रत्युक्तिरियम् ॥ २८ ॥

नाथेति। यत्र दाम्पत्ये नाथ इति सम्बोधनमिति शेषः परुषं निष्ठुरं प्रिय इति सम्बोधनम् उचितम् उपयुक्तम् अनुरूपमित्यर्थः दास इति सम्बोधनम् अनुग्रहः स्वसेवकत्वनाङ्गीकारादिति भावः तत् दाम्पत्यं जायापतित्वं तत्पदवाच्यमिति भावः यत्र दाम्पत्ये नारी रज्जुः पुरुषः पशुः प्रेमवह्निभावादिति भावः तत् दाम्पत्यम् इतः पूर्वोक्तात् अन्यत् अपरम्। यथा रज्जुबद्धः पुरुषः सततं क्लेशमनुभवति तथा तादृशं दाम्पत्यं क्लेशायेति भावः ॥ २९ ॥

निह्नितायामिति। अस्यां कान्तायां निह्नितायामपि मनसीति

रेखान्तरोपधानात्पत्त्राक्षरराजिरिव दयिता ॥ ३० ॥
निधिनिःक्षेपस्थानस्योपरि चिह्नार्थमिव लता निहिता ।
लोभयति तव तनूदरि जघनतटादुपरि रोमाली ॥ ३१ ॥
निहितार्धलोचनायास्त्वं तस्या हरसि हृदयपर्यन्तम् ।
न सुभग समुचितमीदृशमङ्गुलिदाने भुजं गिलसि ॥ ३२ ॥
नीत्वागारं रजनीजागरमेकं च सादरं दत्त्वा ।

शेषः सैव एका दयिता प्रिया मे मम मनसि रेखान्तरेषु उपधानात् विन्यासादित्यर्थः पत्त्राक्षरराजिरिव स्फुरति राजते । रेखासु रेखासु विन्यस्ता अक्षरपङ्क्तिर्यथा मनोहारिणी तथा सा नायिका मम मनो हरति नेयमिति पूर्वप्रणयिनीसमासक्तस्य कथमस्यां नानुरज्यसे इति वादिनीं सखीं प्रत्युक्तिरियम् । उपमालङ्कारः ॥ ३० ॥

निधीति । हे तनूदरि कृशमध्ये ! निधेः रत्नविशेषस्य निःक्षेपस्थानं निधिस्थानं तस्य उपरि चिह्नार्थं अविस्मरणार्थमिति भावः निहिता रोपिता लतेव तव जघनतटात् कटिपुरोभागात् उपरि उल्लसन्तीति शेषः रोमाली रोमश्रेणी लोभयति मामिति शेषः । तव रोमावलीदर्शनेन त्वया रन्तुमिच्छामीति कस्यचित् कामुकस्य कामपि कामिनीं प्रत्युक्तिरियम् । उपमालङ्कारः ॥ ३१ ॥

निहितेति । हे सुभग ! निहितं निःक्षिप्तं त्वां प्रतीति शेषः अर्द्धलोचनं यया तथाभूतायाः त्वां प्रति कटाक्षं निःक्षिपन्त्या इत्यर्थः तस्याः हृदयपर्य्यन्तं हरसि, ईदृक् कार्य्यं न समुचितं न युक्तं, त्वम् अङ्गुलिदाने भुजं हस्तपर्य्यन्तं गिलसि ग्रससि । यथा केनचित् किञ्चिद्दाने कृते ग्रहीतुस्तस्य दत्तातिरिक्तग्रहणं तथा तवेति भावः । कमपि युवानं प्रति कस्याश्चित् नायिकासख्या नायिकासक्तिवर्णनमिदम् ॥ ३२ ॥

नीत्वेति । आगारं गृहं नीत्वा एतेन नायिकाया गौरवाभावो

अचिरेण कैर्न तरुणैर्दुर्गापत्रीव मुक्तासि ॥ २३ ॥
नक्षत्रेऽग्नाविन्दावुदरे कनके मणौ दृशि समुद्रे ।
यत् खलु तेजस्तदखिलमोजायितमब्जमित्रस्य ॥ २४ ॥
न सवर्णो न च रूपं न संस्क्रिया कापि नैव सा प्रकृतिः ।
बाला त्वद्विरहापदि जातापभ्रंशभाषेव ॥ २५ ॥

व्यज्यते अतिसंभ्रान्ता कामिनी स्वच्छे एव नायकमानीय रमते इति भावः । सादरम् एकं न तु द्वितीयमिति भावः रजनीजागरं दत्त्वा कृत्वेति भावः कैः तरुणैः युवकैः दुर्गापत्रीव अचिरेण त्वं न मुक्तासि ? सर्वैरेव मुक्तासीत्यर्थः । त्वमीदृशी गुणविहीना यत् त्वया सह सकृत् सङ्गस्य तरुणाः पुनस्त्वां नेच्छन्तीति भावः । दुर्गापत्रिकाम् एकरात्रं पूजयित्वा नृत्यगीताद्युत्सवैः रात्रिजागरञ्च कृत्वा परस्मिन् दिने विसृज्यते इति देशविशेषव्यवहारः । कामपि बहुनायकसङ्गगर्वितां प्रति कस्याश्चिदुक्तिरियम् । उपमालङ्कारः ॥२३॥

नक्षत्र इति । नक्षत्रे तारायां, अग्नौ, इन्दौ चन्द्रे, उदरे जठरे, कनके काञ्चने, मणौ रत्ने, दृशि नेत्रे समुद्रे वाडवामुखे इति भावः यत खलु तेजः, तत् अखिलं समग्रम् अब्जमित्रस्य पद्मकान्तस्य सूर्य्यस्येत्यर्थः ओजायितं सामर्थ्यमित्यर्थः । एकस्य गुणातिशयेन तत्सङ्गिनः सर्वेऽपि तद्वत्त्वेनाद्रियन्ते इति कस्यचित् कमपि प्रत्युक्तिरियम् ॥ २४ ॥

नेति । बाला मुग्धा सा तव प्रियेति शेषः तव विरह एव आपत् तस्याम् अपभ्रंशभाषेव असंस्कारवागिव जाता तथाहि सः पूर्वानुभूत इति भावः वर्णः कान्तिः न अस्तीति शेषः अथच सवर्णः समानवर्णविहितकार्य्यं न अस्तीति शेषः एवं सर्वत्र योज्यं रूपं सौन्दर्य्यं न च, अथच सुप्तिङन्तनिष्पन्नं पदं न च । संस्क्रिया उद्वर्त्तनादिना शरीरशुद्धिः न, अथच साधुत्वं न । कापि अनिर्वचनीया सा प्रकृतिः स्वभावश्च नैव, अथच प्रकृतिधातुविशेषरूपा च न ।

न विभूषणे तवास्था वपुर्गुणेनैव जयसि सखि यूनः।
अवधीरितास्त्रशस्त्रा कुसुमेषोर्मल्लविद्येव॥ २६॥
नेत्राकृष्टो भ्रामं भ्रामं प्रेयान् यथा यथास्ते तथा।
सखि मन्थयति मनो मम दधिभाण्डं मन्थदण्ड इव॥२७॥
नानावर्णकरूपं प्रकल्पयन्ती मनोहरं तन्वी।

केचित्तु इवशब्दस्य अवधारणमर्थं कृत्वा अपभ्रंशः असाधुर्भाषा यस्याः तादृशी असाधुभाषिणीति अथवा अपगतः भ्रंशः असाधुत्वं यस्याः तादृशी भाषा यस्यास्तथाभूता साधुभाषिणीति च व्याचक्षते। उपमालङ्कारः। सख्या नायकं प्रवासिनं प्रति नायिकाया अवस्थावर्णनेन तदभिमुखीकरणवचनमिदम्॥ २५॥

नेति। हे सखि! तव विभूषणे अलङ्करणे न आस्था न यत्नः, अथवा विशिष्टानि भूषणानि यस्यास्तत्सम्बुद्धौ विशिष्टालङ्कारभूषिते इत्यर्थः तव आस्था यत्नः न युवजनवशीकरणं प्रतीति भावः, किन्तु अवधीरितम् अवज्ञातं परित्यक्तमित्यर्थः अस्त्रं शस्त्रञ्च यया तथाभूता कुसुमेषोः कामस्य मल्लविद्येव मल्लयुद्धमिव सापि केवलं शरीरसाध्येति भावः वपुषः शरीरस्य गुणेन सौन्दर्य्येण यूनः तरुणान् जयसि वशीकरोषि। मनोहराकृतीनां भूषणैः किमिति भावः। कामपि नायिकां प्रति नायकस्य सख्या वा स्तुतिरियम्। उपमालङ्कारः॥२६॥

नेत्रेति। हे सखि! नेत्रेण नयनेन गुणेन च, नेत्रमाक्षि गुणेऽपि चेति, कोषः। आकृष्टः प्रेयान् मम प्रियतमः भ्रामं भ्रामं भ्रमित्वा भ्रमित्वा यथा यथा आस्ते वर्त्तते तथा तथा मन्थनदण्डो दधिभाण्डमिव मम मनः मन्थयति आलोडयति। उपमालङ्कारः। कमपि पुरुषं कटाक्षेणाकृष्टं सन्निधौ भ्रमन्तं समानयेति सखीं प्रति कस्याश्चित् नायिकाया व्यञ्जनया उक्तिरियम्॥ २७॥

नानेति। तन्वी कृशाङ्गी सूक्ष्मा च सा चित्रकरस्य तूलिकेव प्रतिभित्ति प्रतिक्षणं प्रतिकुड्यञ्च मनोहरं नानावर्णकरूपं विविधपरि-

चित्रकरतूलिकेव त्वां सा प्रतिभित्ति भावयति ॥ ३८ ॥

---

पकारादिः ।

पथिकासक्ता किञ्चिन्न वेद घनकलमगोपिता गोपी ।
केलिकलाहुङ्कारैः कीरावलि मोघमपसरसि ॥ १ ॥
प्रणमति पश्यति चुम्बति संश्लिष्यति पुलकमुकुलितैरङ्गैः ।
प्रियसङ्गाय स्फरितां वियोगिनी वामबाहुलताम् ॥ २ ॥

प्रतिभित्तिं बहुरञ्जनद्रव्यैर्निर्मिताकारञ्च त्वां कलयन्ती रचयन्ती भावयति चिन्तयति । उपमालङ्कारः । सततं तव चिन्तनेन सा क्षयाङ्गी सती कालं नयति तस्मात् शीघ्रं त्वया सानुकम्पेऽगति कस्याश्चित् सख्याः प्रोषितं नायकं प्रत्युक्तिरियम् ॥ ३८ ॥

---

पथिकेति । हे कीरावलि शुकसङ्घ ! घनैः प्रचुरैरित्यर्थः कलमैः धान्यविशेषैः गोपिता रक्षिता बहुधान्यशालिनीति यावत् एतेनाल्पभक्षणे धान्यक्षयज्ञानं न भवतीति भावः तथा पथिके आसक्ता अनुरागिणी पथिकेन सह रतोत्सुकेति यावत् गोपी गोपाङ्गना किञ्चित् न वेद नावबुध्यते । त्वं केलिकलाहुङ्कारैः सुरतसूचकव्यञ्जकशब्दविशेषैः मोघं व्यर्थम् अपसरसि पलायसे भयादिति भावः । काव्यलिङ्गमलङ्कारः । वचनमात्रादेव कुतश्चित् न भेतव्यमिति कस्यचित् कमपि प्रत्युपदेशः ॥ १ ॥

प्रणमतीति । वियोगिनी विरहिणी प्रियसङ्गाय स्फुरितां स्पन्देन प्रियसङ्गव्यञ्जिकामिति यावत् वामबाहुलतां पुलकैः मुकुलितैः सञ्जातमुकुलैः स्फीतैरिति भावः अङ्गैः प्रणमति पश्यति चुम्बति संश्लिष्यति आलिङ्गति च । यदा अचेतनाया अपि बाहुलतायाः प्रियसङ्गसूचनादीदृशी सम्मानना तदा सचेतनायाः दूत्यादेः किं

प्रविशसि न च निर्गन्तुं जानासि व्याकुलत्वमातनुषे ।
बालक चेतसि तस्याश्चक्रव्यूहेऽभिमन्युरिव ॥ ३ ॥
पश्यानुरूपमिन्दिन्दिरेण माकन्दशेखरो मुखरः ।
अपि च पिचुमन्दमुकुले मौकुलिकुलमाकुलं मिलति ॥४॥
प्रतिबिम्बसंभृताननमादर्शं सुमुख मम सखीहस्तात् ।
आदातुमिच्छसि मुधा किं लीलाकमलमोहेन ॥ ५ ॥

वक्तव्यमिति भावः । अत्र अनेकक्रियास्वेककर्त्तृसम्बन्धात् दीपकालङ्कारः ॥ २ ॥

प्रविशसीति । हे बालक ! अज्ञ इति भावः त्वं चक्रव्यूहे चक्राकारबलरचनायाम् अभिमन्युरिव तस्याः रमण्याः चेतसि प्रविशसि, निर्गन्तुं ततो निष्क्रमितुं न च जानासि न च पारयसीत्यर्थः व्याकुलत्वं कातरतां कथमत्र प्रविष्टोऽहं परित्राणं लभे इत्येवंरूपमिति भावः आतनुषे विस्तारयसि प्रकटयसि च । यथाभिमन्युः कुरुक्षेत्रयुद्धे द्रोणरचिते चक्रव्यूहे प्रविश्य ततो निर्गन्तुमजानन् तत्र मृत्युमुखे प्राणान् जहौ तथा त्वं तस्याः कुहके प्रविष्टोऽसि तव तथा चातुर्यं नास्ति येन ततो निस्तारं लभसे किं व्याकुलीभवसीति कस्याश्चित् कमपि प्रत्युक्तिरियम् । उपमालङ्कारः ॥ ३ ॥

पश्येति । हे सखि ! इति सम्बोधनमूह्यम् अनुरूपं योग्ययोजनमिति यावत् पश्य अवलोकय, इन्दिन्दिरेण भ्रमरेण माकन्दस्य आम्रस्य शेखरः मुखरः सशब्दः वाचाल इत्यर्थः, अपि च किञ्च पिचुमन्दस्य निम्बस्य मुकुले मौकुलिकुलं काककुलम् आकुलं चपलं सत् मिलति । योग्यं योग्येन युज्यते इति भावः । तस्मात् त्वं योग्यपुरुषे आसक्तिं कुर्वीति सख्या नायिकां प्रत्युक्तिरियम् । अप्रस्तुतप्रशंसालङ्कारः ॥४॥

प्रतिबिम्बेति । हे सुमुख ! लीलाकमलमोहेन क्रीडापद्मभ्रान्त्या मम सखीहस्तात् प्रतिबिम्बेन सम्भृतं सङ्कृतम् आननं यस्मिन् तथाभूतम् आदर्शं दर्पणं किं मुधा व्यर्थं आदातुम् इच्छसि ? नायक-

प्राचीनाचलमौलेर्यथा शशी गगनमध्यमधिवसति।
त्वां सखि पश्यामि तथा छायामिव सङ्कुचन्मानाम् ॥६॥
प्राङ्गणकोणेऽपि निशापतिः स तापं सुधामयो हरति।
यदि मां रजनिज्वर इव सखि स न निरुणद्धि गेहपतिः ॥७॥
पतिपुलकदूनगात्री स्वच्छायावीक्षणेऽपि या सभया।
अभिसरति सुभग सा त्वां विदलन्ती कण्टकं तमसि ॥८॥

सन्निधौ नायिकास्तुतिरियम्। भ्रान्तिमानलङ्कारः। तदुक्तं दर्पणे, साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति ॥ ५ ॥

प्राचीनेति। हे सखि! प्राचीनः प्राच्यः अचलः उदयपर्वत इत्यर्थः तस्य मौलेः शिरसः शशी चन्द्रः यथा गगनमध्यम् अधिवसति अधितिष्ठति तथा सङ्कुचन् ह्रासं गच्छन् मानः प्रणयकोपः यस्याः सङ्कुचत् मानं परिमाणं यस्यास्तथाभूतां त्वां छायामिव पश्यामि। चन्द्रोदयस्य उद्दीपकत्वात् क्रमशो रजनीक्षयदर्शनाच्च मानह्रासः कामिनीनां भवतीति भावः। छाया च मध्यवर्त्तिनि चन्द्रे सङ्कुचिता भवतीति तत्साम्यम्। उपमालङ्कारः ॥ ६ ॥

प्राङ्गणेति। हे सखि! स गेहपतिः मत्पतिरित्यर्थः रजनिज्वर इव रात्रिभवज्वररोग इव यदि मां न निरुणद्धि तदा स सुधामयः निशापतिः चन्द्रः प्राङ्गणस्य चत्वरभूमेः कोणेऽपि तापं हरति नाशयति। स इत्यनेन पूर्वसङ्केतित इति, सुधामय इत्यनेन प्रियतम इति, निशापतिरित्यनेन निशायां पतिरुपपतिरिति, तापं हरतीत्यनेन सुरतलीलया मदनव्यथां नाशयतीति च ध्वन्यते। ज्वरवतश्च गृहात् बहिर्निःसरणे शीतलवाय्वादिसङ्गात् तापनिवृत्तिर्भवतीति तत्साम्यम्। कथं त्वया तेन सङ्केतस्थानमागतेनापि सह न सङ्गतमिति वादिनीं सखीं प्रति नायिकाया उक्तिरियम्। उपमालङ्कारः ॥ ७ ॥

पतीति। हे सुभग! पत्युः पुलकेन रोमाञ्चेन दूनोद्वे-

प्रतिभूः शुको विपक्षे दक्षः शृङ्गारसङ्कथासु गुरुषु ।
पुरुषायितं प्रपञ्चय बाले परिभाव्यतां दावः ॥ ९ ॥
परमोहनाय मुक्तो निष्करुणे तरुणि तव कटाक्षोऽयम् ।
विशिख इव कलितकर्णः प्रविशति हृदयं न निःसरति ॥ १० ॥
प्रपदालम्बितभूमिस्तु स्खलन्ती प्रीतिभीतिमधुराक्षी ।
प्राचीराग्रनिवेशितचिबुकतया न पतिता सुतनुः ॥ ११ ॥

जनितेनेति भावः दूनं क्लिष्टं मानं यस्याः तथाभूता पल्लुः प्रणयि-नीति भावः स्वस्य आत्मनः छाया प्रतिबिम्बं तस्या वीक्षणेऽपि दर्शनेऽपि सभया वा आसीदिति शेषः सा नारी इदानीं तमसि अन्धकारे कण्टकं विदधन्ती विशोधयन्ती पदात् स्खलयन्तीति यावत् सती त्वाम् अभिसरति । तस्मात् त्वया अस्यामनुरागः कदाचिदपि न त्याज्य इति दूत्या उपनायकं प्रत्युक्तिरियम् ॥ ८ ॥

प्रतिभूरिति । हे बाले मुग्धे ! शुकः अयं प्रतिभूः पणप्रदापने प्रमाणभूत इति यावत् विपक्षे अप्रदाने इति भावः गुरुषु श्वशुरा-दिषु तत्समीपे इत्यर्थः शृङ्गारस्य सङ्कथा सम्यक् कथनं दक्षः, पणः पराजये देयत्वेन व्यवस्थापितं धनं पुरुषायितं विपरीतरतं तत् तस्मात् दावः पाशक्रीडनं विभाव्यतां विशेषेण चिन्त्यतां आवयो-रिति भावः । अक्षक्रीडां कर्तुकामां बालां प्रति नायक-स्योक्तिरियम् ॥ ९ ॥

परेति । हे निष्करुणे निर्दये तरुणि ! परेषां मोहनाय मुक्तः निःक्षिप्तः तव अयं कटाक्षः कलितकर्णः आकर्णाकृष्ट इत्यर्थः उभयत्रापि समानम् । विशिख इव शर इव हृदयं प्रविशति न निःसरति नापगच्छति । त्वत्कटाक्षविद्धोऽयं त्वदायत्तो जात इति कस्य-चित् कांचित् प्रत्युक्तिः । उपमालङ्कारः ॥ १० ॥

प्रपदेति । सुतनुः सा प्रपदेन पादाग्रेण, पादाग्रं प्रपदमित्य-मरः । आलम्बिता स्पृष्टा भूमिर्यया तादृशी सती स्खलन्ती त्वामिति

प्रातरुपागत्य मृषा वदतः सखि नास्य विद्यते व्रीडा ।
मुखलग्नयापि योऽयं न लज्जते दग्धकालिकया ॥ १२ ॥

पश्योत्तरस्तनूदरि फाल्गुनमासाद्य निर्जितविपक्षः ।
वैराटिरिव पतङ्गः प्रत्यानयनं करोति गवाम् ॥ १३ ॥

प्रमदवनं तव च स्तनशैलं मूलं गभीरसरसां च ।

येषः प्रीत्या प्रणयजनितसुखेन भीत्या अपरदर्शनभयेन च मधुरे मनोहरे अक्षिणी नयने यस्यास्तथाभूता प्राचोरस्य अग्रे शिरसि निवेशितं स्थापितं चिबुकं यया तस्या भावः तया हेतुना न पतिता । उपनायकं प्रति सख्या उक्तिरियम् ॥ ११ ॥

प्रातरिति । हे सखि ! प्रातः प्रातःकाले उपागत्य समीपमागत्य मृषा मिथ्या वदतः नाहमन्यां नारीं गत इति कथयतः अस्य व्रीडा लज्जा न विद्यते । यः अयं मुखलग्नया दग्धकालिकया दग्धया कालिम्ना परनारीनेत्रचुम्बनात् कज्जलरागेणेति भावः अपि न लज्जते । दग्धेत्यनेन पराङ्गनाद्वेषातिशयो व्यज्यते । सखीं प्रति नायिकाया नायकस्यासदाचरणकथनमिदम् ॥ १२ ॥

पश्येति । हे तनूदरि कृशोदरि ! उत्तरः उत्तरायां गच्छन्निति यावत् उत्तरायणप्रवृत्त इति भावः तन्नामा च पतङ्गः सूर्यः, पतङ्गौ पक्षिसूर्यौ चेत्यमरः । वैराटिरिव विराटस्य अपत्यं पुमान् वैराटिः स इव फाल्गुनं मासम् अर्जुनस्य आसाद्य प्राप्य आश्रित्य च निर्जितः विपक्षः हेमन्तागमरूपस्तेजोह्रासश्च इति भावः सुयोधनादिश्च येन तथाभूतः सन् गवां किरणानां ह्रासं गतानामिति भावः धेनूनां दुर्योधनबलहृतानामिति च प्रत्यानयनम् उद्धारं करोति । वसन्तागम उपस्थितः तदिदानीं ते महानुत्सवः सम्पत्स्यते इति सख्या नायिकां प्रति भङ्ग्या कथनम् । श्लेषमूलोपमालङ्कारः ॥ १३ ॥

प्रमदवनमिति । निदाघेन ग्रीष्मेण निरस्तं निर्जितं ताडित-

जगति निदाघनिरस्तं शैत्यं दुर्गत्रयं श्रयति ॥ १४ ॥
प्रोञ्छति तवापराधं मानं मर्द्दयति निर्वृतिं हरति ।
स्वकृताविहन्ति शपथाञ्जागरदीर्घा निशा सुभग ॥१५॥
प्रिय आयाते दूरादभूत इव सङ्गमोऽभवत् पूर्वः ।
मानहृदितप्रसादाः पुनरासन्नपरसुरतादौ ॥ १६ ॥

मित्यर्थः शैत्यं जगति प्रमदवनं प्रकृष्टानन्दकाननं तव स्तनशैलं गभीर-सरसां गभीरत्वेनेन कदापि तेषां शोषो नास्तीति ध्वन्यते । मूलं तत्त्व दुर्गत्रयं श्रयति । यथा शत्रुनिर्जिताः शत्रूणामगम्यं देश-माश्रयन्ति तथा ग्रीष्मनिराकृतशैत्यस्य प्रमदवनादिषु त्रिषु दुर्गेषु समा-श्रयः । तस्मान् मदननिदाघतप्तस्य शैत्याश्रयणं कर्त्तव्यं तच्च तव स्तन-मण्डले तिष्ठतीति त्वदीयं स्तनमण्डलमेव मयेदानीं सेवितव्यमिति नायिकां प्रति नायकस्योक्तिरियम् । अत्राप्रस्तुतप्रस्तुतानामेकधर्मसम्ब-न्धात् दीपकं, शैत्यस्य प्रस्तुतस्य पराजितशत्रुव्यवहारसमारोपात् समासोक्तिश्च, तदनयोः संसृष्टिः । समासोक्तिलक्षणमुक्तं दर्पणे । समा-सोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुते-ऽन्यस्य वस्तुन इति ॥ १४ ॥

प्रोञ्छतीति । हे सुभग ! जागरेण दीर्घा यापयितुमशक्येति भावः निशा तव अपराधं दोषं प्रोञ्छति हरति मानं तव कान्ता-कृतमिति भावः मर्द्दयति दूरीकरोति, निर्वृतिं सौख्यं हरति क्लेशा-तिशयं जनयतीति भावः, स्वकृतान् शपथान् यदि पुनरहम् अनेन सङ्गतिं करोमि तदा मे सर्वं सुकृतं नश्यत्वित्यादिरूपान् निहन्ति विस्मारयतीति भावः । तवापराधेन मानिनी सा दीर्घरजनीमति-कष्टेनातिवाहयति च । इदानीं मानमपहाय त्वदर्थं भृशं ताम्यतीति सख्या नायकं प्रत्युक्तिरियम् ॥ १५ ॥

प्रिय इति । दूरात् दूरदेशात् प्रिये आयाते सति पूर्वः प्रथमः अभूत इव कदाप्यसञ्जात इव सङ्गमः अभवत् । मानहृदितप्रसादाः

पूर्वमहीधरशिखरे तमः समासन्नमिहिरकरकलितम् ।
शूलप्रोतं सरुधिरमिदमन्धकवपुरिवाभाति ॥ १७ ॥

परिवृत्तनाभि लुप्तत्रिवलि श्यामस्तनाग्रमलसाक्षि ।
बहुधवलजघनरेखं वपुर्न पुरुषायितं सहते ॥ १८ ॥

प्रारब्धनिधुवनैव स्वेदजलं कोमलाङ्गि किं वहसि ।
ज्यामर्पयितुं नमिता कुसुमास्त्रधनुर्लतेव मधु ॥ १९ ॥

पुनः अपरसुरतस्य आदौ प्रारम्भे इत्यर्थः आसन् । प्रथममौत्सुक्या-तिशयात् विना मानं रुदितं प्रसादश्च सुरतमभूत्, ततश्च मानादीना-मवसर इति भावः ॥ १६ ॥

पूर्वेति । पूर्वमहीधरस्य उदयाचलस्य शिखरे समासन्नस्य सन्नि-हितस्य मिहिरस्य सूर्य्यस्य करेण किरणेन कलितम् आक्रान्तम् इदं तमः अन्धकारं शूलप्रोतं शूलेण शूलविद्धमिति यावत् अतएव सरुधिरं रक्ताक्तम् अन्धकस्य असुरभेदस्य वपुरिव शरीरमिव आभाति राजते । प्रातःकालवर्णनमिदम् । एतेन सूर्य्यसदृशः पतिस्ते आगत्य अन्धकासुरमिव ते उपनायकम् आक्रमिष्यति शीघ्रं शयनादेनं निःसारयेति, प्रातःकालो लसत्तदिदानीं शयनं मुञ्चेति च कस्यचित् कस्याश्चिद्वा कमपि कामपि च प्रति भङ्ग्या उक्तिरियम् ॥ १७ ॥

परिवृत्तेति । हे अलसाक्षि ! मन्थरनयने ! गर्भभरादिति भावः, परिवृत्तः परिपुष्टः पूर्ण इति यावत् नाभिर्यस्य तथोक्तं, लुप्ताः तिस्रो वलयः यस्य तथाभूतं श्यामस्तनाग्रं कृष्णचूचुकं बहवः धवलाः जघने कटिपुरोभागे रेखाः नखचिह्नानि यस्य तादृशं वपुः शरीरं पूर्णगर्भ-मिति भावः, पुरुषायितं विपरीतरतं न सहते । एतस्यामवस्थायां विपरीतरतिर्न विधेयेति नायिकां प्रति सख्या उक्तिरियम् ॥ १८ ॥

प्रारब्धेति । कोमलाङ्गि ! ज्यां मौर्वीम् अर्पयितुं योजयितुं नमिता कुसुमास्त्रस्य कामस्य धनुर्लता मधु मकरन्दमिव त्वं प्रारब्ध

पुंसां दर्शय सुन्दरि मुखेन्दुमीषत्त्रपामपाकृत्य ।
जायाजित इति रूढा जनश्रुतिर्मे यशो भवतु ॥ २० ॥
प्रसरतु शरत्त्रियामा जगन्ति धवलयतु धाम तुहिनांशोः ।
पञ्जरचकोरिकाणां कणिकाकल्पोऽपि न विशेषः ॥ २१ ॥
प्रथमागत सोत्कण्ठा चिरचलितेयं विलम्बदोषे तु ।
बध्नन्ति साङ्कुरागाः पथि तरवस्तव समाधानम् ॥ २२ ॥

त्रिभुवनं सुरतं यथा तथाभूता एव स्वेदजलं किं कथं वहसि ? नायिकां प्रति नायकस्योक्तिरियम् । उपमालङ्कारः ॥ १९ ॥

पुंसामिति । हे सुन्दरि ! ईषत् अल्पं त्रपां लज्जाम् अपाकृत्य विहाय पुंसाम् अन्येषां पुरुषाणां मुखेन्दुं मुखचन्द्रं दर्शय । कथमङ्ग-अपरपुरुषाणां मुखं दर्शयामीत्याह जायाजित इति, जायया भार्य्यया जितः वशीकृतः इति रूढा सर्वजनप्रसिद्धा जनश्रुतिर्लोकवादः मे मम यशः कीर्त्तिर्भवतु । सर्व एव मां स्त्रीजित इति निन्दन्ति किन्तु तैः स्त्रियास्तव मुखचन्द्रे दृष्टे सति सा मम निन्दा यशसे परिणमतीति कस्यचित् नायिकायाः स्तुतिरियम् ॥ २० ॥

प्रसरत्विति । शरदः त्रियामा रात्रिः प्रसरतु स्फुरतु, तुहिनांशोश्चन्द्रस्य धाम मयूखः जगन्ति धवलयतु श्वेतीकरोतु, किन्तु पञ्जरचकोरीणां पञ्जरबद्धचकोरीणां कणिकाकल्पः कणामात्रादीषदूनोऽपि विशेषः न । मदर्थं दूत्यास्त्येषा, तथाच उपनायकानुपक्षोऽस्ति, किन्तु गुरुनिरुद्धया मम न सम्यक् चरितार्थतेति कस्याश्चित् स्वात्मनि खेदवर्णनमिदम् । अप्रस्तुतप्रशंसालङ्कारः ॥ २१ ॥

प्रथमागतेति । हे प्रथमागत ! पूर्वमुपस्थित ! इयं तव कान्ता सोत्कण्ठा त्वद्दर्शनोत्सुका सती चिरचलिता बहुक्षणं प्रस्थिता । तर्हि कथं विलम्ब इत्याह विलम्बेति, विलम्बदोषे तु पथि स्थिता इति शेषः साङ्कुरागा अङ्कुरविशेषपर्णचिह्निताः तरवः तव समाधानं सम्यक् बोधनं सान्त्वनवचनमिति यावत् बध्नन्ति । तत्रापि स्थितानां

पतितेऽंशुके स्तनार्पितहस्तां तां निबिडजघनपिहितोरुम् ।
रदपदविकलितफूत्कृतिशतधुतदीपां मनः स्मरति ॥२३॥
परितः स्फुरितमहौषधिमणिनिकरे केलितल्प इव शैले ।
काञ्चीगुण इव पतितः स्थितैकरत्नः फणी स्फुरति ॥२४॥
प्रावृषि शैलश्रेणीनितम्बमुज्झन्दिगन्तरे भ्रमसि ।
चपलान्तर घन किं तव वचनीयं पवनवश्योऽसि ॥२५॥

इत्यायां त्वद्गमनेच्छ अनया समाश्लिष्टत्वात् तेषु अस्या अनुरागः संसक्त इति भावः । कथमनया चिरायितमिति वादिनं नायकं प्रति सख्याः समाधानमिदम् ॥ २२ ॥

पतित इति । अंशुके वसने पतिते सगात्मात् स्खलिते सति स्तनयोरर्पितौ हस्तौ यया तथाभूतां, निबिडेन घनेन जघनेन पिहितोरुम् आच्छादितोरुदेशां रदपदेन दन्तक्षतेन विकलिताः अस्पष्टा इत्यर्थः या फूत्कृतयः तासां शतेन धुतः कम्पितः दीपः यया तादृशीं लज्जाभयादिवशादिति भावः तां कान्तां मनः स्मरति । कथं त्वया एवं विकटाचित्तेन स्थितमिति पृच्छन्तं सखायं प्रति कस्यचित् निजकान्तास्मरणकथनमिदम् ॥ २३ ॥

परित इति । परितः सर्वतः स्फुरिताः महौषधयः मणिनिकराश्च यस्मिन् तथाभूते केलितल्प इव क्रीडापर्यङ्क इव शैले काञ्चीगुण इव रसनाकलाप इव स्थितम् एकं रत्नं यस्मिन् तथाविधः फणी भुजङ्गः स्फुरति तिष्ठति । सङ्केतनिकेतने उपनायकस्तिष्ठति शीघ्रं त्वया गन्तव्यमिति नायिकां प्रति दूत्या अपरेषां तत्र गमने भयप्रदर्शनपूर्वकं वचनमिदम् ॥ २४ ॥

प्रावृषीति । चपलं चञ्चलम् अन्तरम् अन्तःकरणं स्वभावश्च यस्य तत्सम्बुद्धौ, हे घन ! मेघ ! प्रावृषि वर्षाकाले शैलश्रेणीनां नितम्बम् उज्झन् त्यजन् दिगन्तरे देशान्तरे इति ध्वनिः भ्रमसि, तव वचनीयं वाच्यं किम् ? न किमपीत्यर्थः, त्वं पवनस्य वायोः वश्यः वशङ्गतः

प्रतिदिवसक्षीणदशस्तवैष वसनाञ्चलोऽतिकरकष्टः।
निजनायकमतिकृपणं कथयति कुग्राम इव विरलः॥२६॥

पथिक कथं चपलोज्ज्वलमम्बुदजलबिन्दुनिवहमविषह्यम्।
मयपुरकनकद्रवमिव शिवशरशिखिभावितं सहसे॥२७॥

पथिकं श्रमेण सुप्तं दरतरला तरुणि सुमधुरच्छाया।
व्यालम्बमानवेणिः सुखयसि शाखेव सारोहा॥ २८॥

यथा, वायुना यत्र त्वं नीयसे तत्रैव त्वं गच्छसीत्यर्थः। वस्तुमि पराधीनं नायकं वर्षासु विदेशवासिनं प्रति कस्याश्चित् नायिकायस्या उक्तिरियम्। अप्रस्तुतप्रशंसालङ्कारः॥ २५॥

प्रतिदिवसेति। प्रतिदिवसं क्षीणा दशा प्रान्तदेशः अवस्था च यस्य तथोक्तः, अतिशयेन कराभ्यां कष्टः करेण राजस्वेन क्लेशितश्च विरलः अल्पः क्षुद्र इति यावत् अल्पजनवसतिश्च तव एषः वसना-ञ्चलः कुग्राम इव निजनायकं निजपतिं ग्रामाधिपतिञ्च कृपणं दरिद्रं नीचस्वभावञ्च कथयति सूचयति। उपमालङ्कारः॥ २६॥

पथिकेति। हे पथिक! चपलया विद्युता उज्ज्वलम् अवि-षह्यं सोढुमशक्यम् अम्बुदजलबिन्दुनिकरं मेघजलकणसङ्घं शिवस्य शरशिखिना शराग्निना भावितं सन्तापितं मयपुरायां मयदानव-निर्मितानां गगनमध्यस्थितानां पुराणां त्रयाणामिति भावः कनक-द्रवमिव काञ्चनद्रवमिव कथं सहसे। वर्षासु कथं पान्थस्त्वया स्थीयते अतिदुःसह एष कालः, तत् सत्वरं गृहं गत्वा प्रियया सङ्गच्छस्वेति वक्तारं प्रति कस्यचिदुक्तिः, पान्थं प्रति कस्याश्चित् कामिन्या उक्तिर्वा॥ २७॥

पथिकमिति। हे तरुणि! दरतरला ईषच्चञ्चला मदनावेशेन वायुवेगेन च सुमधुरा छाया कान्तिः अनातपप्रदेशश्च यस्यास्तथा-भूता व्यालम्बमाना विशेषेण लम्बमाना वेणिः केशपाशः शिखा च यस्यास्तथाविधा तथा सारोहा आरोहेण आरोहणालङ्कारवता

प्रददाति नापरासां प्रवेशमपि पीनतुङ्गजघनोरुः ।
या लुप्तकीलभावं याता हृदि वज्रिहृदयस्यापि ॥ २९ ॥
प्रातर्निद्राति यथा यथात्मजा लुलितनिःसहैरङ्गैः ।
जामातरि मुदितमनास्तथा तथा सादरा श्वश्रूः ॥ ३० ॥
प्रणयचलितोऽपि सकपटकोपकटाक्षैर्मयाहितस्तम्भः ।
त्रासतरलो गृहीतः सहासरभसं प्रियः कण्ठे ॥ ३१ ॥

यत्र वर्त्तते इति तथोक्ता याचेव अनेन रूप्तं पथिकं सुखवति सुखी-करोति । उपमालङ्कारः ॥ २८ ॥

प्रददातीति । वज्रिहृदयस्यापि वाह्यतः अप्रकाशमानापीति यावत् हृदि मनसि लुप्तस्य निखातस्य निहितस्येत्यर्थः कीलस्य तदा-ख्यस्य काष्ठादेरित्यर्थः भावं धर्मं याता प्राप्ता कीलवत् हृदयनिहितेति भावः या पीनतुङ्गजघनोरुः नारी, सा अपरासां नारीणां प्रवेशमपि किमुतावस्थानमित्यपिशब्दार्थः । न प्रददाति । कथं तस्यां समासक्तः मत्सखीं प्रति निरनुक्रोशोऽसीति वादिनीं सखीं प्रति कस्यचित् नायकस्योक्तिः । उपमालङ्कारः ॥ २९ ॥

प्रातरिति । आत्मजा कन्या लुलितानि मर्दितानि अतएव निःसहानि क्लान्तानीति यावत् तैः अङ्गैः उपलक्षणे तृतीया यथा यथा प्रातः निद्राति स्वपिति, श्वश्रूः तथा तथा सादरा आदरवती सती जामातरि मुदितमनाः प्रीतचित्ता प्रसन्नेत्यर्थः भवतीति शेषः । दुहितुः पतिवाल्लभ्यदर्शनेन श्वश्रूस्तुष्यतीति भावः । कथं मे श्वश्रूर्मयि न स्निह्यतीति वादिनं प्रति कस्याश्चित् सख्या नायिकायां सुरतातिप्र-सक्तकरणोपदेशवचनमिदम् ॥ ३० ॥

प्रणयेति । प्रणयात् चलितः भ्रष्टोऽपि मत्प्रणयं त्यक्त्वा प्रस्था-तुमुद्यतोऽपीति भावः मया सकपटेन सव्याजेन कोपकटाक्षेण आहितः अर्पितः स्तम्भः गतिराहित्यमित्यर्थः यस्य तथाभूतः मत्-कटाक्षपातेन गन्तुमशक्त इति भावः त्रासेन मम कोपभयेन तरलः

प्रियदुर्णयेन हृदय स्फुटसि यदि स्फुटनमपि तव श्लाघ्यम् ।
तत्केलिसमरतल्पीकृतस्य वसनाञ्चलस्येव ॥ २२ ॥

पवनोपनीतसौरभदूरोदकपूरपद्मिनीलुब्धः ।
अपरीक्षितस्वपक्षो गन्ता हन्तापदं मधुपः ॥ २३ ॥

प्रेमलघूकृतकेशववक्षोभरविपुलपुलककुचकलशा ।
गोवर्धनगिरिगुरुतां मुग्धवधूर्निभृतमुपहसति ॥ २४ ॥

चञ्चलः चार्त्त इति यावत् प्रियः कान्तः सहासरभसं सहासं सवेगं सहर्षं वेत्यर्थः कण्ठे स्फोतः चाविष्कृत इत्यर्थः मयेति शेषः । नायिकायाः सखीं प्रति वचनमिदम् ॥ २१ ॥

प्रियेति । हे हृदय ! प्रियस्य दुर्णयेन दुराचारेण अन्यासक्तरूपेणेति भावः स्फुटसि यदि विदीर्य्यसे चेत् तदा तस्य प्रियस्य केलिसमये सुरतसंग्रामे तल्पीकृतस्य शय्यात्वेन स्थापितस्य वसनाञ्चलस्येव वस्त्रप्रान्तस्येव तव तत् स्फुटनमपि श्लाघ्यं प्रशस्यम् । कस्याश्चित् पत्युर्दुश्चेष्टितदर्शनेन खेदोक्तिः । उपमालङ्कारः ॥ २२ ॥

पवनेति । हन्तेति खेदे । पवनेन वायुना उपनीतम् उपस्थापितं सौरभं यस्याः तथोक्ता दूरोदकपूरे विप्रकृष्टजलाशये स्थितेति भावः या पद्मिनी तस्यां लुब्धः मधुपः भ्रमरः अपरीक्षितः अविचारितः स्वस्य पक्षः पतत्रं सहायश्चेति ध्वनिः येन तथाभूतः दुर्बलपक्ष इति भावः आपदं गन्ता प्राप्स्यतीत्यर्थः । दुर्बलसहायस्य महाजनस्पृहवर्त्तिन्यां महिलायां लोभो विपद्धेतुरिति भावः । अप्रस्तुतप्रशंसालङ्कारः ॥ २३ ॥

प्रेमेति । प्रेम्णा लघूकृतस्य केशवस्य कृष्णस्य वक्षसि भरेण भारत्वेन विपुलं प्रभूतं पुलकं ययोस्तथाभूतौ कुचकलशौ यस्यास्तथोक्ता मुग्धा सुन्दरी वधूः गोपाङ्गनेति यावत् गोवर्द्धनस्य तदाख्यस्य गिरेः पर्वतस्य गुरुतां भारवत्त्वं निभृतं गूढम् उपहसति । यथा गोवर्द्धनधरो मयापि धृतः, तदस्य भारवत्त्वं न किमपीति धियेति भावः ॥ २४ ॥

प्रियविरहनिःसहायाः सहजविपक्षाभिरपि सपत्नीभिः।
रक्ष्यन्ते हरिणाक्ष्याः प्राणा गृहभङ्गभीताभिः॥ ३५॥
प्रकटयति राममधिकं लपनमिदं वक्रिमाणमावहति।
प्रीणयति च प्रतिपदं दूति शुकस्येव दयितस्य॥ ३६॥
प्रविशन्त्याः प्रियहृदयं बालायाः प्रबलयौवतव्याप्तम्।
नवनिशितदूरतरङ्गितनयनमयेनासिना पन्थाः॥ ३७॥
प्रणयापराधरोषप्रसादविश्वासकेलिपाण्डित्यैः।

प्रियेति। सहजविपक्षाभिः स्वतः शत्रुभिरपि सपत्नीभिः गृहस्य भङ्गात् ध्वंसात् भीताभिः सतीभिः प्रियस्य स्वामिनः विरहेण निःसहायाः नितरां क्षीणायाः हरिणाक्ष्याः मृगनयनायाः सपत्न्या इति भावः प्राणा रक्ष्यन्ते। यद्येषा न रक्ष्यन्ते तदास्माकं पतिरेतच्छोकेन मरिष्यतीति गृहभङ्ग इति बोध्यम्॥ ३५॥

प्रकटयति। हे दूति! शुकस्य पक्षिविशेषस्येव दयितस्य कान्तस्य इदं लपनं मुखम् अधिकं रागम् अनुरागं लौहित्यञ्च प्रकटयति विस्तारयति, वक्रिमाणं वक्रोक्तिमत्त्वं वक्रताञ्च आवहति धत्ते, प्रतिपदं प्रतिक्षणं प्रतिपदोच्चारणञ्च प्रीणयति प्रीतिं जनयति। उपमालङ्कारः। नायिकायाः सखीं प्रत्युक्तिरियम्॥ ३६॥

प्रविशन्त्येति। प्रबलं प्रकृष्टबलं सौन्दर्य्यसम्पदादिभिरिति भावः यत् यौवतं युवतीनां समूहः तेन व्याप्तं पूरितं प्रियस्य कान्तस्य हृदयं प्रविशन्त्याः बालायाः नवीनायाः नवः नूतनः निशितः तीक्ष्णः दूरतरङ्गितः दैर्घ्ययुक्तः नयनमयः नेत्रात्मकः तेन असिना खड्गेन पन्थाः प्रियहृदयप्रवेशस्येति भावः। बहुभार्य्यो मे पतिः कथं तस्याः प्रणयिनी भवेयमिति वादिनीं प्रति कटाक्षेण त्वं तं वशीकरिष्यसीति सख्या उक्तिरियम्। बहुजनाधिकृतस्य देशस्य लब्धये असिरेवोपाय इति नीतिविदः समामनन्तीति बोधसम्प्रदायः॥ ३७॥

प्रणयेति। प्रणयेन यः अपराधः प्रणयोचिताचरणमिति

रूढ़प्रेमा क्रियते किं बाला कुतुकमात्रेण ॥ ३८ ॥
पूर्वैरेव चरित्रैश्चरितैर्जरतोऽपि पूज्यता भवतः ।
मुञ्च मदमस्य गन्धाद्युवभिर्गज गञ्जनीयोऽसि ॥ ३९ ॥
प्रथमं प्रवेशिता या वासागारं कथञ्चन सखीभिः ।
न शृणोतीव प्रातः सा निर्गमनस्य सङ्केतम् ॥ ४० ॥
पूजा विना प्रतिष्ठां नास्ति न मन्त्रं विना प्रतिष्ठा च ।
तदुभयविप्रतिपन्नः पश्यतु गीर्वाणपाषाणम् ॥ ४१ ॥

भाव: तेन रोषः कोपः प्रसादः प्रसन्नता विश्वासः अवञ्चनप्रत्ययः तथा केलिषु सुरतेषु प्रावीण्यं वैचक्षण्यं तैः रूढ़ं जातं प्रेम यस्यास्तादृशी बाला स्त्रियते वशीक्रियते, कुतुकमात्रेण किं स्त्रियते ? नैवेत्यर्थः बाला केवलं वाङ्मात्रेण न वशीक्रियते अपितु तत्तदनुरूपाचरणै-रिति भावः । कथं ते सखीयं लुब्धा न मम वशं गृणीति वादिनं नायकं प्रति सख्या उक्तिरियम् ॥ ३८ ॥

पूर्वैरिति । हे गज ! मदं मदस्रावं तद्गर्वं वा मुञ्च त्यज । पूर्वैः प्राक्तनैः चरितैराचरितैरनुष्ठितैरित्यर्थः चरित्रैः जरतः स्थविर-स्यापि भवतः पूज्यता सम्मानः, साम्प्रतम् अस्य मदस्य गन्धात् युवभिः तरुणैः गञ्जनीयः तिरस्करणीयः असि । इदानीं वृद्धत्वे मदः न केनापि आद्रियते, समये एतत् सज्जमिति भावः । अप्रस्तुतप्रशंसा-लङ्कारः ॥ ३९ ॥

प्रथममिति । प्रथमं सखीभिः या कथञ्चन केनापि प्रकारेण अतिकष्टेनेति भावः वासागारं शयनमन्दिरं प्रवेशिता, सा प्रातः निर्गमनस्य शयनमन्दिरात् बहिर्गमनस्य सङ्केतम् इङ्गितं सखीभिः कृतमिति शेषः न शृणोतीव । पूर्वमज्ञातनायकासङ्गसुखा, इदानीन्तु विज्ञातनायकासङ्गसुखा नायकासङ्गं त्यक्तुं नेच्छतीति भावः ॥ ४० ॥

पूजेति । प्रतिष्ठां विना पूजा नास्ति, मन्त्रं विना च प्रतिष्ठा नास्ति, पूजाप्रतिष्ठयोः प्रतिष्ठामन्त्रोभयपूर्वकत्वादिति भावः । तयो-

पूर्वाधिको गृहिण्यां बहुमानः प्रेमनर्मविश्वासः।
भीरधिकेयं कथयति रागं बालाविभक्तमिव॥ ४२॥

पुलकितकठोरपीवरकुचकलशाश्लेषवेदनाभिन्नः।
शम्भोरुपवीतफणी वाञ्छति मानग्रहं देव्याः॥ ४३॥

प्रिय आयातो दूरादिति या प्रीतिर्बभूव गेहिन्याः।
पथिकेभ्यः पूर्वगत इति गर्वात्सापि शतशिखरा॥ ४४॥

रुभयोः विप्रतिपन्नः विरोधी तद्ग्रामावस्थानादित्यर्थः गोवर्द्धनपाषाणं देवप्रस्तरं पश्यतु अवलोकयतु अप्रतिष्ठिते देवप्रस्तरे पूजाद्यनाचरणस्य लोकसिद्धत्वादिति भावः। अन्यच्च प्रतिष्ठां विद्यादिजनितां ख्यातिं विना पूजा सम्मानः आदरो वा नास्ति, मन्त्वं मनोविषयं ध्यानमिति यावत् विना प्रतिष्ठा सुख्यातिश्च नास्ति, एतदुभयविरोधी मयूरवेशेन चरन्तं काकं पश्यत्विति ध्वन्यते। अप्रस्तुतप्रशंसालङ्कारः॥ ४१॥

पूर्वेति। गृहिण्यां पूर्वस्मात् बाल्यपरिणयादिति भावः अधिकः गृहिण्यां पूर्वपत्न्यामिति भावः बहुमानः समधिकादरः प्रेम प्रणयः नर्म लीला विश्वासश्च अधिक इति शेषः इयम् अधिका भीः भयं रागं समासक्तिं बालया मुग्धया नवोढयेत्यर्थः विभक्तमिव विभज्य नीतमिव कथयति प्रकाशयतीत्यर्थः। उत्प्रेक्षालङ्कारः। नायकं प्रति कस्याश्चित् सख्या उक्तिरियम्॥ ४२॥

पुलकितेति। शम्भोर्हरस्य उपवीतमेव फणी भुजङ्गः पुलकितौ प्रियस्पर्शात् रोमाञ्चितौ कठोरौ कठिनौ पीवरौ यौ कुचकलशौ तयोराश्लेषेण या वेदना पीड़ा तद्भिन्नः स्तनभरनिपीड़ित इति भावः देव्याः गौर्य्याः मानग्रहं पत्यौ मानावलम्बनं वाञ्छति अभिलषति। आश्रितजनोऽपि स्वाश्रयानिष्टं कृत्वा स्वपीड़ां निवर्त्तयतीति भावः॥ ४३॥

प्रिय इति। दूरात् दूरदेशात् प्रियः कान्तः आयातः आगतः इति हेतोः गेहिन्याः स्वकान्ताभिन्नायाः या प्रीतिः सन्तोषः बभूव, सापि

पृष्ठं प्रयच्छ मा स्पृश दूरादपसर्प विहितवैमुख्य।
त्वामनुधावति तरणिस्तदपि गुणाकर्षतरलेयम्॥ ४५॥
प्रियया कुङ्कमपिञ्जरपाणिद्वययोजनाङ्कितं वासः।
प्रहितं मां याञ्चाञ्जलिसहस्रकरणाय शिक्षयति॥ ४६॥

प्रीतिः पथिकेभ्यः अन्येभ्यः प्रवासिभ्यः पूर्वमागत इति गर्वात् शत-शिखरा शतशृङ्गा बहुविस्तीर्णेति भावः। मम स्वामी यथा मामा-श्रियात् अन्यासां स्वामी तथा अन्या न यतो मत्स्वामी अपत एव सर्वेभ्यः मदर्थं समागत इति गर्वहेतुरिति भावः॥ ४४॥

पृष्ठमिति। हे गुणाकर्षक इति सम्बोधनपदमध्याहार्य्यं, विहितं कृतं वैमुख्यं विमुखता येन तत्सम्बुद्धौ, गुणाकर्षका वैमुख्येनैवाकर्ष-न्तीति प्रसिद्धिः अन्यत्र कृतौदासीन्य इत्यर्थः त्वं पृष्ठं प्रयच्छ प्रदर्शयेति भावः अन्यत्र विमुखीभवेत्यर्थः मा स्पृश करेणेति शेषः अन्यत्र न समालिङ्गनादिकं कुर्वित्यर्थः दूरात् अपसर्प अपसर दूरे तिष्ठेत्यर्थः तदपि तथापि गुणाकर्षेण रज्जुकर्षणेन अन्यत्र गुणैः सौन्दर्य्यादिभिराकर्षणेन तरला चपला अन्यत्र त्वय्यासक्तेत्यर्थः तरणिः नौका तरुणीति ध्वन्यते त्वाम् अनुधावति अनुसरति। त्वया एतस्यां वैमुख्ये प्रदर्शितेऽपि एषा त्वद्गुणाकृष्टा त्वां न त्यजतीति कस्याश्चित् सख्याः कञ्चित् नायकं प्रति उक्तिरियम्। अप्रस्तुतप्रशंसा॥ ४५॥

प्रिययेति। प्रियया प्रहितं प्रेषितं कुङ्कुमेन पिञ्जरं रञ्जित-मिति भावः पाणिद्वयस्य योजनया करयुगलयोगचिह्नेनेत्यर्थः अङ्कितं चिह्नितं वासः वसनं मां याच्ञाञ्जलिसहस्रकरणाय सहस्रप्रार्थना-ञ्जलिकरणाय शिक्षयति शिक्षितं करोति। कुङ्कुमरञ्जनात् अनु-रागिणी अहमिति पाणिद्वययोजनात् मयि कृपा विधेयेति नायि-कायाः प्रेमातिशयसद्भावो ध्वन्यते। तद्दर्शनेन च नायकस्य आत्मानं सापराधं मन्यमानस्य सख्युः समीपे वचनमिदम्॥ ४६॥

प्राचीरान्तरितेयं प्रियस्य वदनेऽधरं समर्पयति ।
प्राग्गिरिपिहिता रात्रिः सन्ध्यारागं दिनस्येव ॥ ४७ ॥
परपतिनिर्दयकुलटाशोषित शठ नेर्ष्यया न कोपेन ।
दग्धममतोपतप्ता रोदिमि तव तानवं वीक्ष्य ॥ ४८ ॥
प्राङ्गण एव कदा मां श्लिष्यन्ती मन्युकम्पिकुचकलशा ।
अंसनिषण्णमुखी सा स्नपयति वाष्पेण मम पृष्ठम् ॥४९ ॥
प्रेतैः प्रशस्तसत्त्वा साश्रु वृकैर्वीक्षिता स्खलद्ग्रासैः ।

प्राचीरेति । इयं कामिनी प्राचीरेण अन्तरिता व्यवहिता सती प्राग्गिरिपिहिता पूर्वाचलाच्छादिता रात्रिः दिनस्य मुखे सन्ध्यारागमिव प्रियस्य वदने अधरं समर्पयति, सन्ध्यारागमित्युपमानेन अधरस्य लौहित्यं व्यज्यते । उपमालङ्कारः ॥ ४७ ॥

परेति । परस्य पत्यौ निर्दयाः निष्ठुराः याः कुलटाः व्यभिचारिण्यः ताभिः शोषितः निर्दयभोगेन कृशीकृत इत्यर्थः तत्सम्बुद्धौ हे शठ ! ईर्ष्यया तासां प्रति विद्वेषेण न, कोपेन कथं त्वया तासु सङ्गतमिति क्रोधेन च न, दग्धममतया कृतेन ममायमित्यभिमानेन उपतप्ता सन्तप्ता अहं तव तानवं कार्श्यं वीक्ष्य दृष्ट्वा रोदिमि । परनारीसक्तत्या क्षीणकायं कान्तं दृष्ट्वा नायिकायाः खेदोक्तिरियम् ॥४८॥

प्राङ्गण इति । कदा कस्मिन् दिवसे सा मत्प्रियेति शेषः प्राङ्गण एव चत्वरभूमावेव एतेन विलम्बासहत्वं व्यज्यते । मां दूरादागतमिति शेषः श्लिष्यन्ती समालिङ्गन्ती मन्युना कोपेन कथमियन्ति दिनानि मां परित्यज्य स्थितोऽसीति धियेति भावः कम्पिनौ कुचकलशौ स्तनकुम्भौ यस्यास्तादृशी तथा अंसे स्कन्धे मदीये इति भावः निषण्णमुखी निहितवदना सती वाष्पेण अश्रुजलेन मम पृष्ठं स्नपयति स्नपयिष्यतीत्यर्थः । प्रोषितस्य मनोरथसनमेतत् अथवा सखायं प्रत्युक्तिरियम् ॥ ४९ ॥

प्रेतैरिति । बाला कामिनी प्रेतैः शवाधिष्ठितैः प्राणिविशेषै-

चुम्बति मृतस्य वदनं भूतमुखोल्कोचितं बाला ॥ ५० ॥
पिशुनः खलु सुजनानां खलमेव पुरो विधाय जेतव्यः ।
कृत्वा ज्वरमात्मीयं जिगाय बाणं रणे विष्णुः ॥ ५१ ॥
पिब मधुप वकुलकलिकां दूरे रसनाग्रमात्रमाधाय ।
अधरविलेपसमाप्ये मधुनि मुधा वदनमर्पयसि ॥ ५२ ॥
प्रायेणैव हि मलिना मलिनानामाश्रयत्वमुपयान्ति ।
कालिन्दीपुटभेदः कालियपुटभेदनं भवति ॥ ५३ ॥

रित्यर्थः प्रशस्तं स्तुतं सत्त्वं सामर्थ्यं यस्यास्तादृशी दृष्टैः व्याघ्रादिभिः स्खलन् मुखात् पतन् ग्रासो येषां तैः विस्मयाविष्टैरिति भावः साश्रु सनेत्रजलं शोकोद्रेकादिति भावः वीक्षिता निरीक्षिता मतो भूतानां मुखेषु या उल्का आलोकविशेषः तया ईक्षितं दृष्टं मृतस्य प्रियस्येति शेषः वदनं चुम्बति । प्रेमार्त्तानां चेतनाचेतनविचारो नास्तीति भावः ॥ ५० ॥

पिशुन इति । सुजनानां खलमेव दुर्जनमेव पुरः अग्रतः विधाय निधाय पिशुनः दुर्जनः जेतव्यः दुर्जने जेतव्ये दुर्जनसहायेन भवितव्यमिति भावः । तथाहि विष्णुः कृष्णः ज्वरम् आत्मीयं सहायं कृत्वा रणे बाणं तदाख्यमसुरं जिगाय जितवान् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५१ ॥

पिबेति । हे मधुप ! भ्रमर ! दूरे बाह्ये इति भावः रसनाग्रमात्रं जिह्वाग्रमेव आधाय अर्पयित्वा वकुलकलिकां पिब, अधरस्य निर्वापेन विलेपनमात्रेण समाप्ये परिशोषणीये स्वल्पत्वादिति भावः मधुनि मकरन्दे मुधा निरर्थकं वदनम् अर्पयसि । साम्प्रतमतिबालेयं न सुरतविमर्दक्षमा तत् सावधानेनास्यां रमस्वेति कयाचित् सख्या नायकं प्रत्युच्यते । अप्रस्तुतप्रशंसा ॥ ५२ ॥

प्रायेणेति । मलिनाः पापाशयाः कृष्णवर्णाश्च प्रायेण हि बाहुल्येनैव मलिनानां पापाशयानां स्वसमानानामिति भावः आश्रय-

पश्य प्रियतनुविघटनभयेन शशिमौलिदेहसंलग्ना ।
सुभगैकदैवतमुमा शिरसा भागीरथीं वहति ॥ ५४ ॥
पथिकवधूजनलोचननीरनदीमातृकप्रदेशेषु ।
घनमण्डलमाखण्डलधनुषा कुण्डलितमिव विधिना ॥५५॥

त्वम् उपयान्ति प्राप्नुवन्ति । तथाहि कालिन्द्याः यमुनायाः पुटभेदः चक्रम् आवर्त्तविशेष इत्यर्थः, चक्राणि पुटभेदाः स्युरित्यमरः । कालियस्य तदाख्यस्य नागस्य पुटभेदनं पत्तनं नगरमिति यावत्, पत्तनं पुटभेदनमित्यमरः । भवति । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५२ ॥

पश्येति । सुभगानां पतिवल्लभानाम् एकदैवतं मुख्यदेवी उमा शशिमौलेः हरस्य देहसंलग्ना कृतदेहावलम्बेति भावः अर्द्धाङ्गहारित्वादिति भावः सती प्रियस्य हरस्य तन्वाः शरीरस्य विघटनभयेन विच्छेदभयेन शिरसा भागीरथीं गङ्गां सपत्नीमपीति भावः वहति पश्य अवलोकय । प्रियस्य गङ्गाधरत्वात् तद्विच्छेदभयेन स्वयमपि गङ्गाधरी जातेति भावः । प्रियप्रीतिकारिणी कान्ता प्रियानुरोधात् सपत्नीमपि सेवते इति भाव: ॥ ५४ ॥

पथिकेति । पथिकानां प्रवासिनामित्यर्थः ये वधूजनाः तेषां लोचननीरैः अश्रुभिर्विरहजनितनेत्रजलैरित्यर्थः नदीमातृका नद्यम्बुजनितव्रीहिपालिताः ये प्रदेशाः तेषु, देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रममित्यमरः । विधिना दैवेन, विधिर्विधाने दैवे चेत्यमरः । आखण्डलधनुषा शक्रकार्मुकेण करणेन घनमण्डलं मेघमण्डलं मेघसङ्घः कुण्डलितमिव समाहृतमिव सङ्कुचितमिव वर्षागमे पथिकाः स्वदेशमायान्ति, प्रतिकूलो विधिस्तेषामागमनं मा भूत्, वध्वश्च तेषां चिरविरहिण्यः दुःखमनुभवन्तु, देशरक्षार्थं तासां नेत्रनीरैरेव शस्यवर्द्धिर्भवितेति मेघानुत्सारयितुमिति मेघमण्डलसङ्कोच इति भावः । उत्प्रेक्षालङ्कारः ॥५५॥

प्रतिवेशिमित्रबन्धुषु दूरात् कष्टागतोऽपि गेहिन्या ।
अतिकेलिलम्पटतया दिनमेकमगोपि गेहपतिः ॥ ५६ ॥
परपट इव रजकीभिर्मलिनो भुक्तापि निर्दयं ताभिः ।
अर्थग्रहणेन विना जघन्य मुक्तोऽसि कुलटाभिः ॥ ५७ ॥

---

## बकारादिः ।

बद्धयोषिति लाक्षारुणशिरसि वयस्येन दयित उपहसिते ।
तत्कालकलितलज्जा पिशुनयति सखीषु सौभाग्यम् ॥ १ ॥

प्रतिवेशीति । दूरात् कष्टागतोऽपि अतिकष्टेन आगतोऽपि गेहपतिः कान्तः गेहिन्या अतिशयेन केलिलम्पटतया क्रीडालालसतया प्रतिवेशिषु मित्रेषु बन्धुषु ज्ञातिवर्गेषु च मध्ये एकं दिनम् अगोपि निभृतं रक्षित इत्यर्थः । बहुदूरागतस्य पथि बहुक्लेशं प्राप्तस्य प्रथमं प्रतिवेश्यादिषु साक्षात्कारेण स्वहत्तकथनस्य लौकिकत्वेऽपि स्वचित्तवा-सत्वासक्ततया तथैव सङ्गातमिति भावः ॥ ५६ ॥

परपट इति । हे जघन्य ! नीच ! रजकीभिः मलिनः परस्य पट इव यत्नमिव ताभिः प्रसिद्धाभिः कुलटाभिः निर्दयं यथा तथा भुक्ता परकीयत्वान्निर्दयत्वमिति भावः अर्थग्रहणेनापि विना मुक्तः परित्यक्तः असि, कुलटा हि अर्थप्रियाः, तास्तु यदि कस्मिंचित् समासक्ता भवन्ति तदा तत्प्रेमवशतया न तस्मादर्थं कामयन्ते इति प्रसिद्धिः । उपमालङ्कारः ॥ ५७ ॥

---

बद्धेति । बद्धयोषिति अनेकभार्य्ये बाधया अलक्तकरागेण अरुणं रक्तं शिरः यस्य तादृशे दयिते कान्ते वयस्येन मित्रेण उप-हसिते सति तस्मिन् काले कलिता स्वीकृता लज्जा यया तादृशी

बन्धनभाजोऽमुष्याश्चिकुरकलापस्य मुक्तमानस्य ।
सिन्दूरितसीमन्तच्छलेन हृदयं विदीर्णमिव ॥ २ ॥
बलमपि वसति मयीति श्रेष्ठिनि गुरुगर्वगद्गदं वदति ।
तज्जायया जनानां मुखमीक्षितमावृतस्मितया ॥ ३ ॥
बलवदनिलोपनीतस्फुटितनवाम्भोजसौरभो मधुपः ।
आकृष्यते नलिन्या नासानिःक्षिप्तबडिशरज्जुरिव ॥ ४ ॥

सती सखीषु सौभाग्यं पिशुनयति सूचयति । बहुभार्य्योऽपि मत्कान्तः मद्गुरुचरणालक्तकरागेण शिरसि रञ्जित इति आत्मगौरवं लज्जया प्रकटयतीति भावः ॥ १ ॥

बन्धनेति । बन्धनं भजते इति तथोक्तस्य बद्धस्येत्यर्थः मुक्तं त्यक्तं मानं परिमाणं येन तथोक्तस्य अपरिचितस्येत्यर्थः अतिदीर्घस्येति यावत् अमुष्याः कान्तायाः चिकुरकलापस्य केशभारस्य सिन्दूरितः सिन्दूररञ्जितः यः सीमन्तः तच्छलेन हृदयं विदीर्णमिव । मानिनो बन्धनस्थितस्य मानशून्यस्य हृदयविदारणं भवतीति लोकप्रसिद्धिरिति च ध्येयम् । उत्प्रेक्षालङ्कारः ॥ २ ॥

बलमिति । मयि बलमपि सामर्थ्यमपि अपिशब्दः ऐश्वर्य्यगुणादिसमुच्चयः । वसति अस्तीत्यर्थः इति इत्थं श्रेष्ठिनि वणिजि गुरुर्महान् गर्वः तेन गद्गदं यथा तथा वदति सति तस्य जायया स्त्रियाः आवृतं सङ्कुचितं स्मितं हास्यं यया तथाभूतया सत्या जनानां तत्रत्यानां तत्कथां श्रुतवतामिति भावः मुखम् ईक्षितं दृष्टं हाससंवरणेन पुंस्त्वहीनोऽयमस्याः पतिरिति व्यज्यते तत् त्वयास्यां समासक्तिर्युज्यते इति कयाचित् कमपि कामुकं प्रत्युच्यते ॥ ३ ॥

बलवदिति । बलवता अनिलेन उपनीतं समीपमानीतं स्फुटितस्य विकसितस्य नवस्य अम्भोजस्य पद्मस्य सौरभं यस्य तथाभूतः मधुपः नलिन्या पद्मिन्या नासायां निःक्षिप्ता बडिशस्य मत्स्यवेधनस्य, बडिशं मत्स्यवेधनमित्यमरः । रज्जुर्यस्य तथाभूत इव आकृष्यते ।

बाणं हरिरिव कुरुते सुजनो बहुदोषमप्यदोषमिव ।
यावद्दोषं जाग्रति मलिम्लुचा इव पुनः पिशुनाः ॥ ५ ॥
बौद्धस्येव क्षणिको यद्यपि बहुवल्लभस्य तव भावः ।
भग्ना भग्ना भ्रूरिव न तु तस्या विघटते मैत्री ॥ ६ ॥

---

कश्चित् कस्याश्चित् गुणाद्याकर्णनेन तस्यां समासक्त इति ध्वन्यते । उपमाप्रस्तुतप्रशंसयोः संसृष्टिः ॥ ४ ॥

बाणमिति । हरिः कृष्णः बाणमिव बाणासुरमिव सुजनः बहुदोषमपि बहुभुजमपीति च अदोषमिव निर्दोषमिव भुजरहित-मिवेति च कुरुते । पुरा भगवान् देवकीनन्दनः स्वपौत्रमनिरुद्धं बाणासुरकन्यया उषया कन्यान्तःपुरे रहसि विहरन्तं दृष्टा बन्धना-गारं नीतं नारदमुखात् निशम्य सबलवाहनः शोणितपुरं बाणनगरं गत्वा अवरुध्य च संग्रामे बाणासुरं सहस्रबाहुं बाहुरहितं कृत्वा पौत्रमुद्दधारेति भागवतवार्त्ता । पिशुनाः दुर्जनाः पुनः मलिम्लुचा इव तस्करा इव यावद्दोषं समस्तदोषं यावद्रात्रिञ्च जाग्रति सततं दोषान् अनुसन्दधतीति भावः । श्लेषानुप्राणितोपमालङ्कारः ॥ ५ ॥

बौद्धस्येवेति । यद्यपि बौद्धस्येव बुद्धधर्मावलम्बिन इव बहु-वल्लभस्य बहुभार्य्यस्य बहूनां प्रियस्य च भावः चित्ताभिप्रायः प्रणय इति यावत् पदार्थश्च क्षणिकः अस्थिर इत्यर्थः, बौद्धमते पदार्थानां क्षणिकत्वादिति भावः । तथापि तस्याः मत्सख्या इति भावः भग्ना भग्ना अतिशयेन भग्नेत्यर्थः भ्रूरिव मैत्री न तु विघटते न तु भज्यते नापगच्छतीत्यर्थः, तस्यास्त्वयि प्रणयः स्थिर इति भावः । नायिका-सख्या नायकं प्रत्युक्तिरियम् । उपमालङ्कारः ॥ ६ ॥

---

## भकारादिः ।

भ्रमसि प्रकटयसि रदं करं प्रसारयसि तृणमपि श्रयसि ।
धिङ्मानं तव कुञ्जर जीवं न जुहोषि जठराग्नौ ॥ १ ॥

भूतिमयं कुरुतेऽग्निस्तृणमपि संलग्नमेनमपि भजतः ।
सैव सुवर्ण दशा ते शङ्के गरिमोपरोधेन ॥ २ ॥

भवति निदाघे दीर्घे यथेह यमुनेव यामिनी तन्वी ।
द्वीपा इव दिवसा अपि तथा क्रमेण प्रथीयांसः ॥ ३ ॥

भ्रमसीति । हे कुञ्जर ! गज ! भ्रमसि इतस्ततः पर्य्यटसि, रदं दन्तं प्रकटयसि प्रकाशयसि, करं शुण्डं प्रसारयसि विस्तारयसि, तृणमपि अन्नतक्रमितिभावः श्रयसि आश्रयमवलम्बसे, तव मानं धिक् निन्दामीत्यर्थः, धिङ् नर्भत्सनानिन्दयोरित्यमरः । जीवं जीवनं जठराग्नौ न जुहोषि, तव एताह्रग्नीचवृत्तस्य जठराग्निना शरीरपोषणेन मरणं वरमिति भावः । स्वोदरपूरणार्थं नीचवृत्त्यवलम्बनात् मरणं श्रेय इति भावः । अप्रस्तुतप्रशंसालङ्कारः ॥ १ ॥

भूतिमिति । हे सुवर्ण । अयम् अग्निः संलग्नं स्वस्मिन् संसक्तं तृणमपि तृणमेव, अपिरत्र एवकारार्थः । भूतिं भस्म, भूतिर्भस्मनि सम्पदीत्यमरः । कुरुते, किन्तु एनम् अग्निं भजतः आश्रयतः ते तव सैव दशा अवस्था, इति गरिम्णः गौरवस्य उपरोधेन अनुरोधेन शङ्के मन्ये । महतामपकारः सहसा कर्त्तुं शक्यते न महद्भिः इति भावः ॥ २ ॥

भवतीति । इह दीर्घे निदाघे ग्रीष्मे यमुनेव यथा यामिनी रात्रिः तन्वी क्षीणा भवति ग्रीष्मसन्तापात् यमुनाया जलशोषणात् तनुत्वमिति भावः तथा द्वीपा इव दिवसा अपि क्रमेण प्रथीयांसः विशालाः भवन्तीति शेषः । चतुर्दिक्षु जलवेष्टितस्य भूभागस्य द्वीपत्वात् तस्य च समन्तात् जलशोषणात् दीर्घत्वमिति भावः । यमुनायास्तनुत्व-कथनेन चरणसञ्चरणयोग्यत्वं द्वीपानाञ्च विस्तीर्णत्वेन बहुकुञ्जादि-निभृतस्थानवत्त्वं यामिन्यास्तनुत्वेन तस्यां स्वैरविहारस्यायोग्यत्वं

भवता महति स्नेहानलेऽर्पिता पथिक हेमगुटिकेव।
तन्वी हस्तेनापि स्प्रष्टुमशुचैर्न सा शक्या॥ ४॥
भूमिलुलितैककुण्डलमुत्तंसितकाण्डपटमियं मुग्धा।
पश्यन्ती निःश्वासैः क्षिपति मनोरेणुपूरमपि॥ ५॥
भवतालिङ्गि भुजङ्गी जातः किल भोगिचक्रवर्त्ती त्वम्।
कञ्चुक वनेचरीस्तनमभिलषतः स्फुरति लघिमा ते॥६॥

दिवसस्य च दीर्घत्वेन तत्रैव तदयोग्यत्वमिति व्यङ्ग्या सङ्केतस्थानं द्वीप इति कश्चिच्चित् कमपि प्रति कश्चित् कामपि प्रति वा भङ्ग्या उक्तिरियम्। उपमालङ्कारः॥ ३॥

भवतेति। हे पथिक! प्रवासिन! भवता महति स्नेहानले प्रेमवह्नौ एतेन त्वत्प्रेमतदुःसहत्वं व्यज्यते। अर्पिता स्थापिता हेमगुटिकेव सा तन्वी त्वद्विरहक्षीणेति भावः। अशुचैः दुष्टैः हस्तेनापि किमुतान्याङ्गेनेत्यपिशब्दार्थः। स्प्रष्टुं न शक्या। यथा वह्नौ निक्षिप्ता स्वर्णगुटिका मद्यपैः पुरुषैः अपवित्रैः स्प्रष्टुं न शक्यते तथा भवत्प्रणयिनी सा न केनापि धर्षयितुं शक्यते इति निष्कर्षः। स्वकान्ता परासक्तां सम्भावयन्तं प्रवासागतं प्रति सख्या उक्तिरियम्। उपमालङ्कारः॥ ४॥

भूमीति। इयं मुग्धा बाला भूमौ लुलितं लुण्ठितम् एकं कुण्डलं कर्णभूषणं यस्मिन् तत् तथा उत्तंसितः उत्क्षिप्तः काण्डपटः जवनिका यस्मिन् तत् यथा तथा पश्यन्ती अवलोकयन्ती मामिति शेषः, निःश्वासैः भाविविरहजनितैरिति भावः, मनोरेणुपूरमपि चित्तरूपं रजःसमूहमपि क्षिपति, मयि मनः प्रापयतीति भावः। कस्यचित् सखायं प्रति विदेशागमनसमये स्वकान्तायाः अवस्थावर्णनमिदम्॥ ५॥

भवतेति। हे कञ्चुक! भवता भुजङ्गी सर्पी वेश्या च आलिङ्गि आलिङ्गिता, अतएव त्वं भोगिनां भुजङ्गानां चक्रे समूहे मध्ये

भैक्षभुजा पल्लीपतिरिति सुतस्तद्वधूसुदृष्टेन।
रक्षक जयसि यदेकः शून्ये सुरसद्मसि सुखमस्मि॥ ७॥

भोगासक्तस्य रक्षां दृङ्मात्रेणैव कुर्वतोऽनभिमुखस्य।
वृद्धस्य प्रमदापि श्रीरपि भृत्यस्य भोगाय॥ ८॥

भवितासि रजनि यस्यामध्वश्रमशान्तये पदं दधतीम्।
स बलाद्दलयितजङ्घाबद्धां मामुरसि पातयति॥ ९॥

इत्यर्थः वर्त्तते इति तयोक्तः भोगासक्तानां श्रेष्ठश्च जातः, किन्तु वनेचरी व्याधकान्ता तस्याः स्तनम् अभिलषतः आकाङ्क्षतः ते तव आविला लाघवं स्फुरति प्रकाशते। इतरनारीसक्तं कञ्चित् प्रति कस्याश्चिदुक्तिः। अप्रस्तुतप्रशंसालङ्कारः॥ ६॥

भैक्षेति। भैक्षभुजा भिक्षान्नभोजिना केनचित् तस्य पल्लीपतेः वध्वा कान्तया सुदृष्टेन साभिलाषमवलोकितेन सता पल्लीपतिः इतीत्थं स्तुतः प्रशंसितः यथा, हे रक्षक! त्वं जयसि सर्वोत्कर्षेण वर्त्तसे, यद् यतः एकः असहायः अहं शून्ये निर्जने सुरसद्मसि देवमन्दिरे सुखम् अकुतोभयमित्यर्थः यथा तथा अस्मि वसामीत्यर्थः तवानुभावा-दिति भावः। एतेन सुरमन्दिरे मया एकाकिना स्थीयते, त्वया तत्र निःशङ्कं गन्तव्यमिति पल्लीपतिपत्नीं प्रति भिक्षुकस्य सङ्केतः॥ ७॥

भोगासक्तस्येति। भोगासक्तस्य भोक्तुमशक्नुवतः दृङ्मात्रेणैव एवकारेणान्यप्रकारव्यवच्छेदः। रक्षां कुर्वतः अनभिमुखस्य अनासक्तस्य अनवहितस्येति यावत् वृद्धस्य प्रमदा प्रकृष्टमदशालिनी कान्तापि श्रीरपि सम्पदपि भृत्यस्य दासस्य भोगाय भवतीति शेषः॥ ८॥

भवितासीति। हे रजनि! यस्यां त्वयि अध्वश्रमस्य शान्तये अपनयनाय पदं दधतीं चरणसेवां कुर्वतीमिति भावः मां स मम कान्त इति शेषः बलात् बलमाश्रित्येत्यर्थः दलयितया जङ्घया बद्धां संयतां कृत्वेति शेषः उरसि वक्षसि पातयति पातयिष्यतीत्यर्थः सा त्वं भवितासि? प्रोषितभर्त्तृकायाः समाशंसनमेतत्॥ ९॥

भूषणतां भजतः सखि कषणविशुद्धस्य जातरूपस्य।
पुरुषस्य च कनकस्य च युक्तो गरिमा सरागस्य ॥ १० ॥

भस्मपरुषेऽपि गिरिशे स्नेहमयी त्वमुचितेन सुभगासि।
मोघस्त्वयि जनवादो यदोषधिप्रस्थदुहितेति ॥ ११ ॥

भयपिहितं बालायाः पीवरमूरुद्वयं स्मरोन्निद्रः।
निद्रायां प्रेमार्द्रः पश्यति निःश्वस्य निःश्वस्य ॥ १२ ॥

भूषणतामिति। हे सखि! भूषणताम् अलङ्कारतां भजतः सद्गुणादिशालित्वेन अलङ्कारवत् शोभमानस्येति भावः कटककुण्डलादिरूपत्वं भजतश्च कषणेन चिरसङ्गत्या विशुद्धस्य सुचरितत्वेन विश्वासस्येत्यर्थः कषणेन प्रस्तरविशेषघर्षणेन विशुद्धस्य विज्ञातोत्कर्षस्य च जातरूपस्य सुरूपस्य तदाख्यस्य च चामीकरं जातरूपमित्यमरः। सरागस्य अनुरागवतः रक्तवर्णस्य च, पुरुषस्य च कनकस्य काञ्चनस्य च गरिमा गौरवम् आदर इत्यर्थः भारवत्त्वञ्च युक्तः उचितः। गुणा एव गौरवस्याधानानीति भावः। दीपकालङ्कारः ॥ १० ॥

भस्मेति। स्नेहमयी प्रेमप्रचुरेति यावत् त्वं भस्मना परुषे कठोरदेहेऽपीति यावत् गिरिशे हरे पर्वतीये चेति ध्वनिः उचितेन योग्यतयेत्यर्थः सुभगासि अतिरम्याभासि, ओषधीनां प्रस्थाः सानूनि यत्र तस्य पर्वतराजस्येत्यर्थः, दुहितेति यत् अयं त्वयि जनानाम् अपवादः मोघः विफलः अलीक इत्यर्थः त्वया स्वगुणेनैव तादृशः पतिर्वशीकृतः पर्वतकन्यात्वेन तव निर्गुणत्वापवादो व्यर्थ एवेति भावः ॥११॥

भयेति। स्मरेण कामावेशेन उन्निद्रः निद्रारहितः प्रेमार्द्रः प्रेम्णा कोमलचित्त इति भावः एतेन बलात्कारासुख्यं सूच्यते। कश्चित् बालायाः नवोढायाः भयेन कान्तस्य बलप्रयोगादिति भावः पिहितम् आच्छादितं पीवरं स्थूलम् ऊरुद्वयं निद्रायां स्वप्नदशायां निःश्वस्य निःश्वस्य अभिलषितसम्पादनाभावदुःखादिति भावः पश्यति अवलोकयति ॥ १२ ॥

भ्रमरीव कोषगर्भे गन्धहृता कुसुममनुसरन्ती त्वाम्।
अव्यक्तं कूजन्ती सङ्केतं तमसि सा भ्रमति॥ १३॥

भ्रामं भ्रामं स्थितया स्नेहे तव पयसि तत्र तत्रैव।
आवर्त्तपतितनौकायितमनया विनयमपनीय॥ १४॥

भ्रमयसि गुणमयि कण्ठग्रहयोग्यानात्ममन्दिरोपान्ते।
हालिकनन्दिनि तरुणान् ककुद्मिनो मेढ़िरज्जुरिव॥ १५॥

भ्रमरीति। कोषगर्भे कोषाभ्यन्तरे गन्धेन सौरभेण गुणकीर्त्त्या च हृता आकृष्टा कुसुमम् अनुसरन्ती भ्रमरीव सा तमसि अन्धकारे त्वाम् अनुसरन्ती अन्विष्यन्ती अव्यक्तम् अस्फुटं लोकभयादिति भावः कूजन्ती नदन्ती सङ्केतं सङ्केतस्थानं भ्रमति। उपमालङ्कारः। उपनायकं प्रति अभिसारिकासख्या उक्तिरियम्॥ १३॥

भ्रामंमिति। तव तत्र तत्र स्नेहे एव पयसि भ्रामं भ्रामं भ्रमित्वा भ्रमित्वा स्थितया अनया कान्तया विनयं शिष्टाचारं लज्जाभयादि-रूपमित्यर्थः अपनीय विहाय आवर्त्तो जलभ्रमे, स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः, पतिता या नौका तद्वत् आचरितम्। यथावर्त्तपतिता नौका आवर्त्तमध्य एव भ्रमति न ततो निष्क्रामति, तथा त्वत्प्रेम-वशवर्त्तिनीयं नान्यं पुरुषं कामयते इति सख्या नायकं प्रत्युक्ति-रियम्। उपमालङ्कारः॥ १४॥

भ्रमयसीति। हे गुणमयि! सौन्दर्य्यादिगुणशालिनि! तन्तुमयि च हालिकनन्दिनि! एतेन कललज्जाभयादिराहित्यं द्योत्यते। मेढ़िः पशुबन्धनार्थं खले न्यस्तदारुविशेषः, पुंसि मेढ़िः खले दारु न्यस्तं यत् पशुबन्धने इत्यमरः। तत्र बद्धा रज्जुः ककुद्मिनः वृषभानिव आत्ममन्दिरस्य उपान्ते समन्तादित्यर्थः कण्ठग्रहयोग्यान् कण्ठालिङ्ग-नोचितान् तरुणान् युनः भ्रमयसि। गुणमयीति पाठे गुणमयाश्च कण्ठग्रहणयोग्याश्चेति तानित्यर्थः॥ १५॥

भालनयनेऽग्निरिन्दुर्मौलौ गात्रे भुजङ्गमणिदीपाः।
तदपि तमोमय एव त्वमीश कः प्रकृतिमतिशेते॥ १६॥

---

## मकारादिः।

मधुमदवीतव्रीड़ा यथा यथा लपति सम्मुखं बाला।
तन्मुखमजाततृप्तिस्तथा तथा वल्लभः पिबति॥ १॥
मित्त्रैरालोच्य समं गुरु कृत्वा कदनमपि समारब्धः।
अर्थः सतामिव हृतो मुखवैलक्ष्येण मानोऽयम्॥ २॥

भालेति। हे ईश! तव भालनयने ललाटनेत्रे वह्निः, मौलौ इन्दुः चन्द्रः, गात्रे भुजङ्गानां सर्पाणां मणय एव दीपाः, तदपि त्वं तमोमय! तिमिरमयः तमोगुणमयश्च तथाहि को जनः प्रकृतिं स्वभावम् अतिशेते अतिक्रम्य वर्त्तते? न कोऽपीत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ १६॥

---

मधित्वति। बाला नवोढ़ा कामिनी मधुमदेन मधुपानजनितेन उल्लासेन वीता विगता व्रीड़ा लज्जा यस्यास्तथाभूता सती यथा यथा सम्मुखं लपति वक्ति, वल्लभः कान्तः तथा तथा अजाततृप्तिः सन् तस्या मुखं पिबति सादरं पश्यतीत्यर्थः॥ १॥

मित्त्रैरिति। मित्त्रैः बन्धुभिः सखीभिश्च समं सह आलोच्य कर्त्तव्यत्वेन विचार्य्य गुरु महत् कदनं क्लेशं कृत्वापि समारब्धः समाश्रितः प्रस्तुतश्च अयं मानः प्रियं प्रति कोपः सतां साधूनाम् अर्थ इव कार्य्यमिव मुखवैलक्ष्येण वदनवैलक्षण्येन प्रसादरूपेणेति भावः हृतः विनाशितः। एतादृशमानो न विधेयः, यः क्षणेनैवापगच्छतीति काञ्चित् प्रति सख्या उक्तिः। उपमालङ्कारः॥ २॥

मम रागिणो मनस्विनि करमर्पयतो ददासि पृष्ठमपि ।
यदि तदपि कमलबन्धोरिव मन्ये स्वस्य सौभाग्यम् ॥३॥
मा स्पृश मामिति सकुपितमिव भणितं व्यञ्जिता न च व्रीड़ा
आलिङ्गितया सस्मितमुक्तमनाचार किं कुरुषे ॥ ४ ॥
मूलानि च निचुलानां हृदयानि च कूलवसतिकुलटानाम् ।
मुदिरमदिरा प्रमत्ता गोदावरि किं विदारयसि ॥ ५ ॥

ममेति । हे मनस्विनि ! प्रशस्तान्तःकरणे ! रागिणः अनुराग-
वतः लौहित्यवतश्च करं हस्तं किरणञ्च अर्पयतः ददतः मम यदि
पृष्ठमपि ददासि दर्शयसि लज्जावशात् मुखपरावर्त्तनादिति भावः,
तदपि तथापि त्वदसम्मुख्येऽपि कमलबन्धोरिव सूर्य्यस्येव स्वस्य
आत्मनः सौभाग्यं मन्ये । लज्जावशात् तव पराङ्मुख्येऽपि मम
चरितार्थता किमु सम्मुखावलोकने इति भावः ॥ ३ ॥

मेति । मां मा स्पृश इति सकुपितमिव सक्रोधमिव इवशब्देन
कोपस्यातात्त्विकत्वं सूच्यते । भणितम् उक्तं न च व्रीड़ा लज्जा
व्यञ्जिता प्रकटिता, आलिङ्गितया तु हे अनाचार ! दुराचार !
किं कुरुषे, इति सस्मितम् उक्तञ्च । कञ्चित् नायकं प्रति पुष्पवत्याः
कान्तायाः उक्तवचनमिदम् ॥ ४ ॥

मूलानीति । हे गोदावरि ! त्वं मुदिराः मेघाः एव मदिराः
मधूनि ताभिः प्रमत्ता प्रकृष्टमदवती मेघाम्बुपूर्णत्वादिति भावः सती
निचुलानां वेतसतरूणां हिज्जलानां वा मूलानि च कूलं वसतिर्यासां
तथाभूताः याः कुलटाः व्यभिचारिण्यः तासां हृदयानि च किं कथं
विदारयसि ? कुलटानां तत्कूलतरुमूलान्येव सङ्केतस्थानानि, त्वदी-
यजलवृद्ध्या तेषां मूलोत्पाटनं तेन च तासां हृदयविदारणं कृतमिति
भावः ॥ ५ ॥

मलयद्रुमसाराणामिव धीराणां गुणप्रकर्षोऽपि ।
जडसमयनिपतितानामनादरायैव न गुणाय ॥ ६ ॥
मधुमथनमौलिमाले सखि तुलयसि तुलसि किं मुधा राधाम् ।
यत्तव पदमदसीयं सुरभयितुं सौरभोद्भेदः ॥ ७ ॥
मयि यास्यति कृत्वावधिदिनसंख्यं चुम्बनं तथाश्लेषम् ।
प्रिययानुशोचिता सा तावत्सुरताक्षमा रजनी ॥ ८ ॥

मलयेति । जडानां मूर्खाणां समये समाचारे. समयाः शपथाचारकालसिद्धान्तसंविद इत्यमरः । पतितानां तदनुवर्त्तिनामिति भावः अन्यत्र जडसमये शीतकाले पतितानां मलयद्रुमसाराणामिव मलयस्थितचन्दनतरूणामिव धीराणां विदुषां गुणप्रकर्षोऽपि पाण्डित्यादिसद्गुणप्रकाशोऽपि सौरभोत्कर्षोऽपि च अनादराय एव न गुणाय न आदराय भवतीति शेषः ॥ ६ ॥

सखीति । हे मधुमथनस्य कृष्णस्य मौलिः शिरः तस्य माले सखि तुलसि ! किं कथं मुधा निरर्थकं राधां तुलयसि समीकरोषि राधया सममात्मानं मन्यसे इति भावः । यत् यतः अदसीयं पदं राधासम्बन्धिचरणं सुरभयितुं सुरभीकर्तुं तव सौरभस्य सौगन्ध्यस्य उद्भेदः प्रकाशः । कृष्णस्य सततं राधाचरणप्रणतत्वात् तव तच्छिरसि स्थितिस्तस्या राधाया एव चरणसेवनार्थेति भावः । कस्याश्चित् सुभगां स्पर्द्धमानाया गर्वहरणवचनमिदम् । अप्रस्तुतप्रशंसालङ्कारः ॥ ७ ॥

मयीति । मयि यास्यति प्रस्थास्यते इति यावत् विदेशमिति शेषः प्रियया अवधिदिनसंख्यं चुम्बनं तथा आश्लेषम् आलिङ्गनं कृत्वा तावत् सुरताक्षमा तावतां तत्संख्यकानां चुम्बनाश्लेषसंख्यकानामित्यर्थः सुरतानाम् अक्षमा अशक्ता अल्पकालीनत्वादिति भावः रजनी अनुशोचिता कथमियं शीघ्रं प्रभातेति खिन्नेति भावः । प्रोषितस्य सखायं प्रति प्रियावृत्तकथनमिदम् ॥ ८ ॥

मृगमदनिदानमटवी कुङ्कुममपि कृषकवाटिका वहति ।
हट्टविलासिनि भवती परमेका पौरसर्वस्वम् ॥ ९ ॥
मधुदिवसेषु भ्राम्यन्यथा यथा विशति मानसं भ्रमरः ।
सखि लोहकण्टकनिभस्तथा तथा मदनविशिखोऽपि ॥ १० ॥
मयि चलिते तव मुक्ता दृशः स्वभावात्प्रिये सपानीयाः ।
सत्यममूल्याः सद्यः प्रयान्ति मम हृदयहारत्वम् ॥ ११ ॥

मृगेति । अटवी अरण्यं मृगमदस्य कस्तूरिकायाः निदानम् उत्पत्तिस्थानं मृगाणामरण्यचरत्वादिति भावः, कृषकस्य वाटिका कृषिक्षेत्रमित्यर्थः कुङ्कुममपि वहति तत्रैव तदुत्पत्तेरिति भावः हे हट्टविलासिनि ! भवती एका परं केवलं पौराणां पुरवासिनां नागरिकाणामित्यर्थः सर्वस्वम् । मृगमदकुङ्कुमयोर्वन्यत्वात् प्रायेण नागरिकाणामप्राप्यत्वं तव तु नागरस्पृहणीयत्वमिति व्यतिरेकालङ्कारः । ९ ॥

सखीति । हे सखि ! मधुदिवसेषु वसन्तदिनेषु लोहकण्टकनिभः लोहकण्टकसदृशः भ्रमरः भ्राम्यन् सन् यथा यथा मानसं विशति व्यथयतीति यावत् उद्दीपकत्वादिति भावः, तथा तथा मदनस्य तादृशः विशिखोऽपि शरोऽपि । अस्मिन् कथमेकाकिन्या स्थातव्यमिति भावः । प्रोषितभर्तृकायाः सखीं प्रत्युक्तिरियम् । उपमालङ्कारः ॥ १० ॥

मयीति । हे प्रिये ! मयि चलिते प्रस्थातुमुद्यते इति यावत् स्वभावात् स्त्रीस्वभावात् सपानीयाः साश्रवः तव मुक्ताः निःक्षिप्ताः मां प्रतीति शेषः दृशः दृष्टयः अमूल्याः मूल्यरहिताः अतिचारव इति भावः अतएव सद्यः तत्क्षणात् मम हृदयहारत्वं मनोहरत्वं प्रयान्ति सत्यं तव तादृशावलोकनेन हृतचित्तोऽहं न गन्तुं शक्नोमीति भावः । अथच अमूल्या महार्घाः मुक्ताः हृदयस्य वक्षसः हारत्वं प्रयान्तीति ध्वन्यते ॥ ११ ॥

मुग्धे मम मनसि शराः स्मरस्य पञ्चापि सन्ततं लग्नाः ।
शङ्के स्तनगुटिकाद्वयमर्पितमेतेन तव हृदये ॥ १२ ॥

मधुमथनवदनविनिहितवंशीसुषिरानुसारिणो रागाः ।
हन्त हरन्ति मनो मम नलिकाविशिखाः स्मरस्येव ॥ १३ ॥

महतोः सुवृत्तयोः सखि हृदयग्रहयोग्ययोः समुच्छ्रितयोः ।
सज्जनयोः स्तनयोरिव निरन्तरं सङ्गतं भवति ॥ १४ ॥

मुग्धे इति । हे मुग्धे ! सुन्दरि ! मम मनसि स्मरस्य पञ्चापि शराः सततं निरन्तरं लग्नाः, न निर्गता इति भावः । तव हृदये एतेन स्मरेण स्तनगुटिकाद्वयमर्पितमिति शङ्के सम्भावयामि शराभावादिति भावः । गुटिकाप्रहारेण तव हृदयं न भिन्नं तेन च यत्किञ्चिद्दत्या तव धैर्य्यध्वंसो न जातः अहन्तु हृदयविद्धतया धैर्य्यविहीनः सञ्जातः तत् मामनुगृहाणेति कस्याश्चित् कामपि प्रत्युक्तिरियम् ॥ १२ ॥

मध्विति । मधुमथनस्य कृष्णस्य वदने विनिहिता विशेषेण अर्पिता या वंशी तस्याः सुषिरं छिद्रम् अनुसरन्तीति तथोक्ता रागाः स्वरविशेषाः स्मरस्य कामस्य नलिकाविशिखाः इव नालिकाख्यबाणा इव मम मनः हरन्ति हन्तेति खेदसूचकमव्ययम् । कस्याश्चित् उपनायकस्य साङ्केतिकं वेणुरवं श्रुत्वा तं प्रति गमनाय सखीं प्रत्युक्तिरियम् ॥ १२ ॥

महतोरिति । हे सखि ! महतोः उदारयोः विशालयोश्च सुवृत्तयोः सुशीलयोः सुवर्तुलयोश्च हृदयग्रहयोग्ययोः हृदयङ्गमयोः वक्षःस्थलस्थितयोश्च समुच्छ्रितयोः समुन्नतयोः सज्जनयोः स्तनयोरिव निरन्तरम् अविच्छिन्नं सङ्गतं सख्यं सम्मेलनञ्च भवति । उपमालङ्कारः ॥ १४ ॥

मम वारितस्य बहुभिर्भूयो भूयः स्वयं च भावयतः।
जातो दिशीव तस्यां सखे न विनिवर्त्तते मोहः॥ १५॥
मग्नोऽसि नर्मदाया रसे हृतो वीचिलोचनक्षेपैः।
यच्युच्यसे तरुवर भ्रष्टो भ्रंशोऽपि ते श्लाघ्यः॥ १६॥
मेनामुल्लासयति स्मेरयति हरिं गिरिं च विमुखयति।
क्षतकरबन्धविलम्बः परिणयने गिरिशकरकम्पः॥ १७॥

ममेति। हे सखे! बहुभिर्जनैः भूयो भूयः पुनः पुनः वारितस्य मा कुरु एतदिति निषिद्धस्य स्वयम् आत्मना भावयतश्च किमिदं कर्त्तव्यं न वेति चिन्तयतश्च दिशीव तस्यां कान्तायां जातः उत्पन्नः मोहः रागः भ्रमश्च न निवर्त्तते नापगच्छति। यथा दिग्भ्रान्तस्य न कस्याप्युपदेशश्रवणं तथा तस्यामासक्तं मे मनः कथमपि न निवारयितुं शक्यते इति भावः। सखायं प्रति कस्यचिदुक्तिरियम्॥ १५॥

मग्न इति। हे तरुवर! त्वं नर्मदायाः रेवाया नद्याः अथच नर्मक्रीडां ददातीति तथोक्तायाः कान्ताया इति ध्वनिः रसे जले अनुरागे च मग्नः सन् वीचयस्तरङ्गा एव लोचनानि नयनानि तेषां क्षेपैः चालनैः हृतः असि यदि त्वं भ्रष्टः विनष्टः सदाचारात् च्युतः उच्यसे कथ्यसे लोकैरिति शेषः स ते तव भ्रंशोऽपि सदाचाराद् च्युतिरपि श्लाघ्यः प्रशस्यः। एतादृशनायिकायामासक्त्या यदि ते अपकीर्त्यादिना मानहानिर्विनाशो वा स्यात् तदपि वरमिति अप्रस्तुतप्रशंसया द्योत्यते॥ १६॥

मेनामिति। क्षतः जनितः करबन्धस्य पाणिग्रहणस्य विलम्बो येन तथाभूतः गिरिशस्य हरस्य करकम्पः सत्त्वोद्रेकादिति भावः परिणयने विवाहकाले इत्यर्थः पार्वत्या इति शेषः मेनां पार्वतीमातरम् उल्लासयति आनन्दयति जामातुः कन्यां प्रत्यनुरागसूचनादिति भावः हरिं विष्णुं स्मेरयति ईषद्धसितं करोति एतादृशसत्त्वाधिनोऽपि हरस्यैतादृगवस्थादर्शनादिति भावः गिरिं हिमालयं विमु-

मधुगन्धि घर्मतिम्यत्तिलकं स्खलदुक्ति घूर्णदरुणाक्षम् ।
तस्याः कदाधरामृतमाननमवधूय पास्यामि ॥ १८ ॥

मेदिन्यां तव निपतति न पदं बहुवल्लभेति गर्वेण ।
आश्लिष्य कैर्न तरुणैस्तुरीव वसनैर्विमुक्तासि ॥ १९ ॥

मूले निसर्गमधुरं समर्पयन्तो रसं पुरो विरसाः ।
इक्षव इव परपुरुषा विविधेषु रसेषु विनिधेयाः ॥ २० ॥

क्षयति च प्राप्तुनसुख करोति च लज्जाधर्मादित भावः। महतामपि ईदृशी दशा स्यात् किमुतान्येषामिति भावः ॥ १७ ॥

मध्विति । कदा कस्मिन् काले तस्याः कान्तायाः मधुगन्धि मैरेयपानगन्धयुक्तं घर्मेण मत्तोद्रेकजनितेन स्वेदेन तिम्यत् आर्द्रतां गच्छत् तिलकं यस्य तादृशं स्खलन्ती भ्रंशमाना उक्तिः स्खलद्वचनमित्यर्थः घूर्णन्ती अरुणा रक्ते अक्षिणी नयने यस्य तथाभूतम् आननं वदनम् अवधूय अवधूय धारणावत्येत्यर्थः गृहीत्वा वा अधरामृतं पास्यामि । प्रोषितस्याशंसनवचनमिदम् ॥ १८ ॥

मेदिन्यामिति । बहूनां वल्लभा प्रिया असीति शेषः इति गर्वेण तव पदं मेदिन्यां पृथिव्यां न निपतति, वसनैर्वस्त्रैः तुरीव वस्त्रवयनयन्त्रविशेष इव कैस्तरुणैर्युवभिः आश्लिष्य आलिङ्गय न विमुक्ता न परित्यक्ता असि ? अपितु सर्वैरेव तरुणैः त्वं सकृदालिङ्गय परित्यक्ता निर्गुणत्वात्तवेति भावः, या हि गुणवती अनुरक्तकान्ता तस्या एव गर्वः युज्यते न तु बहुभोग्यतया तवेति भावः। वेश्यां प्रति कस्याश्चिदुक्तिरियम् ॥ १९ ॥

मूले इति विविधेषु बहुप्रकारेषु बहुषु च रसेषु सुरतादिषु मधुरेषु च विशेषेण निधेयाः स्थापनीयाः गणनीया इति यावत् परपुरुषा उपनायकाः इक्षव इव मूले प्रथमतः मूलभागे च निसर्गमधुरं स्वभावमनोरमं समर्पयन्तः ददतः किन्तु पुरः शेषे अग्रभागे च विरसा अनुरागवर्जिताः विस्वादाश्च भवन्तीति शेषः। अतः पर-

महति स्नेहे निहितः कुसुमं बहु दत्तमर्चितो बहुशः।
वक्रस्तदपि शनैश्चर इव सखि दुष्टग्रहो दयितः॥ २१॥
मा शबरतरुणि पीवरवक्षोरुहयोर्भरेण भज गर्वम्।
निर्मोकैरपि शोभा ययोर्भुजङ्गीभिरुन्मुक्तैः॥ २२॥
मम कुपितायाश्छायां भूमावालिङ्ग्य सखि मिलत्पुलकः।
स्नेहमयत्वमनुज्झन् करोति किं नैष मामरुषम्॥ २३॥

पुरुषरतिरापातमधुरा परं परिणामविरसा तस्मात् न तत्सङ्गः करणीय इति भावः। कस्याश्चित् परपुरुषासक्तकामां प्रति उपदेशवचनम्। उपमालङ्कारः॥ २०॥

महतीति। हे सखि! दुष्टः ग्रहः आग्रहो यस्य सः अन्यत्र दुष्टश्चासौ ग्रहश्चेति तथोक्तः शनैश्चर इव दयितः कान्तः महति स्नेहे प्रेम्णि तैले च, शनैश्चरप्रतिमायाः तैलेषु स्थापनस्य शास्त्रीयत्वादिति भावः। बहु कुसुमं दत्तं बहुशः पुनः पुनः अर्चितः आराधितश्च तदपि तथापि एवमाराधितोऽपीत्यर्थः वक्रः कुटिलः मदनुपक्षपातवश इति भावः। तत् किमत्र करोमीति भावः। सखीं प्रति कस्याश्चिदननुरक्तभर्तृकाया उक्तिरियम्। उपमालङ्कारः॥ २१॥

मेति। हे शबरतरुणि! व्याधकान्ते! पीवरयोर्विशालयोर्वक्षोरुहयोः स्तनयोर्भरेण गर्वं मा भज, भुजङ्गीभिः उरगीभिः वेश्याभिश्च निर्मुक्तैः त्यक्तैः निर्मोकैः कञ्चुकैः ययोः वक्षोरुहयोः शोभा सौन्दर्य्यम्। वेश्याभुक्तत्यक्तपुरुषैरेव तव सम्भोगः, न नवीनैरित्यतो गर्वकरणमनुचितं तवेति भावः॥ २२॥

ममेति। हे सखि! एष मत्कान्त इति शेषः कुपिताया मम भूमौ पतितामिति शेषः छायां प्रतिविम्बम् आलिङ्ग्य मिलत्पुलकः सञ्जातरोमाञ्चः सन् स्नेहमयत्वम् अनुज्झन् अत्यजन् प्रेमातिशयं प्रदर्शयन्निति भावः माम् अरुषम् अकोपां किं न करोति? अपि

मुषित इव क्षणविरहे रिपुरिव कुसुमेषुकेलिसंग्रामे।
दास इव श्रमसमये भजन्नताङ्गीं न तृप्यामि॥ २४॥
मुह्यसि किं मानवतीं व्यवसायाद् द्विगुणमन्युवेगेति।
स्नेहभवः पयसाग्निः सान्त्वेन च रोष उन्मिषति॥ २५॥
मलयजमपसार्य घनं वीजनविघ्नं विधाय बाहुभ्याम्।
स्मरसन्तापादगणितनिदाघमालिङ्गते मिथुनम्॥ २६॥

त्व परोक्षेव। कथं त्वया तादृशो मानः सहसा परित्यक्त इति वदन्तीं सखीं प्रति नायिकाया उक्तिरियम्॥ २३॥

मुषित इति। क्षणविरहे मुषित इव अपहृतसर्वस्व इव कुसुमेषुकेलिसंग्रामे कामक्रीडायुद्धे रिपुरिव, श्रमसमये दास इव किङ्कर इव नताङ्गीं यौवनभरेणेति भावः भजन् सेवमानः सन् न तृप्यामि न परितोषं लभे पुनः पुनर्भजनार्थम् इच्छामीत्यर्थः। सखायं प्रति कस्यचिद्वचनमिदम्॥ २४॥

मुह्यसीति। व्यापारात् मानभञ्जनानुकूलव्यापारात् इयं द्विगुणः मन्युवेगः कोपवेगः यस्याः तथोक्ता अनुनयेऽस्याः कोपो द्विगुणायते इति भावः इति हेतोः मानवतीम् एनामिति शेषः किं कथं मुह्यसि त्यजसि? नोचितमिदमिति भावः। कथमित्याह स्नेहेति. स्नेहेन तैलेन प्रणयेन च भवः उत्पन्नः अग्निः पयसा जलेन, सान्त्वेन अनुनयेन च रोषः उन्मिषति वर्द्धते इत्यर्थः। श्लेषमूलो दीपकालङ्कारः। नायकं प्रति सख्या उक्तिरियम्॥ २५॥

मलयजमिति। घनं सान्द्रं मलयजं चन्दनरसं ग्रीष्मसन्तापहरणाय प्रयुक्तमिति शेषः अपसार्य्य दूरीकृत्य त्यक्त्वेत्यर्थः वीजनविघ्नं विधाय व्यजनहस्ता परित्यज्येति भावः मिथुनं स्त्रीपुंसौ स्मरसन्तापात् अगणितः निदाघः ग्रीष्मः तत्सन्ताप इति भावः येन तथोक्तं सत् बाहुभ्याम् आलिङ्गते परस्परमिति शेषः। ग्रीष्मसन्तापाद् कामसन्तापोऽधिक इति भावः॥ २६॥

महतोऽपि हि विश्वासान्महाशया दधति नाल्पमपि लघवः।
संवृणुतेऽद्रीनुदधिर्निदाघनद्यो न भेकमपि॥ २७॥
मधुधारेव न मुञ्चसि मानिनि रुष्टापि माधुरीं सहजाम्।
क्षतमुखभङ्गापि रसं ददासि मम सरिदिवाम्भोधेः॥२८॥
मदनाकृष्टधनुर्ज्यांघातैरिव टङ्किनि पथिकतरुणानाम्।
वीणातन्त्रीक्वाणैः केषां न विकम्पते चेतः॥ २९॥
मम भयमस्याः कोपो निर्वेदोऽस्या ममापि मन्दाक्षम्।

महत इति। महाशयाः उदारचित्ताः गभीराश्च विश्वासात् आश्रितरक्षा कर्त्तव्येति प्रत्ययात् स्नानादिति यावत् महतोऽपि येषामाश्रयदाने महत् कष्टं सम्भवतीति तानपि किमुत क्षुद्रानित्यपि-शब्दार्थः, दधति हि आश्रयदानेन रक्षतीति भावः लघवः क्षुद्राः अल्पमपि क्षुद्रमपि न दधतीत्यनेनान्वयः। तथाहि उदधिः समुद्रः अद्रीन् मैनाकादीन् संवृणुते महाभयतोऽपि इन्द्रात् रक्षति, निदाघ-नद्यः ग्रीष्मसरितः भेकमपि मण्डूकमपि न संवृणुते इति वचनविप-रिणामेन योज्यम्। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥२७॥

मधुधारेवेति। हे मानिनि! त्वं रुष्टापि कोपकलुषितापि तीव्रापि च मधुधारेव सहजां स्वाभाविकीं माधुरीं माधुर्य्यं मनोहरत्वं मिष्टताञ्च न मुञ्चसि न त्यजसि, सरित् नदी अम्भोधेः समुद्रस्येव क्षतः मुखस्य भङ्गः वक्रिमा यया तादृशी अपि मम रसं प्रीतिं जलं ददासि। उपमालङ्कारः। मानिनीं प्रति नायकस्य उक्तिरियम्॥ २८॥

मदनेति। हे टङ्किनि! टङ्कस्वामिनि! केषां पथिकतरुणानां प्रोषितयुवकानां चेतः मदनेन आकृष्टा या धनुषः ज्या मौर्वी तस्याः आघातैरिव आघातजनितशब्दैः टङ्कारैरिवेत्यर्थः वीणातन्त्रीक्वाणैः वीणातन्त्रीनिनादैः न विकम्पते न व्यथते इत्यर्थः सर्वेषामेव व्यथते इत्यर्थः। उपमालङ्कारः॥ २९॥

ममेति। स्मितस्य संवृतिः संवरणं गोपनं तदेव नमिता कन्धरा

जातं क्व चान्तरिक्षे स्मितसंहतिनमितकन्धरयोः ॥ ३० ॥

मुक्ताम्बरेव धावतु निपततु सहसा त्रिमार्गगा वास्तु ।
इयमेव नर्मदा मम वंशप्रभवानुरूपरसा ॥ ३१ ॥

मृगमदलेपनमेनं नीलनिचोलेव निशि निषेव त्वम् ।
कालिन्द्यामिन्दीवरमिन्दिन्दिरसुन्दरीव सखि ॥ ३२ ॥

ग्रीवा याभ्यां तथाभूतयोः मध्ये मम भयम् अपराधजनितमिति भावः अस्याः कान्तायाः कोपः कथमियं मदेकप्रवणां प्रति ममैतादृशो मान इति धियेति भावः ममापि मन्दाक्षं लज्जाकृतापराधेन मया कथं सोपगन्तव्येति धियेति भावः अस्याः कान्तायाः निर्वेदः स्वाव-मानना एतादृशे प्रणयिनि कथं मयावस्था प्रदर्शितेति धियेति भावः । तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननेति दर्पणः । ते च क्वापि अन्तरिक्षे जातं गतं विलुप्तमिति भावः ॥ ३० ॥

मुक्तेति । मुक्तं त्यक्तम् अम्बरं वस्त्रम् आकाशञ्च यया तथोक्ता इव धावतु गच्छतु, सहसा निपततु, स्खलितगतिर्भवतु, निम्नं भजतु च, त्रिमार्गगा त्रयो मार्गाः पन्थानः शिष्टाः अशिष्टाः शिष्टाशिष्टाश्च आचारा इति भावः तान् गच्छतीति तथोक्ता कदाचित् शिष्टाचारिणी कदाचिदशिष्टाचारिणी कदाचिच्च उभयचारिणी वा मधुपानदशाया-मिति सर्वत्र योज्यम् । बहुमार्गगामिनी च अस्तु भवतु किन्तु इयमेव वंशप्रभवा सत्कुलजा सोमप्रभवा च, रेवा तु नर्मदा सोमोद्भवेत्यमरः । अनुरूपः सुसदृशः रसः प्रेम जलञ्च यस्यास्तथाभूता अतएव मम नर्मदा सुखदायिनी नदी च । कथमपरां विहाय मत्तामामस्यां तवासक्तिरिति वादिनीं कांचित् प्रति नायकस्य वचनमिदम् । द्वितीयार्थस्यानभिधेयत्वात् श्लेषध्वनिः ॥ ३१ ॥

मृगमदेति । हे सखि कालिन्द्यां यमुनायाम् इन्दीवरं नीलपद्मं इन्दिन्दिरसुन्दरीव भ्रमरीव त्वं निशि रजन्यां नीलः निचोलः

मम सख्या नयनपथे मिलितः शक्तो न कश्चिदपि चलितुम्।
पतितोऽसि पथिक विषमे घट्टकुटीयं कुसुमकेतोः ॥२३॥
महता प्रियेण निर्मितमप्रियमपि सुभग सह्यतां याति।
सुतसम्भवेन यौवनविनाशनं न खलु खेदाय ॥ २४ ॥
मानग्रहगुरुकोपादनु दयितात्येव रोचते मह्यम्।
काञ्चनमयी विभूषा दाहाञ्चितशुद्धभावेव ॥ २५ ॥

---

वसनं यस्यास्तथाभूतैव परिहितनीलवसनैव सती मृगमदलेपनं कस्तूरीविलेपनवन्तम् एनं कान्तं निषेव भज। अत्र सर्वेषामेव समरूपत्वात् न प्रकाशभयमिति भावः। सख्या नायिकां प्रत्युक्तिरियम् ॥२२॥

ममेति। हे पथिक! मम सख्याः नयनपथे दृष्टिमार्गे कटाक्षे इति यावत् मिलितः पतितः कश्चिदपि जन इति शेषः चलितुं न शक्तः? न समर्थः? अतः विषमे सङ्कटे पतितः असि यतः इयं मत्सखीति शेषः कुसुमेषोः कामस्य घट्टकुटी घट्टस्थितनरगृहविशेषः। एतामतिक्रम्य न केनापि गन्तुं शक्यते, तत्त्वमत्र समासक्तो भवेति दूत्याः कञ्चित् पथिकं प्रत्युक्तिरियम्। अत्र वाक्यार्थस्य हेतुत्वेन निर्देशात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। तदुक्तं दर्पणे। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति ॥ २३ ॥

महतेति। हे सुभग! महता प्रियेण निर्मितं कृतम् अप्रियमपि कर्मेति शेषः सह्यतां याति प्राप्नोति। तथाहि सुतस्य पुत्रस्य सम्भवेन उत्पत्त्या यौवनविनाशनं यौवनविध्वंसः खेदाय दुःखाय न खलु नैव। कृतापराधेन मया कथं सा गन्तव्येति वादिनं नायकं प्रति नायिकासख्या नायिकायाः समीपे समानयनवचनमिदम्। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ २४ ॥

मानेति। मानस्य ग्रहः अवलम्बनं तेन गुरुर्महान् यः कोपः

## यकारादि:।

यूनः कण्टकविटपानिवाञ्चलग्राहिणस्त्यजन्ती सा।
वन इव पुरेऽपि विचरति पुरुषं त्वामेव जानन्ती ॥ १ ॥
युष्मासूपगताः स्मो विबुधा वाङ्मात्रपाटवेन वयम्।
अन्तर्भवति भवत्स्वपि नाभक्तस्तन्न विज्ञातम् ॥ २ ॥

तस्मात् अनु अनन्तरं दयिता प्रिया परित्यक्तमानतया अनुकूलवर्त्तिनी कान्ता दाहेन अग्निसन्तापेन अञ्चितः प्रशंसितः शुद्धभावः निर्मलता यस्यास्तथाभूता काञ्चनमयी सौवर्णी विभूषेव अलङ्कारं इव मह्यम् अत्येव अत्यन्तमेव रोचते स्वदते अतिसुखायते इति यावत्। उपमालङ्कारः। सखायं सखीं वा प्रति नायकस्योक्तिरियम् ॥ ३५ ॥

---

यून इति। वन इव पुरे नगरेऽपि बहुयुवकनागरवतीति भावः सा कामिनी कण्टकविटपानिव अञ्चलग्राहिणः अतिलुब्धानिति भावः यूनस्तरुणान् त्यजन्ती परिहरन्ती त्वामेव अन्यव्यवच्छेदार्थ एवशब्दः। पुरुषं जानन्ती विचरति त्वामेवाभिलषतीति भावः। तस्मात्त्वं तस्यामासजस्वेति कस्याश्चित् दूत्याः कञ्चित् प्रति वचनमिदम्। उपमालङ्कारः ॥ १ ॥

युष्मास्विति। हे विबुधाः! विद्वांसः! वयं वाङ्मात्रपाटवेन पाण्डित्यमात्रबलेन युष्मान् उपगताः प्राप्ताः स्मः, विद्वानेवाभिजानाति विद्वज्जनमनोगतमिति धियेति भावः। भवत्सु युष्मासु मध्येऽपि अभक्तः निरन्नः दरिद्र इत्यर्थः न अन्तर्भवति न तिष्ठतीत्यर्थः तत् न विज्ञातं मयेति शेषः। निर्धनस्य विदुषः कस्यचित् कुत्रचित् समाजे समागतस्याप्राप्तगौरवस्य वचनमिदम् ॥ २ ॥

यत्र न दूती यत्र स्निग्धा न दृशोऽपि निपुणया निहिताः ।
न गिरोऽप्यपि व्यक्तीकृतः स भावोऽनुरागेण ॥ ३ ॥
या नीयते सपत्न्या प्रविश्य यावर्जिता भुजङ्गेन ।
यमुनाया इव तस्याः सखि मलिनं जीवनं मन्ये ॥ ४ ॥
यस्मिन्नयशोऽपि यशो ह्रीर्विघ्नो मान एव दौःशील्यम् ।
लघुता गुणान्नता किं नवो युवा सखि न ते दृष्टः ॥ ५ ॥

यत्रेति । यत्र यस्मिन् भावे प्रणये दूती न निहितेति शेषः, यत्र स्निग्धाः स्नेहवर्षिण्यः दृशोऽपि न निहिताः, यत्र गिरोऽपि वाचोऽपि अनुरागव्यञ्जिका इति भावः न निहिता इति शेषः, अप्यापीति नवत्र योज्यम् । किन्तु निपुणया चतुरया स भावः प्रणयः अनुगमनेन सहमरणेनेति यावत् व्यक्तीकृतः प्रकटितः । एतावन्तं कालमुभयोः प्रणयो न विदितः, साम्प्रतन्तु मरणेन विनिवेदित इति भावः । मृतमनुगच्छन्त्यां कस्याश्चित् तत्रत्यानामान्दोलनमिदम् ॥ ३ ॥

येति । या सपत्न्या पत्युरपरया कान्तया गङ्गया च नीयते पतिसकाशं समुद्रसकाशञ्च पतिसमीपगमनं यस्याः सपत्न्या स्वेच्छायत्तमिति भावः, या भुजङ्गेन लम्पटेन पत्या इति शेषः कालियाख्यसर्पेण च वर्जिता त्यक्ता दुर्भगत्वादिति कृष्णताड़ितत्वादिति च भावः, हे सखि ! यमुनाया इव तस्याः कामिन्याः जीवनं जीवितं जलञ्च मलिनं निन्द्यं श्यामञ्च मन्ये सम्भावयामि । सपत्न्यधीनायाः कामिन्या जीवनं विफलमिति कस्याश्चित् कामपि प्रति वचनम् । उपमालङ्कारः । यमुनाजलस्य श्यामत्वं प्रसिद्धम् ॥ ४ ॥

यस्मिन्निति । हे सखि ! यस्मिन् यूनि अयशः अकीर्त्तिरपि तवेति शेषः यशः यस्तत्राकीर्त्तिमपि कीर्त्तिमिव गणयतीति भावः । यस्मिन् ह्रीर्लज्जा तवेति शेषः विघ्नः अन्तरायः यस्तव लज्जां समागमविघ्नमिव मन्यते इति भावः । यस्मिन् मानस्तवेति दौःशील्यं दुःशी-

यदीक्ष्यते खलानां माहात्म्यं क्वापि दैवयोगेन।
काकानामिव शौक्ल्यं तदपि हि न चिरादनर्थाय॥ ६॥
यत् खलु खलमुखहुतवहविनिहितमपि शुद्धिमेव परमेति।
तदनलशौचमिवांशुकमिह लोके दुर्लभं प्रेम॥ ७॥

सता तादृशे अनुरागिणि मानस्तव दुःशीलतां व्यनक्तीति तादृश-पुरुषे मानो न कर्त्तव्य इति भावः। यस्मिन् बहुना तव लाघवम् अगुणघटतेति भावः गुणज्ञता यस्तव गुणानभिज्ञत्वं गुणज्ञतां मन्यते इति भावः स नवो युवा त्वया किं न दृष्टः नावलोकितः? तादृशो युवा त्वयावश्यमेव दर्शनेनानुग्राह्य इति भावः। नायिकां प्रति सख्या उक्तिरियम्। अथवा स नवो युवा त्वदर्थम् अस्माभिः किं न दृष्टः अपितु दृष्ट एव। तत्त्वयात्र यूनि समासङ्क्तिर्विधेयेति वा सख्या उक्तिरियम्॥ ५॥

यदीति। क्वापि दैवयोगेन खलानां दुर्जनानां यत् माहात्म्यम् औदार्य्यं वीक्ष्यते दृश्यते तदपि काकानां शौक्ल्यमिव न चिरात् अवि-लम्बमेव अनर्थाय हि अमङ्गलाय एव, यथा काकानां कदाचित् श्वेत-त्वदर्शनमशुभकरं तथा दुर्जनानां कदाचित् सत्कार्य्यानुष्ठानं महतः अकार्य्यस्य कारिष्यमाणस्य सूचकमिति भावः। उपमालङ्कारः॥६॥

यदिति। यत् खलु प्रेम खलानां दुर्जनानां मुखानि हुतवहाः अनलय इव दुर्वचसामुद्गारित्वादिति भावः, तेषु विशेषेण निहितम् अर्पितमपि परं केवलं शुद्धिमेव पवित्रतामेव दोषराहित्यमेवेत्यर्थः एति प्राप्नोति दुर्जना अपि यत् न निन्दन्ति परं प्रशंसन्तीति भावः, अनले अग्नौ शौचं शुद्धिर्यस्य तादृशम् अग्निविशोधितमित्यर्थः अंशुक-मिव वसनमिव इह लोके दुर्लभम्। एतादृशमनिन्द्यं प्रशस्यं प्रेम सर्वैरेवाकाङ्क्षणीयमिति कस्यापि कामपि प्रत्युक्तिः। उपमा-लङ्कारः॥ ७॥

यत्रावधिमर्पयते पाथेयार्थं ददाति सर्वस्वम् ।
तेनानयातिदारुणशङ्कामारोपितं चेतः ॥ ८ ॥
यूनामीर्ष्यावैरं वितन्वता तरुणि चक्ररुचिरेण ।
तव जघनेनाकुलिता निखिला पल्ली खलेनेव ॥ ९ ॥
यावज्जीवनभावी तुल्याशययोर्नितान्तनिर्भेदः ।
नद्योरिवैष युवयोः सङ्गो रसमधिकमावहतु ॥ १० ॥

यदिति । यत् अवधिं प्रत्यागमनसमयं न अर्पयते कदा पुन-स्त्वयागन्तव्यमिति न पृच्छतीति भावः, पाथेयार्थं मार्गव्ययार्थं सर्वस्वं समस्तं धनं ददाति च स्वहस्तार्थं किमपि न रक्षतीति भावः, तेन तथाचरणेनेति भावः अनया मम कान्तया चेतः चित्तं मदीय-मिति भावः अतिदारुणशङ्काम् आरोपितम् । अवधेरप्रश्नेन स्वव्य-याय च धनरक्षणाकरणेन मम गमनात् परमेव इयं प्राणान् त्यक्ष्य-तीति सूचितम् । तेन मम विदेशगमनं न युक्तमिति कथं त्वया न मतमिति वादिनं सखायं प्रत्युक्तिरियम् ॥ ८ ॥

यूनामिति । हे तरुणि ! यूनां तरुणानाम् ईर्ष्यावैरं बहूना-मेकभोग्यत्वादिति भावः वितन्वता विदधता चक्रवत् रुचिरेण मनो-हरेण मर्दनचक्रवता च खलेनेव धान्यमर्दनस्थानेनेव तव जघनेन कटिपुरोभागेन निखिला समग्रा पल्ली पल्लीस्थो जन इत्यर्थः आकु-लिता व्याकुलीकृतेत्यर्थः । बहवस्तव प्रणयमभिलषन्तीति भावः । दूत्या नायिकां प्रत्युक्तिरियम् । उपमालङ्कारः ॥ ९ ॥

यावदिति । तुल्यः समः आशयः अभिप्रायः ययोः तथाभूतयोः युवयोः नद्योरिव यावज्जीवनभावी आजीवनस्थितिशाली यावत्-सलिलस्थितिशाली च नितान्तनिर्भेदः अतिशयेनाभिन्नः एषः सङ्गः सङ्गमः अधिकं रसं प्रीतिं जलञ्च आवहतु वर्द्धयत्वित्यर्थः । उपमा-लङ्कारः ॥ १० ॥

यन्निहितां शेखरयसि मालां सा यातु शठ भवन्तमिति।
प्रहरन्तीं शिरसि पदा स्मरामि तां गर्व्वगुरुकोपाम् ॥११॥
यौवनगुप्तिं पत्यौ बन्धुषु मुग्धत्वमार्जवं गुरुषु।
कुर्व्वाणा हलिकवधूः प्रशस्यते व्याजतो युवभिः ॥ १२ ॥
यो न गुरुभिर्न्न मित्त्रैर्न्न विवेकेनापि नैव रिपुहसितैः।
नियमितपूर्व्वः सुन्दरि स विनीतत्वं त्वया नीतः ॥ १३ ॥

यदिति। हे शठ! धूर्त्त! यया निहितां दत्तां मालां शेखरयसि शिरोभूषणीकरोषि सा इति हेतोः त्वत्प्रणयहेतोरित्यर्थः भवन्तं यातु गच्छतु भवत्प्रणयिनी भवत्विति यावत् मदर्थमागतायां तस्यां त्वं गृहं विहरसीति शठसम्बोधनेन द्योत्यते तस्मात् न मे तया प्रयोजनमिति भावः। पदा शिरसि प्रहरन्तीं ताड़यन्तीं गर्व्वेण सौभाग्याभिमानेन गुरुकोपाम् अतिमानिनीं तां कामिनीं स्मरामि। तस्यामेव ममासक्तिर्नान्यस्यामिति सखायं प्रति नायकस्य वचनम् ॥११॥

यौवनेति। पत्यौ स्वामिनि यौवनस्य गुप्तिं गोपनं यौवनोचितविलासादिगोपनमिति यावत् बन्धुषु पित्रादिषु मुग्धत्वं बालभावः गुरुषु श्वशुरादिषु आर्ज्जवं सारल्यं कुर्व्वाणा यतो यौवनविलासराहित्यं मुग्धत्वं सारल्यञ्चास्या दृश्यते ततो नेयमितरस्ततः सच्चरणोऽपि दूष्यते इति भावः, हालिकस्य नीचजातिविशेषस्य वधूः कान्ता युवभिः तरुणैः व्याजतः छलेन तत्तज्ज्ञातुर्य्यवत्तयेति भावः प्रशस्यते स्तूयते, इयमतिचतुरा कामिनी पत्यादीन् प्रतार्य्य अस्माभिर्गूढ़ं विहरतीति धियेति भावः ॥ १२ ॥

य इति। हे सुन्दरि! यः गुरुभिः पित्रादिभिः न, मित्त्रैः सुहृद्भिः न, विवेकेन विशिष्टज्ञानेनापि न, रिपूणां शत्रूणां हसितैश्च नैव नियमितपूर्व्वः पूर्व्वं नियमितः पूर्व्वं न सन्मार्गं नीत इति यावत् गुरवः सदाचारभ्रष्टं पुत्रादिकं सदुपदेशेन सत्पथं नयन्ति, मित्त्राणि मधुरोपन्यासेन मित्त्रं वशमानयन्ति, विवेकशक्तिः पुरुषं

यन्मूलमार्द्रमुदकैः कुसुमं प्रतिपर्व फलभरः परितः ।
द्रुम तन्माद्यसि वीचीपरिचयपरिणाममविचिन्त्य ॥ १४ ॥
यस्याङ्के स्मरसङ्गरविश्रान्तिप्राञ्जला सखी स्वपिति ।
स वहतु गुणाभिमानं मदनधनुर्वल्लिचोल इव ॥ १५ ॥
यदि दानगन्धमात्रादसन्ति सप्तच्छदेऽपि दन्तिन्यः ।
किमिति मदपङ्कमलिनां करी कपोलस्थलीं वहति ॥१६॥

दुराचारात् निवर्त्तयति, अतएव: दुराचारं अतु शीघ्रं निपततीति धिया त्रसन्ति, एतैरपि यः पूर्वं न शिक्षितः स त्वया विनीतत्वं नीतः, इदानीं त्वद्वशवर्त्ती स सर्वान् दुराचारान् तत्याजेति भावः । कस्याश्चित् नायिकायाः स्वजनप्रशंसनमिदम् ॥ १३ ॥

यदिति । हे द्रुम ! वृक्ष ! यत् यतः मूलम् उदकैः जलैः आर्द्रं, प्रतिपर्व प्रतिकाण्डं कुसुमं, परितः समन्तात् फलानां भरः अतिशयः । तत् तस्मात् कारणात् वीचीनां तत्स्थनदीतरङ्गाणां परिचयस्य सम्बन्धस्य परिणामम् अवसानं फलं वा अविचिन्त्य अविचार्य माद्यसि मत्तो भवसि, यदा नदीजलशोषणेन तरङ्गसङ्गराहित्यं तव स्यात् तदा ते कावस्था भविष्यतीति तव चिन्तनमुचितमिति भावः । अपरसाहाय्येनोन्नतं प्रति कस्यचिद् वचनम् । अप्रस्तुतप्रशंसालङ्कारः ॥ १४ ॥

यस्येति । स्मरसङ्गरस्य कामसंग्रामस्य विश्रान्तौ समाप्तौ प्राञ्जला सुप्रसन्ना सखी यस्य कान्तस्य अङ्के क्रोडे स्वपिति निद्राति स, मदनस्य कामस्य धनुर्वल्लिचोल इव धनुर्लतावरणवस्त्रमिव गुणाभिमानं सौन्दर्यादिगुणगर्वं वहतु प्राप्नोतु । कस्याश्चित् कामपि प्रत्युक्तिरियम् ॥१५॥

यदीति । यदि दानगन्धमात्रात् केवलात् मदगन्धादिति यावत्, मात्रपदेनान्यगुणव्यवच्छेदः । दन्तिन्यः करिण्यः सप्तच्छदेऽपि तदाख्यतरावपि वसन्ति सप्तच्छदमाश्रित्य तिष्ठन्तीति यावत्, तदा करी गजेन्द्रः मदपङ्केन मदस्रावेण मलिनां [illegible] कपोलस्थलीं

यदवधि विद्रुममाला विकसितकुसुमोत्करा शणश्रेणी ।
पीतांशुकप्रियेयं तदवधि पल्लीपतेः पुत्री ॥ १७ ॥

यमुनातरङ्गतरलं न कुवलयं कुसुमलावि तव सुलभम् ।
यदि सौरभानुसारी झङ्कारी भ्रमति न भ्रमरः ॥ १८ ॥

ये शिरसि विनिहिता अपि भवन्ति न सखे समानसुखदुःखाः
चिकुरा इव ते बाला एव जडाः पाण्डुभावेऽपि ॥ १९ ॥

गण्डभागं किमिति कथं वहति धारयति । केवलं धनशालित्वेन पुरुषा न काम्या अपितु पौरुषशालित्वसहकृतेन धनशालित्वेनेति भावः । काञ्चित् पौरुषहीनं धनिनं कामयमानां प्रति कस्याश्चिदुक्तिरियम् अप्रस्तुतप्रशंसालङ्कारः ॥ १६ ॥

यदिति । यदवधि यत आरभ्य विकसितः कुसुमानाम् उत्करः समूहः यस्याः तथाभूता शणश्रेणी शणाख्यतृणराजिः विद्रुममाला विशेषेण द्रुतिं प्राप्तेव, तदवधि तत आरभ्य इयं पल्लीपतेः पुत्री पीतं यत् अंशुकं वसनं तत्प्रिया पीतवसनपरिधायिनी जातेति शेषः । विकसितशणराजिषु पीतकुसुमाच्छादितत्वात् अहं पीतवसनतया तत्र विहर्त्तुं गता न केनापि विभाव्यते इति धियेति भावः ॥ १७ ॥

यमुनेति । हे कुसुमलावि ! पुष्पचयनकारिणि ! यमुनायास्तरङ्गेषु तरलं चञ्चलं कुवलयं नीलोत्पलं तव न सुलभं सुप्रापं तादृशनीलोत्पलस्य स्वनयनसादृश्येन नयनप्रतिबिम्बमेतत् न नीलोत्पलमिति भ्रमादिति भावः, यदि सौरभानुसारी सौगन्ध्यानुगामी अतएव झङ्कारी भ्रमरः न भ्रमति नीलोत्पलोपरीति शेषः एवञ्च भ्रमरझङ्कारवन्नीलोत्पलमेव तव सुलभं नान्यदिति भावः, एतेन नायिकायाः सौन्दर्यातिशयो व्यज्यते । एतदनुरूपं पद्यमेकं भ्रान्तिमदलङ्कारप्रस्तावे दर्पणकारेणोद्धृतम् । यथा, निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावीति ॥ १८ ॥

य इति । हे सखि ! ये जनाः शिरसि विशेषेण निहिता

यन्नियतनिर्गुणं यन्न वंशजं यच्च नित्यनिर्वाणम् ।
किं कुर्मस्तन्निहितं धनुःपदे देवराजेन ॥ २० ॥
या दक्षिणा त्वमस्यामदक्षिणो दक्षिणस्त्वमितरस्याम् ।
जलधिरिव मध्यसंस्थो न वेलयोः सदृशमाचरसि ॥२१॥
युगपज्जघनोरःस्तनपिधानमधुरे त्रपास्मितार्द्रमुखि ।

अपि हृता अपि यत्नं पालिता अपीति भावः न समानसुखदुःखाः भवन्ति लालयितुः सुखेन सुखिनः दुःखेन च दुःखिनः न भवन्तीत्यर्थः, ते बालाः अर्भकाः चिकुरा इव केशा इव पाण्डुभावेऽपि वार्द्धक्ये-ऽपि जडाः मूर्खा एव अचेतना एव च । उपमालङ्कारः । सख्यं प्रति कस्यचित् खेदवचनमिदम् ॥ १८ ॥

यदिति । यत् नियतं सततं निर्गुणं मौर्व्वीरहितं विद्याकौश-लादिशून्यञ्च, यत् न वंशजं न वेणुसम्भवं न सत्कुलजातञ्च, यच्च नित्यं निर्वाणं विनाशो यस्य तथोक्तं चणविनश्वरमित्यर्थः नित्यं निर्वाणं विनाशः शान्तिरिति यावत् यस्मात् तादृशञ्च देवराजेन इन्द्रेण प्रभुणा च तत धनुःपदे कोदण्डस्थाने समुन्नतपदे च निहितं स्थापितं किं कुर्मः वयमिति शेषः । प्रभुणा अयोग्ये जने यदि दयात् भावः समर्प्यते तदास्माकं किं कर्त्तव्यं प्रभोरेवात्रा[illegible]कारित्वमिति भावः । अप्रस्तुतप्रशंसालङ्कारः ॥ २० ॥

येति । या नारी दक्षिणा अनुकूला त्वत्प्रणयाक[illegible]ीति भावः त्वम् अस्यां भार्य्याम् अदक्षिणः अननुकूलः, त्वम् [illegible]याम् अननु-कूलायां दक्षिणः अनुकूलः । अतः जलधिरिव [illegible] मध्यसंस्थः मध्यवर्त्ती समानुरागः सन्निति भावः वेलयोः तट[illegible]ना स्वातीर-नीरयोरिवेमरः । सदृशम् अनुरूपं न [illegible] व्यवहरसि । त्वया समानुरागेण उभयोः कान्तयोर्व्यवह[illegible] सख्यं प्रति कस्यचिदुक्तिः । उपमालङ्कारः ॥ २१ ॥

युगपदिति । युगपत् समकालं जघ[illegible]ोः स्तनो॰

लोलाक्षि नैष पवनो विरमति तव वसनपरिवर्त्ती ॥२२॥
यद्यपि बद्धः शैलैर्यद्यपि गिरिमथनमुषितसर्वस्वः ।
तदपि परभीतभूधररक्षायां दीक्षितो जलधिः ॥ २३ ॥
यस्यां दिशि यस्य तरोर्यामित्य शिखां यथोन्नतग्रीवम् ।
दृष्टा सुधांशुलेखा निशां चकोरस्तथा नयति ॥ २४ ॥

अयोश्च पिधानेन आच्छादनेन मधुरे मनोहारिणि एवं अधनवसना- च्छादनं क्रियते येन मनो ह्रियते इति भावः, तथा त्रपया लज्जया यत् स्मितं मन्दहसितं तेन आर्द्रं प्रसन्नमिति भावः मुखं यस्यास्तत्- सम्बुद्धौ, हे लोलाक्षि ! चञ्चलनेत्रे ! तव वसनपरिवर्त्ती वस्त्र- परिवर्त्तनकारी एष पवनः न विरमति वस्त्राच्छादनरहितत्वमकृत्वा न निवर्त्तते इति यावत् । त्वया सह विहारं विना अनेन गन्तव्यं तत्त्वमेनमनुसन्धेहीति नायिकां प्रति कस्याश्चित् अप्रस्तुतवर्णनेन विज्ञापनवचनमिदम् ॥ २२ ॥

यद्यपीति । जलधिः समुद्रः यद्यपि शैलैः पर्वतैः बद्धः सेतु- निर्माणार्थमिति भावः, यद्यपि गिरिणा मन्दरेण यत् मथनं विलो- डनं तेन हृतं सर्वस्वं धनं यस्य तथाभूतः यद्यपि पर्वतैरेवमुपद्रुत इति भावः, तदपि तथापि परेभ्यः शत्रुभ्यः भीताः ये भूधराः पर्वता मैनाकादयः तेषां रक्षायां दीक्षितः नियमव्रत इत्यर्थः, महान्तः शत्रूनपि शरणागतान् रक्षन्तीति भावः। अप्रस्तुतप्रशंसालङ्कारः ॥ २३ ॥

यस्यामिति । यस्यां दिशि यस्य तरोः यस्य यां शिखाम् एत्य अधश्चन्द्र उन्नता ग्रीवा यस्मिन् तत् यथा सुधांशुलेखा चन्द्रकला दृष्टा चकोरेणेति शेषः चकोरः तथा तेनैव प्रकारेण तस्यामेव दिशि तस्यैव तरोस्तामेव शाखाम् आश्रित्येति भावः निशां रजनीं नयति यापयति पुनश्चन्द्रकलादर्शनाशयेति भावः । अप्रस्तुतप्रशंसालङ्कारः ।

यत्रार्जवेन लघुता गरिमाणं यत्र वक्रता तनुते।
छन्दःशास्त्र इवास्मिंल्लोके सरलः सखे किमसि ॥ २५ ॥
यन्नोपकारकं यन्न भूषणं यत्प्रकोपमातनुते।
गुरुणापि तेन कार्यं पदेन किं श्लीपदेनेव ॥ २६ ॥
यूथपते तव कश्चिन्न हि मानस्यानुरूप इह विटपी।
प्रेरय दिनं निदाघद्राघीयः क्व खलु ते छाया ॥ २७ ॥

कामपि तरुणीं मनोहारिणीं प्रति दूत्याः कस्यचित् तरुणस्य तद्देशावस्थानौचित्यकथनमिदम् ॥ २४ ॥

यत्रेति। हे सखे! यत्र यस्मिन् देशे आर्जवेन सरलतया लघुता लभ्यते इति शेषः, यत्र वक्रता कौटिल्यं गरिमाणं गौरवं तनुते विस्तारयति, छन्दःशास्त्र इव अस्मिन् लोके किं कथं सरलः ऋजुः असि? छन्दसि लघुः सरलया रेखया गुरुश्च वक्रया रेखया लिख्यते इति प्रसिद्धिः। सखायं सरलव्यवहारेण क्षतमानं प्रति कस्यचिदुक्तिरियम्। उपमालङ्कारः ॥ २५ ॥

यदिति। यत् पदं कार्य्याधिकार इति यावत् न उपकारकं, यत् न भूषणं न शोभाजनकं न सम्मानजनकमिति यावत्, यत् प्रकोपं प्रकृष्टं कोपं क्लेशदायितयेति भावः आतनुते उत्पादयति, श्लीपदेनेव चरणस्फीतताजनकरोगविशेषेणेव गुरुणापि महतापि तेन पदेन अधिकारेण किं कार्य्यं? न किमपीत्यर्थः। उपमालङ्कारः। इष्टापदस्थं प्रति कस्यचिदुक्तिरियम् ॥ २६ ॥

यूथपते इति। हे यूथपते! गजेन्द्र! इह अस्मिन् प्रदेशे तव मानस्य परिमाणस्य सम्मानस्य च अनुरूपः योग्यः कश्चित् विटपी तरुः न अस्तीति शेषः, यस्य छायामाश्रित्य त्वं निदाघक्लेशम् अपनयसीति भावः। तस्मात् निदाघेन ग्रीष्मेण द्राघीयः अतिदीर्घं दिनं प्रेरय अतिवाहय, ते तव छाया क्व खलु? अस्तीति शेषः न कुत्रापीत्यर्थः। त्वं बहुपोषकः, परं ते आश्रयो नास्ति, तत् क्लेशेनैव

यद्यपि चन्दनविटपी फलपुष्पविवर्जितः कृतो विधिना।
निजवपुषैव तथापि हि स हरति सन्तापमपरेषाम् ॥२८॥

रकारादिः।

राज्याभिषेकसलिलक्षालितमौलेः कथासु कृष्णस्य।
गर्वभरमन्थराक्षी पश्यति पदपङ्कजं राधा ॥ १ ॥
रतिकलहकुपितकान्ताकरचिकुराकर्षमुदितगृहनाथम्।
भवति भवनं तदन्यत् प्राग्वंशः पर्णशाला वा ॥ २ ॥

कालं गमयेति कमपि प्रति कस्यचिदुक्तिः। अप्रस्तुतप्रशंसालङ्कारः ॥ २७ ॥

यद्यपीति। यद्यपि चन्दनविटपी चन्दनवृक्षः विधिना दैवेन फलपुष्पविवर्जितः कृतः, तथापि स चन्दनतरुः निजेन वपुषैव शरीरेणैव अपरेषां सन्तापं हरति हि नाशयत्येव। दैवात् निर्धनीकृतोऽयं धनेन न परस्य उपकारकः, परं स्वशरीरायासेन यावच्छक्यं परेषामुपकारं करोतीति कस्यचित् कस्यापि प्रशंसनवचनमिदम्। अप्रस्तुतप्रशंसालङ्कारः ॥ २८ ॥

---

राज्येति। राधा गर्वस्य सौभाग्याभिमानस्य भरेण अतिशयेन मन्थरे अलस अक्षिणी नयने यस्यास्तथाभूता सती राज्ये यः अभिषेकः तस्य सलिलेन जलेन क्षालितः सिक्तः मौलिः शिरो यस्य तादृशस्य कृष्णस्य कथासु संवादेषु पदपङ्कजं पश्यति, भवतु स राज्याधिकारी, किन्तु मदीयं चरणकमलम् अभिलषत्येवेति धियेति भावः ॥ १ ॥

रतीति। रतौ सुरते यः कलहः तेन कुपितायाः कान्तायाः

रोगी राजायत इति जनवादं सत्यमद्य कलयामि ।
आरोग्यपूर्वकं त्वयि तल्पप्रान्तागते सुभग ॥ ३ ॥
रुद्धस्वरसप्रसरस्यालिभिरग्रे नतं प्रियं प्रति मे ।
स्रोतस इव निम्नं प्रति रागस्य द्विगुण आवेगः ॥ ४ ॥
रूपमिदं कान्तिरसावयमुत्कर्षः सुवर्णरचनेयम् ।

करेण हस्तेन यः चिकुराणां केशानाम् आकर्षः आकर्षणं तेन मुदितः आनन्दितः गृहनाथः गृहस्वामी यत्र तथाभूतं यत् स्थानं तत् भवनम् आनन्दसदनं हर्म्यमिति भावः भवति, अन्यत् तद्भिन्नं गृहं प्राग्वंशः पत्नीशाला पर्णशाला वा, प्राग्वंशः प्राग्घविर्गेहा- दिति, पर्णशालोटजोऽस्त्रियामिति चामरः। यत्र प्रवासिनौ दम्पती वसतस्तदेव गृहमन्यदरण्यमिति भावः ॥ २ ॥

रोगीति। हे सुभग ! त्वयि तल्पप्रान्तं शय्यासन्निधिम् आगते सति अद्य अहम् आरोग्यपूर्वकं मन्मथपीडारूपरोगशान्तिं विधा- येति भावः रोगी राजायते राजवत् आचरति इति जनवादं सत्यं कलयामि निश्चिनोमीत्यर्थः, त्वत्सन्निधानेनाहं कामरोगिणी राज- वदाचरामीति तादृशजनवादस्य सत्यतेति भावः। चिरात् प्राप्तं कान्तं प्रति कामिन्या उक्तिरियम् ॥ ३ ॥

रुद्धेति। आलिभिः सखीभिः रुद्धः निषिद्धः स्वरसः स्वाभा- विकः प्रसरः आधिक्यं यस्य तादृशस्य अन्यत्र रुद्धः बद्धः स्वस्य रसस्य जलस्य प्रसरः गतिर्यस्य तथाभूतस्य मे मम निम्नं प्रति स्रोतस इव, स्रोतोऽम्बुसरणं स्वत इत्यमरः। अग्रे नतं मम मानापनोदनार्थं चरणावनतं प्रियं प्रति रागस्य प्रेम्णः द्विगुणः आवेगः सम्यक् वेगः। सखीभिर्निषिद्धाया अपि मे चरणानतकान्तस्य उपरि महान् प्रणया- वेगः सञ्जातः, तत् शीघ्रं तमानयेति दूतीं प्रति कस्याश्चिद् भङ्ग्या उक्तिरियम्। उपमालङ्कारः ॥ ४ ॥

रूपमिति। हे वनिते ! सुन्दरि ! इदं रूपं मनोहरमाकृतिरिति

दुर्गतमिलिता ललिते भ्रमसि प्रतिमन्दिरद्वारम्॥ ५॥

रचिते निकुञ्जपत्रै र्भिक्षुकपात्रे ददाति सावज्ञम्।

पर्युषितमपि सुतीक्ष्णश्वासकदुष्णं वधूरन्नम्॥ ६॥

रचति न खलु निजस्थितिमलघुः स्थापयति नायकः स यथा

तिष्ठति तथैव तद्गुणविद्धेयं हारयष्टिरिव॥ ७॥

राजसि कृशाङ्गि मङ्गलकलशी सहकारपल्लवेनेव।

भावः, असौ कान्तिः लावण्यम्, अयम् उत्कर्षः उत्कृष्टता, इयं वर्णरचना शोभनो वर्ण इत्यर्थः, तथापि दुर्गतेन दारिद्र्येण मिलिता सङ्गता सती प्रतिमन्दिरद्वारं प्रतिगृहद्वारं भ्रमसि भिक्षार्थमिति भावः। ईदृशी रूपशालिनी त्वं दरिद्रेण सङ्गतेति मन्दनीचित्यं तवेति भावः, अथवा प्रेम धनित्वं निर्धनस्य नावेक्षत इति भावः॥५॥

रचिते इति। वधूः निकुञ्जपत्रैः लतादिपिहितस्थानविशेषस्य पत्रैः रचिते निर्मिते भिक्षुकस्य पात्रे भिक्षाभाजने पर्युषितमपि अन्नं सुतीक्ष्णेन श्वासेन कदुष्णं ईषदुत्तप्तं कृत्वेति शेषः सावज्ञम् अवज्ञया सहितं यथा तथा ददाति। सङ्केतनिकेतनस्य निकुञ्जस्य पत्रच्छेदनात् द्वेषेण क्रोधोदयात् तीक्ष्णश्वासः पर्युषितान्नस्य साव-ज्ञदानमिति भावः॥ ६॥

रचतीति। यः निजस्थितिं स्वमर्य्यादां विनयमिति यावत् स्वस्थानस्थितिञ्च न रचति प्रणयजनितचापल्यं न त्यजतीति भावः स्वतश्चलत्वं न त्यजतीत्यर्थश्च स्थापयति प्रणयप्रवृत्त्या चापल्यात् निवर्त्तयतीति भावः प्राधान्येन गणयतीति भावश्च, सः अलघुः श्रेष्ठः नायकः यथा मध्यमणिरिव नायकः कान्त इति निष्कर्षः, इयं कामिनी तस्य गुणेन चातुर्य्यादिना बद्धा अन्यत्र तस्य मध्यमणेः गुणेन तदन्त-र्गतसूत्रेण विद्धा गुम्फिता हारयष्टिरिव तथैव नायक इव तिष्ठति नायकाधीनैव तिष्ठतीति भावः॥ ७॥

राजसीति। हे कृशाङ्गि! त्वं सहकारस्य पल्लवेन मङ्गलकलशीव

तेनैव चुम्बितमुखी प्रथमाविर्भूतरागेण ॥ ८ ॥
रूपगुणहीनहार्य्या भवति लघुर्धूलिरनिलचपलेव ।
प्रथयति पृथुगुणनेया तरुणी तरणिरिव गरिमाणम् ॥ ९ ॥
रागे नवे विजृम्भति विरहक्रममन्दमन्दमन्दाक्षे ।
सस्मितसलज्जमीक्षितमिदमिष्टं सिद्धमाचष्टे ॥ १० ॥
रोषोऽपि रसवतीनां न कर्कशो वा चिरानुबन्धी वा ।

प्रथमम् आविर्भूतः सञ्जातः रागः प्रणयः यस्य त्वयीति भावः तथाभूतेन तेनैव युवकेन चुम्बितं मुखं यस्याः तथोक्ता सती राजसि शोभसे । अन्यत्र रागः लौहित्यमिति बोध्यम् । प्रथमप्रणयिनं त्यक्त्वा नान्य आश्रयणीय इति कयाचित् कामपि प्रति उपदिश्यते । उपमालङ्कारः ॥ ८ ॥

रूपेति । रूपञ्च गुणाश्च तैर्हीनेन हार्य्या हरणीया तरुणी अन्यत्रापि समानम् । अनिलचपला वायुचञ्चला धूलिरिव लघुः अगौरववतीत्यर्थः भवति, पृथवः महान्तः गुणा यस्य तादृशेन पुंसा नेया प्रापणीया अन्यत्र पृथुभिः सुदृढैः गुणैः रज्जुभिः नेया चालनीयेति यावत् तरुणी तरणिरिव नौरिव गरिमाणं गौरवं प्रथयति विस्तारयति गौरविणी भवतीत्यर्थः । उपमालङ्कारः । गुणशालिनैव सङ्गतिर्विधेयेति सख्या नायिकां प्रत्युपदेशः ॥ ९ ॥

रागे इति । विरहक्रमेण विच्छेदगत्या मन्दमन्दं मन्दाक्षं लज्जा यत्र तादृशे, मन्दाक्षं ह्रीस्त्रपा व्रीडेत्यमरः । नवे रागे प्रणये विजृम्भति आविर्भवति सति । विजृम्भितेति पाठे विजृम्भितेन विरहक्रमेणेति विरहक्रमविशेषणम् । इदं सस्मितसलज्जं मन्दहास्यलज्जान्वितम् ईक्षितम् अवलोकनम् इष्टम् अभिलषितं सङ्गमिति भावः सिद्धं निष्पन्नम् आचष्टे कथयति सूचयतीत्यर्थः ॥ १० ॥

रोष इति । रसवतीनां रसिकानां नारीणां रोषोऽपि न कर्कशो वा न कठिनो वा न तीक्ष्णो वेत्यर्थः चिरानुबन्धी वा दीर्घ-

वर्षाणामुपलोऽपि हि सुस्निग्धः क्षणिककाठिन्यश्च ॥ ११ ॥
रोदनमेतद्धन्यं सखि किं बहु मृत्युरपि ममानर्घः ।
स्वप्नेनैव हि विहितो नयनमनोहारिणा तेन ॥ १२ ॥
रोषेणैव मया सखि वक्रोऽपि ग्रन्थिलोऽपि कठिनोऽपि ।
ऋजुतामनीयतायं सद्यः स्वेदेन वंश इव ॥ १३ ॥
रजनीमियमुपनेतुं पितृप्रसूः प्रथममुपतस्थे ।

कालस्थायी वा न, हि तथाहि वर्षाणां दृष्टीनाम् उपलोऽपि करकोऽपीत्यर्थः सुस्निग्धः सुशीतलः क्षणिककाठिन्यश्च क्षणविध्वंसी च भवति हि । कोमलवस्तूत्पन्नं काठिन्यं न तीव्रं न वा चिरस्थायीति भावः । दृष्टान्तालङ्कारः ॥ ११ ॥

रोदनमिति । हे सखि ! मम एतत् रोदनं धन्यम् अनुरूपम् उचितमिति यावत् तादृशनायकविरहादिति भावः । किं बहु अधिकं किम् ? नयनमनोहारिणा दृष्टिहारिणा चित्तहरेण चेत्यर्थः अथवा नयनेन नेत्रव्यापारेण मनोहारिणा चित्तचौरेण अन्यत्र नयनमनोव्यापाराभावकारिणा तेन कान्तेन स्वप्नेनैव मम अनर्घः अमूल्यः धन्य इति यावत् मृत्युरपि विहितः, तद्विरहे मरणमपि प्रशंसनीयमिति भावः । स्वप्ने रोदनमरणादयः शुभसूचका इति शास्त्रविदः समामनन्ति । सखीं कथं रोदिषीति वादिनीं प्रति नायिकाया विरहिण्या उक्तिरियम् । उपमालङ्कारः ॥ १२ ॥

रोषेणैवेति । हे सखि ! मया रोषेणैव स्वेदेन वंश इव अयं नायकः वक्रोऽपि ग्रन्थिलोऽपि कठिनोऽपि ऋजुतावश्यादनायोग्योऽपीति अतिदुर्वृत्तोऽपीति च भावः सद्यः तत्क्षणमेव अतिशीघ्रमेवेत्यर्थः ऋजुतां सरलतां सुवृत्ततामिति भावः अनीयत अप्राप्यत । उपमालङ्कारः ॥ १३ ॥

रजनीति । इयं पितृप्रसूः सन्ध्या रजनीम् उपनेतुं चन्द्रसमीपं

रञ्जयति स्वयमिन्दुं कुनायकं दुष्टदूतीव ॥ १४ ॥

---

## लकारादिः ।

लग्नासि कृष्णवर्त्मनि सुस्निग्धे वर्त्ति हन्त दग्धासि ।
अयमखिलनयनसुभगो न भुक्तमुक्तां पुनः स्पृशति ॥ १ ॥
लक्ष्मीः शिक्षयति गुणानमून् पुनर्दुर्गतिर्विधूनयति ।
पूर्णो भवति सुवृत्तस्तुषाररुचिरपचये वक्रः ॥ २ ॥

प्रापयितुं प्रथमम् उपतस्थे उपस्थिता भवति । दुष्टदूती कुनायकमिव स्वयं इन्दुं चन्द्रं रञ्जयति रक्तवर्णम् अनुरागवन्तञ्च करोतीत्यर्थः । सन्ध्यायाः पितृप्रसूत्वेन पितृजननीवत् वन्दनीयत्वेऽपि ईदृशकार्य्य-कारित्वं कितापरासामिति ध्वन्यते । उपमालङ्कारः ॥ १४ ॥

---

लग्नासीति । हे सुस्निग्धे वर्त्ति ! त्वं कृष्णवर्त्मनि वह्नौ लग्नासि सङ्गतासि, हन्त खेदे । अतः दग्धासि ज्वलन्ती मरिष्यसीत्यर्थः, अखिलनयनसुभगः सर्वजननयनरञ्जनः अयं कृष्णवर्त्मा भुक्ता पश्चात् मुक्ता तां भोगानन्तरपरित्यक्तां पुनः न स्पृशति । दर्शनमनोरञ्जनोऽपि अयम् एतादृशप्रकृतियत् सकृत् भुक्तां नायिकां पुनर्नाद्रियते इति अप्रस्तुतप्रशंसया व्यज्यते । तस्मात् विविच्य त्वयैतत्सङ्गतिः करणी-येति नायिकां तादृशपुरुषानुरागपरां प्रति सख्या उक्तिरियम् ॥ १ ॥

लक्ष्मीरिति । लक्ष्मीः श्रीः गुणान् शिक्षयति उपदिशति लक्ष्मीवानेव गुणवान् भवतीति भावः, दुर्गतिः अलक्ष्मीरित्यर्थः अमून् गुणान् विधूनयति ताडयति निर्धनो गुणहीनो भवतीति भावः । तथाहि तुषाररुचिः शीतकिरणश्चन्द्रः पूर्णः सम्पूर्णमण्डलः सुवृत्तः सुवर्तुलः सुशीलश्च, अपचये क्षये अपूर्णतायामिति भावः वक्रः कुटिलः भवतीत्यर्थः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ २ ॥

लूतातन्तुनिरुद्धद्वारः शून्यालयः पतत्पतगः।
पथिके तस्मिन्नञ्चलपिहितमुखो रोदितीव सखि ॥ ३ ॥
लग्नं जघने तस्याः सुविशाले कलितकरिकरक्रीडे।
वप्रे सक्तं द्विपमिव शृङ्गारस्त्वां विभूषयति ॥ ४ ॥
लिप्तं न मुखं नाङ्गं न पक्षती न चरणाः परागेण।
अस्पृशतेव नलिन्या विदग्धमधुपेन मधु पीतम् ॥ ५ ॥

लूतेति। हे सखि! तस्मिन् काले पथिके प्रोषिते इति यावत् सति शून्यालयः शून्यगृहं सङ्केतनिलय इति भावः, लूतातन्तुभिः ऊर्णनाभसूत्रैः निरुद्धम् आच्छादितम् द्वारं यस्य तथाभूतः, तथा पतन्तः पतगाः पक्षिणो यत्र तथोक्तः अतएव अञ्चलेन वसनप्रान्तेन पिहितम् आवृतं मुखं येन तादृशः सन् रोदितीव क्रन्दतीव। उत्प्रेक्षालङ्कारः। सखीं प्रति कस्याश्चित् प्रोषितोपनायकाया वचनमिदम् ॥ ३ ॥

लग्नमिति। सुविशाले सुष्ठु आयामशालिनि कलिता अङ्गीकृता कृतेति यावत् करिकरेण करिहस्तेन, तर्जन्यनामिके युक्ते मध्यमा स्याद् बहिष्कृता। करिहस्तः समुद्दिष्टः कामशास्त्रविशारदैरित्युक्तलक्षणेन क्रीडा विहारो यत्र तथाभूते तस्याः कान्तायाः जघने कटिपुरोभागे मदनगृहे इति भावः लग्नं संसक्तं त्वां शृङ्गारः सुरतलीलाविशेषः करिणः क्रीडाविशेषस्य वप्रे सक्तं वप्रक्रीडासक्तम्, उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते इति। द्विपमिव गजमिव विभूषयति विशेषेण शोभयति। अत्र द्व्यर्थैः पदैः पिशुनयेन्द्रः एकस्यां रतिः कामशास्त्रात् सुरतारम्भणोद्यादावश्लीलत्वं गुणो भवेदित्यालङ्कारिकाणामुक्तेश्च कलितकरिकरक्रोड इत्यस्य क्रीडाकरत्वेऽपि न दोष इति भाव्यम्। उपमालङ्कारः ॥ ४ ॥

लिप्तमिति। परागेण कौसुमेन रजसा मुखं न, अङ्गं न,

लग्नं जघने तस्याः शुष्यति नखलक्ष्म मानसं च मम।
भुक्तमविशदमवेक्षणमिदमधिकसरागसाबाधम्॥ ६॥
वञ्चयितुमखिलगोपीनिपीतमनसं मधुद्विषं राधा।
अज्ञेव पृच्छति कथां शम्भोर्दयितार्धतुष्टस्य॥ ७॥
लक्ष्मीनिःश्वासानलपिण्डीकृतदुग्धजलधिसारभुजः।
क्षीरनिधितीरसुहृदो यशांसि गायन्ति राधायाः॥ ८॥

पश्यतीं पश्यौ न, चरणास्त न क्षिप्रमिति विभक्तिव्यत्यासेन सर्वत्र बोध्यम्। अतः विदग्धमधुपेन चतुरभ्रमरेण स्पृशतेव स्पर्शमकुर्वतेव नलिन्याः पद्मिन्याः मधु पीतम्। केनापि सुचतुरेण जारेण नायिका तथा भुक्ता येन न किमपि केनापि लक्षितमिति कयाचित् काञ्चित् प्रत्युच्यते। अप्रस्तुतप्रशंसालङ्कारः॥ ५॥

लग्नमिति। तस्याः जघने लग्नं मम नखलक्ष्म नखाघातचिह्नं मानसञ्च शुष्यति बहुदिनसम्भोगाभावेन नखक्षतस्य शुष्कत्वं विरहेण च मनस इति भावः, इदञ्च तस्या जघनमिति भावः भुक्तं मयेति शेषः अतएव अविशदम् अनिर्मलं नखक्षतादिचिह्नवत्त्वादिति भावः, अवेक्षणं बहुदिनापगमात् नखक्षतादिजनितवेदनारहितं साम्प्रतम् अधिकसरागम् अधिकप्रीतिदं किन्तु साबाधं समीपगमनाक्षमत्वात् सपीडं व्यथादायकं ममेति शेषः। दूतीं प्रति प्रोषितस्य कस्योक्तिः॥ ६॥

वञ्चेति। राधा अखिलानां सर्वासां गोपीनां निपीतं मनो येन तथाभूतं बहुगोपाङ्गनासम्भोगरतमित्यर्थः मधुद्विषं कृष्णं वञ्चयितुम् अज्ञेव अजानतीव दयितार्द्धतुष्टस्य दयितया गौर्य्या अर्द्धाङ्गहारित्वेन तुष्टस्य प्रीतस्य शम्भोः कथां पृच्छति। भगवान् शम्भुः प्रियाया गौर्य्या अर्द्धाङ्गेन तुष्टः, त्वन्तु बह्वीनां नारीणां सम्भोगरतः न लज्जसे इति राधायाः कृष्णं प्रति परिहासेर्ष्याव्यञ्जनमिदम्॥ ७॥

लक्ष्मीति। क्षीरनिधेः समुद्रस्य तीरवासिन्यः सुहृदः सुजनपार्श्वः लक्ष्म्याः निःश्वासानलेन अनवरतं नारायणस्य राधां प्रतानु-

लीलागारस्य बहिः सखीषु चरणातिथौ मयि प्रियया ।
प्रकटीकृतः प्रसादो दत्त्वा वातायने व्यजनम् ॥ ९ ॥

---

वकारादिः ।

वर्णहृतिर्न ललाटे न लुलितमङ्गं न चाधरे दंशः ।
उत्पलमहारि वारि च न स्पृष्टमुपायचतुरेण ॥ १ ॥

मत्कृताधिकजल्पितैर्नेति भावः पिण्डीकृतं गाढ़ीकृतं दुग्धं यस्य तथाभूतस्य जलधेः समुद्रस्य सारं भुङ्क्ते इति तथोक्ताः सख्यः राधायाः यशांसि गायन्ति राधायाः प्रसादादस्माभिः क्षीरसारो भुज्यते इति धियेति भावः । सापत्न्यदुःखं नारीणामतिदुःसहमिति कस्याश्चित् काञ्चित् प्रत्युक्तिरियम् ॥ ८ ॥

लीलेति । लीलागारस्य क्रीड़ागृहस्य बहिः सखीषु स्थितास्विति शेषः मयि चरणातिथौ पादपतने इति भावः प्रियया वातायने गवाक्षे व्यजनं तालवृन्तं दत्त्वा व्यजनेन गवाक्षमाच्छाद्येति यावत् सखीनां गोपनार्थमिति धियेति भावः प्रसादः अनुग्रहः प्रकटीकृतः प्रकाशितः । सख्यः मानस्त्वया शीघ्रं न त्याज्य इत्यादिश्य बहिर्गताः किन्तु सा मत्प्रियतया मम कातरतां वीक्ष्य निजेन औदार्य्येण मानं सखीभ्यो गोपनेन सत्वरं विहाय मामनुजग्राहेति भावः । सखायं प्रति कस्यचिदुक्तिरियम् ॥ ९ ॥

---

वर्णेति । ललाटे वर्णस्य अङ्गरागविशेषस्य हृतिर्हरणं विलोप इत्यर्थः न, अङ्गं शरीरं न लुलितं मर्दनातिशयात् न क्लान्तम्, अधरे च दंशः दन्तक्षतचिह्नमित्यर्थः न, नायिकाया इति शेषः । उपायचतुरेण सुकौशलवता जनेन उत्पलं पद्मम् अहारि हृतं किन्तु वारि तु च स्पृष्टम्, उत्पलहरणे वारिस्पर्शोऽवश्यम्भावी अपि यथा सुकौ-

आलम्बिचूर्णकुन्तलचुम्बितनयनाञ्चले मुखे तस्याः ।
बाष्पजलविन्दवोऽलकमुक्ता इव पान्थ निपतन्ति ॥ २ ॥
विनयविनता दिनेऽसौ निशि मदनकलाविलासलसदङ्गी ।
निर्वाणज्वलितौषधिरिव निपुण प्रत्यभिज्ञेया ॥ ३ ॥
विहितबहुमानमौना सखीप्रबोधैर्यदस्रमातनुते ।
रागार्तिकाकुयाञ्चालघुरीष्या रहसि पुनरेषा ॥ ४ ॥

छलेन परिक्षीयते तथा सुचतुरेण केनापि तथा भक्षयं यथा केनापि चिह्नेन न विभाव्यते इति भावः। दृष्टान्तालङ्कारः ॥ १ ॥

व्यालम्बीति । हे पान्थ! पथिक! प्रवासिन्नित्यर्थः व्यालम्बिभिः विशेषेण लम्बमानैः संयमनाद्यभावादिति भावः चूर्णकुन्तलैः अलकैः चुम्बिते स्पृष्टे नयनाञ्चले नेत्रप्रान्ते यस्य तथाभूते तस्याः त्वत्प्रियायाः इत्यर्थः मुखे अलकसक्ता इव चूर्णकुन्तलस्थिता मुक्ता इव बाष्पजलविन्दवः अश्रुजललेशाः निपतन्ति । तस्मात् त्वया सत्वरमितो गत्वा तामनुसन्धातव्येति भावः। दूत्या नायकं प्रत्युक्तिरियम् । उत्प्रेक्षालङ्कारः ॥ २ ॥

विनयेति । हे निपुण! सुविज्ञेत्यर्थः अनिपुणैरेतस्याभावो न बुध्यते इति भावः असौ कामिनी दिने विनयेन विनता अतिविनयवती न कथमपि अस्यास्तापत्वमनुमीयते इति भावः, परं निशि रजन्यां मदनकलाविलासेन लसत् प्रस्फुरत् अङ्गं यस्यास्तथाभूता अतएव निर्वाणा दिवसे इति भावः ज्वलिता रात्राविति भावः, औषधिरिव तृणज्योतिर्लतेव प्रत्यभिज्ञेया अवगम्या। अस्या दिवा विनयदर्शनेन त्वयां एतत्सङ्कृतेन विरज्यतां रात्रौ तस्याः सुरतचातुर्य्यं द्रक्ष्यसीति कस्याश्चित् दूत्याः कमपि तरुणं प्रत्युक्तिरियम् । उपमालङ्कारः ॥ ३ ॥

विहितेति । यत् यतः इयं सखीनां प्रबोधैरपि अस्रं नयनजलम् आतनुते विस्तारयति प्रबोधं न मन्यत इति भावः, तस्मात्

विषमशरविशिखभिन्ना पल्ली शरणं यमेकमभिलषति।
तस्य तव छायेव स्वीया जायापि भयभूमिः ॥ ५ ॥
विविधायुधव्रणार्बुदविषमे वक्षःस्थले प्रियतमस्य।
श्रीरपि वीरवधूरपि गर्वोत्पुलका सुखं स्वपिति ॥ ६ ॥
वैमुख्येऽपि विमुक्ताः शरा इवान्याययोधिनो वितनोः।
भिन्दन्ति पृष्ठपतिताः प्रिय हृदयं मम तव श्वासाः ॥७॥

विच्छितं बहुमानेन मौनं तूष्णीम्भावः यया तथाभूता। पुनः किन्तु एषा रहसि एकान्ते रागेण कामावेशेन या आर्त्तिः पीडा तया काकुदीनवचनं याच्ञा च ताभ्यां लघुः हतमानेति भावः ईक्ष्या दृष्टव्या त्वयेति शेषः। लघुरीक्षेति पाठे लघुरिव वीक्ष्यते इति तयो-क्तार्थः। मानिन्या मानापनयनाक्षमं पतिं प्रति सखीनां प्रबोध-वचनमिदम् ॥ ४ ॥

विषमेति। विषमशरस्य पञ्चेषोः कामस्य विशिखेन शरेण भिन्ना विद्धा कामपीडितेति यावत् पल्ली पल्लीवासिनी नारी यम् एकं शरणं रक्षितारं मदनभयार्द्दिति भावः, अभिलषति कामयते, तस्य तव छायेव स्वीया जायापि पत्नी अपि भयभूमिः भयस्थानम्। पर-नारीकामुकस्य निजायाश्छायाया अपरजनबुद्ध्या यथा भयं तथा पत्न्या अपि भयं भवतीति भावः। उपमालङ्कारः। कस्याचित् कमपि युवानं कामुकं प्रति वचनमिदम् ॥ ५ ॥

विविधेति। विविधैर्नानाविधैः आयुधैर्यानि व्रणानि तैरर्बुदाः मांसकीलाः शोथाः तैर्विषमे उन्नतानते प्रियतमस्य वीरपुरुषस्येति भावः वक्षःस्थले श्रीरपि विजयलक्ष्मीरपि वीरवधूरपि तत्पत्नी अपीत्यर्थः गर्वेण अहं वीरभोग्येति अहङ्कारेण उत्पुलका उन्नतरोमाञ्चा सती सुखं स्वपिति निद्राति। दीपकालङ्कारः ॥ ६ ॥

वैमुख्ये इति। हे प्रिय! अन्याययोधिनः अन्यायेन अविधानेन युध्यते इति तथोक्तस्य पराङ्मुखं न प्रहरेदिति शास्त्रलङ्घनस्य पराङ्मुखमपि

व्यक्तमधुना समेतः खण्डो मदिराक्षि दशनवसने ते ।
यन्नवसुधैकसारं लोभिनि तत्किमपि नाद्राक्षम् ॥ ८ ॥
बालाविलासबन्धानप्रभवन्मनसि चिन्तयन् पूर्वम् ।
सम्मानवर्जितां तां गृहिणीमेवानुशोचामि ॥ ९ ॥

प्रहरन्त इति भावः वितनोः अनङ्गस्य वैमुख्येऽपि विमुक्ताः शरा इव मम पृष्ठपतिताः तव श्वासाः मम हृदयं भिन्दन्ति । उपमालङ्कारः । अपराङ्गना भुक्त्वा निद्रितं पृष्ठतः सुप्तं नायकं प्रति, अथवा कपटनिद्रया नायिकां वञ्चयित्वा अपराङ्गनाभोगकामुकं नायकं प्रति नायिकाया वचनमिदम् ॥ ७ ॥

व्यक्तमिति । हे मदिराक्षि ! मत्तखञ्जननयने ! मदिरो मत्तखञ्जन इत्यमरः । ते तव दशनवसने दन्ताच्छादने अधरे इत्यर्थः समेतः संसक्तः खण्डः गुडभेदः इति अधुना साम्प्रतं व्यक्तं प्रकटतां गतम् । पूर्वं न ज्ञातमधुना तु मधुरभाषित्वात् विज्ञातमिति भावः । यद्वा ते अधरे व्यक्तेन स्फुटेन विशदेनेत्यर्थः मधुना माक्षिकेण समेतः संयुक्तः खण्डः अस्तीति शेषः । एतेन तवाधरोऽतिमधुर इति भावः । हे लोभिनि ! प्रलोभनकारिणि ! नवसुधैकसारम् अभिनवपीयूषवत् अद्वितीयसारं यत् सुरतोपभोग्यं पयोधरादिकमिति भावः तत् किमपि न अद्राक्षं नापश्यम् अथच द्राक्षामूल्यं न । केवलं कटाक्षेणावलोकयसि मधुरं भाषसे च परं चुम्बनादिदानेन मां न सुखयसीति भावः । किञ्च यत् वसुधैकसारं पार्थिवसुखसारमित्यर्थः न, अपितु पार्थिवसुखसारमेवेत्यर्थः तत् किमपि न अद्राक्षं न दृष्टवान् । चुम्बनेन तवाधररसमाधुर्यं ज्ञातं परं सर्वसारभूतसुरतदानेन मां नानुगृहीतवत्यसीति व्यज्यते । कस्यचित् कामिनः काञ्चित् प्रति वचनमिदम् ॥ ८ ॥

बालेति । अप्रभवन् अप्रभुरित्यर्थः गृहिण्यधीनत्वादिति भावः अहं पूर्वं प्राक् बालाया विलासबन्धोदयादिति भावः मनसि

वीजयतोरन्योन्यं यूनोर्वियुतानि सकलगात्राणि ।
सन्धेरत्नीव श्रोणी परं निदाघेऽपि न विघटिता ॥ १० ॥
व्यारोषं मानिन्यास्तमो दिवः कासरं कलमभूमेः ।
बद्धमलिं च नलिन्याः प्रभातसन्ध्यापसारयति ॥ ११ ॥
वक्षसि विजृम्भमाणे स्तनभिन्नं त्रुटति कञ्चुकं तस्याः ।
पूर्वदयितानुरागस्तव हृदि न मनागपि त्रुटति ॥ १२ ॥

बालायाः नवोढ़ायाः विलासबन्धान् विलासेन बन्धाः बन्धनानि स्वायत्तीकरणानीति भावः चिन्तयन् ईदृगुत्कण्ठितहृदयोऽहं कथमपि न बालया स्वायत्तीकर्त्तुं शक्य इति भावयन्नित्यर्थः इदानीं सम्मान-वर्जिता तां उत्कण्ठयेव अनुशोचामि । मनसि पूर्वं कृतं बालेयं उत्कण्ठया एव वयवर्त्तिनी स्यादिति, परन्तु बालयैव उत्कण्ठा वशे कृता अवमानिता चेति भावः । कश्चित् द्वितीयभार्य्यापरिणेतुः सखायं प्रति खेदवचनमिदम् ॥ ९ ॥

वीजयतोरिति । अन्योन्यं परस्परं वीजयतोः व्यजनेन संवा-हयतोः यूनोः दम्पत्योः सकलानि गात्राणि अङ्गानि वियुतानि विश्लिष्टानि, परं किन्तु निदाघेऽपि घर्मेऽपि श्रोणी कटिदेशः सन्धे-रत्नीव साधुमैत्र्यमिव न विघटिता न विश्लिष्टा सुरतं न त्यक्तमिति भावः ॥ १० ॥

व्यारोषमिति । प्रभातसन्ध्या प्रातःकाल इत्यर्थः मानिन्याः मानवत्याः भार्य्याः व्यारोषं विशिष्टकोपं दिवः आकाशात् तमः अन्ध-कारं कलमभूमेः श्रीहिक्षेत्रात् कासरं महिषं नलिन्याः पद्मिन्याः बद्धं निरुद्धम् अलिं भ्रमरञ्च अपसारयति निःसारयति ॥ ११ ॥

वक्षसीति । तस्याः कामिन्याः वक्षसि विजृम्भमाणे स्तनोद्भवात् उल्लसमाने तस्याः स्तनभिन्नं स्तनाभ्यां भेदं गतं कञ्चुकं कूर्पासकं त्रुटति छेदं प्राप्नोति, तव तु हृदि पूर्वदयितायां पूर्वस्त्रियाम् अनु-

व्यक्तिमवेक्ष्य तदन्यां तस्यामेवेति विदितमधुना तु।
हर्म्यहरिमुखमिव त्वामुभयोः साधारणं वेद्मि ॥ १३ ॥
व्यजनस्येव समीपे गतागतैस्तापहारिणो भवतः।
अञ्चलमिव चञ्चलतां मम सख्याः प्रापितं चेतः ॥ १४ ॥
वितरन्ती रसमन्तर्ममार्द्रभावं तनोषि तनुगात्रि।
अन्तःसलिला सरिदिव यन्निवससि वहिरदृश्यापि ॥१५॥

रागः मनागपि अल्पमपि न त्रुटति न क्षिणोतीत्यर्थः। नवोनायाः सख्या नायकं प्रति वचनमिदम् ॥ १२ ॥

व्यक्तिमिति। तदन्यां तद्भिन्नां व्यक्तिं कामिनीमिति यावत् अवेक्ष्य दृष्ट्वा कृतादरामिति भावः तस्यामेव नापरस्यामित्येवशब्दोऽन्य-व्यवच्छेदकः। त्वं समासक्त इति शेषः इति विदितं ज्ञातम् अधुना तु त्वां हर्म्यहरिमुखमिव प्रासादोपरिस्थितकृत्रिमसिंहमुखमिव उभयोः साधारणं वेद्मि अवगच्छामि, यथा हर्म्यस्थितकृत्रिमसिंहस्य मुखं पश्यतः सर्वानेव पश्यतीव तथा त्वं साम्प्रतं सर्वनारीसाधारणः संवृत्त इति भावः। सिंहमुखमित्यनेन नायकस्य स्वरूपातितं सूच्यते। कस्याश्चित् कमपि प्रत्युक्तिरियम् ॥ १३ ॥

व्यजनस्येति। व्यजनस्येव तापहारिणः सन्तापापनोदकस्य भवतः समीपे गतागतैः यातायातैः मम सख्याः चेतः अञ्चलमिव चञ्चलतां प्रापितम्। अतस्त्वरस्व तामनुपक्षीतुमिति भावः। नायकं प्रति सख्या उक्तिरियम्। उपमालङ्कारः ॥ १४ ॥

वितरन्तीति। हे तनुगात्रि! कृशाङ्गि! अन्तः मनसि रसं रागं वितरन्ती सती मम आर्द्रभावं तनोषि विस्तारयसि प्रेमावलोकनेन माम् आर्द्रयसीत्यर्थः, यत् यस्मात् अन्तःसलिला सरिदिव नदीव वहिः अदृश्यापि रागमप्रकटयन्ती अपीति भावः निवससि मम हृदीति शेषः। उपमालङ्कारः। नायिकां प्रति कामयमानस्य कस्य-चिदुक्तिरियम् ॥ १५ ॥

विहितविविधानुबन्धो मानोन्नतयावधीरितो मानी ।
लभते कुतः प्रबोधं स जागरित्वैव निद्राणः ॥ १६ ॥
व्रीडाविमुखीं वीतस्नेहामाशङ्क्य काकुवाङ्मधुरे ।
प्रेमार्द्रे सापराधां दिशति दृशं वल्लभे बाला ॥ १७ ॥
बाष्पाकुलं प्रलपतोर्गृहिणि निवर्तस्व कान्त गच्छेति ।
यातं दम्पत्योर्दिनमनुगमनावधिसरस्तीरे ॥ १८ ॥

विहितेति । विहितः कृतः विविधः बहुप्रकारः अनुबन्धः सान्त्वनं येन तथाभूतः, अपिरत्नाध्याहार्यः । मानोन्नतया अतिमानिन्या त्वयेति शेषः अवधीरितः अवज्ञातः निराकृत इत्यर्थः मानी अभिमानवान् सः जागरित्वैव निद्राणः स्वपन् कुतः प्रबोधं लभते ? न कुतोऽपीत्यर्थः । मानिन्या त्वया सः पूर्वमवधीरितः, इदानीं तेन मानिना त्वम् *अवधीर्यसे अतः अतिमानो न कर्त्तव्य इति भावः । सख्या मानिनीं कामिनीं कृतानुशयां प्रत्युक्तिरियम् ॥ १६ ॥

व्रीडेति । व्रीडया लज्जया न तु अस्नेहेनेति भावः विमुखीं पराङ्मुखीम् अतएव वीतस्नेहाम् अप्रणयिनीम् आशङ्क्य सन्दिह्य काकुवाचा दीनवचनेन मधुरे मनोहारिणि वल्लभे कान्ते बाला नवोढ़ा कामिनी प्रेमार्द्रे सापराधां लज्जावशात् अनभिमुखतासम्पादनेन अपराधिनीम् अपराधव्यञ्जिकामिति भावः दृशं नेत्रं दिशति अर्पयति अपराद्धं मयेति नेत्रसंज्ञया संसूचयतीति भावः ॥१७॥

बाष्पाकुलमिति । बाष्पेण अश्रुप्रवृत्त्या आकुलं सगद्गदमित्यर्थः, हे गृहिणि ! गृहस्वामिनि ! निवर्तस्व, हे कान्त ! गच्छेति प्रलपतोः परावर्त्तनाद्यभावात् वृथा जल्पतोः, प्रलापोऽनर्थकं वच इत्यमरः, दम्पत्योः अनुगमनस्य अवधिभूतं यत् सरस्तीरं तत्र आजलाशयं स्निग्धोऽनुगम्यत इति शास्त्रात् दिनं यातम् अतिक्रान्तं प्रणयातिरेकेण जिगमिषायाः क्षणे क्षणे भङ्गोदयाविर्भावादिति भावः । प्रवसन् पतिः विरहकातरा तत्पत्नी चैतयोरवस्थावर्णनमिदम् ॥ १८ ॥

वक्षःप्रणयिनि सान्द्रश्वासे वाङ्मात्रसुभटि घनघर्मे ।
सुतनु ललाटनिवेशितललाटिके तिष्ठ विजितासि ॥१९॥
विचरति परितः कृष्णे राधायां रागचपलनयनायाम् ।
दशदिग्वेधविशुद्धं विशिखं विदधाति विषमेषुः ॥ २०॥
वीक्ष्यैव वेत्ति पथिकः पीवरबहुवायसं निजावासम् ।
सौन्दर्य्यैकनिधेरपि दयितायाश्चरितमविचलितम् ॥ २१ ॥

वक्ष इति । हे वक्षःप्रणयिनि ! मदुरवक्षःस्थलस्थित्यभिलाषिणि ! सान्द्रश्वासे घननिःश्वासवति ! वाङ्मात्रेण कथामात्रेण सुभटि सुवीरे ! घनघर्मे गलद्घर्मस्वेदे ! ललाटे ममेति शेषः निवेशिता ललाटिका तिलकं यया तथाभूते ! सुतनु शुभाङ्गि ! तिष्ठ विजितासि पराभूतासि विशेषणपदैरेव विजितत्वं सिद्धमतः पुनरुपादानेन काव्यस्य चमत्कारित्वमपनीतमिति सुधीभिरनुसन्धेयम् । विपरीतरतकारिणीं कामिनीं प्रति तत्पत्युरुक्तिरियम् ॥ १९ ॥

विचरतीति । कृष्णे परितः समन्तात् विचरति भ्रमति सति रागेण प्रेम्णा चपले चञ्चले सतृष्णे इति यावत् नयने यस्याः तथाभूतायां राधायां विषमेषुः पञ्चशरः दशानां दिशां वेधेन विशुद्धं विशेषेण तीक्ष्णीभूतमित्यर्थः दशसु दिक्ष्वपि लक्ष्यवेधनात् सुतीक्ष्णतममिति यावत् विशिखं शरं विदधाति प्रयुङ्क्ते इत्यर्थः । राधा कृष्णे नितरामासक्तेति कस्याश्चित् सख्या अन्यां सखीं प्रत्युक्तिरियम् ॥ २० ॥

वीक्ष्यैवेति । पथिकः प्रवासी नायकः पीवराः परिपुष्टा बहवो वायसा यत्र तादृशं वायसपरिपोषणस्य भाविनायकागमनरूपशुभावहत्वसम्भावनयेति भावः निजावासं स्वनिलयं वीक्ष्यैव दृष्ट्वैव सौन्दर्य्यैकनिधेः अतिसुन्दर्य्या इत्यर्थः अपि एतेन चारित्रभङ्गः सम्भाव्यते इति भावः दयितायाः कान्तायाः चरितम् अविचलितम् अभ्रष्टम् अदु-

विमुखे चतुर्मुखेऽपि श्रितवति वागीशभावमीशेऽपि ।
मग्नमहीनिस्तारे हरिः परं स्तब्धरोमाभूत् ॥ २२ ॥
वापीकच्छे वासः कण्टकवृतयः सजागरा भ्रमराः ।
केतकविटप किमेतैर्ननु वारय मञ्जरीगन्धम् ॥ २३ ॥
विचलसि मुग्धे विधृता यथा तथा विशसि हृदयमदये मे ।
शक्तिः प्रसूनधनुषः प्रकम्पलक्ष्यं स्पृशन्तीव ॥ २४ ॥

षितमित्यर्थः वेत्ति अवगच्छति । यदीयमस्यासक्ता तदा कथमस्मदागमनरूपशुभसम्पत्तये काकपोषणं स्यादिति धियेति भावः । अथवा नायकप्रतारणार्थमिवं चतुरा तथा करोति यथा नायक इमां सतीमेव निश्चिनोतीति सहृदयसंवेद्यम् ॥ २१ ॥

विमुख इति । चतुर्मुखे विधातरि विमुखे अमनोयोगकारिण्यपि, ईशे हरे अनीशभावम् अनीश्वरत्वम् असामर्थ्यमित्यर्थः श्रितवत्यपि मग्नायाः रसातलगतायाः मह्याः पृथिव्या उद्धारे हरिः विष्णुः परं केवलं स्तब्धरोमा वराहः रोमाञ्चितकलेवरश्च उत्साहवशादिति भावः अभूत् । शक्तौ सत्यामपि सर्वे परार्थं न यतन्ते, कोऽपि महान् यतत इति भावः । अप्रस्तुतप्रशंसालङ्कारः ॥ २२ ॥

वापीति । हे केतकविटप ! वाप्याः दीर्घिकायाः कच्छे जलप्राये देशे, जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविध इत्यमरः । वासः अवस्थानं कण्टकावृतयः वेष्टनानि, भ्रमराः सजागराः निद्राशून्याः प्रहरिण इति शेषः एतैः उपायैरिति शेषः किम् ? न किमपि फलमित्यर्थः । ननु भोः मञ्जरीगन्धं वारय, यावत्तव कान्तायाः सौरभं प्रसरति तावत् त्वया विविधेनापि उपायेन जारनिवारणेन सुस्थितिः कर्त्तुं न शक्यते इति अप्रस्तुतप्रशंसालङ्कारः ॥ २३ ॥

विचलसीति । हे मुग्धे सुन्दरि ! अदये दयाशून्ये ! विधृता विशेषेण धृतापि स्थितेति शेषः यथा विचलसि गच्छसि, तथा प्रकम्प-

विहितासमशरसमरो जितगाङ्गेयच्छविः कृताटोपः ।
पुरुषायिते विराजति देहस्तव सखि शिखण्डीव ॥ २५ ॥
हृतिविवरनिर्गतस्य प्रमदाबिम्बाधरस्य मधु पिबते ।
अवधीरितपीयूषः स्पृहयति देवाधिराजोऽपि ॥ २६ ॥
वासितमधुनि वधूनामवतंसे मौलिमण्डने यूनाम् ।

लक्ष्यं चञ्चलशरव्यं स्पृशन्ती प्रसूनधनुषः कामस्य शक्तिरिव अस्त्रविशेष इव मे मम हृदयं विशसि । त्वद्गमनेन मे प्राणा नितरां व्यथामापद्यन्ते इति भावः । नायिकां प्रति नायकस्योक्तिरियम् । उपमालङ्कारः ॥ २४ ॥

विहितेति । हे सखि ! विहितः कृतः असमशरसमरः कामयुद्धं सुरतमिति यावत् पक्षे असमैः अनुपमैः शरैः समरः संग्रामः येन तथोक्तः, जिता पराभूता गाङ्गेयस्य सुवर्णस्य पक्षे भीष्मस्य छविः दीप्तिः येन तथाभूतः, कृतः आटोपः सम्भ्रमः रते संग्रामे चेति भावः येन तादृशः तव देहः पुरुषायिते विपरीतरमणे पुरुषकारे च शिखण्डीव द्रुपदराजसुत इव विराजति शोभते । पुरा कुरुक्षेत्रसमरे शिखण्डी भीष्मं जित्वा परां शोभामवापेति महाभारतीयवार्त्ता । उपमालङ्कारः । नायिकां कृतविपरीतरतां प्रति सख्याः परिहासोक्तिरियम् ॥ २५ ॥

हृतीति । देवराजोऽपि शचीपतिरपि अवधीरितम् अवज्ञातं पीयूषम् अमृतं येन तथाभूतः सन् हृतिविवरात् वेतनरन्ध्रात् निर्गतस्य प्रमदायाः कामिन्याः बिम्बाधरस्य मधुरसमिति यावत् पिबते स्वदानाय जनायेति शेषः स्पृहयति मम पीयूषपानात् शचीसम्भोगादपि चैतद्वरमिति स्वतो भाग्यवत्तरत्वेन तं जनं मन्यते इति भावः । कामुकस्य सख्यायं कथमेवं लब्धमत्या परास्त्रियं कामयसे इति वादिनं प्रत्युक्तिरियम् ॥ २६ ॥

वासितेति । वासितम् अधिष्ठितं मधु पुष्पातिशयरूपसौरभ-

विलसति सा पुरकुसुमे मधुपीव वनप्रसूनेषु ॥ २७ ॥
व्रीडाप्रसरः प्रथमं तदनु च रसभावपुष्टचेष्टेयम् ।
जवनीविनिर्गमादनु नटीव दयिता मनो हरति ॥ २८ ॥
वाससि हरिद्रयेव त्वयि गौराङ्ग्या निवेशितो रागः ।
पिशुनेन सोऽपनीतः सहसा पतता जलेनेव ॥ २९ ॥

मिति भावः पक्षे सौरभं यस्मिन् तादृशे मधूनाम् अवतंसे कर्णभूषण-रूपे कामिन्यः सततं यदीयगुणश्रवणे समासक्ताः सन्तीति भावः पक्षे कर्णभूषणतां गते यूनां तरुणानां मौलिमण्डले शिरोभूषणभूते सर्वयुवश्रेष्ठे इति भावः पुरकुसुमे नगरपुष्पभूते नायके इति शेषः वनप्रसूनेषु मधुपीव भ्रमरीव सा कामिनी विलसति विशेषेण समासक्ता राजते इत्यर्थः । उपमालङ्कारः । दूत्याः कञ्चित् कामिनं सुपुरुषसङ्गतां कामपि रमणीमाहर्त्तुकामं प्रत्युक्तिरियम् ॥ २७ ॥

व्रीडेति । प्रथमम् आदौ व्रीडाप्रसरः लज्जाविर्भावः, तदनु च तदनन्तरञ्च रसेन रागेण भावेन मनोविकारविशेषेण च, निर्विकारात्मके चित्ते भावः प्रथमविक्रियेति दर्पणः । पुष्टा पोषं गता पूरितेति यावत् चेष्टा दैहिकव्यापारविशेषः इयम् । अतः दयिता कान्ता जवनीविनिर्गमात् तिरस्करिण्या निष्क्रमात अनु पश्चात् नटीव नर्त्तकीव मनः हरति । यथा नटी तिरस्करिण्या निर्गत्य प्रथमं लज्जाभावं तदनु रसभावपूर्णचेष्टया सभ्यानां मनो हरति तथा इयं कामिनी प्रथमं कान्तसङ्गमे ईषल्लज्जिता सती पश्चात् यथोचितरसभावसंवलितचेष्टया नायकमनो हरतीति भावः । उपमालङ्कारः ॥ २८ ॥

वाससीति । हरिद्रयेव गौराङ्ग्या तयेति शेषः वाससीव त्वयि रागः अनुरागः पीतत्वञ्च निवेशितः, स रागः सहसा पतता जलेनेव पिशुनेन खलेन दुर्जनेनेत्यर्थः अपनीतः अपसारितः क्षालितश्च । उपमालङ्कारः । कञ्चित् प्रति कृतानुरागां कामपि कामिनीं तदीय-

विष्वग्विकासिसौरभरागान्धव्याधबाधनीयस्य ।
क्वचिदपि कुरङ्ग भवतो नाभीमादाय न स्थानम् ॥ ३० ॥
वटकुटजशालशाल्मलिरसालबहुवारसिन्धुवाराणाम् ।
अस्ति भिदा मलयाचलसम्भवसौरभ्यसाम्येऽपि ॥ ३१ ॥
विनिहितकपर्दकोटिं चापलदोषेण शङ्करं त्यक्त्वा ।
वटसेकमनुसरन्ती जाह्नवि लुठसि प्रयागतटे ॥ ३२ ॥

दोषारोपणेन कोऽपि दुर्जनः तत्तत्परागहीनां चकारेति कस्याश्चित् सख्याः कामपि सखीं प्रत्युक्तिरियम् ॥ २९ ॥

विष्वगिति । हे कुरङ्ग ! मृग ! विष्वक् समन्तात् विकासि प्रसरत् यत् सौरभं सौगन्ध्यं सर्वतः प्रसिद्धं सौन्दर्यमिति च ध्वन्यते तत्र यो रागः अनुरागः अभिलाषश्च तेन अन्धाः कार्याकार्यविधुरा इति यावत्, ये व्याधाः मृगयवः हिंस्रजनाश्च तैः बाधनीयस्य पीडनीयस्य भवतः तव नाभीं कस्तूरीयुतामिति भावः निर्भरताञ्चेति ध्वनिः । आदाय गृहीत्वा क्वचिदपि कुत्रापि प्रदेशे न स्थानं नावस्थितिः सर्वत्रैव तव भयेन स्थितिरित्यर्थः । एतादृशसुन्दरीनायिकां गृहीत्वा कुत्रापि न निरुद्वेगेन स्थातुं शक्यते इत्यप्रस्तुतप्रशंसालङ्कारः ॥ ३० ॥

वटेति । मलयाचलात् सम्भवतीति तथोक्तं यत् सौरभ्यं तत् साम्येऽपि वटादिसिन्धुवारान्तानां वृक्षाणां भिदा भेदः विशेष इत्यर्थः अस्ति विद्यते सर्वैरेव मलयाचलात् सौरभं लभ्यते तथापि तेषाम् एकस्मात् गुरोरुपदिष्टानां शिष्याणामिव महान् भेदः स्यादिति भावः । अप्रस्तुतप्रशंसालङ्कारः ॥ ३१ ॥

विनिहितेति । हे जाह्नवि जह्नुतनये ! महाकुलप्रसूते इति च च ध्वनिः । विशेषेण निहिता अर्पिता कपर्दकोटिः जटाजूटप्रान्तदेशः येन तथाभूतं मस्तके स्थानदातारमिति भावः इत्यबहुसंख्यवराटकमिति च ध्वन्यते । शङ्करं हरं सुखदमिति च ध्वनिः ।

वेद चतुर्णां क्षणदा प्रहराणां सङ्गमं वियोगं च।
चरणानामिव कूर्मी सङ्कोचमपि प्रसारमपि॥ २२॥
वृतिविवरेण विशन्ती सुभग त्वामीक्षितुं सखी दृष्टिः।
हरति युवहृदयपञ्जरमध्यस्था मन्मथेषुरिव॥ २४॥
विपणितुलासामान्ये मा गणयैनं निरूपणे निपुण।
धर्मघटोऽसावधरीकरोति लघुमुपरि नयति गुरुम्॥ २५॥

चापल्यदोषेण चाञ्चल्यदोषेण त्यक्त्वा एकं वटं वटद्वयम् अक्षयवटमिति भावः कपर्दकमिति च व्यज्यते अनुसरन्ती भ्रमयन्ती सती प्रयागतटे लुठसि? अनुचितमेतत्कृतमिति भावः। कांश्चित् त्यक्त्वान्यसङ्गां नीच-माश्रयन्तीं कामिनीं प्रति कस्याश्चित् सख्या उक्तिरियम्। अप्रस्तुत-प्रशंसालङ्कारः॥ २२॥

वेदेति। कूर्मी चरणानामिव सङ्कोचमपि प्रसारमपि विस्तार-मपि क्षणदा रात्रिः, त्रियामा क्षणदा क्षपेत्यमरः चतुर्णां प्रहराणां सङ्गमवियोगञ्च वेद जानाति चतुःप्रहरसङ्गमवियोगजनितसुखदुःखयो रात्रिकालीनत्वादिति भावः। कान्तावियोगे कान्तवियोगे च मम यादृग् दुःखं सङ्गमे च यादृक् सुखं तत् तव किं वाच्यं केवलं रात्रिरेव जानातीति नायकस्य सखायं प्रति नायिकायाश्च सखीं प्रत्युक्तिरियम्। उपमालङ्कारः॥ २२॥

वृतीति। हे सुभग! त्वाम् ईक्षितुं द्रष्टुं वृतिविवरेण वेष्टन-च्छिद्रेण प्रविशन्ती निःसरन्ती सख्या दृष्टिः यूनां हृदयपञ्जरस्य मध्यस्था मध्यवर्त्तिनी मन्मथस्य कामस्य इषुरिव शर इव हरति विध्यति त्वामिति शेषः। यदि चेयं सर्वयुवजनलक्ष्या तथापि त्वामेवा-भिलषतीति त्वमस्यां समासक्तो भवेति कस्याश्चिद् दूत्या नायकं प्रत्यु-क्तिरियम्। उपमालङ्कारः॥ २४॥

विपणीति। हे निरूपणे निर्द्धारणे निपुण चतुर! एनं जनम्, इत्थमिति वा पाठः। विपणिः पण्यवीथिका तस्यां या तुला तोलन-

वासरगम्यमनूरोरम्बरमवनी च वामनैकपदम् ।
जलधिरपि पोतलङ्घ्यः सतां मनः केन तुलयामः ॥ ३६ ॥
विततमोमषिलेखालक्ष्योत्सङ्गस्फुटाः कुरङ्गाक्षि ।
पत्त्राक्षरनिकरा इव तारा नभसि प्रकाशन्ते ॥ ३७ ॥
विविधाङ्गभङ्गिषु गुरुर्नूतनशिष्यां मनोभवाचार्यः ।

इत्यर्थः तत्सामान्ये तत्सादृश्ये मा गणय न अवधारय, विपर्य्ययव्यवहारिणः प्रायेण कूटतुलया व्यवहरन्तीति भावः । असौ धर्मघटः धर्मरक्षणार्थं तोलनयन्त्र इत्यर्थः लघुं क्षुद्रम् अधरीकरोति नमयति, गुरुं महान्तम् उपरि नयति ऊर्द्धं प्रापयति । धर्मघटोऽसावित्यत्र दिव्यतुला सेति पाठान्तरम् । सदसद्विवेकिनो यथायोग्यमानदायिनो भवन्तीति भावः ॥ ३५ ॥

वासरेति । अम्बरम् आकाशम् अनूरोः अरुणस्य, सूरसूतोऽरुणोऽनूरुरित्यमरः । वासरगम्यं दिवसैकगम्यम् अवनी पृथिवी च वामनस्य हरेरवतारविशेषस्य एकं पदं पदनिक्षेपस्थानं, जलधिः समुद्रोऽपि पोतलङ्घ्यः जलयानोत्तार्य्यः । अतः सतां साधूनां मनः केन वस्तुनेति शेषः तुलयामः समीकुर्मः । आकाशं पृथिवी समुद्रश्च अरुणादिना क्षुद्रपदार्थेन परिच्छिद्यते सतां मनस्तु न केनापि परिच्छिद्यते इति आकाशपृथिवीसमुद्रेभ्योऽपि सन्मनस आधिक्यवर्णनात् व्यतिरेकालङ्कारः ॥ ३६ ॥

विततेति । हे कुरङ्गाक्षि ! मृगनयने ! विततं विस्तृतं यत् तमः अन्धकारं तदेव मषिलेखा तया लक्ष्ये लक्षणीये उत्सङ्गे क्रोडे आकाशस्येति भावः, स्फुटाः स्पष्टं परिदृश्यमानाः ताराः नक्षत्राणि पत्त्राक्षरनिकरा इव पत्रलिखितवर्णावलय इव नभसि आकाशे विराजन्ते शोभन्ते । त्वमपि मदुत्सङ्गे विराजस्वेति भावः । मानिनीं प्रति नायकस्योक्तिरियम् । उपमालङ्कारः ॥ ३७ ॥

विविधेति । विविधासु विचित्रासु अङ्गभङ्गिषु अङ्गचेष्टाविशेषेषु

वेत्रलतयेव बालां तल्पे नर्तयति रतरीत्या ॥ ३८ ॥

विपरीतमपि रतं ते स्रोतो नद्या इवानुकूलमिदम् ।
तटतरुमिव मम हृदयं समूलमपि वेगतो हरति ॥ ३९ ॥

वैभवभाजां दूषणमपि भूषणपक्ष एव निःक्षिप्तम् ।
गुणमात्मनामधर्मं द्वेषं च गृणन्ति काणादाः ॥ ४० ॥

वक्राः कपटस्निग्धा मलिनाः कर्णान्तिके प्रसज्जन्तः ।
कं वञ्चयन्ति न सखे खलाश्च गणिकाकटाक्षाश्च ॥ ४१ ॥

गुरुः शिक्षयिता मनोभवः काम एव आचार्य्यः नूतनशिष्यां बालां नवोढां मुग्धां वा तल्पे शय्यायां, तल्पं शय्याट्टदारेष्वित्यमरः । वेत्रलतयेव रतरीत्या सुरतलीलया नर्त्तयति नृत्यं कारयति ॥ ३८ ॥

विपरीतमिति । अनुकूलं मत्प्रियमिति यावत् इदं ते विपरीतमपि रतं तटतरुमिव मम हृदयं समूलमपि वेगतः वेगात् हरति । उपमालङ्कारः । नायिकां प्रति नायकस्योक्तिरियम् ॥ ३९ ॥

वैभवेति । वैभवभाजां विभवशालिनां दूषणमपि भूषणपक्ष एव अलङ्कारस्थान एव निक्षिप्तं स्थापितं जनैरिति शेषः विभवशालिभिः दोषे कृतेऽपि स दोषो न गण्यते प्रत्युत गुणतया व्याख्यायते इति भावः । तथाहि काणादाः कणादमुनिमतावलम्बिनः वैशेषिकदर्शनानुसारिण इत्यर्थः अधर्मं द्वेषञ्च आत्मनां गुणं गृणन्ति कीर्त्तयन्ति अधर्मद्वेषयोर्दोषत्वेऽपि आत्मनिष्ठत्वेन काणादैस्तच्चतुर्विंशतिसंख्यकगुणान्तर्गणनादिति भावः । दोषा दरिद्रमेवाश्रयन्ति न धनिनमिति फलितार्थः । कस्यचिद्दरिद्रस्य सखायं प्रत्युक्तिरियम् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४० ॥

वक्रा इति । हे सखे ! वक्राः कुटिलाः कपटस्निग्धाः कृत्रिमानुरागप्रदर्शिनः मलिनाः पापाशयाः कृष्णाश्च कर्णान्तिके कर्णसमीपे प्रसज्जन्तः दुर्मन्त्रणादायिनः कर्णान्तलग्नाश्च खलाः दुर्जनाश्च गणि-

विद्युज्ज्वालावलयितजलधरपिठरोदराद्विनिर्यान्ति ।
विशदौदनद्युतिमुषः प्रेयसि पयसा समं करकाः ॥४२॥
व्यजनादिभिरुपचारैः किं मरुपथिकस्य गेहिनि विहितैर्मे ।
तापस्त्वदूरुकदलीद्वयमध्ये शान्तिमयमेति ॥ ४३ ॥
वैगुण्येऽपि हि महता विनिर्मितं भवति कर्म शोभायै ।

कानां वेश्यानां कटाक्षाश्च कं जनं न वञ्चयन्ति न प्रतारयन्ति अपितु सर्वमेवेत्यर्थः । अत्र प्रस्तुतानां खलानां वा गणिकाकटाक्षाणाम् अप्रस्तुतानाञ्च तेषाम् एकधर्मसम्बन्धात् दीपकालङ्कारः । अथवा उभयेषामेव प्रस्तुतानामप्रस्तुतानां वा एकधर्मसम्बन्धात् तुल्ययोगितालङ्कारः ॥ ४१ ॥

विद्युदिति । हे प्रेयसि ! विद्युज्ज्वालाभिस्तडिन्मालाभिर्वलयितं वेष्टितं यत् जलधरपिठरं मेघरूपपात्रं तस्मात् विशदानि स्वच्छानि यानि ओदनानि अन्नानि तेषां द्युतिं कान्तिं मुष्णन्ति हरन्तीति तथोक्ताः करकाः वर्षोपलाः, वर्षोपलस्तु करका इत्यमरः । पयसा जलेन पक्षे दुग्धेन समं सह विनिर्यान्ति निपतन्तीत्यर्थः । उपमालङ्कारः । नायिकां प्रति नायकस्य वर्षाकालीनोद्दीपकत्वसूचकं वचनम् ॥ ४२ ॥

व्यजनादिभिरिति । हे गेहिनि ! मरुपथिकस्य निर्जला वालुकापूर्णा सततसन्तप्ता भूमिर्मरुदेशः तत्पथिकस्य तदागतस्येत्यर्थः नितरां सन्तप्तस्येति भावः मे मम विहितैः मदर्थं कृतैरित्यर्थः व्यजनादिभिः उपचारैः सेवनविधानैरित्यर्थः किम् ? न किमपि फलमित्यर्थः न शान्तिरिति भावः । अयं तापः तव ऊरू एव कदलीद्वयं रम्भातरुयुगलं तस्य मध्ये स्थितस्य ममेति शेषः शान्तिं निर्वाणम् एति प्राप्नोति । प्रवासादागतस्य कान्तस्य कामिनीं प्रत्युक्तिरियम् । रूपकालङ्कारः ॥ ४३ ॥

वैगुण्य इति । वैगुण्येऽपि असम्यक्त्वेऽपि असमीचीनत्वे-

दुर्वहनितम्बमन्थरमपि हरति नितम्बिनीनृत्यम्॥ ४४॥
वीक्ष्य सतीनां गणने रेखामेकां तया स्वनामाङ्काम्।
सन्तु युवानो हसितुं स्वयमेवापारि नावरितुम्॥ ४५॥
विन्ध्याचल इव देहस्तव विविधावर्तनर्मदनितम्बः।
स्थगयति गतिं मुनेरपि सम्भावितरविरथस्तम्भः॥ ४६॥

ऽपीति भावः महता जनेन विनिर्मितं विशेषेण रचितं कम शोभायै भवति शोभते एवेत्यर्थः। किं तथाहि नितम्बिन्याः प्रशस्तनितम्बायाः कामिन्याः नृत्यं दुर्वहेण वोढुमशक्येन नितम्बेन मन्थरमपि जडमपि असमीचीनमपीति भावः हरति दर्शकानां मन इति शेषः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ४४॥

वीक्ष्येति। तया कामिन्या सतीनां पतिव्रतानां गणने संख्याने स्वनामाङ्कां निजनामचिह्निताम् एकां रेखां वीक्ष्य दृष्ट्वा युवानः तदुपभोक्तार इति भावः हसितुं सन्तु हसन्त्वित्यर्थः, स्वयमेव आत्मनैव आवरितुं गोपयितुं हास्यमिति शेषः न अपारि न शक्तमित्यर्थः। कामपि सतीत्वेन काञ्चित् प्रशंसन्तीं प्रति कस्याश्चिदुक्तिः॥४५॥

विन्ध्याचल इति। विविधेन बहुप्रकारेण आवर्त्तेन पक्षासनविशेषेण नर्मदः सुखदः नितम्बो यस्य तथाभूतः पक्षे विविधा आवर्त्ता जलभ्रमविशेषा यस्यां तादृशी नर्मदा रेवा यत्र तथाभूतो नितम्बः कटकदेशः यस्य तादृशः सम्भावितः रविरथस्य सूर्य्यरथस्य स्तम्भः, पराजयः येन तथोक्तः नितम्बरूपैकदेशेन तच्चक्रविनिर्जयादिति भावः अथवा रविरथस्य वक्षया तच्चक्रस्य स्तम्भः पराजयः येन ततोऽप्यधिकरमणीयत्वादिति भावः पक्षे सम्भावितः कृतः रविरथस्य स्तम्भः गतिविलोपः येन तथाविधः तव देहः विन्ध्याचल इव मुनेरपि किं पुनर्मद्विधस्य कामवावसस्येत्यपिशब्दार्थः। पक्षे अगस्त्यस्यापि गतिं स्थगयति रुणद्धि। तवेमं देहं दृष्ट्वा न मम चलितुं शक्तिरस्ति तस्मादनुगृहाणेति भावः। कथमितो नापसरसीति

वृतिभञ्जन गञ्जनसह निकाममुद्दाम दुर्नयाराम।
परवाटीगतलम्पट दुष्टवृष स्मरसि गेहमपि॥ ४७॥
वंशावलम्बनं यद्यो विस्तारो गुणस्य यावनतिः।
तज्जालस्य खलस्य च निजाङ्गसुप्तप्रणाशाय॥ ४८॥

धार्ष्टिनीं काञ्चित् प्रति कस्यचित् कामिन उक्तिरियम्। पुरा मेरु-जिगीषया सूर्य्यं मेरुं प्रदक्षिणीकुर्वाणं विन्ध्याद्रिराह स्म भगवन् दिवाकर! मेरुमिव मामपि प्रदक्षिणीकुर्विति। ततः कथमहं विधातृनियोगमन्यथा कुर्वन् त्वदाशयं सम्पादयामीति धार्ष्टिनं सूर्य्यं तर्हि अहं तथा प्रवृद्धस्त्वां रुणध्मीत्यभिधाय स्वयं प्रवृध्य सूर्य्यपथं रुरोध। ततो देवैरभ्यर्थितोऽगस्त्यमुनिः वाराणसीं त्यक्त्वा शिष्यं विन्ध्यमुपेत्यावोचत् वत्स! कियन्तं कालं मा प्रवर्द्धस्व यावदहं दक्षिणस्या दिशो नागमिष्यामीत्यभिधाय दक्षिणां दिशमगच्छत् पुनर्नागमच्च विन्ध्याद्रिश्च गुरुवचनात् तथैवावतस्थे इति पौराणिकी वार्त्ता॥ ४६॥

वृतीति। हे वृतिभञ्जन! गृहावरणभङ्गकारिन्! गञ्जनं तिरस्कारः तत्सह! निकाममत्यर्थं उद्दाम! उच्छृङ्खल! दुर्नयस्य दुश्चेष्टितस्य आराम! उपवनभूत! विश्रामस्थानभूतेत्यर्थः परेषां वाटीगतस्य लम्पट! नायिकादूषकेति ध्वनिः। दुष्टवृष! दुर्दान्तवृषभ! गेहं निवासं स्मरसि अपि भावयसि किम्? त्वया परगृहेषु एवमत्याचारान् करोषि तव गृहे किं वृत्तं तत् तव भावयितुं युक्तमिति भावः। येन परगृहे यथा व्यवह्रियते तस्य गृहे अन्येन तथैव व्यवह्रियते इति कस्यचित् कमपि लम्पटं प्रति भङ्ग्योक्तिरियम्। अप्रस्तुतप्रशंसालङ्कारः॥ ४७॥

वंशावलम्बनमिति। जालस्य आनायस्य मत्स्यधारणार्थं रचितस्य तन्तुमयवस्तुविशेषस्य खलस्य च यत् वंशस्य कुलस्य अवलम्बनम् अहं महाकुलप्र[illegible] इत्येवंरूपेण स्वगौरवख्यापनं पक्षे वंशोस्य अव-

विन्ध्यमहीधरशिखरे मुदिरश्रेणीकृपाणमयमनिलः ।
उद्यद्विद्युज्ज्योतिः पथिकवधायेव शातयति ॥ ४९ ॥
व्यालम्बमानवेणीधुतधूलि प्रथममश्रुभिर्धौतम् ।
आयातस्य पदं मम गेहिन्या तदनु सलिलेन ॥ ५० ॥
वक्षःस्थलसुप्ते मम मुखमुपधातुं न मौलिमालभसे ।
पीनोत्तुङ्गस्तनभरदूरीभूतं रतश्रान्तौ ॥ ५१ ॥

लम्बनम् आश्रयणं यः गुणस्य दयादाक्षिण्यादेः तन्तोश्च विस्तारः विस्तापनं प्रसारणञ्च या च अवनतिः नम्रता विनयित्वमित्यर्थः पक्षे मत्स्यधरणार्थमवनमनं तत् निजाङ्के स्रोतसङ्के च स्थ आश्रितस्य-त्यर्थः प्रणाशाय संहाराय भवतीति शेषः । दीपकं तुल्ययोगिता चालङ्कारः ॥ ४८ ॥

विन्ध्येति । उद्यत् उदयमानं विद्युदेव ज्योतिर्यस्य तथाविधः अयम् अनिलः विन्ध्यमहीधरस्य विन्ध्याद्रेः शिखरे मुदिरश्रेणी मेघपङ्क्तिरेव कृपाणः तं पथिकानां वधायेव शातयति तीक्ष्णीकरोति । वर्षाकालोऽयमतोऽत्रोद्दीपको विरहिणामिति नायिकासख्या नायकं प्रति तद्युत्थानिषेधाय वचनमिदम् ॥ ४९ ॥

व्यालम्बेति । गेहिन्या मत्कान्तया आयातस्य प्रवासादागतस्य मम पदं प्रथमं व्यालम्बमानया प्रोषितपतिकायाः केशसंयमननिषेधा-दिति भावः वेण्या धुता अपनीता धूलिर्यस्मात् तथाभूतं तथा अश्रुभिः धौतं क्षालितं तदनु तत्पश्चात् सलिलेन धौतमिति पूर्वेणान्वयः । वयस्यं प्रति कस्यचिद्वचनमिदम् ॥ ५० ॥

वक्षःस्थलेति । हे रतश्रान्तौ सुरतपरिश्रमे वक्षःस्थलसुप्ते ! मम मुखम् उपधातुम् उपधानीकर्त्तुं पीनोत्तुङ्गस्तनभरदूरीभूतं पीनयोः पीवरयोः उत्तुङ्गयोरुन्नतयोः स्तनयोर्भरेण दूरीभूतं दूर-स्थितं मौलिं धम्मिल्लं, मौलिः किरीटधम्मिल्लाविल्यमरः । न आलभसे

वदनव्यापारान्तर्भावादनुरक्तमानयन्ती त्वम् ।
दूति सतीमाशार्थं तस्य भुजङ्गस्य दंष्ट्रासि ॥ ५२ ॥

---

शकारादिः ।

श्रीरपि भुजङ्गभोगे मोहनविघ्नेन शीलिता येन ।
सोऽपि हरिः पुरुषो यदि पुरुषा इतरेऽपि किं कुर्मः ॥१॥

न स्पृशसि मा स्पृशेति यावत् पीनोन्नतकुचभरपक्षायितत्वादिति भावः ॥ ५१ ॥

वदनेति । हे दूति ! वदनव्यापारेण वाक्चातुर्य्येणेत्यर्थः अन्यत्र मुखचालनया अन्तर्भावात् हृदयप्रवेशनात् अन्यत्र शरीरान्तःप्रवेशाच्च अनुरक्तम् अनुरागवन्तं प्रेमाधीनमित्यर्थः सतीनां पतिव्रतानां शार्थं समूहम् अन्यत्र अनु शरीरान्तःप्रवेशात् पश्चात् रक्तम् आनयन्ती निःसारयन्ती त्वं तस्य भुजङ्गस्य विटस्य सर्पस्य च भुजङ्गो, विटसर्पयोरमरः । दंष्ट्रा असि । वचनचातुर्य्येण तथा हृदयं प्रविश्य सतीसमूहं पातिव्रत्यात् प्रच्याव्य विटेन योजयसीति भावः । कस्याचित् काञ्चित् दूतीं प्रत्युक्तिरियम् । सभङ्गाभङ्गश्लेषः । तदुक्तं दर्पणे । श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते इति ॥ ५२ ॥

---

श्रीरिति । येन मोहने मनसो मुग्धीकरणे विघ्नेन चतुरेण भुजङ्गभोगे शेषनागदेहे तदुपरीत्यर्थः एतेन अनुरागिणो भीतिशून्यत्वं सूचितम् । श्रीरपि लक्ष्मीरपि या सर्वजनस्पृहणीयेति अपिशब्दार्थः । शीलिता सम्भुक्ता शायितेति पाठे सुरतार्थं शयनं कारितेत्यर्थः । यदि सोऽपि हरिः पुरुषः, इतरे अन्येऽपि पुरुषाः भव-

अङ्के या स्थैर्यमयी श्लथयति बाहू मनोभवस्यापि ।
दर्पशिलामिव भवतीं कतरस्तरुणो विचालयति ॥ २ ॥
शार्दूलनखरभङ्गुर कठोरतरजातरूपरचनोऽपि ।
बालानामपि बाला सा यस्यास्त्वमपि हृदि वससि ॥३॥

न्तीति शेषः तर्हि किं कुर्मः ? कुर्म इत्यत्र ब्रूम इति पाठो युक्ततरः । तादृशस्य पुरुषस्य हरेरन्यैः साम्यकरणमनुचितमिति भावः । श्रद्धा मोहेन व्यसनतया न विष्णुना निर्बोधेन अचतुरेणेत्यर्थः येन कोऽपि बन्धोरूपिण्यपि कान्तेति भावः भुजङ्गानां विटानां भोगे सम्भोगार्थ- मित्यर्थः शीलिता दत्ता शायितेति पाठे स्फुट एवार्थः । यदि इत- रेऽपि पुरुषाः सन्तीति शेषः किन्तु स पुरुषः हरिरपि पशुरेव अपिरत्रैवार्थः । किं कुर्मः एतादृशं जनं पुरुषं न गणयाम इति भावः । नारीणामन्योन्योक्तिरियम् ॥ १ ॥

अङ्क इति । या स्थैर्य्यमयी अहार्य्यनिश्चयेति भावः मनोभव- स्यापि का कथान्येषामित्यपिशब्दार्थः । बाहू भुजौ करौ वा श्लथयति श्लथीकरोति मनोभवोऽपि यदि बाहुभ्याम् आलिङ्गति वा कराभ्यां स्पृशति तदपि आलिङ्गनं स्पर्शनं वा निराकरोतीति भावः तां दर्पशि- लामिव अहङ्कारपाषाणमिव भवतीं कतरः तरुणः विचालयति मानात् भ्रंशयतीत्यर्थः न कोऽपीत्यर्थः । एतादृशमानवती त्वं यत् कोऽपि केनापि प्रकारेण ते मानं न भङ्क्तुं शक्नोतीति भावः । मानवतीं साधारणनायिकां प्रति एतादृशमाने तरुणास्त्वत्समीपं नागमिष्यन्ति तस्मादीदृङ्मानो न विधेय इति सख्या उपदेशवचनमिदम् । उपमा- लङ्कारः ॥ २ ॥

शार्दूलेति । हे शार्दूलनखरवत् कुटिल ! निष्ठुर ! अन्यत्र हे भङ्गुर वक्र शार्दूलनखर ! हे कठोरतर ! अतिकठिन ! जाता रूपस्य सौन्दर्य्यस्य रचना यस्य तथोक्तः सुन्दरोऽपीत्यर्थः अन्यत्र कठोरतरा अतिकठिना जातिरूपस्य स्वर्णस्य रचना गठनविशेषो यत्र तथाभूतो-

श्रुत एव श्रुतिहारिणि रागोत्कर्षेण कण्ठमधिवसति ।
गीत इव त्वयि मधुरे करोति नार्थग्रहं सुतनुः ॥ ४ ॥
श्रीः श्रीफलेन राज्यं तृणराजेनाल्पसाम्यतो लब्धम् ।
कुचयोः सम्यक्साम्यादितो घटचक्रवर्तित्वम् ॥ ५ ॥

ऽपि सर्वालङ्कारविशेषान्तर्गतोऽपीति यावत् त्वं यस्याः हृदि वससि या त्वय्यनुरक्तेति भावः सा बालानामपि बाला अपि अतिबालिकैवेत्यर्थः अपिरत्रैवार्थः अतिमुग्धैवेति यावत् । व्याप्तनखरं सुवर्णायलङ्कारयुतं बालानां हृदि धार्य्यते इति प्रसिद्धिः । अतिमुग्धा सा रूपमोहितेव त्वय्यासक्ता परं न जानाति त्वामतिकठिनमिति सख्या नायकमत् सनपरं वचनमिदम् । कठोरतरजातरूपरचनापीति पाठे कठोरतरं सम्यमित्यर्थः यथा तथा जाता रूपस्य सौन्दर्य्यस्य रचना यस्यां तथाभूतापि सम्पूर्णयौवनापीत्यर्थः शेषस्य विशेषणम् । अन्यत् स्पष्टम् । सभङ्गश्लेषः ॥ ३ ॥

श्रुत इति । सुतनुः शोभनाङ्गी सेति शेषः श्रुत एव श्रवणविषयीकृते एव श्रुतिहारिणि श्रोत्रसुखदे, रागस्य प्रेम्णः उत्कर्षेण आतिशय्येन अन्यत्र रागो नाम स्वरविशेषः तस्य उत्कर्षेण कण्ठम् अधिवसति आश्रयति मधुरे मनोहारिणि गीत इव त्वयि अर्थग्रहं धनकाङ्क्षामिति यावत् अन्यत्र अर्थावबोधं न करोति । सा तव अर्थाकाङ्क्षिणी न, अपि तु गुणानुरक्तैव तस्मात् सत्वरं तामनुगच्छेति भावः । सख्या नायकं प्रत्युक्तिरियम् । अस्य चैकांशतोऽनुरूपः श्लोकोऽयम् । अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम् । अनधिगतपरिमलापि हरति दृशं मालतीमालेति दृष्टान्तालङ्कारप्रस्तावे द्रष्टव्यः ॥ ४ ॥

श्रीरिति । श्रीफलेन विल्वेन कुचयोः स्तनयोः अल्पसाम्यात् किञ्चित्सादृश्यात् श्रीः श्रीफल इति श्रीयुक्तं नामेत्यर्थः लब्धेति लिङ्गविपरिणामेन योज्यम् । तृणराजेन तालेन राज्यं तृणराज इति

श्रोणी भूमावङ्के प्रियो भयं मनसि पतिभुजे मौलिः ।
गूढ़श्वासो वदने सुरतमिदं चेत् तृणं त्रिदिवम् ॥ ६ ॥
श्लिष्यन्निव चुम्बन्निव पश्यन्निव चोल्लिखन्निवातृप्तः ।
दधदिव हृदयस्यान्तः स्मरामि तस्या मुहुर्जघनम् ॥ ७ ॥
शिरसि चरणप्रहारं प्रदाय निःसार्यतां स ते तदपि ।

नाम इत्यर्थः खञ्जम् । घटः सम्यक्साम्यात् सम्पूर्णसादृश्यात् चक्रवर्त्तित्वं चक्रे कौलाले इति भावः वर्त्तित्वं वर्त्तनं स्थितिरिति यावत् सार्वभौमत्वञ्च गतः प्राप्तः । महदनुकरणमपि महत्त्वसंपद आपादयतीति भावः ॥ ५ ॥

श्रोणीति । भूमौ भुवि शय्याप्रान्तदेशे इति भावः श्रोणी नितम्बः, अङ्के उत्सङ्गे प्रियः प्रेमपात्रं जार इति भावः, मनसि भीतिः भयं पतिभयादिति भावः, पातीति पतिः रक्षक एव न तु प्रणयीति भावः तस्य भुजे मौलिः मस्तकम् अन्धकारेऽपि स्पर्शादनया ज्ञास्यतीति तन्निवारणार्थमिति भावः, वदने मुखे गूढ़ः संवृत इति यावत् श्वासः श्वासातिरेके पत्युरवबोधशङ्कयेति भावः । इदम् इत्थं सुरतं शोभनं मनोहरमित्यर्थः रतं चेत् यदि, तदा त्रिदिवं स्वर्गः तृणम् अतितुच्छमिति यावत् स्वर्गसुखादपि तादृशं सुरतं स्पृहणीयमिति भावः । परपुरुषेण सह गूढ़ं रतवत्याः सखीं प्रति वचनमिदम् ॥ ६ ॥

श्लिष्यन्निति । तस्याः कान्तायाः जघनं कटिपुरोभागम् अतृप्तः सन् पुनः पुनः सेवादावपि अपरितुष्टः सन् श्लिष्यन्निव आलिङ्गन्निव चुम्बन्निव पश्यन्निव उल्लिखन्निव उद्घर्षन्निव हृदयस्य अन्तः मध्ये दधदिव धारयन्निव मुहुः पुनः पुनः स्मरामि । सखायं प्रति प्रोषितस्य नायकस्योक्तिरियम् ॥ ७ ॥

शिरसीति । हे सुमुखि ! सुवदने ! त्वया कालिन्द्याः यमुनायाः

चक्राङ्कितो भुजङ्गः कालिय इव सुमुखि कालिन्द्याः ॥८॥
शोच्यैव सा कृशाङ्गी भूतिमयी भवतु गुणमयी वापि।
स्नेहैकवश्य भवता त्यक्ता दीपेन वर्तिरिव ॥ ९ ॥
शुक इव दारुशलाकापञ्जरमनुदिवसवर्धमानो मे।

कालिय इव तदाख्यः भुजङ्ग इव स भुजङ्गः पिङ्गः शिरसि चर-णप्रहारं पादताडनं प्रदाय निःसार्य्य तां दूरीक्रियतां तदपि तथापि स चक्रेण कैतवेन चक्राकारचरणचिह्नेन च अङ्कितः कलङ्कितः चिह्नितश्च ते एवकारोऽत्राध्याहार्य्यः तवैवेत्यर्थः यदि चासौ कृता-पराधस्तथापि त्वदेकशरण इत्ययमनुकम्प्यतामिति भावः। मानिनीं प्रति सख्या उक्तिरियम्। पक्षे यदि च कालियः चरणताडितः यमुनाया निःसार्य्य समुद्रं नीतः तथापि चरणचिह्नितत्वात् तवैवा-श्रितः गरुडात् त्रातस्त्वेति कृष्णं प्रति कस्यचिदुक्तिः। उपमा-लङ्कारः ॥ ८ ॥

शोच्यैवेति। हे स्नेहैकवश्य! प्रणयैकवशंवद! न तु गुणादि-भिर्वश्य इति भावः पक्षे तैलमात्रवशङ्गत! दीपेन वर्त्तिरिव इयेव भवता त्यक्ता विरहिता सा कृशाङ्गी क्षीणाङ्गी एकत्र विरहदुःखात् अन्यत्र तैलाभावेन परिपुष्टतापगमादिति भावः भूतिमयी ऐश्वर्य्य-प्रचुरा धनशालिनीत्यर्थः पक्षे भस्ममयी, भूतिर्भस्मनि सम्पदीत्यमरः; वापि अथवा गुणमयी अतिगुणवती पक्षे तन्तुप्रचुरा भवतु, किन्तु शोच्यैव शोचनीया एव। स्त्रीणामैश्वर्य्यगुणयोगे सत्यपि पतिवाल्लभ्य-विरह एव महान् शोकनिलयः, तस्मात् सा त्वया पूर्वं कृता स्नेह-तया परित्यक्ता इदानीं त्वयि महान्तं स्नेहमाधास्यतीति त्वत्प्रण-यो न विहातुं योग्य इति नायिकासख्या नायकं प्रति सान्त्वनवच-नम्। श्लेषानुप्राणितोपमालङ्कारः ॥ ९ ॥

शुक इति। चारस्य कामस्य विशिखेन शरेण तीक्ष्णं सुखं

क्रन्तति दयिताहृदयं शोकः शरविशिखतीक्ष्णमुखः ॥ १० ॥

श्रुत्वाकस्मिकमरणं शुकसूनोः सकलकौतुकैकनिधेः ।

ख्याती गृहिणीविनयव्यय आगत्यैव पथिकेन ॥ ११ ॥

शीलितभुजङ्गभोगा क्रोडेनाभ्युद्धृतापि कृष्णेन ।

अचलैव कीर्त्यते भूः किमशक्यं नाम वसुमत्याः ॥ १२ ॥

शारस्य यस्य तथोक्तः पक्षे शरविशिखवत् तीक्ष्णं मुखं वदनं यस्य तथोक्तः अनुदिवसं प्रतिदिनं वर्द्धमानः वृद्धिं गच्छन् उभयत्र समानं, शोकः सम्भाव्यमानमद्विरहजं दुःखमिति यावत् दारुशलाकापिञ्जरं काष्ठमयशलाकापुञ्जनिर्मितमावासमित्यर्थः शुक इव तदाख्यः पक्षि-विशेष इव मे मम दयितायाः कान्तायाः हृदयं क्रन्तति छिनत्ति व्यथयतीति भावः । उपमालङ्कारः । कथं त्वया देशान्तरं न गत-मिति वादिनं सखायं प्रति कस्यचित् गमनप्रतिबन्धकवचनम् ॥ १० ॥

श्रुत्वेति । पथिकेन विदेशादागतेन गृहिणोत्यर्थः आगत्यैव आगमनानन्तरमेव एवकारेणापरसुखात् अन्यव्यवच्छेदः । सकल-कौतुकस्य समग्रानन्दस्य एकनिधेरेकमात्राश्रयस्य शुकसूनोः शुकपक्षि-शावकस्य शुकसमस्य निजशिशोर्वा आकस्मिकम् अहेतुकं रोगादिकं विनैवेति भावः मरणं श्रुत्वा गृहिण्या विनयस्य शिष्टाचारस्य व्ययः नाशः असदाचरणमिति यावत् ख्यातः विदितः । परपुरुषेण सह रमणं बालकः शुको वा कदाचित् स्वामिने ज्ञापयिष्यतीति तदा-शङ्कया तन्मारणमिति किमकार्य्यमसतीनामिति भावः । कस्यचित् कमपि प्रति असतीचारित्रकथनमिदम् ॥ ११ ॥

शीलितेति । शीलितः आश्रितः भुजङ्गस्य वासुकेर्भोगः यया तथोक्ता वासुकिशिरोवर्त्तिनीत्यर्थः पक्षे शीलिताः कृताः भुजङ्गैः विटैः भोगाः रतानि यया तथोक्ता क्रोडेन वराहरूपिणा

श्यामा विलोचनहरी बालेयं मनसि हन्त सज्जन्ती ।
लुम्पति पूर्वकलत्रं धूमलता भित्तिचित्रमिव ॥ १३ ॥
शतशो गतिरावृत्तिः शतशः कण्ठावलम्बनं शतशः ।
शतशो यामीति वचः स्मरामि तस्याः प्रवासदिने ॥ १४ ॥

कृष्णेन पक्षे कृष्णेन केनापि मलिनपुरुषेण क्रोडेन उत्सङ्गेन अभ्युद्धृतापि पातालात् ऊर्ध्वं नीतापि पक्षे स्पृष्टापि भूः पृथिवी अचलैव स्थिरैव पक्षे अचाञ्चल्यवती एव कीर्त्यते उद्घुष्यते । वसुमत्याः पृथिव्याः पक्षे धनशालिन्याः कामिन्याः अशक्यम् असाध्यं किम् ? न किमपि सर्वमेव शक्यमित्यर्थः स्त्री बहुधनशालितया अकार्य्यकारिणी अपि लोकैः न दूष्यते इति भावः । तस्मात् त्वया धनशालिन्या परपुरुषः स्वच्छन्दं गम्यतामिति दूत्या नायिकां प्रति अप्रस्तुतप्रशंसया उक्तिः ॥ [illegible] ॥

श्यामेति । हन्तेति खेदसूचकमव्ययम् । श्यामा यौवनवती श्यामा यौवनमध्यस्थेति वचनात् अथवा शीतकाले भवेदुष्णा उष्णकाले च शीतला । नवयौवनसम्पन्ना सा स्त्री श्यामेति कथ्यते इत्युक्तलक्षणा विलोचनहरी नेत्रानन्ददायिनी अतएव मनसि सज्जन्ती हृदयङ्गमेत्यर्थः इयं बाला नवोढ़ा कामिनी धूमलता भित्तिचित्रमिव कुड्यस्थालेख्यमिव पूर्वकलत्रं पूर्वां स्त्रियं लुम्पति मलिनयतीति भावः । धूमलतापक्षे श्यामा कृष्णवर्णा विलोचनहरी अश्रुपातनेन नयनक्लेशजननीत्यर्थः । तरुण्या कान्तया प्रौढ़ा परिभूयते इति भावः ॥ १३ ॥

शतश इति । प्रवासदिने यस्मिन् दिने अहं प्रोषितस्तस्मिन् दिने तस्याः कान्तायाः सकाशे इति शेषः शतशः शतं शतं गतिः पुनः पुनर्गमनं शतशः आवृत्तिः पराङ्मुखगमनं शतशः कण्ठावलम्बनं ममेति शेषः शतशः यामि गच्छामीति वचनं ममेति शेषः स्मरामि । सख्यायं प्रति प्रोषितस्य प्रणयिनीवार्त्तावर्णनमिदम् ॥ १४ ॥

श्रुतपरपुष्टरवाभिः पृष्टो गोपीभिरभिमतं कृष्णः ।
शंसति वंशस्वनितैः स्तनविनिहितलोचनोऽनुमतम् ॥१५॥

शङ्करशिरसि निवेशितपदेति मा गर्वमुद्वहेन्दुकले ।
फलमेतस्य भविष्यति तव चण्डीचरणरेणुमृजा ॥ १६ ॥

शाखिशिखरे समीरणदोलायितनीडनिर्वृतं वसति ।
कर्मैकशरणमगणितभयमशिथिलकेलि खगमिथुनम् ॥१७॥

श्रुतेति । श्रुतः आकर्णितः परपुष्टानां कोकिलानां रवो याभिः तथोक्ताभिः गोपीभिः गोपाङ्गनाभिः अभिमतं वाञ्छितं पृष्टः किमिदानीं कोकिलरवेणोद्दीपितमदने काले विधेयमित्यनुयुक्त इत्यर्थः कृष्णः स्तनेषु गोपीनामिति शेषः विनिहिते अर्पिते लोचने नयने येन तथाभूतः सन् वंशस्वनितैः वेणुरवैः अनुमतम् आलिङ्गनादिकं देहीति अभिमतं शंसति कथयति ॥ १५ ॥

शङ्करेति । हे इन्दुकले ! चन्द्ररेखे ! अहं शङ्करस्य शिरसि निवेशितपदा निहितचरणा इति हेतोः गर्वं मा उद्वह न कुरु । तव चण्ड्याः कोपनायाः गौर्य्याः हरशिरसि पदं निदधत्या इति भावः चरणस्य रेणुमृजा रजोमार्जनम् एतस्य इदानीं हरशिरसि पदनिधानस्य फलं भविष्यति । पूर्वनायिकां भर्त्तृशिरसि निहितपदामालोक्य तां प्रति नवोढासपत्न्या मा गर्वं वह त्वमतिचिरादेव मत्-वचना मद्भूमिमार्जने नियुक्ता भविष्यसीति वचनमिदम् । अप्रस्तुत-प्रशंसालङ्कारः ॥ १६ ॥

शाखीति । खगमिथुनं पक्षियुगलं शाखिनः वृक्षस्य शिखरे शाखिपदेन घनच्छायावत्त्वं तेन च बहूनां जनानां विश्रामस्थानत्वं सूचितम् । शाखापदेन पतनयोग्यत्वं ध्वनितम् । समीरणेन वायुना दोलायितं कम्पितं यत् नीडं कुलायः तत्र निर्वृतं सुस्थितं समीरण-पदेन निवारणानर्हविपत्सम्भावना सूचिता । कर्मैकशरणं कर्ममात्रा-

शुक सुरतसमरनारद हृदयरहस्यैकसार सर्वज्ञ ।
गुरुजनसमक्षमूक प्रसीद जम्बूफलं दलय ॥ १८ ॥
शिरसा वहसि कपर्दं रुद्र रुदित्वापि रजतमर्जयसि ।
अस्याप्युदरस्यार्धं भवतस्तव वेत्ति कस्तत्त्वम् ॥ १९ ॥

प्रवर्त्तनं यथास्माभिः कर्म कृतं तथैव फलं भोक्तव्यमिति दृढनिश्चय-मवलम्बमानम् अत एव अगणितभयं निर्भीकं तथा वर्धिष्णुः स्यन्दनः कोविदस्य तथाभूतं सत् वसति तिष्ठति । दृष्ट्वा कामियुगलं कंपमानाभ्यां निर्विघ्नेन सुखं वस्तव्यमिति चिन्तयानं प्रति सान्त्व-दानसूचकं वचनम् ॥ १७ ॥

शुकेति । हे शुक ! सुरतसमरनारद ! सुरतसंग्रामवर्द्धक ! हृद-यरहस्यस्य हृदयगोपनीयस्य वस्तुनः एकसार ! मुख्यसार ! सर्वज्ञ ! गुरुजनानां समक्षे मूक ! निःशब्द ! प्रसीद प्रसन्नो भव जम्बूफलं दलय खण्डय भुङ्क्ष्वेत्यर्थः । शुकसमीपे कृतोपनायकसङ्गायाः कस्याश्चित् शुकः सर्वं जानाति, यदि गुरुजनसमक्षं मच्चरितं निवेदयेत् तदा महदनिष्टमापतेदिति तथाभूतं शुकं प्रति प्रसादनवचनमिदम् ॥ १८ ॥

शिरसेति । हे रुद्र ! शिरसा कपर्दं जटाजूटं वराटकञ्च वहसि, रुदित्वापि रोदनं कृत्वापि रजतम् अर्जयसि योऽरोदीत् यदरोदीत् तत् रुद्रस्य रुद्रत्वमिति तस्य च रोदनात् रजतोत्पत्तिः यद्यपि अग्नौ वामं वसु च सन्दधत इत्यग्निरोदनात् रजतोत्पत्ति-कथाप्यष्टमूर्त्तितयाग्निरूपो रुद्र इति वक्तव्यः । अस्यापि उदरस्य अर्धं भवतस्तव हरगौरीरूपतया हरिहररूपतया वेति भावः तत्त्वं को जनः वेत्ति जानाति । एतादृशार्थागमेऽपि अर्धशरीरपोषि-तत्वमात्रं तवेति अहो कार्पण्यमिति त्वच्चरितं त्वयैव बोद्धव्यं नान्यै-रिति भावः । दम्पत्योरेकशरीरत्वात् एकतरापाये अपरस्य अर्था-र्जने प्रयासातिशयोऽपि नोचित इति च भावः ॥ १९ ॥

श्रोतव्यैव सुधेव श्वेतांशुकलेव दूरदृश्यैव ।
दुष्टभुजङ्गपरीते त्वं केतकि न खलु नः स्पृश्या ॥ २० ॥

श्रवणोपनीतगुणया समर्पयन्त्या प्रणम्य कुसुमानि ।
मदनधनुर्लतयेव त्वया वशं दूति नीतोऽस्मि ॥ २१ ॥

शाखोटकशाखोटजवैखानसकरटपूज्य रट सुचिरम् ।
नादरपदमिह गणकाः प्रमाणपुरुषो भवानेकः ॥ २२ ॥

श्रोतव्यैवेति । हे दुष्टभुजङ्गपरीते ! दुष्टसर्पाकीर्णे दुर्जनविटव्याप्ते च केतकि ! त्वं सुधेव अमृतमिव श्रोतव्यैव न तु भोक्तव्येति एवकारार्थः । श्वेतांशुकलेव चन्द्रकलेव दूरतः दृश्यैव न तु समीपे इत्येवकारार्थः । अतः नः अस्माकं न खलु नैव स्पृश्या स्पर्शयोग्या । सामान्यवनितां दुर्जनपरीतां प्रति कस्यचिदुक्तिः । अप्रस्तुतप्रशंसालङ्कारः ॥ २० ॥

श्रवणेति । हे दूति ! श्रवणम् उपनीतः प्रापितः गुणः सौन्दर्य्यादिः नायिकाया इति भावः यया तयोक्तया, पक्षे गुणः मौर्वी यस्यास्तथोक्तया आकर्णकृष्टयेत्यर्थः प्रणम्य नमस्कृत्य कुसुमानि पुष्पाणि नायिकाप्रेषितानि समर्पयन्त्या, पक्षे प्रणम्य नम्रीभूय कुसुमानि समर्पयन्त्या वर्षन्त्या मदनशराणां पुष्पमयत्वादिति भावः अतएव मदनस्य धनुर्लतयेव कार्मुकयष्ट्येव त्वया वशं नीतोऽस्मि । मयाऽवश्यमेव त्वद्वचने स्थातव्यमिति भावः । दूतीं प्रति नायकस्योक्तिरियम् । उपमालङ्कारः ॥ २१ ॥

शाखोटकेति । शाखोटकस्य वृक्षविशेषस्य शाखा एव उटजं पर्णशाला तस्य वैखानसाः तापसा ये करटाः काकाः तेषु पूज्य श्रेष्ठ ! त्वं सुचिरम् अविरतं रट शब्दायस्व, इह अस्मिन् प्रदेशे गणकाः दैवज्ञाः न आदरपदं न आद्रियन्ते इत्यर्थः एको भवान् प्रमाणपुरुषः शुभाशुभनिर्णायकत्वे प्रामाणिक इत्यर्थः । तादृशमूर्खाधिष्ठिते देशे विद्वांसः न पूज्यन्ते इति भावः । अप्रस्तुतप्रशंसालङ्कारः ॥ २२ ॥

शशिरेखोपमकान्तेस्तवान्यपाणिग्रहं प्रयातायाः ।
मदनासिपुत्रिकाया इवाङ्गशोभां कदर्थयति ॥ २३ ॥
शैथिल्येन भृता अपि भर्तुः कार्यं त्यजन्ति न सुवृत्ताः ।
बलिनाकृष्टे बाहौ वलयाः कूजन्ति धावन्ति ॥ २४ ॥

---

शशीति । शशिनश्चन्द्रस्य रेखोपमा कलासदृशी कान्तिर्यस्यास्तथोक्तायाः अथवा चन्द्राङ्कश्रीसदृशकान्तेः अङ्कश्रीः कथ्यते रेखेति कोषः । तव अन्यस्य मन्निर्दिष्टातिरिक्तस्य पाणिग्रहं प्रयातायाः अन्येन परिणीताया इत्यर्थः मदनस्य असिपुत्रिकयेव छुरिकयेव अङ्गशोभां शरीरसौन्दर्यं कदर्थयति निन्दति जन इति शेषः अयोग्यसमागमादिति भावः । मदनस्य असिपुत्रिका मदनेनैव ग्राह्या नान्येन गृहीता यथा शोभां नाप्नोति तथा मन्निर्दिष्टेन यूना परिगृहीता यथा शोभां प्राप्नोषि तथा अन्येन परिगृहीता नेति फलितार्थः । तस्मात् मन्निर्दिष्टेनैव तरुणेन तव सङ्गतिर्युक्ता नान्येनेति भावः । दूत्या नायिकां प्रत्युक्तिरियम् । उपमालङ्कारः ॥ २३ ॥

शैथिल्येनेति । शैथिल्येन श्लथीभावेन भृताः धृता अपि पालिता अपीत्यर्थः सुवृत्ताः सच्चरिताः जनाः भर्तुः स्वामिनः कार्य्यं न त्यजन्ति अपितु कुर्वन्त्येवेत्यर्थः । तथाहि बलिना बलवता बाहौ हस्ते आकृष्टे सति वलयाः कङ्कणानि श्लथीभावेन गृहीता इति भावः कूजन्ति शब्दायन्ते धावन्ति चलन्ति च यावच्छक्यं भर्तुर्हस्तं न त्यजन्तीति भावः । अचेतनानां वलयानां सुवृत्तत्वादेवंविधाचरणं का कथा सचेतनानामिति भावः ॥ २४ ॥

षकारादिः।

षट्चरणकीटजुष्टं परागघुणपूर्णमायुधं त्यक्ता।
त्वां मुष्टिमेयमध्यामधुना शक्तिं स्मरो वहति॥ १॥

——

सकारादिः।

सा दिवसयोग्यकृत्यव्यपदेशा केवलं गृहिणी।
द्वितिथेर्दिवसस्य परा तिथिरिव सेव्या निशि त्वमसि॥१॥
स्तननूतननखलेखालम्बी तव घर्मबिन्दुसन्दोहः।
आभाति पट्टसूत्रे प्रविशन्निव मौक्तिकप्रसरः॥ २॥

षट्चरणेति। स्मरः कामः आयुधम् अस्त्रं पौष्पमिति भावः षट्चरणाः भ्रमरा एव कीटाः तैर्जुष्टं निष्कासितं तथा परागाः रजांसि एव घुणाः काष्ठकीटविशेषाः तैः पूर्णं व्याप्तम् अतएव त्यक्ता अधुना मुष्टिमेयमध्यां कृशोदरीं त्वां शक्तिम् अस्त्रविशेषरूपां वहति। रूपकालङ्कारः। नायकस्य नायिकां प्रत्युक्तिरियम्॥ १॥

——

सेति। सा गृहिणी केवलं दिवसयोग्येषु कृत्येषु गृहपरिष्कारणादिव्यापारेषु इत्यर्थः व्यपदेशः नाम गृहस्वामिनीति आख्या यस्यास्तथोक्ता। त्वं नवोढ़ां प्रत्युक्तिरिति भावः द्वितिथेः तिथिद्वययुक्तो दिवसस्य परा तिथिरिव निशि रजन्यां सेव्या गृहिणीति शेषः तस्मात्त्वमेवास्य प्रियेति कस्याश्चित् सख्या नवोढ़ां प्रत्युक्तिरियम्॥ १॥

स्तनेति। तव स्तनयोः नूतनाभ्यः एतेन सरक्तत्वं सूच्यते। नखलेखाभ्यः नखक्षतचिह्नेभ्यः आलम्बते आपततीति तथाभूतः घर्मबिन्दुनिकरः स्वेदबिन्दुसमूहः पट्टसूत्रे प्रविशन्निव मौक्तिकप्रसरः मुक्ताभ-

सौभाग्यगर्वमेका करोतु यूथस्य भूषणं करिणी।
अत्यायामवतोर्या मदान्धयोर्मध्यमधिवसति ॥ ३ ॥
स्वचरणपीडानुमितत्वन्मौलिरुजाविनीतमात्सर्या।
अपराद्धा सुभग त्वां स्वयमहमनुनेतुमायाता ॥ ४ ॥
स्नेहमयान् पीडयतः किं चक्रेणापि तैलकारस्य।
चालयति पार्थिवानपि यः स कुलालः परं चक्री ॥ ५ ॥

शिनिचयः आभाति शोभते। उत्प्रेक्षालङ्कारः। सख्या नायिकां प्रति परिहासवचनमिदम् ॥ २ ॥

सौभाग्येति। यूथस्य गजसमूहस्य भूषणम् अलङ्कारभूता एका करिणी हस्तिनी सौभाग्यगर्वं प्रियवाल्लभ्यजन्यमहङ्कारं करोतु, या अत्यायामवतोः अतिमहतोः मदान्धयोः करिणोः मध्यम् अधिवसति अधितिष्ठति। सर्वमनोरथसम्पादनकारित्वं सामान्यवनितानां भूषण-मिति भावः ॥ ३ ॥

स्वचरणेति। हे सुभग! स्वचरणेन या पीड़ा प्रहारः तया निजपादप्रहारेणेत्यर्थः अनुमिता अवबुद्धा तव या मौलिरुजा शिरः-पीड़ा तया विनीतम् अपनीतं मात्सर्य्यं विद्वेषः त्वयीति भावः यस्याः तथाभूता अतएव अपराद्धा कृतापराधा अहं स्वयं त्वाम् अनुनेतुम् आयाता। नायकं प्रति मानिन्याः स्वयमागतायाः स्वदोषपरि-हारकं वचनमिदम् ॥ ४ ॥

स्नेहेति। स्नेहमयान् तैलप्रचुरान् बान्धवानिति ध्वनिः पीड़यतः चूर्णयतः क्लेशयतश्च तैलकारस्य तदाख्यजातिविशेषस्य चक्रे-णापि तदाख्ययन्त्रविशेषेणापि बलेनापीति ध्वनिः किम्? न किमपि प्रयोजनमित्यर्थः। यः पार्थिवानपि पृथिवीविकारान् घटादीनपि भूपानपीति ध्वनिः चालयति भ्रंशयतीति ध्वनिः। स कुलालः कुम्भकारः परं केवलं चक्री चक्रवान् बलवांश्च। अनुरक्तजनापी-

सरले न वेद भवती बहुभङ्गा बहुरसा बहुविवर्ता ।
गतिरसतीनेत्राणां प्रेम्णां स्रोतस्वतीनां च ॥ ६ ॥
सखि मध्याह्नद्विगुणद्युमणिकरश्रेणिपीडिता छाया ।
मज्जितुमिवालवाले परितस्तरुमूलमाश्रयति ॥ ७ ॥
सखि शृणु मम प्रियोऽयं गेहं येनैव वर्त्मनायातः ।
तन्नगरग्रामनदीः पृच्छति सममागतानन्यान् ॥ ८ ॥

पीडनशतु विदाहकारित्वमेव नववतः परिचितमिति स्वभावानुभावि-तया अप्रस्तुतप्रशंसया व्यज्यते ॥ ५ ॥

सरले इति । हे सरले ! मुग्धे ! असतीनेत्राणां दुश्चारिणी-नयनानां प्रेम्णां स्रोतस्वतीनां नदीनाञ्च गतिः व्यापारः बहवः भङ्गाः कौटिल्यविच्छेदतरङ्गरूपा इति भावः यस्यां तथाभूता बहवः रसा रागहर्षजलरूपा यस्यां तादृशी तथा बहवः विवर्त्ताः सङ्कोचन-परिणामावर्त्तरूपा यस्यां तथाविधा । भवती न वेद न जानाति तदिति शेषः । तस्मात् त्वया प्रेम्णो गतिं विविच्य तथा प्रवर्त्तितव्यं यथा न दुःखभागिनी स्या इति नायिकां प्रति सख्या उपदेशवचनम् । दीपकालङ्कारः ॥ ६ ॥

सखीति । हे सखि ! परितः समन्तात् मध्याह्ने द्विगुणा या द्युमणेः सूर्य्यस्य कराणां किरणानां श्रेणिः तया पीडिता व्यथिता सन्तापितेति यावत् छाया आलवाले मज्जितुमिव तापशान्त्यर्थमिति भावः तरुमूलम् आश्रयति । एवञ्च स्त्रीणां यौवनमेव मध्याह्नः, तत्र सूर्य्यरूपमदनसन्तापे कान्तसंश्रयणमेव उपायः, तत्त्वया यथा मे कान्तसंश्रयेण तापशान्तिः स्यात् तथा कुर्विति नायिकाया विरहिण्याः सखीं प्रति भङ्ग्योक्तिः । उत्प्रेक्षालङ्कारः ॥ ७ ॥

सखीति । हे सखि ! शृणु अवधानं कुर्विति भावः ममायं प्रियः येनैव वर्त्मना मार्गेण गेहं मत्पितुरिति भावः आयातः आगतः, समं

सायं रविरनलमसौ मदनशरं स च वियोगिनीचेतः ।
इदमपि तमःसमूहं सोऽपि नभो निर्भरं विशति ॥ ९ ॥
स्मरसमरसमयपूरितकम्बुनिभो द्विगुणपीनगलनालः ।
शीर्णप्रासादोपरि जिगीषुरिव कलरवः क्वणति ॥ १० ॥

बहु आगतान् अन्यान् जनान् तस्मिन् वर्त्मनि या नगरग्रामनद्यः ताः पृच्छति अनुयुङ्क्ते । एतच्च मदनरागपरतन्त्रतया आगमनकाले तत्तन्नगरादिषु अनवधानात् आगत्य मत्सकाशे सुस्थितस्य अमर्मभिव्याहारिणः प्रति तत्तन्नगरादिपृच्छेति अस्य पतिवाक्यसूचनपरं सखीं प्रति वचनमिदम् । अतएव सखीति सम्बोधनपदेनैव पृच्छतीति पदस्य गतार्थत्वेऽपि तदुपादानं अस्य गौरवप्रापनपरमेवेति सुधीभिर्ज्ञेयम् । पितृगृहस्थायाः अन्यस्या नायिकाया उक्तिरियम् ॥ ८ ॥

सायमिति । सायं सन्ध्याकाले रविः सूर्य्यः अनलम् अग्निम्, असौ अग्निः मदनशरं, स च मदनशरः वियोगिनीनां विरहिणीनां चेतः हृदयं, इदमपि वियोगिनीचेतोऽपि तमःसमूहं मोहमयमज्ञानपुञ्जम् अन्धकारचयञ्च, सोऽपि तमःसमूहः नभः आकाशं निर्भरम् अत्यर्थं विशति आश्रयति । रजन्यां विरहिणीनां चेतः सर्वं शून्यमयं पश्यतीति भावः । विरहिण्याः सखीं प्रत्युक्तिरियम् ॥ ९ ॥

स्मरेति । कलरवः कपोतः मधुरध्वनिश्चेति ध्वनिः, पारावतः कलरव इत्यमरः । स्मरस्य समरसमये संग्रामकाले पूरितः आध्मातः यः कम्बुः शङ्खः तन्निभः तत्सदृशः, शङ्खः स्यात् कम्बुरस्त्रियामित्यमरः । द्विगुणपीनम् अतिस्फीतं गलनालं कण्ठनली यस्य तथोक्तः सन् जिगीषुरिव विजयार्थीव शीर्णस्य पुरातनतया जीर्णावयवस्येति यावत् प्रासादस्य देवनिकेतनस्य, प्रासादो देवभूभुजामित्यमरः । उपरि क्वणति कूजति । अत्र स्मरेति विशेषणयुतकलरवपदेनोद्दीपकता शीर्णपदेन पतनभयादन्यासारोहणीयता प्रासादपदोपरिपदेन अन्यानवलोकनीयत्वेन निर्भयसुरतस्थानयोग्यता वाक्यसन्दर्भेण प्रमापनो-

स्फुरदधरमविरतास्रु ध्वनिरोधोत्कम्पकुचमिदं रुदितम् ।
जानूपनिहितहस्तन्यस्तमुखं दक्षिणप्रकृतेः ॥ ११ ॥

स्वयमुपनीतैरशनैः पुष्णन्ती नीडनिर्वृतं दयितम् ।
सहजप्रेमरसज्ञा सुभगागर्वं वकी वहतु ॥ १२ ॥

स्वरसेन बध्नतां करमादाने कण्टकोत्करैस्तुदताम् ।
पिशुनानां पनसानां कोषाभोगोऽप्यविश्वास्यः ॥ १३ ॥

रुकता च ध्वन्यते । तदेतत् सङ्केतस्थानमिति कस्यचित् कामुकस्य कामपि कामिनीं प्रति वचनमिदम् । चरणचरणमवेक्षत मदनवीर-समरेति पाठान्तरम् ॥ १० ॥

स्फुरदिति । दक्षिणा सरला प्रकृतिः स्वभावो यस्याः तथाभूतायाः कामिन्याः स्फुरन् स्पन्दमानः अधरो यत्र तयोक्तम् अविरतानि अश्रूणि बाष्पाणि यत्र तथाभूतं ध्वनिरोधेन निःशब्दतयेत्यर्थः उत्कटः कम्पो ययोः तादृशौ कुचौ यत्र तादृशं तथा जानुनि उपहिते निहिते हस्ते न्यस्तम् अर्पितं मुखं यत्र तथाविधम् इदम् रुदितं भवतीति शेषः । नायिकां प्रति सख्या उपदेशवचनमिदम् ॥ ११ ॥

स्वयमिति । सहजं स्वाभाविकम् अकृत्रिममित्यर्थः यत् प्रेम प्रणयः तस्य रसज्ञा आस्वादाभिज्ञा वकी स्वयमात्मना उपनीतैः समाहृतैः अशनैः भक्ष्यद्रव्यैः नीडे कुलाये निर्वृतं सुखितं दयितं प्रियं वकं पुष्णन्ती अतएव सुभगागर्वं पतिवल्लभाहमित्यभिमानं वहतु । पतिपरिचर्य्याकारिण्येव पतिवल्लभा भवतीति भावः । सख्या नायिकां प्रति उपदेशवचनम् ॥ १२ ॥

स्वरसेनेति । स्वरसेन स्वेच्छया अविचारेणेति भावः करं सम्पाद्यं राजस्वमिति यावत् बध्नतां व्यवस्थापयताम् अन्यत्र स्वरसेन स्वनिर्य्यासेन करं हस्तं बध्नतां योजयतामित्यर्थः आदाने ग्रहणे करस्येति भावः अन्यत्र अभ्यन्तरस्थ फलानां ग्रहणे, कण्टकोत्करैः दुष्ट-पिशुनसमूहैः अन्यत्र त्वक्स्थसूक्ष्माग्रावयवविशेषैः तुदतां पीडयतां

सौभाग्यं दाक्षिण्यात्स्वुपदिष्टं हरेण तरुणीनाम्।
वामार्धमेव देव्याः स्ववपुःशिल्पे निवेशयता॥ १४॥
सुभग स्वभवनभित्तौ भवता संमर्द्य पीडिता सुतनुः।
सा पीडयैव जीवति दधती वैद्येषु विद्वेषम्॥ १५॥
सा गुणमयी स्वभावस्वच्छा सुतनुः करग्रहायत्ता।

पिशुनानां दुर्जनानां राज्ञामिति शेषः पत्रनानां कण्टकिफलविशेषाणां च कोषाभोगः धनाधिकारोऽपि अभ्यन्तरपूर्णतापि च अविश्वास्यः शङ्कनीय इत्यर्थः। एभिः कोषाधिकारो मय्यर्पित इति धिया दुर्जना दुरभिप्रायपूर्णत्वात् कदापि न सेव्या इति भावः। दीपकालङ्कारः॥१३॥

सौभाग्यमिति। स्वस्य वपुषः शरीरस्य शिल्पे रचनाविशेषे देव्याः गौर्याः वामार्द्धमेव न तु दक्षिणार्द्धमित्येवकारार्थः। दक्षिणार्द्धस्य स्वशरीरत्वादिति भावः। निवेशयता स्थापयता हरेण दुःखमिति हरत्तेन सर्वदुःखहारकेण शङ्करेण दाक्षिण्यात् सारल्यात् तरुणीनां युवतीनां न तु स्थविराणां तासां तदवस्थायां सारल्यमेव युक्तमिति भावः सौभाग्यं पतिवल्लभ्यं न इति उपदिष्टम्। यदि पत्युर्वाल्लभ्यमिच्छसि तदा सरलता विहाय वामप्रकृतितया मानादिकं कार्यमिति सख्या नायिकां प्रत्युपदेशः॥ १४॥

सुभगेति। हे सुभग! स्वस्य भवनभित्तौ गृहकुड्ये भवता समर्द्य सम्यक् मर्दनं कृत्वा पीडिता सा सुतनुः वैद्येषु चिकित्सकेषु विद्वेषं दधती सती पीडयैव पुनः पीडा प्राप्त्येत्याशयैवेति भावः जीवति प्राणिति। कदाचित् स्वगृहभित्तौ यां केनापि व्यपदेशेन स्वीयकागतां गृहकुड्याश्रितां बलात्कृत्य सातिशयानुरागात्मकरोः, सेदानीं तामेव पीडां त्वत्त आकाङ्क्षति तत्तामनुगृहाणेति भावः। दूत्या नायकं प्रत्युक्तिः॥ १५॥

सेति। गुणमयी सौन्दर्यादिगुणप्रचुरा सूत्रगुम्फिता च स्वभावेन प्रकृत्या स्वच्छा सरला अधूर्तेत्यर्थः स्वभावशुभ्रा च करग्रहेण

भ्रमिता बहुमन्त्रविदा भवता काश्मीरमालेव ॥ १६ ॥

सव्रीडस्मितसुभगे स्पृष्टास्पृष्टेव किञ्चिदपयान्ती ।
अपसरसि सुन्दरि यथा यथा तथा स्पृशसि मम हृदयम् ॥ १७

सखि सुखयत्यवकाशप्राप्तः प्रेयान्यथा तथा न गृही ।
वातादवारितादपि भवति गवाक्षानिलः शीतः ॥ १८ ॥

पाणिग्रहणेन आयत्ता अधीनीकृतेत्यर्थः पातिव्रत्यशालिनीति भावः करे हस्ते यो ग्रहः ग्रहणं तेन आयत्ता आश्रितेत्यर्थः सा सुतनुः शोभनाङ्गी काश्मीरमालेव स्फटिकस्रगिव बहुमन्त्रविदा विविध-मन्त्रणाकुशलेन विदग्धेन वाक्चातुर्येण मनोरञ्जनकुशलेन नानाजप-विज्ञेन च भ्रमिता भ्रमणं प्रापिता घूर्णिता च । तथा तवानुरक्ता सा, यथा त्वत्सङ्गाभिलाषिण्या त्वया सततं स्थानेषु स्थानेषु सञ्चारिता, इदानीन्तु त्वया औदासीन्यमवलम्बितमिति मत्सखी भ्रममात्तां तत् तामनुगृहाणेति भावः । सख्या नायकं प्रत्युक्तिः । केचित्तु भ्रमिता भ्रान्तिं नीतेति व्याख्याय काचित् सरला सामान्यवनिता कस्यापि धूर्त्तस्य कलाकुशलस्य प्रेमासक्ता न तस्मात् धनं कामयते इति तत्-सख्या तं धूर्त्तं प्रति वचनमिदमिति भावं वर्णयन्ति । उपमालङ्कारः ॥ १६ ॥

सव्रीडेति । सव्रीडं सलज्जं यत् स्मितं मन्दहासः तेन सुभगा वल्लभा तत्सम्बुद्धौ, सुन्दरि ! किञ्चित् ईषत् स्पृष्टा च अस्पृष्टा च आकस्मिकसङ्गत्या लोकभीतिवशात् कचित् कस्मिंश्चिदवयवे हस्तादौ स्पृष्टा अन्यत्र अस्पृष्टा सेव अपयान्ती अपसरणशीला यथा यथा अपयासि तथा तथा मम हृदयं स्पृशसि । तथा च त्वया अपसरणे कृतेऽपि मम हृदयं परित्यज्य गन्तुं न शक्यते तत् कथमपसरणप्रयासः, आगच्छ मामनुसरस्वेति भावः । नायकस्य नायिकां प्रत्युक्तिरियम् ॥ १७ ॥

सखीति । हे सखि ! अवकाशे समये सङ्केतावसरे इति भावः

सततमकथितमुखे सखि निगिरन्ती गरलमिव गिरां गुम्फम् ।
अवगणितौषधिमन्त्रा भुजङ्गि रक्तं विरञ्जयसि ॥ १९ ॥

स्थलकमलमुग्धवपुषा सातङ्काङ्गस्थितैकचरणेन ।
आश्वासयति विसिन्याः कूले विसकण्ठिका शफरम् ॥२०॥

प्राप्तः खलु प्रेयान् जार इति भावः, यथा सुखयति आनन्दयति तथा स्पष्टो गृहस्वामी पतिरित्यर्थः न सुखयतीत्यन्वयः । तथाहि गवाक्षानिलः गवाक्षमार्गेण आगतः अनिलः जारोऽपि गवाक्षाद्युपमार्गेणायातीति प्रसिद्धिः । अवारितात् अनिषिद्धादपि द्वारात् बाह्यादिति भावः, शीतः शीतलो भवति । पत्यावेवानुरक्तेति वादिनीं सखीं प्रति परस्ताया नार्या उक्तिरियम् । यद्वा नायिकां पतिरतां कर्त्तुं सख्या उक्तिरियम् । अत्र अर्थान्तरौपम्यवत् कामः प्रभुत्वात् केवलं श्रमः । करवत् स्वेषु दारेषु तथाऽन्यत्र मन्मथ इति कामशास्त्रसम्मतेयम् ॥ १८ ॥

सततमिति । हे भुजङ्गीव भुजङ्गी तत्सम्बुद्धौ, हे चण्डि ! अपि च सततम् अकथितसुखे कोपादारक्तवदने सखि ! त्वं गरलमिव विषमिव गिरां वाचां गुम्फं परम्परां निगिरन्ती वमन्ती अवगणितः औषधिरिव हितकरत्वादिति भावः, मन्त्रः सदुपदेशरूपः यया अन्यत्र अवगणितौ औषधिमन्त्रौ यया तथाभूता सती रक्तम् अनुरागवन्तं अन्यत्र रक्तवन्तञ्च जनं विरञ्जयसि विरक्तं करोषि रक्तशून्यं करोषि च । कुपितां कामिनीं प्रति तत्सख्या उक्तिः । श्लेषानुप्राणितोपमालङ्कारः ॥ १९ ॥

स्थलेति । बिसकण्ठिका बलाका, बलाका बिसकण्ठिकेति कोषः । विसिन्याः नलिन्याः कूले समीपे इत्यर्थः सातङ्कं सशङ्कं यथा तथा अङ्गे स्थितः एकचरणो यस्य तथाभूतेन अतएव स्थले यत् कमलं तद्वत् मुग्धं सुन्दरं यत् वपुः शरीरं तेन शफरं मत्स्यविशेषम् आश्वा-

सनखपदमधिकगौरं नाभीमूलं निरंशुकं कृत्वा ।
अनया सेवित पवन त्वं किं कृतमलयभृगुपातः ॥ २१ ॥
सर्वाङ्गमर्पयन्ती लोला सुप्तं स्वमेव शय्यायाम् ।
अलसमपि भाग्यवन्तं भजते पुरुषायितेव श्रीः ॥ २२ ॥
सुदिनं तदेव यत्र स्मारं स्मारं वियोगदुःखानि ।
आलिङ्गति सा गाढं पुनः पुनर्यामिनीप्रथमे ॥ २३ ॥

भवति नाहं तव भक्तो वञ्चक इति विश्वासयति । तथाच मत्कृतः कपटभ्रमेण मत्समीपमागमिष्यति तच्छायामायासेन तं धरिष्यामीति धियेति भावः । मायाविन्या एवं पुरुषः प्रतार्यते इति भावः । अप्रस्तुतप्रशंसालङ्कारः ॥ २० ॥

सनखेति । हे पवन ! सनखपदं नखक्षतसहितमपि अधिकगौरं नाभीमूलं जघनमित्यर्थः निरंशुकं वसनशून्यं कृत्वा अनया कामिन्या सेवित ! त्वं कृतः मलयस्य पर्वतस्य भृगोः कटकात् पातो येन तादृशः किम् ? तादृशेन तपसा विना एतादृशफललाभो न स्यादिति भावः । तथाभूतया कान्तया सेवितं पुरुषं प्रति सख्या अप्रस्तुतप्रशंसया उक्तिरियम् ॥ २१ ॥

सर्वाङ्गमिति । लोला चपला कान्तसङ्गमे सतृष्णा वा, लोलश्चलसतृष्णयोरित्यमरः । काचित् स्वमेव शय्यायां सुप्तं कान्तम् अलसमपि भाग्यवन्तं सौभाग्यशालिनं पुण्यवन्तमिति यावत् पुरुषायितेव विपरीतरतार्थिनीव श्रीर्लक्ष्मीः सर्वाङ्गमर्पयन्ती सती भजते सेवते । उपमालङ्कारः ॥ २२ ॥

सुदिनमिति । तदेव सुदिनं शोभनं दिनं यत्र सा वियोगदुःखानि विरहक्लेशान् स्मारं स्मारं पुनः पुनः स्मृत्वा यामिनीप्रथमे प्रथमरात्रौ पुनः पुनः गाढम् आलिङ्गति । यामिनीप्रथमे इति त्वरातिशयं निर्लज्जतास्त्र व्यनक्ति । प्रोषितस्य सखायं प्रति उक्तिरियम् ॥ २२ ॥

सान्तर्भयं भुजिष्या यथा यथाचरति समधिकां सेवाम् ।
साशङ्कसेर्ष्यसभया तथा तथा गेहिनी तस्य ॥ २४ ॥
सुन्दरि दर्शयति यथा भवद्विपक्षस्य तत्सखी कान्तिम् ।
पतति तथा मम दृष्टिस्त्वदेकदासस्य सासूया ॥ २५ ॥
स्वाधीनैरधरव्रणनखाङ्कपत्रावलोपदिनशयनैः ।
सुभगा सुभगेत्यनया सखि निखिला मुखरिता पल्ली ॥२६॥

सान्तर्भयमिति । भुजिष्या किङ्करी, भुजिष्या किङ्करी दासीत्य-
मरः । सान्तर्भयं सशङ्कमित्यर्थः स्वामिनी ज्ञास्यतीति भियेति भावः,
यथा यथा समधिकां स्वाकर्त्तव्यामिति भावः सेवाम् आचरति
स्पृहया इति भावः । गेहिनी गृहस्वामिनी तथा तथा तस्य
स्पृहयः साशङ्कसेर्ष्यसभया भवतीति शेषः किमिदासीमयं मे पतिः
समधिकसेविकायामस्यामासक्त इति धिया साशङ्का, अवश्यमनेनेयं
सङ्गतेति सेर्ष्या, एवञ्च मे महाननर्थो भावी लोकापवादश्चेति सभयेति
भावः । एवञ्च स्पृहया केवलं गृहकार्य्येषु व्यापृतया न भवितव्यं
स्वामिशुश्रूषा च कर्त्तव्या यथा नान्या प्रविशतीति सख्या नायिकां
प्रत्युपदेशः ॥ २४ ॥

सुन्दरीति । हे सुन्दरि ! तव भवद्विपक्षस्य त्वत्सपत्न्या इति
भावः सखी भवद्विपक्षस्य त्वत्सपत्न्याः कान्तिं सौन्दर्य्यं यथा दर्शयति,
त्वदेकदासस्य केवलं त्वय्यनुरक्तस्येति भावः मम सासूया सद्वेषा दृष्टिः
तथा पतति तव विपक्षे इति भावः । सपत्नीं प्रति दृष्टेर्ष्यां कान्तं
प्रति सेर्ष्यां सुभगां कान्तां प्रति कामिनः चाटुवचनमिदम् ॥ २५ ॥

स्वाधीनैरिति । हे सखि ! स्वाधीनैः स्वायत्तैः स्वयं कर्त्तुं
शक्यैरिति यावत् अधरव्रणं दन्तक्षतं नखाङ्कः नखक्षतं पत्रावलोप-
लोपः पत्ररचनाप्रोञ्छनमित्यर्थः दिनशयनं दिवास्वापः तैः अनया
तव सपत्न्येति भावः सुभगा सुभगा अहमिति शेषः इति निखिला

सरित इव यस्य गेहे शुष्यन्ति विशालगोत्रजा नार्यः ।
क्षारास्वेव स तृप्यति जलनिधिलहरीषु जलद इव ॥२७॥
सकलकटकैकमण्डिनि कठिनीभूताशये शिखरदन्ति ।
गिरिभुव इव तव मन्ये मनः शिला समभवच्चण्डि ॥२८॥
सखि दुरवगाहगहनो विदधानो विप्रियं प्रियजनेऽपि ।
खल इव दुर्लक्ष्यस्तव विनतमुखस्योपरिस्थितः कोपः ॥२९॥

समया पत्नी सम्भाविता स्थापितेति भावः । वास्तवं स्वामिसौभाग्य-मस्या नास्ति केवलं त्वां प्रति विद्वेषवशादेतत् कृतमिति सपत्नी-सौभाग्यदुःखितां नायिकां प्रत्युक्तिरियम् ॥ २६ ॥

सरित इति । यस्य गेहे विशालगोत्रजा महाकुलप्रसूता उच्च-पर्वतनिःसृताश्च नार्यः सरित इव नद्य इव शुष्यन्ति दुःखातिरेकात् सन्तापमाप्नुवन्तीति भावः स जनः जलद इव मेघ इव क्षारास्वेव न तु सुरसास्वित्येवकारार्थः । जलनिधेः समुद्रस्य लहरीषु तरङ्गेषु तृप्यति तृप्तिं लभते । उपमालङ्कारः ॥ २७ ॥

सकलेति । कला शिल्पनैपुण्यं तेन मण्डितः यः कटकः वलयः, कटको वलयोऽस्त्रियामित्यमरः । तेन एकं केवलं मण्डयति भूषयतीति शरीरमिति भावः तथोक्ता तत्सम्बुद्धौ, पक्षे निखिलनितम्बैक-शोभिनि, कटकोऽस्त्री नितम्बोऽद्रेरित्यमरः । कठिनीभूताशये ! कठोरहृदये ! कठिनस्वभावे च शिखराः शिखरिण्यः दन्ता यस्यास्तत्-सम्बुद्धौ, पक्षे शृङ्गरूपदन्तशालिनि ! चण्डि कोपने ! गिरिभुव इव पार्वतभूमेरिव ते तव मनः शिला पाषाणः समभवत् इति मन्ये तर्कयामि । उपमालङ्कारः ॥ २८ ॥

सखीति । हे सखि ! तव कोपः खल इव दुरवगाहः हेतोर-नवगमात् अवबोद्धुमशक्यः गहनः निबिडः दुरपनेय इति भावः, पक्षे दुर्ज्ञेयस्वभावः कठिनश्च । प्रियजनेऽपि विप्रियं दुःखं विदधानः

स्वेदसचेलस्नाता सप्तपदी सप्त मण्डलीर्यान्ती ।
समदनदहनविकारा मनोहरा व्रीडिता नमति ॥ २० ॥
सुरसप्रवर्तमानः संघातोऽयं समानवृत्तानाम् ।
एत्यैव भिन्नवृत्तैर्भङ्गुरितः काव्यसर्ग इव ॥ २१ ॥
सर्वासामेव सखे पय इव सुरतं मनोहारि ।

अनयन् विनतं यत् मुखं तवेति शेषः तस्य उपरि स्थितः अननुभवगोचर-त्वेनेति भावः मुखावस्थां दृष्ट्वा कोपोऽनुमीयते इति भावः । विनय-मुखोपस्थित इति पाठे विनयः मुखे प्रारम्भे यस्य तादृशः उपस्थित इत्यर्थः । अतएव दुर्लक्ष्यः कोपो जातो न वेद्मि वर्णयितुमशक्य इत्यर्थः । उपमालङ्कारः । नायिकां प्रति वयस्या उक्तिरियम् ॥२८॥

स्वेदेति । स्वेदेन सम्भोगोद्रेकजनितेनेति भावः सचेलस्नाता सचेलस्नानशालिनी सप्तानां पदानां समाहारः सप्तपदी तां सप्तानां मण्डलानां समाहारः सप्तमण्डली तां यान्ती गच्छन्ती यातेति वा पाठः । विवाहोत्तरं कुशण्डिकावसरे सप्तपदीगमनस्य मण्डलाकारेण सप्तवारम् अग्निप्रदक्षिणकरणस्य शास्त्रीयत्वादिति भावः । मदनदहनस्य कामाग्नेः विकारेण सहिता सकामेति भावः अतएव मनोहरा व्रीडिता लज्जिता च सती नमति गुरूनिति शेषः । एतेन तरुण्याः परिणय एव सुखयति न बालिकाया इति कस्याश्चित् कमपि प्रत्युक्तिः ॥ २० ॥

सुरसेति । सुरसैः शोभनैः रसैः प्रवर्त्तमानः सद्भावेन सम्बद्ध इति भावः, पक्षे रसैः शृङ्गारादिभिः प्रवर्त्तमानः प्रचरन् समानवृत्तानाम् समस्वभावानां एकच्छन्दसाञ्च अयं सङ्घातः समवायः काव्यसर्ग इव भिन्नवृत्तैः विभिन्नचरितैः भिन्नच्छन्दोभिश्च एत्य सङ्गत्य भङ्गुरितः भङ्गं नीतः समापितश्च । समवृत्तयो भिन्नवृत्तिभिः संसर्गात् विकारमापद्यन्ते, काव्यस्य सर्गः भिन्नच्छन्दसा समाप्यते चेति भावः ॥ २१ ॥

सर्वासामिति । हे सखे ! सर्वासामेव नारीणां सुरतं पय इव

तस्या एव पुनः पुनरावृत्तौ दुग्धमिव मधुरम् ॥ २२ ॥
स्वप्नेऽपि यां न मुञ्चसि या तेऽनुग्राहिणी हृदिस्थापि ।
दुष्टां न बुद्धिमिव तां गूढ़व्यभिचारिणीं वेत्सि ॥ २३ ॥
सपरावृत्ति चरन्ती वात्येव तृणं मनोऽनवद्याङ्गि ।
हरसि चिपसि तरलयसि भ्रमयसि तोलयसि पातयसि ॥ २४ ॥

दुग्धमिव मनोहारि, परं तस्याः कामिन्या एव न त्वन्यासामित्येव- कारार्थः सुरतमिति भावः दुग्धमिव पुनः पुनरावृत्तौ पुनः पुनः करणे मधुरम् । यथा दुग्धं पुनः पुनरावर्त्तितम् अतिमधुरं भवति तथा तस्या एव सुरतम् उत्तरोत्तरचमत्कारित्वात् मधुरतरमिति भावः । सखायं प्रति कस्यचिदुक्तिः ॥ २२ ॥

स्वप्ने इति । स्वप्नेऽपि यां न मुञ्चसि न त्यजसि, या ते तव हृदिस्था हृदयनिहिता अतएव अनुग्राहिणी अनुकम्पाशालिनी त्वदनुग्रहपालमपीत्यर्थः, दुष्टां बुद्धिमिव तां कान्तां गूढ़व्यभिचारिणीं न वेत्सि ? न जानासि ? केचित् अनुग्राहिणीं अनु पश्चात् त्वन्मनोरञ्जनानन्तरं ग्राहिणीं परपुरुषगामिनीति व्याचक्षते । सखायं प्रति कस्यचिदुक्तिः ॥ २३ ॥

सपरावृत्तीति । हे अनवद्याङ्गि ! सुन्दरि ! सपरावृत्ति परा- वृत्तिसहितं यथा तथा चरन्ती पुनः पुनः पश्चाद्विवृत्तमुखी चलन्ती- त्यर्थः, मनः मदीयमिति शेषः वात्या तृणमिव हरसि स्वाधीनं करो- षीत्यर्थः, क्षिपसि क्षिप्तं करोषि अवलोकनाभावपक्षे इति भावः, तर- लयसि चञ्चलं करोषि, भ्रमयसि भ्रान्तं किमियं मय्यनुरागिणी न वेति मोहयसि, तोलयसि किमिदं धैर्य्यच्युतं वा सुधीरमिति विवेक्तु तुलादण्डेन धारयसि, पातयसि दूरगत्या आशाविध्वंसात् पतितं करोषि चेत्यर्थः । उपमालङ्कारः । कामिनीं कामपि चलन्तीमव- लोक्य कामिन उक्तिः ॥ २४ ॥

सा बहुलक्षणभावा स्त्रीमात्रं वेत्ति कितव तव तुल्यम् ।
कोटिर्वराटिका वा द्यूतविधेः सर्व एव पणः ॥ २५ ॥
सा विरहदहनदूना मृत्वा मृत्वापि जीवति वराकी ।
शारीव कितव भवतानुकूलिता पातिताक्षेण ॥ २६ ॥
स्पर्शादिव स्वेदं जनयति न च मे ददाति निद्रातुम् ।
प्रिय इव जघनांशुकमपि न निदाघः क्षणमपि क्षमते ॥ २७ ॥

सेति । हे कितव ! धूर्त्त ! उभयत्र समानोऽर्थः । बहूनां लक्षणानां शुभचिह्नानां मृगनयनत्वादीनां भावः सत्ता यस्याम् अथवा बहुलाः क्षणभावा उत्सवाभिलाषा यस्यास्तथाभूता सा तव रमणीति भावः स्त्रीमात्रं सामान्या स्त्री वा इति तव तुल्यं समम् । कोटिः कोटिसंख्यं वस्तु वराटिका वा सर्व एव द्यूतविधेः देवन-व्यापारस्य पणः । देवनव्यापारे यथा स्वल्पं बहु वा सर्वमेव पण-त्वेन गृह्यते तथा निर्बोधस्य तव सुलक्षणा दुर्लक्षणा वेति विवेका-भावात् तादृशीं शोभनां नारीं परित्यज्य सामान्यनार्य्यामादर इति भावः । सख्या दुष्टनायकं प्रति भर्त्सनपरं वचनमिदम् ॥ २५ ॥

सेति । हे कितव ! विरहदहनेन विरहाग्निना दूना दुःखिता सा वराकी तपस्विनी अनुकम्प्येति भावः पातिताक्षेण कृतकटाक्षेण पक्षे पातितपाशेन भवता अनुकूलिता अनुकम्पिता पक्षे स्वानुकूलचाली-कृता शारीव गुटिकेव मृत्वा मृत्वापि जीवति । कटाक्षपातेन भवत्-प्राप्त्याशयेति भावः । पक्षे मरणं द्यूतव्यापारे अयोग्यत्वमिति बोध्यम् । नायकं प्रति दूत्या उक्तिरियम् ॥ २६ ॥

स्पर्शादिति । निदाघः ग्रीष्मः प्रिय इव स्पर्शादिव स्वेदं जन-यति एकत्र सन्तापात् अन्यत्र सात्त्विकोदयादिति भावः, मे मम निद्रातुं न च ददाति, तथा क्षणमपि अल्पकालमपि जघनांशुकमपि जघनवसन-मपि न क्षमते न सहते भर्त्तुरिवेति शेषः । एवञ्च प्रतिक्षणं सुरतार्थी

सा भवतो भावनया समयविरुद्धं मनोभवं बाला ।
नूतनलतेव सुन्दर दोहदशक्त्या फलं वहति ॥ ३८ ॥

स्पृशति नखैर्न च विलिखति
सिचयं गृह्णाति न च विमोचयति ।
न च मुञ्चति न च मदयति
नयति निशां सा न निद्राति ॥३९॥

स्तनजघनद्वयमस्या लङ्घितमध्यः सखे मम कटाक्षः ।
नोज्झति रोधस्वत्यास्तटद्वयं तीर्थकाक इव ॥ ४० ॥

मत्प्रिय इति कस्याश्चित् सखीं प्रति स्वसौभाग्यकथनम् । उपमालङ्कारः ॥ ३७ ॥

सेति । हे सुन्दर ! सा बाला भवतः भावनया चिन्तनेन नूतनलता दोहदस्य योषितां पादाघातमुखसीधुगण्डूषादिरूपस्य शक्त्या सामर्थ्येन फलमिव समयविरुद्धम् असामयिकं बाल्ये मनोभवोद्रेकातिशयवत्त्वं कामशास्त्रविरुद्धमिति भावः । मनोभवं कामं वहति अतस्त्वया तत्सङ्गमाय यतस्वेति भावः । दूत्याः कामिनं प्रत्युक्तिरियम् । ३८ ॥

स्पृशतीति । सा नखैः स्पृशति न च विलिखति मामिति शेषः, सिचयं वसनाञ्चलं गृह्णाति न च विमोचयति सिचयमिति शेषः, न च मुञ्चति न च त्यजति न च मदयति मत्तं करोति मामिति शेषः, नखस्पर्शनेन वसनाञ्चलग्रहणेन अमोचनेन च मत्सङ्गाभिलाषवत्त्वं विलेखनाभावेन लज्जावत्त्वं सिचयग्रहणेन तदविमोचनादिभिश्च मत्सङ्गाभिलाषित्वं सूच्यते । निशां नयति गमयति किन्तु न निद्राति । एतेनास्या मुग्धात्वं व्यज्यते । कस्यचित् सखायं प्रत्युक्तिरियम् ॥३९॥

स्तनेति । हे सखे ! मम कटाक्षः अस्याः कामिन्याः लङ्घितं मध्यं येन तथाभूतः इष्टमध्यदेश इत्यर्थः रोधस्वत्यास्तटिन्याः तटद्वयं

सव्रीडस्मितमन्दश्वसितं मां मा स्पृशेति शंसन्त्या।
आकोपमेत्य वातायनं पिधाय स्थितं प्रियया॥ ४१॥
सकरग्रहं सरुदितं साक्षेपं सनखमुष्टि सजिगीषम्।
तस्याः सुरतं सुरतं प्राजापत्यक्रतुरतोऽन्यः॥ ४२॥

तीर्थकाक इव स्तनजघनद्वयं स्तनद्वयं जघनञ्चेत्यर्थः न भजति न त्यजति। तीर्थकाको हि यथा यथा नदीमध्यमुद्दयनेन समुत्तीर्य्य उभयोस्तटयोर्बलिमादत्ते तथा तथा मम कटाक्षः अस्याः कान्तायाः मध्यदेशं दृष्ट्वा पश्चात् स्तने जघने च निपत्य तिष्ठतीति भावः। सखायं प्रति कामिन उक्तिः॥ ४०॥

सव्रीडेति। प्रियया आकोपम् ईषत्कोपम् एत्य आश्रित्य सव्रीडस्मितमन्दश्वसितं सव्रीडं सलज्जं सख्यादिलोकनादिति भावः, स्मितं कथमयं सर्व्वासमक्षमेवं प्रवृत्त इति सविस्मयं तथा समन्दश्वसितं सम्भोद्रेकात् किञ्चिदुच्छ्वाससहितं यथा तथा मां मा स्पृशेति शंसन्त्या कथयन्त्या सत्या वातायनं गवाक्षं पिधाय आच्छाद्य स्थितम् एतेन गुप्तं विहरेति भावः। सखायं प्रति कस्यचित् कान्ताचरितवर्णनम्॥ ४१॥

सकरग्रहमिति। सकरग्रहं निषेधार्थं हस्तग्रहणसहितं सरुदितं मुग्धत्वात् क्रोधवशाद्वा रोदनसहितं सनखमुष्टि नखमुष्टिः नखक्षतपरिहारः तेन सहितं विरामातिशयो मा भूदित्याशयेति भावः, तथा सजिगीषं जयेच्छासहितम् उत्तरोत्तरं सुखातिशयबोधेन मल्लयाभिलाषेणातिप्रवृत्तमिति यावत् तस्याः कान्तायाः सुरतं शोभनं रतं सुरतं सुखातिशयसूचकं रतमिति भावः। सुरतं सुरतमिति कदली कदलीत्यादिवदर्थान्तरसङ्क्रमितवाच्यत्वं प्रकटयति। अतः अस्मात् सुरतात् अन्यः प्राजापत्यक्रतुः प्रजापतिर्द्देवता यस्य सः प्राजापत्यः स चासौ क्रतुर्यज्ञश्चेति तथोक्तः विधेयप्राधान्यात् पुंस्त्वम्। सन्तानार्थिना प्राजापत्यक्रतुरनुष्ठीयते, तस्य च फलमुत्तरम पुत्रलाभरूपं तद्वत्

सखि न खलु निर्मलानां विदधत्यभिधानमपि मुखे मलिनाः ।
केनाश्रावि पिकानां कुहूं विहायेतरः शब्दः ॥ ४३ ॥

लघ्वा इति रामबलैर्ये न्यस्ता नाशये पयोराशेः ।
ते शैलाः स्थितिमन्तो हन्त लघिम्नैव बहुमानः ॥ ४४ ॥

सा श्यामा तन्वङ्गी दहता शीतोपचारतीव्रेण ।
विरहेण पाण्डिमानं नीता तुहिनेन दूर्वेव ॥ ४५ ॥

अन्यास्तु नारीषु सङ्गतिवशात् पुत्ररूपं फलं जनयति न तदाऽसौ सुखातिशयरूपं तस्यास्तु न तथा, सङ्गमकालेऽपि सुखातिशयजनकत्वादस्याः सुरतस्येति भावः । सख्यायं प्रति कस्याश्चिदुक्तिः ॥ ४२ ॥

सखीति । हे सखि ! मलिना जनाः निर्मलानाम् अभिधानमपि नामापि मुखे न खलु नैव विदधति नैव कुर्वन्ति । तथाहि कुहूं विहाय पिकानां कोकिलानां मुखे इति शेषः इतरः अन्यः शब्दः केन अश्रावि श्रुतः न केनापीत्यर्थः । मलिनात्मकपुरुषा मलिनात्मकमेव आकारयन्ति निर्मलात्मकं न कोकिलाः कुहूममावास्यामिवेति त्वया तेषां त्वां प्रति अपवादाचरणे क्षोभो न कार्य्य इति भावः । नायिकां सपत्नीविद्विष्टां प्रति सख्याः सान्त्वनवचनमिदम् ॥ ४२ ॥

लघ्वा इति । रामबलैः रघुपतिसैन्यैः वानरैः लघ्वाः क्षुद्रा इति हेतोः ये शैलाः पयोराशेः समुद्रस्य आशये अन्तः न न्यस्ताः न निक्षिप्ताः सेतुबन्धनार्थमिति भावः, ते शैलाः स्थितिमन्तः अवस्थानस्थिता इत्यर्थः, हन्त खेदे हर्षे वा लघिम्नैव लाघवेनैव बहुमानः बहुादरः ये आत्मानं लघुं मन्यन्ते ते एव मानभाज इति भावः ॥ ४४ ॥

सेति । श्यामा यौवनवती, श्यामा यौवनमध्यस्थेति, शीतकाले भवेदुष्णा उष्णकाले च शीतला । नवयौवनसम्पन्ना सा स्त्री श्यामेति गीयते इति च शास्त्रात् । अथवा श्यामवर्णा तन्वङ्गी कृशाङ्गी वा कामिनी दहता सन्तापयता शीतोपचारेण शीतलप्रक्रियया चन्द्रचन्द-

सुनिरीक्षितनिश्चलकरवल्लभधाराजलोक्षिता न तथा ।
सोत्कम्पेन मया सखि दृष्टा सा माद्यति स्म यथा ॥४६॥

सखि मोघीकृतमदने पतिव्रते कस्तवादरं कुरुते ।
नाश्नीषीर्भगवानपि स कामविद्धो हरः पूज्यः ॥ ४७ ॥

मादृशेक्षणेनेति भावः तीव्रः दारुणः अत्युत्कोपकत्वादिति भावः तेन विरहेण विच्छेदेन दुःसहेन शिशिरेण दूयेन पाण्डुमानं पाण्डुत्वं क्षीणमानमित्यर्थः नीता प्रापिता । कर्णितविरहेण तरा सा त्वया- नुकम्पनीयेति भावः । प्रोषितं प्रति दूत्या उक्तिः । उपमालङ्कारः ॥ ४५ ॥

सुनिरीक्षितेति । हे सखि ! सुनिरीक्षितः सुदृष्टः प्राक् शोभनत्वेन स्पृष्ट इति भावः निश्चलः स्थिरः स्वकान्तया सह क्रीडनेन साध्वसाद्यभावादिति भावः करो यस्य तथाभूतः यः वल्लभः पतिरित्यर्थः तस्य धाराजलेन जलक्रीडायामिति भावः उक्षिता सिक्ता सती सा कामिनी तथा न माद्यति हृष्यति, यथा सोत्कम्पेन सातिशयं कम्पमानेन एतस्याः पत्युर्दर्शनभयादिति भावः मया दृष्टा अवलोकिता माद्यतीत्यनेनान्वयः । एतेन पतिमपेक्ष्य सा मय्यनुरागं दर्शितवती तदेतया सह मम सङ्गतिर्विधेयेति भावः । यद्वा सा मय्यनुरागिणी कथं त्वया सङ्गमनीयेति वादिनीं प्रति जारस्योक्ति- रियम् ॥ ४६ ॥

सखीति । मोघीकृतः विफलीकृतः मदनो यया तत्सम्बुद्धौ, पतिव्रते पतिमात्रानुरागिणि ! सखि ! कः जनः तव आदरं कुरुते ? न कोऽपीत्यर्थः । स भगवानपि हरः शिवः शिवपत्नुर्द्- ध्रीति यावत् कामविद्धः कामेन [illegible] भावः विद्धः [illegible] इत्यर्थः पूज्यः आदरणीय इत्यर्थः । [illegible] शिव- पत्नुर्दध्या व्रतविधायकत्वेनादरणीयत्वस्य [illegible] इति भावः । इति न अश्रौषीः ? न श्रुतवत्यसि ? [illegible] विहाय

सा मयि न दासबुद्धिर्न रतिर्नापि त्रपा न विश्वासः ।
हन्त निरीक्ष्य नवोढां मन्ये वयमप्रिया जाताः ॥ ४८ ॥
सुचिरायाते गृहिणी निशि भुक्ता दिनमुखे विदग्धेयम् ।
धवलनखाङ्कं निजवपुरकुङ्कुमार्द्रं न दर्शयति ॥ ४९ ॥
स्तनजघनोरुप्रणयी गाढं लग्नो निवेशितस्नेहः ।
प्रिय कालपरिणतिरियं विरज्यसे नवनखाङ्क इव ॥ ५० ॥

जारसङ्गतिः करणीयेति भावः । अर्थान्तरन्यासः । दूत्याः साध्वीं प्रति जारसङ्गमनाय उक्तिरियम् ॥ ४७ ॥

सेति । हन्त खेदे । नवोढां मया नवपरिणीतां दृष्ट्वा मयि सा दासबुद्धिः दासवत् इदं कुरु इदं कुरु इत्येवमाज्ञादानमिति भावः न अस्तीति गृहिण्याः इति च सर्वत्र योज्यं, रतिः अनुरागः नापि नैव, त्रपा लज्जा गुरुजनदर्शनादिजेति भावः न, विश्वासश्च नायं मदप्रियं विधास्यतीति प्रत्ययस्तथापि न । तत् वयम् अप्रिया जाता इति मन्ये सम्भावयामि । सख्यायं गृहिणीमालोक्य सखीं प्रति कस्यचित् नवपरिणेतुरुक्तिरियम् ॥ ४८ ॥

सुचिरायात इति । सुचिरायाते सुदीर्घकालानन्तरमागते पत्यौ इति शेषः, निशि रात्रौ भुक्ता पत्या इति शेषः विदग्धा चतुरा इयं गृहिणी दिनमुखे प्रातःकाले धवलनखाङ्कं श्वेतनखक्षतचिह्नं जारसङ्गमेनेति भावः निजवपुः स्वशरीरम् अकुङ्कुमार्द्रं न दर्शयति कुङ्कुमार्द्रमेव दर्शयतीत्यर्थः । चातुर्य्येण पूर्वं जारसङ्गमजनितशुष्कनखचिह्नं कुङ्कुमार्द्रं कृत्वा रात्रौ पतिसम्भोगात् नवजातमिव प्रातः पत्ये दर्शयतीति भावः । कथमहं जारसम्भोगचिह्नं पत्ये गोपयामि इति वादिनीं नायिकां प्रति दूत्या भङ्ग्या गोपनप्रकारकथनमिदम् ॥ ४९ ॥

स्तनेति । हे प्रिये ! स्तनयोर्जघने ऊर्वोश्च प्रणयी प्रीतिमान् पक्षे कामशास्त्रे नखक्षतदानस्य स्तनादिस्थलत्रय एव प्रधानादिति भावः

सा विध्याता निशि निशि सुतनुर्बहुतुहिनशीतले तल्पे ।
ज्वलति त्वदीयविरहादोषधिरिव हिमवतः पृष्ठे ॥ ५१ ॥
सा नीरसे तव हृदि प्रविशति निर्याति न लभते स्थैर्यम् ।
सुन्दर सखी दिवसकरबिम्बे तुहिनांशुरेखेव ॥ ५२ ॥

गाढं यस्य: दृढाविकृतकारी पक्षे अत्यन्तं निखात इत्यर्थः निषेवित-स्नेहः बहुप्रणयः पक्षे आपीततैलः घृतेषु तैलार्पणं मेदनानिवारणार्थमिति भावः एतादृशोऽपि त्वं यत् नखाङ्क इव नखक्षतचिह्नमिव विरज्यसि विरक्तो भवसि पक्षे रुधिरशून्यो भवसि इयं कालस्य परिणतिः परिणामः कालपरिणत्या नखाङ्कस्य शुष्कतया यथा रक्तिमाभावः तथा तव मयि अनुरागाभाव इति भावः । प्राक् बद्धानुरागं पश्चात् विरक्तं पतिं प्रति नायिकायाः खेदोक्तिरियम् । उपमालङ्कारः ॥ ५० ॥

सेति । सा सुतनुः सुन्दरी त्वदीयविरहात् विध्याता विगतकान्तिः अत्यन्तं प्रतिबिम्बशून्या निशि निशि प्रतिरात्रं बहुतुहिनवत् शीतलम् अत्यन्तं बहुभिस्तुहिनैः शीतलं तस्मिन् तल्पे शय्यायां, तल्पं शय्याट्टदारेष्वित्यमरः । हिमवतः पृष्ठे उपरि ओषधिः ज्योतिर्लतेव ज्वलति । दिवा गुरुजनभयेन लज्जया चास्याः सन्तापगोपनं जातु रात्रौ तु नितरां सन्तप्यते इति सत्वरमियमनुकम्प्या भवतीति भावः । दूत्याः प्रोषितं नायकं प्रत्युक्तिरियम् । उपमालङ्कारः ॥ ५१ ॥

सेति । हे सुन्दर ! सा सखी दिवसकरबिम्बे सूर्यमण्डले तुहिनांशुरेखेव चन्द्रकलेव तव नीरसे कठिने हृदि प्रविशति क्वचिदेति भावः, निर्याति निर्गच्छति, अतः स्थैर्यं स्थिरतां न लभते न सुस्थिरं भवतीत्यर्थः, कथञ्चित् यदि त्वं तां स्मरसि ततस्तद्ध्यानात् अन्यासङ्गात् तां विस्मरसि तस्मात् अस्यं तस्या धैर्यं स्यादिति भावः । तुहिनांशुरेखा चामावास्यायां सूर्यबिम्बमेव प्रविशति ततस्तत्रैव निःसरति चेति

सुकुमारत्वं कान्तिर्नितान्तसरसत्वमान्तराश्च गुणाः ।
किं नाम नेन्दुलेखे शशपङ्केणैव तव कथितम् ॥ ५३ ॥
सौरभ्यमात्रमनसामास्तां मलयद्रुमस्य न विशेषः ।
धर्मार्थिनां तथापि स मृग्यः पूजार्थमश्वत्थः ॥ ५४ ॥
संवाहयति शयानं यथोपवीजयति गृहपतिं गृहिणी ।

कीर्तिर्विदः समागमन्तीति बोध्यम् । उपमालङ्कारः । नायकं प्रति दूत्या उक्तिरियम् ॥ ५२ ॥

सुकुमारत्वमिति । हे इन्दुलेखे ! चन्द्रकले ! तव सुकुमारत्वं कोमलत्वं कान्तिः सौन्दर्य्यं नितान्तसरसत्वम् अत्यन्तरसिकत्वम् आन्तराः आभ्यन्तरीणाः गुणाश्च एतत् सर्वं शशपङ्केणैव शशकाश्रयेणैव शशका-कारपुरुषासक्त्या च तव किं नाम निश्चयेन न कथितम् ? अपि तु सर्वमेव कथितम् ! तथाच सौकुमार्य्यादिमत्तया तव पद्मिनीत्वं पद्मिन्याश्च शशजातीयपुरुषसक्तौ रतियोग्यत्वमस्ति इति भावः । उक्तञ्च रतिमञ्जर्य्याम् । भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा न विरलकुचयुग्मा चारुकेशी कृशाङ्गी । मृदुवचनसुशीला गीत-वाद्यानुरक्ता सकलतनुसुवेशा पद्मिनी पद्मगन्धा इति, शशजितो नायकश्चैव नारीसम्पत्परः शशी । मृदुकुञ्चशरीरश्च स श्रीमान् शशको मत इति, शशके पद्मिनी तुष्टेति च । कस्याश्चित् कामपि प्रति प्रशंसावचनमिदम् ॥ ५३ ॥

सौरभ्यमात्रमिति । सौरभ्यमात्रे सौगन्ध्यमात्रे मनो येषां तादृशानां मलयद्रुमस्य विशेषः न आस्तां न तिष्ठतु अश्वत्थे इति शेषः, तथापि सः अश्वत्थः धर्मार्थिनां पूजार्थं मृग्यः अन्वेषणीयः । शास्त्र-प्रतिष्ठाशालिनां समादरः सामान्यजनैः क्रियते, धार्मिकैस्तु सद्वृत्तानां पूज्यानामेव समादरः क्रियते इति भावः । अप्रस्तुतप्रशंसाल-ङ्कारः ॥ ५४ ॥

संवाहयतीति । गृहिणी शयानं गृहपतिं स्वामिनं यथा

गृहवृतिविवरनिवेशितदृगस्तथाश्वासनं यूनः ॥ ५५ ॥

सत्यं स्वल्पगुणेषु स्तब्धा सदृशे पुनर्भुजङ्गे सा ।
अर्पितकोटिः प्रणमति सुन्दर हरचापयष्टिरिव ॥ ५६ ॥

सर्वंसहां महीमिव विधाय तां वाष्पवारिभिः पूर्णाम् ।
भवनान्तरमयमधुना सङ्क्रान्तस्ते गुरुः प्रेमा ॥ ५७ ॥

संवाहयति हस्तेन शरीरं मर्दयति उपवीजयति च येनाख गौर्भं निद्रागमेन चेतन्यविरहः स्यादिति भावः, गृहस्य वृतेर्वेष्टनस्य विवरे रन्ध्रे निवेशिते दृशौ नेत्रे येन तथाविधस्य यूनः तरुणस्य जारस्येति शेषः तथा आश्वासनं मनसः स्थैर्य्यं सम्पादनमिति यावत् भवति, निद्रित एव पत्यौ अनया मत्समीपमागमिष्यते इति धियेति भावः ॥ ५५ ॥

सत्यमिति । हे सुन्दर ! सा हरस्य चापयष्टिरिव धनुर्दण्ड इव स्वल्पगुणेषु अनेषु अन्यत्र स्वल्पमौर्वीषु सत्यं स्तब्धा निश्चला प्रणयाकारिणीति भावः, पक्षे न नम्रा, पुनः किन्तु सदृशे समानगुणे सत्येति भावः, पक्षे योग्यमौर्व्यां भुजङ्गे विटे पक्षे वासुकिरूपे सर्पे अर्पितकोटिः दत्तकोटिसंख्यकधना पक्षे दत्ताग्रभागा सती प्रणमति समासक्ता भवतीत्यर्थः पक्षे नतिमापद्यते इत्यर्थः, एतेनास्याः स्तवन-व्ययेनापि असदृशतरुणे सङ्गतिकरणेऽभिलाषः न तु सामान्यगुणे तरुणे इति यदि त्वं तत्सदृशगुणशाली भवसि तदा तस्यां समासक्तो भवस्येति भावः । उपमालङ्कारः । कस्याश्चित् कमपि युवानं प्रत्युक्तिरियम् ॥ ५६ ॥

सर्वंसहामिति । सर्वंसहां त्वत्कृतापराधसमूहं सोढ़वतीम् अन्यत्र तदाख्यां महीमिव तां मत्सखीमिति शेषः वाष्पवारिभिः अश्रुजलैः वाष्पैः ऊष्मभिः सारजलैश्च अभिनववारिभिरिति यावत् अभि-नववर्षस्य एव वाष्पोद्गमादिति भावः पूर्णां सिक्तां विधाय कृत्वा अयं ते तव गुरुर्महान् दृढ़श्चेतिच प्रेमा अधुना साम्प्रतं भवनान्तरं गृहान्तरं नायिकान्तरमिति भावः राश्यन्तरञ्च संक्रान्तः गतः । वारि-

सम्भवति न खलु रक्षा सरसानां प्रकृतिचपलचरितानाम् ।
अनुभवति हरशिरस्यपि भुजङ्गपरिशीलनं गङ्गा ॥ ५८ ॥
सुलभेषु कमलकेसरकेतकमाकन्दकुन्दकुसुमेषु ।
वाञ्छति मनोरथान्धा मधुपी स्मरधनुषि गुणाभावम् ॥५९॥
सा लज्जिता सपत्नी कुपिता भीतः प्रियः सखी सुखिता ।
बालायाः पीडायां निद्रानिते जागरे वैद्यैः ॥ ६० ॥

पूर्व्वां भर्त्रीं कृत्वा पश्चात् सञ्चरते गुरुरिति ज्योतिर्विदः । इदञ्च ते नानुचितमिति सख्या कर्मापि प्रतद्यते । अत्र मानुमार्गिता उपमा ॥ ५७ ॥

सम्भवतीति । सरसानां शृङ्गाररसवतीनां सजलानाञ्च अतएव प्रकृत्या स्वभावेन चपलं चरितं यासां तासां नारीणामिति शेषः रक्षा न खलु नैव भवति, प्रकृतिचपला नार्य्यः न केनापि रक्षितुं शक्यन्ते इति भावः । तथाहि हरशिरसि अपि का कथान्यत्रेति भावः स्थितेत्यर्थः गङ्गा भुजङ्गपरिशीलनं सर्पसङ्गतिं विटसङ्गञ्च, भुजङ्गो विटसर्पयोरित्यमरः । अनुभवति भजते इत्यर्थः । श्लेषानुप्राणितार्थान्तरन्यासो-ऽलङ्कारः ॥ ५८ ॥

सुलभेष्विति । मनोरथेन अभिलाषेण अन्धा विवेकाभाववती-त्यर्थः मधुपी भ्रमरी कमलादिपुष्पेषु सुलभेष्वपि स्मरधनुषि काम-कार्मुके कुसुमभूते इति भावः गुणभावं मौर्वीभावम् अथच अप्राधान्यं वाञ्छति अभिलषति । सत्सु बहुषु नायकेषु अपि या यत्प्रेमा-सक्ता, सा तस्मिन् बहुदुर्लभे अप्राधान्यं लभमानापि समासक्तिं कुरुते इति भावः । अप्रस्तुतप्रशंसालङ्कारः ॥ ५९ ॥

सेति । बालायाः नवोढायाः पीडायां कथमियं पीडितेति पृच्छायामिति भावः वैद्यैः चिकित्सकैः जागरे रात्रिजागरणे निद्रा-निते कारणत्वेन निर्णीते सति सा बाला लज्जिता पतिसङ्गमप्रका-

सुचिरागतस्य संवाहनच्छलेनाङ्गमङ्गमालिङ्ग्य ।
पुष्यति च मानचर्चां गृहिणी सफलयति चोत्कलिकाम् ॥ ६१ ॥
सा सर्वथैव रक्ता रागं गुञ्जेव न तु मुखे वहति ।
वचनपटोस्तव रागः केवलमास्ये शुकस्येव ॥ ६२ ॥
सायं कान्तभुजान्तरपतिता रतिनीतसकलरजनीका ।
उषसि ददती प्रदीपं सखीभिरुपहस्यते बाला ॥ ६३ ॥

यादिति भावः सपत्नी पूर्वपरिणीता गृहिणीत्यर्थः कुपिता पतिर्मे-ऽस्यामनुरक्त इति धियेति भावः, प्रियः पतिः भीतः गृहिण्याः सकाशात् अपराधितयेति भावः । सखी बालाया इति शेषः सुखिता सख्याः प्रियवाक्यश्रवणादिति भावः ॥ ६० ॥

सुचिरागतस्येति । गृहिणी सुचिरागतस्य दीर्घकालात्परम् आगतस्य पत्युरिति शेषः संवाहनच्छलेन गात्रमर्दनव्याजेन अङ्गम् अङ्गं प्रत्यङ्गम् आलिङ्ग्य मानचर्चाम् अभिमानसत्तां पुष्यति च रक्षति च उत्कलिकाम् उत्कण्ठां पतिसङ्गाभावजनितामिति भावः सफल-यति च निराकरोति च ॥ ६१ ॥

सेति । सा मम सखीति शेषः सर्वथैव सर्वप्रकारेणैव रक्ता अनुरागिणी त्वयीति शेषः गुञ्जेव गुञ्जाफलमिव मुखे रागम् अनु-रागं लौहित्यञ्च न तु वहति नैव प्रकटयति नैव धारयति च । वचन-पटोः कथाचतुरस्य तव रागः शुकस्येव केवलम् आस्ये मुखे न त्वन्य-त्रेति भावः । सख्या नायकं प्रत्युक्तिरियम् । उपमालङ्कारः ॥ ६२ ॥

सायमिति । सायं सन्ध्यासमये कान्तस्य भुजान्तरे वक्षसि पतिता रत्या सुरतेन नीता यापिता सकला रजनी यया तथाभूता सती उषसि प्रभाते प्रदीपं ददती बाला सखीभिः उपहस्यते । सायं-तनकार्य्यञ्च प्रदीपदानस्यायं समय इति मत्वा रात्रिजागरणेन भ्रान्ता सायंकाल एवायमिति मन्यमाना प्रदीपदात्रीं मुग्धां प्रति सखीभि-रुपहास इति भावः ॥ ६३ ॥

सा तीक्ष्णमानदहना महतः स्नेहस्य दुर्लभः पाकः ।
त्वां दर्वीमिव दूति प्रयासयन्नस्मि विश्वस्तः ॥ ६४ ॥
स्नेहच्युतिर्जिगीषा समरः प्राणव्ययावधिः करिणाम् ।
न वितनुते कमनर्थं दन्तिनि तव यौवनोद्भेदः ॥ ६५ ॥

सदनादपैति दयितो
हसति सखी विशति धरणिमिव बाला ।
ज्वलति सपत्नी कीरे
जल्पति मुग्धे प्रसीदेति ॥ ६६ ॥

सेति । हे दूति ! सा नारी तीक्ष्णः मानदहनः मानाग्निः यस्यास्तथाभूता । महतः स्नेहस्य प्रेम्णः तैलस्य च पाकः परिपाकः दुर्लभः दुष्प्रापः । महत् प्रेम प्रायेण न परिपच्यते इति भावः किन्तु त्वां दर्वीमिव प्रयासयन् यातायाताभ्यां क्लेशयन् चाहमपि विश्वस्तः विश्वासं गतः अस्मि. यथा दर्वीचालनेन महातैलं सुपरिपक्वं लभ्यते तथा तव प्रयासेन कथञ्चित् वा लभ्यते इति मे प्रत्यय इति भावः । उपमालङ्कारः । दूतीं प्रति नायकस्योक्तिरियम् ॥ ६४ ॥

स्नेहेति । हे दन्तिनि ! हस्तिनि ! तव यौवनोद्भेदः तारुण्यविकासः करिणां हस्तिनां कमनर्थं न वितनुते न जनयति अपि सर्वमेवेत्यर्थः । तथाहि स्नेहस्य अन्योन्यप्रणयस्य च्युतिर्नाशः, जिगीषा पराजयवासना, तथा प्राणव्ययः जीवननाशः अवधिर्यस्य तादृशः समरः संग्रामः । तथाच त्वदर्थं तरुणाः परस्परं स्नेह-भाषादिकं सर्वं परित्यजन्तीति भावः । अप्रस्तुतप्रशंसया काञ्चित् प्रति कस्याचिदुक्तिः ॥ ६५ ॥

सदनादिति । मुग्धे प्रसीद इति कीरे शुके जल्पति सति दयितः प्रियः सदनात् वासगृहात् अपैति अपगच्छति [illegible] भयादिति भावः सखी बालाया इति शेषः हसति [illegible]

सङ्कुचिताङ्गीं द्विगुणांशुकां मनोमात्रविस्फुरन्मदनाम्।
दयितां भजामि मुग्धामिव तुहिन तव प्रसादेन॥ ६७॥

सखि सन्नैव वसन्ती सदाशये महति रसमये तस्य।
वाडवशिखेव सिन्धोर्न ममागप्यार्द्रतां भजसि॥ ६८॥

सखि मिहिरोद्गमनादिप्रमोदमपिधाय सोऽयमवसाने।
वन्ध्योऽवधिवासर इव तुषारदिवसः कदर्थयति॥ ६९॥

शिशवासुभ्यासानादिति भावः बाला भर्त्सयिमिव विशति बध्नातीति भावः सपत्नी ज्वलति क्रोधादिति भावः॥ ६६॥

सङ्कुचिताङ्गीमिति। हे तुहिन! शिशिर! तव प्रसादेन अनुग्रहेण दयितां सङ्कुचिताङ्गीं द्विगुणांशुकां द्विराहृतवसनां मनोमात्रे न तु बहिरिति भावः विस्फुरन् प्रसरन् मदनः कामः यस्यास्ताम् अतएव मुग्धामिव बालामिव भजामि सेवे। उपमालङ्कारः॥ ६७॥

सखीति। हे सखि! महति उदारे गभीरे च रसमये प्रेमपूर्णे जलमये च तस्य कान्तस्य आशये अन्तःकरणे अभ्यन्तरे च सन्नैव निमज्जन्तीव वसन्ती त्वं सिन्धोः समुद्रस्य वाडवशिखेव वडवानलज्वालेव ममागपि अल्पमपि आर्द्रतां सरसत्वं न भजसि न प्राप्नोषि। स त्वयि नितरामासक्तः त्वन्तु सततं रुक्षतामाश्रयसीत्यनुचितं तवेति भावः। सख्याः कोपनां नायिकां प्रति वचनमिदम्। उपमालङ्कारः॥ ६८॥

सखीति। हे सखि! मिहिरस्य सूर्य्यस्य उद्गमनादि उदयप्रभृति प्रमोदम् आनन्दम् अपिधाय आच्छाद्य दत्त्वेति यावत् सोऽयं तुषारदिवसः हिमदिनं वन्ध्यः विफलः नायकागमनाभावादिति भावः अवधिवासर इव अस्मिन् दिने मयागन्तव्यमित्यवधारितदिनमिव अवसाने शेषे कदर्थयति क्लेशयति शीतप्रादुर्भावेन नायकानागमनेन

सुरभवने तरुणाभ्यां परस्पराकृष्टहृष्टहृदयाभ्याम् ।
देवार्चनार्थमुद्यतमन्योन्यस्यार्पितं कुसुमम् ॥ ७० ॥

सायं कुशेशयान्तर्मधुपानां निर्यतां नादः ।
मित्रव्यसनविषण्णैः कमलैराक्रन्द इव मुक्तः ॥ ७१ ॥

सुमहति मन्युनिमित्ते मयैव विहितेऽपि वेपमानोरुः ।
न सखीनामपि रुदती ममैव वक्षःस्थले पतिता ॥ ७२ ॥

चेति भावः । यथावधिदिवसे अद्य आगमिष्यति कान्त इति प्रातरानन्दः पश्चात् तदनागमनात् अवसाने दुःखातिशयः तथा हेमन्ते प्रातः सूर्य्योदयात् शीतापगमेनानन्दः पश्चात् तस्यास्तगमने शीतप्रादुर्भावात् क्लेशातिशय इति भावः । उपमालङ्कारः । सखीं प्रति नायिकाया उक्तिः ॥ ६९ ॥

सुरेति । सुरभवने देवगृहे तरुणाभ्यां युवभ्यां परस्परम् आकृष्टे हृष्टहृदये नयनमनसी याभ्यां तथाभूताभ्यां सद्भ्यां देवतार्चनार्थम् उद्यतं कुसुमम् अन्योन्यस्य परस्परस्य यूना युवत्याः युवत्या च यून इत्यर्थः अर्पितं दत्तम् । एतेन उभयोरनुरागाधिक्यता दर्शिता ॥ ७० ॥

सायमिति । सायं सन्ध्यासमये निर्यतां निर्गच्छतां भाविकमलसङ्कोचभियेति भावः कुशेशयान्तर्मधुपानां कमलान्तर्वर्त्तिभ्रमराणां नादः गुञ्जनं मित्रस्य सूर्य्यस्य सख्युश्च व्यसने अस्तमितौ विपदि च विषण्णैः विषादं गतैः कमलैः आक्रन्दः सम्यक् रोदनमिव मुक्तः कृतः । उत्प्रेक्षालङ्कारः ॥ ७१ ॥

सुमहतीति । सुमहति अत्युत्कटे मन्युनिमित्ते कोपकारणे मया एव विहिते कृते अपि वेपमानोरुः कम्पमानोरुः रुदती सती सखीनामपि न ममैव वक्षःस्थले पतिता । एतेनाकाशुक्तया रोदनेनैव मानोऽपगत इति भावः । सख्यं प्रति नायकस्य उक्तिः ॥ ७२ ॥

सुभग व्यजनविचालनशिथिलभुजाभूदियं वयस्यापि ।
उद्वर्त्तनं न सख्याः समाप्यते किञ्चिदपगच्छ ॥ ७३ ॥
सव्रीडा नखरदनार्पणेषु कुपिता प्रगाढमचिरोढा ।
बहुयाच्ञाचरणग्रहसाध्या रोषेण जातेयम् ॥ ७४ ॥
सुगृहीतमलिनपक्षा लघवः परभेदिनः परं तीक्ष्णाः ।
पुरुषा अपि विशिखा अपि गुणच्युताः कस्य न भयाय ॥ ७५ ॥

सुभगेति । हे सुभग ! इयं वयस्यापि सखी अपि का कथा दासादेरित्यपिशब्दार्थः व्यजनस्य विचालने विशेषचालने शिथिल-भुजा शिथिलहस्ता अभूत् पुनःपुनर्व्यजनचालनात् हस्तस्य शिथिल-त्वमभवदिति भावः । सख्याः उद्वर्त्तनम् उष्मातिरेकः किञ्चित् न समाप्यते न निवर्त्तते, अपगच्छ आगमोऽपि । ग्रीष्मं तथा मद्वयस्या अनुकम्पनीयेति भावः । नायकं प्रति सख्या उक्तिरियम् ॥ ७३ ॥

सव्रीडेति । सव्रीडा सलज्जा अतएव प्रगाढं यथा तथा नखर-दनार्पणेषु नखदन्तक्षतेषु कर्त्तव्येष्विति शेषः कुपिता इयम् अचिरोढा नवोढा रोषेण हेतुना बहुयाच्ञा चरणग्रहसाध्या बहुभि-र्याच्ञाभिः चरणग्रहैः पादपतनेन साध्या समाधेया शान्तकोपेति यावत् जाता । यतस्त्वया अविविच्यास्यां तद्यथावत् विहृतं तस्मात् इदानीं चाटुवचनचरणप्रणिपातादिनास्याः कोपमपनयेति भावः । सख्या नायकं प्रत्युक्तिरियम् ॥ ७४ ॥

सुगृहीतेति । सुगृहीतः सुष्ठु अवलम्बितः मलिनः दुष्टः पक्षः सहायः यैः तथोक्ताः अपरपक्षे त्यागानर्हत्वं तेन च उपदेशानर्हत्वञ्च लक्ष्यते । अन्यत्र सुगृहीतपक्षा मलिनाश्च अर्थवशात् मलिनशब्दस्य पूर्वनिपातः बोद्धव्यः । लघवः नीचाः अन्यत्र क्षुद्रावयवाः परभेदिनः परपीड़काः परम् अत्यर्थं तीक्ष्णाः निष्ठुराः निशिताश्च पुरुषा अपि विशिखाः शरा अपि गुणच्युताः निर्गुणाः अन्यत्र मौर्वीनिःसृताः

स्वकपोलेन प्रकटीकृतं प्रमत्तत्वकारणं किमपि ।
द्विरदस्य दुर्जनस्य च मदं चकारैव दानमपि ॥ ७६ ॥
सत्यं पतिरविदग्धः सा तु स्वधियैव निधुवने निपुणा ।
मार्त्तिकमाधाय गुरुं धनुरधिगतमेकलव्येन ॥ ७७ ॥
सौभाग्यमानवान् स त्वयावधीर्यापमानमानीतः ।

सभ्यः कस्य जनस्य भयाय न भवन्तीति शेषः अपितु सर्वस्यैवेत्यर्थः । अत्राप्रस्तुतानां विषधराणां प्रस्तुतानाञ्च पुरुषाणामेकधर्मसम्बन्धाद्दीपकालङ्कारः । अथवा प्रस्तुतानामप्रस्तुतानां वा उभयेषामेकधर्माभिसम्बन्धात् तुल्ययोगितालङ्कारः । उक्तञ्च दर्पणे । अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते इति, पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगितेति च ॥ ७५ ॥

स्वकपोलेनेति । द्विरदस्य हस्तिनः दुर्जनस्य च स्वकपोलेन निजगण्डदेशेन अन्यत्र स्वमुखेनेति यावत् प्रकटीकृतम् आविष्कृतम् अन्यत्र मया दत्तमिति व्यक्तीकृतं किमपि अनिर्वचनीयं प्रमत्तत्वकारणं हेतुभूतं दानमपि मदजलक्षरणं धनत्यागश्चापि मदं मत्ततां गर्वञ्च चकारैव । अत्रापि पूर्ववदलङ्कारद्वयम् ॥ ७६ ॥

सत्यमिति । पतिः अविदग्धः अचतुरः मूढ इति यावत् सत्यम् । सा तु कान्ता स्वस्य आत्मनः धिया बुद्ध्या एव निधुवने सुरते निपुणा चतुरा । तथाहि एकलव्येन तदाख्यनिषादेन मार्त्तिकं मृत्तिकानिर्मितं गुरुं द्रोणम् आधाय संस्थाप्य धनुः धनुर्विद्येति यावत् अधिगतं शिक्षितम् । पुरा एकलव्यो नाम निषादः आचार्य्यं द्रोणमुपगम्य अस्त्रविद्यां मे देहीति प्रार्थिते गुरुणा नाहं निषादमध्यापयामीत्युक्तोऽसौ मृत्तिकया द्रोणं निर्माय तस्मात् सकलां धनुर्विद्यां तथा शिक्षितवान् यथार्ज्जुनोऽपि तेन पराजित इति भारतमनुसन्धेयम् । अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७७ ॥

सौभाग्येति । सौभाग्येन तव वाल्लभ्येनेति यावत् मानवान्

स्वं विरहपाण्डिमानं भस्मस्नानोपमं तनुते ॥ ७८ ॥

सखि मम करञ्जतैलं बहुसन्देशं प्रहेष्यसीत्युदिता ।
श्वशुरगृहगमनमिलितं बाष्पजलं संवृणोत्यसती ॥ ७९ ॥

संदर्शयन्ति सुन्दरि कुलटानां तमसि विततमसिकल्पे ।
मौलिमणिदीपकलिका वर्तिनिभा भोगिनोऽध्वानम् ॥ ८० ॥

अहं कान्तायाः वल्लभ इत्यभिमानी स त्वया अवधीर्य्य अवज्ञाय अप-मानम् आनीतः प्रापितः सन् स्वं निजं विरहेण तव विच्छेदेन पाण्डिमानं पाण्डुत्वं भस्मना स्नानोपमं स्नानसदृशं तनुते धत्ते । यथा कश्चिद्दर्पाभिमानी अवज्ञातः सन् वैराग्यात् भस्मविलिप्ताङ्गो भवति तथायं तद्विरहात् पाण्डुत्वरूपभस्मविप्रलिप्त इति तदेनमनुगृहाणेति भावः । नायिकां प्रति दूत्या उक्तिरियम् । उपमालङ्कारः ॥ ७८ ॥

सखीति । हे सखि ! बहुसन्देशं बहुवाणिजसमेतं करञ्जतैलं मलयदेशस्य करञ्जबाहुल्यादिति भावः करञ्जतैलेन तस्यैव सङ्केत-स्थाने मया कामुकाः प्रेष्याया इति व्यज्यते । मम प्रहेष्यसि प्रेष-यिष्यसि एतेन तदानयनव्याजेन तव समीपे कामुकप्रेषणं भावीति व्यज्यते । इति उदिता उक्ता असती दुश्चारिणी कामिनी श्वशुरगृहे गमने गमनकाले मिलितम् आगतं बाष्पजलं नयनवारि संवृणोति प्रोञ्छति प्रथमं अभिलाषपूरणस्य श्वशुरगृहे स्थितौ असम्भवबोधेनाश्रु-पातः, ततश्च सख्या सङ्केतेन चेष्टितविषयावबोधेन तत्संवरण-मिति भावः ॥ ७९ ॥

सन्दर्शयन्तीति । हे सुन्दरि ! विततमसिकल्पे विस्तृतमसि-सदृशे तमसि अन्धकारे मौलिमणिः शिरस्थरत्नमेव दीपकलिका येषां तादृशाः अतएव वर्तिनिभाः वर्त्तिसदृशाः भोगिनः सर्पाः विटाश्च कुलटानां दुश्चारिणीनाम् अध्वानं मार्गं सन्दर्शयन्ति सम्यक् प्रकाशयन्ती-त्यर्थः । भुजङ्गफणारत्नप्रकाशेन तव मार्गज्ञानं भवितेति अन्धकारे

सर्वं वनं तृणाद्या पिहितं पीताः सितांशुरविताराः ।
प्रध्वस्ताः पन्थानो मलिनेनोन्नम्य मेघेन ॥ ८१ ॥
सम्यगनिष्पन्नः सन् योऽर्थस्त्वरया स्वयं स्फुटीक्रियते ।
स व्यङ्ग एव भवति प्रथमो विनतातनूज इव ॥ ८२ ॥
सज्जन एव हि विद्या शोभायै भवति दुर्जने मोघा ।
न विदूरदर्शनतया कैश्चिदुपादीयते गृध्रः ॥ ८३ ॥

कथं मया सह्यते गन्तव्यमिति शङ्का त्वया न कार्या । यदा कालु-ष्याणां तत्समभिव्याहारिणां पिटोरत्नप्रकाशेन तव मार्गज्ञानं भविष्य-तीत्यतो मया त्वया गमनं निष्प्रयोजनमिति कस्याश्चित् दूत्या नायिकां प्रत्युपदेशवचनम् । रूपोपमयोः संसृष्टिः ॥ ८० ॥

सर्वमिति । मलिनेन मेघेन उन्नम्य उदितेन सर्वं वनं तृणाद्या तृणनिचयेन पिहितम् आच्छादितं सितांशुरविताराः चन्द्रसूर्यनक्ष-त्राणि पीताः ग्रस्ताः, पन्थानश्च प्रध्वस्ताः प्रकर्षेण ध्वंसं नीताः । दुर्जनोत्कर्षः सर्वेषां क्लेशायेति अप्रस्तुतप्रशंसया व्यज्यते ॥ ८१ ॥

सम्यगिति । सन् शोभनः योऽर्थः विषयः सम्यक् अनिष्पन्नः फलोत्पत्तेः प्रागवस्थित इति भावः असम्पूर्णश्च त्वरया स्वयम् आत्मना स्फुटीक्रियते सः प्रथमो विनतातनूज इव अरुण इव व्यङ्ग एव विफल एव विकलाङ्ग एव च भवति । कार्योत्पत्तेः प्राक् जन्मो न प्रकाश्य इति भावः । उपमालङ्कारः ॥ ८२ ॥

सज्जन इति । विद्या सज्जने एव शोभायै भवति सफला भव-तीत्यर्थः दुर्जने मोघा विफला भवति । तथाहि कैश्चित् जनैः विदूर-दर्शनतया विशिष्टदूरदर्शित्वेन गृध्रः पक्षिविशेषः न उपादीयते न गृह्यते दूरदर्शी अयमिति न आद्रियते इति यावत् । अर्थान्तर-न्यासः ॥ ८३ ॥

सुभगं वदति जनस्तं निजपतिरिति नैष रोचते मह्यम् ।
पीयूषेऽपि हि भेषजभावोपनते भवत्यरुचिः ॥ ८४ ॥

सौधगवाक्षगतापि हि दृष्टिस्तं स्थितिकृतप्रयत्नमपि ।
हिमगिरिशिखरस्खलिता गङ्गैवैरावतं हरति ॥ ८५ ॥

सहधर्मचारिणी मम परिच्छदः सुतनु नेह सन्देहः ।
न तु सुखयति तुहिनदिनच्छन्नच्छायेव सज्जन्ती ॥ ८६ ॥

सकलगुणैकनिकेतन दानववासेन धरणिधरराज ।

सुभगमिति । जनः लोकः तं जनं मत्पतिमिति यावत् सुभगं सुन्दरं वदति, किन्तु निजपतिरिति हेतोः एषः जनः मह्यं न रोचते न रुचिकरः भवतीत्यर्थः । हि तथाहि पीयूषे अमृते भेषजभावेन औषधभावेन उपनते प्राप्ते अरुचिः भवति । पतित्वमेवास्यानास्थाहेतुरिति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । दूतीं प्रति नायिकाया उक्तिरियम् ॥ ८४ ॥

सौधेति । हिमगिरेः शिखरात् स्खलिता च्युता गङ्गा ऐरावतमिव सौधस्य हर्म्यस्य गवाक्षगता वातायननिःसृता दृष्टिः तवेति शेषः तं जनं स्थितौ अवस्थाने मर्य्यादायाञ्च कृतप्रयत्नं शिष्टाचाररक्षणे प्रयत्नवन्तमपि हरति हि आकर्षत्येव । उपमालङ्कारः । कस्याश्चित् नायिकां प्रत्युक्तिरियम् ॥ ८५ ॥

सहेति । हे सुतनु ! सुन्दरि ! सहधर्मिणी गृहिणी मम परिच्छदः गृहोपकरणविशेषः इह अस्मिन् विषये न सन्देहः न संशयः त्वया कार्य्य इति शेषः, तु [illegible] सज्जन्ती सुसज्जिता सेवातत्परा वा तुहिनदिनच्छन्ना हेमन्तादि[illegible]रणभूता छायेव न सुखयति, तस्मात्त्वमेव प्रियतमेति मामनुगृहाणेति भावः । उपमालङ्कारः । कञ्चित् कामपि प्रत्युक्तिरियम् ॥ ८६ ॥

सकलेति । हे सकलगुणनिकेतन सर्व्वगुणाधार धरणिधर-

जातोऽसि भूतले त्वं सतामनादेयफलकुसुमः ॥ ८७ ॥

सुन्दरि ताटङ्कमयं चक्रमिवोद्वहति तावके कर्णे ।
निपतति निकामतीक्ष्णः कटाक्षबाणोऽर्जुनप्रणयी ॥८८॥

स्वाधीनेव फलर्द्धिर्जनोपजीव्यत्वमुच्छ्रयच्छाया ।
सत्पुंसो मरुभूरुह इव जीवनमात्रमाशास्यम् ॥ ८९ ॥

राज ! वृक्षराज ! त्वं दानवशायेन दैत्याधिष्ठानेन भूतले पृथिव्यां सतां साधूनाम् अनादेयानि अग्राह्याणि फलकुसुमानि यस्य तादृशः जातः असि । दुष्टसंसर्गात् त्वं सद्गुणधनवानपि साधूनामेव गणनीय इति अप्रस्तुतप्रशंसया कस्यचित् कमपि प्रत्युक्तिरियम् ॥ ८७ ॥

सुन्दरीति । हे सुन्दरि ! तावके त्वदीये कर्णे श्रोत्रे राधेये च ताटङ्कमयं ताटङ्कः कर्णभूषणविशेषः तत्स्वरूपं चक्रमिव, रथाङ्गमिव उद्वहति धारयति ऊर्द्धं नयति च निकामतीक्ष्णः अतिनिशितः अर्जुनप्रणयी कृष्ण इत्यर्थः अर्जुनप्रेरितश्च कटाक्षबाणः कटाक्षरूपः शरः निपतति । त्वया आकर्णकृष्टः कटाक्ष इति भावः । पुरा कर्णं मह्यां निमग्नरथचक्रम् उद्धर्तुमुपक्रान्तम् अर्जुनः शरेण निजघानेति भारतम् । नायकस्य नायिकां प्रत्युक्तिरियम् । श्लेषानुप्राणितोपमालङ्कारः ॥ ८८ ॥

स्वाधीनेवेति । सत्पुंसः सज्जनस्य मरुभूरुह इव कठिनदेशजातवृक्षस्येव फलर्द्धिः फलसम्पत्तिः स्वाधीना एव जनानाम् उपजीव्यत्वं स्वाधीनमेवेति लिङ्गव्यत्ययेनान्वयः । उच्छ्रयच्छाया अभ्युदयकान्तिः उन्नतिच्छाया च स्वाधीना स्वेच्छया फलसम्पत्तिच्छायाप्रदानकर्त्तृत्वं जनानामिति भावः, किन्तु जीवनमात्रं दीर्घजीवनमात्रं जलमात्रञ्च आशास्यम् आकाङ्क्षणीयम् । साधवो दीर्घजीविनो भवन्त्विति मरुभूमौ वृक्षाश्च जलसिक्ताः सन्त्विति लोकैराशास्यते इति भावः । उपमालङ्कारः ॥ ८९ ॥

सन्तापमोहकम्पान् सम्पादयितुं निहन्तुमपि जन्तून् ।
सखि दुर्जनस्य भूतिः प्रसरति दूरं ज्वरस्येव ॥ ६० ॥
सुखयतितरां न रचयति परिचयलेशं गणाङ्गनेव श्रीः ।
कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापि ॥ ६१ ॥
स्वसदननिकटे नलिनीमभिनवजातच्छदां निरीक्ष्यैव ।
हा गृहिणीति प्रलपंश्चिरागतः सखि पतिः पतितः ॥६२॥
सखि चतुराननभावाद्वैमुख्यं क्वापि नैव दर्शयति ।
अयमेकहृदय एव द्रुहिण इव प्रियतमस्तदपि ॥ ६३ ॥

सन्तापेति । हे सखि ! ज्वरस्येव दुर्जनस्य भूतिः सम्पत्तिः सन्तापमोहकम्पान् सम्पादयितुं जनयितुं जनानामिति शेषः जन्तून् प्राणिनः निहन्तुमपि नाशयितुमपि दूरम् अत्यर्थं प्रसरति परिवर्द्धते । उपमालङ्कारः ॥ ६० ॥

सुखयतितरामिति । श्रीर्लक्ष्मीः गणाङ्गनेव वेश्येव सुखयतितराम् अतिशयेन सुखयति, किन्तु परिचयलेशं न रचयति परिचितोऽयमिति नादरं करोतीत्यर्थः । वाग्देवी सरस्वती कुलकामिनीव जन्म जन्म प्रतिजन्म अपि न उज्झति न त्यजति स्वामिनमिति आश्रयमिति वा । अत्रोपमयोः संसृष्टिर्व्यतिरेकश्च ॥ ६१ ॥

स्वसदनेति । हे सखि ! स्वस्य आत्मनः सदननिकटे गृहसमीपे अभिनवजातच्छदां नूतनसञ्जातपत्राम् एतेन पुराणपत्राभावो विरहपीड़ानिबन्धन इति व्यज्यते । नलिनीं पद्मिनीं निरीक्ष्यैव दृष्ट्वैव चिरात् दीर्घकालात् परम् आगतः पतिः हा गृहिणि कति क्लेशान् मद्विरहेणानुभूतवत्यसीति भावः इति प्रलपन् वदन् पतितः मूर्च्छितः । नलिनीदलानि मलिनानि वीक्ष्यैवेति पाठान्तरम् । कस्याश्चित् कामपि प्रत्युक्तिरियम् ॥ ६२ ॥

सखीति । हे सखि ! अयं प्रियतमः चतुराननभावात् सुखस्य

सत्यं मधुरो नियतं वक्रो नूनं कलाधरो दयितः ।
स तु वेद न द्वितीयामकलङ्कः प्रतिपदिन्दुरिव ॥ ९४ ॥
स्वस्थानादपि विचलति मज्जति जलधौ च नीचमपि भजते
निजपक्षरक्षणमनाः सुजनो मैनाकशैल इव ॥ ९५ ॥
संहर बाष्पजलं सखि दृशमुपरज्याञ्जनेन वलयैनाम् ।

चातुर्य्यात् चतुर्वदनत्वाच्च द्रुहिण इव विधातेव कामपि कस्यामपि नार्य्यां कस्मिन्नपि जने च वैमुख्यं विमुखतां प्रातिकूल्यमित्यर्थः मुखाभाववत्त्वञ्च नैव दर्शयति, तदपि तथापि एकस्यां त्वयीति भावः हृदयं यस्य तथाभूतः पक्षे एकं हृदयं यस्य तथोक्तः । अयं चातुर्य्यात् सर्वासु त्वत्सपत्नीषु सम रागं दर्शयति परं त्वमेवास्य हृदयवासिनीति भावः । उपमालङ्कारः । नायिकां प्रति सख्या उक्तिरियम् ॥ ९३ ॥

सत्यमिति । स तु दयितः प्रियः प्रतिपदिन्दुरिव प्रतिपच्चन्द्र इव मधुरः मिष्टभाषी मनोहरश्च सत्यं नियतं वक्रः वक्रोक्तिनिपुणः कुटिलाकारश्च, नूनं निश्चितं कलाधरः चतुःषष्टिविद्यानिपुणः कलावांश्च तथा अकलङ्कः निर्दोषः मालिन्यरहितः न द्वितीयाम् अन्यां नारीमिति यावत् द्वितीयां तिथिञ्च न वेद न जानाति । उपमालङ्कारः । नायिकायाः सखीं प्रत्युक्तिरियम् ॥ ९४ ॥

स्वस्थानादिति । निजपक्षरक्षणमनाः आश्रितसंस्थापनार्थी स्वपक्षरक्षणार्थी च सुजनः मैनाकशैल इव स्वस्थानात् विचलति अपि जलधौ मज्जति च नीचं क्षुद्रम् अनुन्नतिं भजते अपि । स्वाङ्गीकृतपालनाय सज्जना येन केनापि प्रकारेण प्रवर्त्तन्ते, न तत्र मानापमानक्लेशादिगणना तेषामिति भावः । पुरा पक्षच्छेदनोद्यते शक्रे मैनाकः पलाय्य समुद्रं प्रविश्य सपक्षः स्थित इति पुराणम् । उपमालङ्कारः ॥ ९५ ॥

संहरेति । हे सखि ! बाष्पजलं नयनवारि संहर दूरीकुरु,

दयितः पश्यतु पल्लवपङ्कजयोर्युगपदेव वनम् ॥ ९६ ॥
सा पाण्डुदुर्बलाङ्गी नयसि त्वं यत्र याति तत्रैव ।
कठिनीव कैतवविदो हस्तग्रहमात्रसाध्या ते ॥ ९७ ॥
सखि विगर्हणीया लक्ष्मीरिव कमलमुखि कदर्यस्य ।
त्वं प्रणयिनोऽस्य रक्षावीक्षणमात्रोपयोग्यासि ॥ ९८ ॥

---

अञ्जनेन कज्जलेन एनां दृशं नेत्रम् उपरज्य अलङ्कृत्य वसन वस्त्राञ्चल पतितमवलोकय वा । दयितः प्रियः पल्लवपङ्कजयोः युगपदेव वन-कालमेव रूपं कान्तिं पश्यतु । नायिकां मुग्धां दूतीं प्रति सख्या उक्तिरियम् ॥ ९६ ॥

सेति । सा तव कान्ता पाण्डूनि दुर्बलानि अङ्गानि यस्यास्तादृशी त्वद्विरहादिति भावः त्वं यत्र नयसि तामिति शेषः, तत्रैव सा याति गच्छति । कैतवविदः चतुरस्य ते तव कठिनीव खटिकेव हस्तग्रहमात्रेण न त्वन्योपायचरणग्रहणादिनेत्यर्थो मात्रशब्दद्योत्यः । साध्या विधेया । कैतवविद् इत्यनेन तव तद्वशीकरणे चातुर्यं न मया उपदेष्टव्यमिति व्यज्यते । कठिनी च पाण्डुवर्णा सूक्ष्मा च लेखकेन हस्तेन यत्र यत्र नीयते तत्रैव गच्छतीति तत्साम्यमवसेयम् । नायकं प्रति सख्या उक्तिरियम् । उपमालङ्कारः ॥ ९७ ॥

सखीति । हे सखि ! हे कमलमुखि ! कदर्यस्य कृपणस्य लक्ष्मीरिव त्वं विगर्हणीया सर्वजननिन्दनीया अस्य प्रणयिनः स्थविरस्य रक्षा रक्षणं वीक्षणं दर्शनञ्च तन्मात्रोपयोग्या रक्षणदर्शन-मात्रार्थेत्यर्थः असि भवसि । कृपणलक्ष्मीरपि भोगाद्यभावात् तथा-विधेति भावः । अतीव सुन्दरी त्वम् अस्य भोगाक्षमस्य वृद्धस्य हस्त-पतिता क्लिश्यसि, अतः पुरुषान्तरे अनुरक्ता करणीयेति भावः । उपमालङ्कारः । दूत्या नायिकां प्रत्युक्तिरियम् ॥ ९८ ॥

---

## हकारादिः ।

हृदयज्ञया गवाक्षे विसदृक्षं किमपि कूजितं सख्या ।
यत्कलहभिन्नतल्पा भयकपटादेति मां सुतनुः ॥ १ ॥

हरति हृदयं शलाकानिहितोऽञ्जनतन्तुरेष सखि मुग्धे ।
लोचनबाणमुचान्तर्भ्रूधनुषा किण इवोल्लिखितः ॥ २ ॥

हससि चरणप्रहारे तल्पादपसारितो भुवि स्वपिषि ।
नासह्येऽपि कृते प्रिय मम हृदयात्त्वं विनिःसरसि ॥३॥

हृदयज्ञयेति । हृदयज्ञया चित्ताभिप्रायवेदिन्या सख्या गवाक्षे वातायने किमपि अनिर्वचनीयं विसदृक्षं विसदृशं भयप्रदमिति भावः कूजितं शब्दितं, यत् यतः कलहेन भिन्नः तल्पः शय्या यस्यास्तादृशी कलहात् भिन्नशय्याशायिनीत्यर्थः सुतनुः सुन्दरी मत्कान्तेति भावः भयकपटात् साध्वसमिषात् माम् एति मत्समीपमागच्छति । सखायं प्रति कस्यचित् कान्ताचरितवर्णनम् ॥ १ ॥

हरतीति । हे मुग्धे सुन्दरि ! सखि ! शलाकया अञ्जनतूलिकया निहितः अर्पितः एषः अञ्जनतन्तुः कज्जलरेखेति यावत् तन्तुपदेन रेखायास्तनीयस्त्वं सूचितम् । लोचनं नयनमेव बाणः शरः तन्मुचा तन्निक्षेपिणा भ्रूधनुषा भ्रूरूपकार्मुकेण अन्तरुल्लिखितः अन्तर्लिखितः किण इव शुष्कक्षतस्थानमिव हृदयं नायकस्येति भावः हरति नितरां व्यथयति । पूर्वं नायकस्य हृदयं मदनशरविद्धतया सक्षतकिणं वर्त्तते, ततश्च तत् एतदञ्जनरेखया उल्लिखितत्वात् नितरां व्यथितं भवतीति भावः । उपमालङ्कारः । सख्या नायिकां प्रत्युक्तिः ॥ २ ॥

हससीति । हे प्रिय ! चरणप्रहारे मत्कृते इति शेषः हससि हास्यं करोषि, तस्मात् शय्यातः अपसारितः ताडितः सन् भुवि भूतले स्वपिषि शेषे इत्थम् असह्ये अनुचिताचरणे कृतेऽपि

हसति सपत्नी श्वश्रू रोदिति वदनं च पिदधते सख्यः।
स्वप्नायितेन तस्यां सुभग त्वन्नाम जल्पन्त्याम् ॥ ४ ॥

हृदयं मम प्रतिक्षणविहितावृत्तिः सखे प्रियाशोकः।
प्रबलो विदारयिष्यति जलकलशं नीरलेखेव ॥ ५ ॥

हन्त विरहः समन्ताज्ज्वलयति दुर्वारतीव्रसंवेगः।
अरुणस्तपनशिलामिव पुनर्न मां भस्मतां नयति ॥ ६ ॥

कृतेऽपि मयेति शेषः, त्वं हृदयात् न विनिःसरसि नापगच्छसि। यस्मात् त्वम् एतादृशाचरणेऽपि मयि न विरज्यसे, तस्मात् अहं ते प्रसन्नेति भावः। नायिकाया नायकं प्रत्युक्तिरियम् ॥ ३ ॥

हसतीति। हे सुभग! तस्यां कामिन्यां स्वप्नायितेन उत्स्वाप्नेन तव नाम जल्पन्त्याम् उदीरयन्त्यां सत्यां सपत्नी हसति अस्याः स्वप्ने उपनायकनामकीर्त्तनेन असतीत्वं ज्ञायते तेन च पत्युरस्यां विद्वेषो भावीति धियेति भावः। श्वश्रूः रोदिति इत्थमन्येन सुतस्नुषात् महाननर्थं आपद्येतेति धियेति भावः। सख्यः सहचर्य्यः वदनं मुखं पिदधते च आच्छादयन्ति च नायिकाया इति शेषः न पुनरेवं जल्पितं भूयात् तथात्वे अस्माकमेव दोषः सम्पत्स्यते इति धियेति भावः। एतेन त्वयि अस्या नितरामासक्तिस्तदेनामनुगच्छाशेति भावः। दूत्या उपनायकं प्रत्युक्तिरियम् ॥ ४ ॥

हृदयमिति। हे सखे! प्रबलः महान् अतएव प्रतिक्षणं क्षणे क्षणे विहिता आवृत्तिरावर्त्तनं येन तथाविधः प्रियाशोकः प्रियाविरहदुःखं नीरलेखा तरङ्गश्रेणी प्रबलेति लिङ्गव्यत्ययेन योज्यं, जलकलशमिव मम हृदयं विदारयिष्यति विघटयिष्यति। तस्मात् मया देशान्तरं प्रस्थितमिति भावः। सखायं कथं त्वया न गतमिति वादिनं प्रत्युक्तिरियम्। उपमालङ्कारः ॥ ५ ॥

हन्तेति। हन्त खेदे, विरहः दुर्वारः अनिवार्य्यः तीव्रः दारुणः संवेगः सम्यक् स्फुरणं यस्य तथाविधः सन्, अरुणः सूर्य्यः तपन-

हृत्वा तटिनि तरङ्गैर्भ्रमितश्चक्रेषु नाशये निहितः ।
फलदलवल्कलरहितस्त्वयान्तरिक्षे तरुस्त्यक्तः ॥ ७ ॥
हृतकाञ्चिवल्लिबन्धोत्तरजघनादपरभोगभुक्तायाः ।
उल्लसति रोमराजिः स्तनशम्भोर्गरललेखेव ॥ ८ ॥

---

शिखामिव सूर्य्यकान्तमिव, समन्तात् मां ज्वलयति न पुनः भस्मतां नयति भस्मीकरोति । सखीं प्रति नायिकाया विरहिण्या उक्तिरियम् । उपमालङ्कारः ॥ ६ ॥

हृत्वेति । हे तटिनि ! नदि ! त्वया तरुः तरङ्गैः हृत्वा उत्पाट्य चक्रेषु आवर्त्तेषु भ्रमितः भ्रमिं नीतः आशये अभ्यन्तरे न निहितः न स्थापितः प्रत्युत फलदलवल्कलरहितः कृत्वेति भावः अन्तरिक्षे आकाशे दूरे इति भावः त्यक्तः । तथाच तरङ्गरूपकटाक्षैरेनं हृत्वा विविधचातुर्य्येण भ्रामयित्वापि हृदये न कृतवत्यसि प्रत्युत निर्धनीकृत्य परित्यक्तवत्यसि इदमनुचितमिति भावः । वारनारीं प्रति कस्याश्चित् कस्यचिद्वा अप्रस्तुतप्रशंसयोक्तिः ॥ ७ ॥

हृतेति । अपरेण अन्येन जारेणेति भावः यो भोगः सुरतं तेन भुक्तायाः यद्वा नास्ति परः यस्मात् तादृशः अत्युत्कट इत्यर्थः यो भोगः तेन भुक्तायाः तवेति शेषः हृतः अपनीतः काञ्चिवल्लिबन्धः रशनाकलापबन्धनं यस्मात् तथाभूतात् उत्तरजघनात् जघनोपरिभागात् रोमराजिः स्तनशम्भोः कुचमहेशस्य गरललेखेव कालकूटराजीव उल्लसति विकाशते । उपमालङ्कारः । सख्या नायिकां प्रत्युक्तिरियम् ॥ ८ ॥

---

## क्षकारादिः ।

क्षीरस्य तु दयितत्वं यतोऽपि शान्तोपचारमासाद्य ।
शेषोऽङ्गान्यानमयति प्रेमक्षः शेषो ज्वरस्येव ॥ १ ॥
क्षान्तमपसारितो यच्चरणावुपधाय सुप्त एवासि ।
उद्घाटयसि किमूरू निःश्वासैः पुलकयन् क्षणैः ॥ २ ॥
क्षुद्रोद्भवस्य कटुतां प्रकटयतो यच्छतश्च मदमुच्चैः ।
मधुनो लघुपुरुषस्य च गरिमा लघिमा च भेदाय ॥ ३ ॥



क्षीरस्येति । यतः यस्मात् शान्तः उपशमं गतः उपचारः उपसर्गः ज्वरस्येति भावः यस्य तथाभूतं रोगिणमिति शेषः आसाद्य प्राप्य क्षीरस्यापि दुग्धस्यापि दयितत्वं प्रियत्वं भवतीति शेषः सोपसर्गे ज्वरे सति दुग्धं न रोचते ततस्तस्योपशमे रोचत एवेति भावः, तस्मात् ज्वरस्येव प्रेमक्षः परनायिकाविषयस्येति भावः, शेषः शनैः क्रमेण अङ्गानि आनमयति स्वस्थानि करोति । एवञ्च यद्यप्ययमधुना पराङ्गनासक्तः मां नानुकम्पते तथापि तत्प्रेमक्षः अचिरस्थायित्वात् शेषे मम वशं गमिष्यतीति भावः । उपमालङ्कारः । कथं त्वया अन्यासक्तेऽपि नायके एवं विनीता तिष्ठसीति वादिनीं सखीं प्रति वक्त्या नायिकाया उक्तिरियम् ॥ १ ॥

क्षान्तमिति । अपसारितः निराकृतस्त्वं यत् चरणौ ममेति शेषः उपधाय उपधानीकृत्य सुप्त एवासि तत् क्षान्तं सोढम् । उष्णैः निराकरणदुःखादिति भावः निःश्वासैः ऊरू पुलकयन् रोमाञ्चिते कुर्वन् किं कथम् उद्घाटयसि स्वावृतवसने करोषि ? एष तवापराधः न मया क्षन्तव्य इति भावः । मानिन्या नायकं प्रति उक्तिरियम् ॥ २ ॥

क्षुद्रोद्भवस्येति । क्षुद्रा मधुमक्षिका तदुद्भवस्य तदुत्पन्नस्य नीचो-

पूर्वैर्विभिन्नवृत्तां गुणाढ्यभवभूतिबाणरघुकारैः ।
वाग्देवीं भजतो मम सन्तः पश्यन्तु को दोषः ॥ १ ॥
सत्पात्रोपनयोचितसत्प्रतिबिम्बाभिनववस्तु ।
कस्य न जनयति हर्षं सत्काव्यं मधुरवचनं च ॥ २ ॥
एका ध्वनिद्वितीया त्रिभुवनसारा स्फुटोक्तिचातुर्य्या ।

द्रवस्य च कटुतां तीव्रतां कटुभाषिताञ्च प्रकटयतः प्रकाशयतः उच्चैः अत्यर्थं मदं मत्ततां गर्वञ्च यच्छतः कुर्वतश्च मधुनः लघुपुरुषस्य नीच-पुरुषस्य च गरिमा गौरवं लघिमा लाघवञ्च भेदाय प्रभेदज्ञानाय । मधु आद्रियते नीचस्तु अवगण्यते इति भावः । अत्र प्रस्तुताप्रस्तुतयो-र्मधुनीचयोरेकधर्मसम्बन्धात् दीपकं यद्वा अप्रस्तुतयोः प्रस्तुतयोर्वा उभयोरेकधर्मसम्बन्धात् तुल्ययोगितालङ्कारः ॥ ३ ॥

---

पूर्वैरिति । गुणाढ्यैः गुणवद्भिः भवभूतिः बाणः रघुकारः कालिदासः तैः पूर्वैः प्राचीनकविभिः विभिन्नवृत्तां पृथक्छन्दोमयीं भिन्नचरितां वा वाग्देवीं भजतः सेवमानस्य एकेन आर्य्याछन्दसेति शेषः मम को दोषः अस्तीति शेषः, सन्तः साधवः पश्यन्तु अवलोक-यन्तु तदिति शेषः । कवेर्दोषपरिहारकं वचनमिदम् ॥ १ ॥

सत्पात्रेति । सत्पात्रेषु सहृदयेष्वित्यर्थः उपनयः कथनं तदौ-चितं सत् उत्तमं सुन्दरमिति यावत् प्रतिबिम्बं प्रतिफलनं हृदयङ्ग-मीकरणमिति यावत् यस्य तादृशम् अभिनवं नूतनम् अन्यैरनुद्भावित-मिति यावत् अनुक्तञ्च वस्तु प्रतिपाद्यं यस्य तथाभूतं सत्काव्यं मधुरवचनञ्च कस्य जनस्य हर्षम् आनन्दं न जनयति ? अपितु सर्वस्यैवेत्यर्थः । एतेन काव्यमिदं मम समीचीनं सर्वजनरञ्जनञ्च भव-तीति भावः । कवेः स्वचरितप्रशस्तिरियम् ॥ २ ॥

एकेति । ध्वनिः व्यङ्ग्योऽर्थः द्वितीयो यस्यां तथाविधा, त्रिभु-

पञ्चेषुषट्पदहिता भूषा श्रवणस्य सप्तशती ॥ ३ ॥
कविसमरसिंहनादः स्वरानुवादः सुधैकसंवादः ।
विद्वद्विनोदकन्दः सन्दर्भोऽयं मया सृष्टः ॥ ४ ॥
उदयनबलभद्राभ्यां सप्तशती शिष्यसोदराभ्यां मे ।
द्यौरिव रविचन्द्राभ्यां प्रकाशिता निर्मलीकृत्य ॥ ५ ॥

वनं सारः स्थिरांशतया सुदृढमिति यावत्, सारो बले स्थिरांशे चेत्यमरः । यस्यां तथाभूता एतद्रचनामाधुर्य्येण त्रिभुवनस्य असारत्वेऽपि सारवद्वबोधो भवतीति भावः । स्फुटं सुव्यक्तम् उक्तिचातुर्य्यं वचनकौशलं यस्यां तादृशी, पञ्चेषुः कामः स एव षट्पदः भ्रमरः तस्य हिता हितसाधनी तदुद्दीपनीति भावः एका केवला सख्या वा सप्तशती सप्तशतसंख्यकश्लोकावलिः श्रवणस्य कर्णस्य भूषा अलङ्कारवत् भूषणभूता श्रोत्ररञ्जनीति भावः । काव्यस्य सहृदयरञ्जनत्वं कविना दर्शितमनेनेति बोध्यम् ॥ ३ ॥

कवीति । अयं सन्दर्भः ग्रन्थः कविभिः सह समरे सिंहनादः सिंहवत् गर्जनम् । स्वराणां षड्जादीनाम् अनुवादः अनुकृतिः मनोहारित्वेनेति भावः । सुधायाः अमृतस्य एकः अद्वितीयः संवादः समाचारः सम्यगवबोध इति यावत् यत्र तादृशः एतत् सन्दर्भपाठश्रवणेषु सुधायाः स्वादोऽननुभूतपूर्वः अनुभूयते इति भावः । विदुषां विनोदे रञ्जने कन्दः मूलं निदानभूत इत्यर्थः मया सृष्टः रचितः । सर्वथा मनोरमोऽयं ग्रन्थ इति कवेः प्रौढोक्तिरियम् ॥ ४ ॥

उदयनेति । मे मम शिष्यसोदराभ्यां शिष्यौ सोदरौ च ताभ्याम् उदयनबलभद्राभ्यां, रविचन्द्राभ्यां द्यौरिव आकाशमिव, सप्तशती निर्मलीकृत्य संशोध्य प्रकाशिता । एतेन यदि कश्चित् ममात्र दोषः सम्भवति सोऽपि परिहृत इति निर्दोष एवायं सन्दर्भ इति भावः ॥ ५ ॥

हरिचरणाञ्जलिममलं कविवरहर्षाय बुद्धिमान् सततम् ।
अकृतार्यासप्तशतीमितां गोवर्धनाचार्यः ॥ ६ ॥

---

हरीति । बुद्धिमान् महामतिः गोवर्द्धनाचार्य्यः सततं निरन्तरम् अमलं निर्म्मलं हरिचरणयोरञ्जलिं विधायेति शेषः हरिचरणौ कृताञ्जलिः प्रणम्येति भावः सततं निरन्तरं कविवराणां हर्षाय आनन्दाय एतां सप्तशतीम् अकृत रचितवान् । विरचयन् वामनशीलां वामन इव कविपदं जिगमिषुरिति प्रथमार्द्धपाठस्तु पूर्वाहङ्कारपूर्व्ववचनानां प्रतिकूल इति चिन्त्यः ।

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागर-
भट्टाचार्य्येण विरचिता आर्य्यासप्तशतीव्याख्या
समाप्ता ।

---

# पञ्चरत्नम् ।

नागः, पोतस्तथा वैद्यं, भ्रान्तिः, शक्यो, यथाक्रमम् ।
पञ्चरत्नमिदं प्रोक्तं विदुषामपि दुर्लभम् ॥

नागो भाति मदेन, कं जलरुहैः, पूर्णेन्दुना शर्वरी,
शीलेन प्रमदा, जवेन तुरगो, नित्योत्सवैर्मन्दिरम् ।
वाणी व्याकरणेन, हंसमिथुनैर्नद्यः, सभा पण्डितैः,
सत्पुत्रेण कुलं, नृपेण वसुधा, लोकत्रयं विष्णुना ॥ १ ॥
पोतो दुस्तर-वारिराशि-तरणे, दीपोऽन्धकारागमे,
निर्वाते व्यजनं, मदान्धकरिणां दर्पोपशान्त्यै सृणिः ।
इत्थं तद् भुवि नास्ति, यस्य विधिना नोपायचिन्ता कृता,
मन्ये दुर्जनचित्तवृत्तिहरणे धातास्ति भग्नोद्यमः ॥ २ ॥

नाग इति । नागः हस्ती मदेन मत्ततया, कं जलं जलरुहैः पद्मैः, शर्वरी रात्रिः पूर्णेन्दुना पूर्णचन्द्रेण, प्रमदा नारी शीलेन सच्चरित्रेण, तुरगः अश्वः जवेन वेगेन द्रुतगमनेनेत्यर्थः, मन्दिरं गृहं नित्योत्सवैः नियतानन्दव्यापारैः, वाणी वाक् व्याकरणेन विशुद्धतयेति भावः, नद्यः हंसमिथुनैः हंसदम्पतिसमूहैरिति यावत्, सभा पण्डितैः विद्वद्भिः, कुलं वंशः सत्पुत्रेण, वसुधा पृथ्वी नृपेण राज्ञा सुपालकेनेति भावः, लोकत्रयं त्रिभुवनं विष्णुना नारायणेन भाति राजते । शार्दूलविक्रीडितं छन्दः । लक्षणं यथा "सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्" इति वक्ष्यमाणात् ॥ १ ॥

पोत इति । दुस्तरस्य तरितुमशक्यस्य वारिराशेः समुद्रस्य तरणे पारगमने पोतः अर्णवयानविशेषः, अन्धकारागमे दीपः, निर्वाते वायुसञ्चलनविरहे इति भावः व्यजनं तालवृन्तादिना वायुसञ्चालनं,

वैद्यं पानरतं, नटं कुपठितं, स्वाध्यायहीनं द्विजं,
युद्धे कापुरुषं, हयं गतरयं, मूर्खं परिव्राजकम् ।
राजानञ्च कुमन्त्रिभिः परिवृतं, देशञ्च सोपद्रवं,
भार्य्यां यौवनगर्विताां पररतां मुञ्चन्ति शीघ्रं बुधाः ॥ ३ ॥
क्षान्तिश्चेत्, कवचेन किं? किमरिभिः? क्रोधोऽस्ति चेद्देहिनां
ज्ञातिश्चेदनलेन किं? यदि सुहृद्दिव्यौषधैः किं फलम्?
किं सर्पैः?-यदि दुर्जनः, किमु धनैः?-विद्यानवद्या यदि,
व्रीडा चेत् किमु भूषणैः? कविता यद्यस्ति राज्येन किम् ॥४॥

मदान्धाः मत्ता ये करिणः हस्तिनः तेषां दर्पोपशान्त्यै अङ्कुशः, उपायोऽस्तीति शेषः। इत्थम् एवं भुवि पृथिव्यां तत् वस्तु इति शेषः नास्ति न विद्यते, विधिना यस्य वस्तुनः उपायचिन्ता न कृता, सर्वस्यैव उपायचिन्ता कृतेत्यर्थः। दुर्जनानां चित्तवृत्तिहरणे हरणोपाये इति भावः धाता विधिरपि भग्नोद्यमः अकृतार्थ इति यावत् इति मन्ये सम्भावयामि। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

वैद्यमिति। बुधाः पण्डिताः पानरतं मद्यपायिनं वैद्यं चिकित्सकं, कुपठितम् असम्यक्शिक्षितनाट्यशास्त्रमिति भावः नटं, स्वाध्यायहीनं वेदाध्ययनविहीनं द्विजं ब्राह्मणं, युद्धे संग्रामे कापुरुषं वीर्य्यहीनं पुरुषं, गतरयं वेगहीनं हयम् अश्वं, मूर्खं ज्ञानहीनं परिव्राजकं सन्न्यासिनं, कुमन्त्रिभिः परिवृतं राजानं, सोपद्रवम् अत्याचारयुतं देशं, यौवनेन गर्वितां पररतां परपुरुषासक्तां भार्य्याञ्च शीघ्रं मुञ्चन्ति त्यजन्ति। शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

क्षान्तिरिति। चेत् यदि क्षान्तिः क्षमा अस्तीति शेषः, तदा कवचेन वर्मणा किम्? चेत् यदि देहिनां प्राणिनां क्रोधः अस्ति, तदा अरिभिः शत्रुभिः अन्यैरिति शेषः किम्, चेत् यदि ज्ञातिः दायादः अस्तीति शेषः तदा अनलेन अग्निना तद्दाहेनेति भावः

शक्यो वारयितुं जलेन हुतभुक्, छत्रेण सूर्य्यातपः,
नागेन्द्रो निशिताङ्कुशेन, चपलौ दण्डेन गो-गर्द्दभौ।
व्याधिर्वैद्यकभेषजैरनुदिनं, मन्त्रप्रभावाद् विषं,
सर्वस्यौषधमस्ति शास्त्रविहितं, मूर्खस्य नास्त्यौषधम्॥ ५॥

इति पञ्चरत्नं समाप्तम्।

—·—

किम्? यदि सुहृद् सखा अस्तीति शेषः, तदा दिव्यैः औषधैः पीड़ोपशान्तिकरैरिति भावः किं फलं? किम् प्रयोजनम्? यदि दुर्जनः अस्तीति शेषः, तदा सर्पैः भुजङ्गैः किम्? यदि अनवद्या अनिन्द्या उत्तमेति भावः विद्या अस्तीति शेषः, तदा धनैः किम्? चेत् यदि व्रीड़ा लज्जा अस्ति नारीणामिति शेषः, तदा भूषणेन अलङ्कारेण किं? न किमपि प्रयोजनमित्यर्थः, यदि कविता कवित्वम् अस्ति, तदा राज्येन किम्? चमाशालिनां शत्रोरभावात् युद्धार्थं कवचधारणं, क्रोधिनां क्रोधरूपशत्रुसद्भावेनैव विनाशसम्भवात् अपरशत्रुसद्भावः, ज्ञातिरूपदहनसद्भावे अपरदहनाग्निः, मित्रेणैव पीड़ोपशान्तिसद्भावे अपरौषधं, दुर्जनसद्भावे अपरसर्पदंशनं, सुविदुषां विद्यारूपधनसत्त्वे अन्यधन, लज्जावतीनां लज्जारूपभूषणसद्भावे अन्यभूषणं, तथाच कवित्वशक्तौ राज्यसुखं विफलमिति समुदायनिष्कर्षः। शार्दूलविक्रीड़ितं वृत्तम्॥ ४॥

शक्य इति। हुतभुक् अग्निः जलेन, सूर्य्यातपः छत्रेण आतपत्रेण, नागेन्द्रः गजेन्द्रः निशिताङ्कुशेन तीक्ष्णदण्डविशेषेण वारयितुं निराकर्त्तुं शमयितुमित्यर्थः शक्यः, चपलौ उद्धतौ गोगर्द्दभौ दण्डेन वारयितुं शक्याविति वचनव्यत्ययेनान्वयः। अनुदिनमिति सर्वत्र योज्यम्। व्याधिः रोगः वैद्यकानां भेषजैः औषधैः वारयितुं शक्य इति पूर्व्वेणान्वयः। विषं मन्त्रप्रभावात् मन्त्रप्रयोगबलात् वारयितुं शक्यमिति लिङ्गव्यत्ययेनान्वयः। इत्थं सर्वस्य वस्तुन इति शेषः शास्त्र-

# षड्रत्नम् ।

शास्त्रं, कोऽर्थो स्तथा मूर्खो, दानं दुर्मन्त्रिणं, तथा ।
लोभोऽप्यस्तीति निर्दिष्टं क्रमात् षड्रत्नमीरितम् ॥

शास्त्रं सुचिन्तितमथो परिचिन्तनीयम्,
आराधितोऽपि नृपतिः परिशङ्कनीयः ।
अङ्के स्थितापि युवतिः परिरक्षणीया,
शास्त्रे नृपे च युवतौ च कुतो वशित्वम् ? ॥ १ ॥

विहितं विधिनियतम् औषधम् उपशमोपायभूतमस्ति यावत् अस्ति किन्तु मूर्खस्य औषधं नास्ति मूर्खत्वं न कथमपि अपनेतुं शक्यते इति भावः । शार्दूलविक्रीडितं वृत्तम् । ५ ॥

---

शास्त्रमिति । शास्त्रं सुचिन्तितमपि सम्यस्तमपि प्रतिदिनमेव पुनःपुनरालोचनीयम् । अथो परिचिन्तनीयमिति पाठेऽपि स एवार्थः । नृपतिः प्रभुः आराधितोऽपि सुसेवितोऽपि परिशङ्कनीयः भयेन द्रष्टव्यः । युवतिः अङ्के क्रोडे स्थितापि परिरक्षणीया परितः सावधानतया पालनीया । शास्त्रे नृपे युवतौ च वशित्वं वश्यत्वं कुतः ? न कुतोऽपीत्यर्थः । आलोचनाविरहात् सम्यस्तमपि समये न प्रतिभाति, प्रभुसेवायामपि सततं तत्समीपे अवहितेन भवितव्यं, सम्यक् पालनेऽपि स्त्रियां न विश्वास इति समुदायनिष्कर्षः । वसन्ततिलकं वृत्तम् । ज्ञेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ १ ॥

कोऽर्थान् प्राप्य न गर्वितो ? विषयिणः कस्यापदो नागताः ?
स्त्रीभिः कस्य न खण्डितं भुवि मनः ? को नाम राज्ञां प्रियः ?
कः कालस्य न गोचरान्तरगतः ? कोऽर्थी गतो गौरवं ?
को वा दुर्जन-वागुरा-निपतितः क्षेमेण यातः पुमान् ? ॥ २ ॥

मूर्खो द्विजातिः, स्थविरो गृहस्थः,
कामी दरिद्रो, धनवान् तपस्वी ।
वेश्या कुरूपा, नृपतिः कदर्य्यः,
लोके षडेतानि विडम्बितानि ॥ ३ ॥

क इति । को जनः अर्थान् धनानि प्राप्य न गर्वितः नाहङ्कृतः ? अपि तु सर्व एवेत्यर्थः । कस्य विषयिणः विषयाः स्रक्चन्दनवनितादयः भोग्यवस्तूनीत्यर्थः सन्त्यस्येति तस्य आपदः न आगताः न उपस्थिताः ? अपितु सर्वस्यैवेत्यर्थः विषयभोगरतस्य सर्वदैवापन्निपात इति यावत । भुवि पृथिव्यां स्त्रीभिः नारीभिः कस्य मनः न खण्डितं न आक्रष्टम् ? अपितु सर्वस्यैवेत्यर्थः, सर्व एव जनः स्त्रीवशतामायातीति भावः । को जनः राज्ञां नृपतीनां प्रियः नाम सम्भावनायां कोऽपि राजप्रियो नेति सम्भावयामीत्यर्थः । को जनः कालस्य अन्तकस्य गोचरान्तरगतः दृष्टिपथं गतः न ? अपितु सर्व एवेत्यर्थः, सर्व एव कालेन नीयते इति भावः । कः अर्थी भिक्षुः गौरवं सम्मानं गतः प्राप्तः ? न कोऽपीत्यर्थः भिक्षायां कस्यापि गौरवं न विद्यते इति भावः । को वा पुमान् सुजन एव वागुरा बन्धननिगडः तस्यां निपतितः दुर्जनजालबद्ध इति यावत् सन् क्षेमेण कुशलेन यातः ? न कोऽपीत्यर्थः, सर्व एव दुर्जनपाशबद्धो विपद्यते इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

मूर्ख इति । द्विजातिः ब्राह्मणः मूर्खः शास्त्रालोचनविमुख इति भावः गृहस्थः गृहकार्य्यव्यग्र इति भावः स्थविरः वृद्धः, दरिद्रः

दानं दरिद्रस्य, प्रभोश्च शान्तिः
यूनां तपो, ज्ञानवताञ्च मौनम् ।
इच्छानिवृत्तिश्च सुखासितानां,
दया च भूतेषु दिवं नयन्ति ॥ ४ ॥

दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ?
सन्तापयन्ति कमपथ्यभुजं न रोगाः ? ।
कं श्रीर्न दर्पयति ? कं न निहन्ति मृत्युः ?
कं स्त्रीकृता न विषया ननु तापयन्ति ? ॥ ५ ॥

निर्धनः किन्तु कामी भोगार्थी, धनवान् किन्तु तपस्वी चान्द्रायणादिकृच्छ्रकर्मणि रतः, कुरूपा रूपहीना वेश्या गणिका, तथा नृपतिः कदर्यः यथेच्छाचारीति भावः, लोके जगति एतानि षट् विडम्बितानि विरुद्धानि अयुक्तानीति भावः । इन्द्रवज्रावृत्तम् । स्यादिन्द्रवज्रा यदि तौ जगौ ग इति तल्लक्षणात् ॥ २ ॥

दानमिति । दरिद्रस्य दरिद्रायेत्यत्र सम्बन्धविवक्षया षष्ठी यद्वा दरिद्रस्य दानं दरिद्रकर्तृकं दानं कर्त्तरि षष्ठी, प्रभोः निग्रहानुग्रहसमर्थस्य शान्तिः क्षमेत्यर्थः, यूनां तरुणानां तपः कठोरव्रतानुष्ठानमित्यर्थः, ज्ञानवतां विदुषामित्यर्थः मौनं तूष्णीम्भावः वृथातर्कविरह इति भावः, सुखासितानां सुखभोगसमर्थानामिति भावः इच्छानिवृत्तिः निस्पृहता तथा भूतेषु प्राणिषु दया च, एतानि दिवं स्वर्गं नयन्ति प्रापयन्ति जनमिति प्रयोज्यकर्त्तृपदमूहनीयम् । उपजातिवृत्तम् । स्यादिन्द्रवज्रा यदि तौ जगौ ग इति, उपेन्द्रवज्रा प्रथमे लघौ सेति अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः इति लक्षणात् ॥ ४ ॥

दुर्मन्त्रिणमिति । नीतिदोषाः दुर्नया इति यावत् कं दुर्मन्त्रिणं दुःशिक्षादातारं नृपतिमिति शेषः न उपयान्ति ? न प्राप्नुवन्ति अपितु सर्व-

लोभोऽप्यस्ति, परैश्च किं? पिशुनता यद्यस्ति, किं पातकैः?
सौजन्यं यदि किं गुणैः? सुमहिमा यद्यस्ति किं मण्डनैः?
सत्यं चेत् तपसा च किं? शुचि मनो यद्यस्ति तीर्थेन किं?
सद्विद्या यदि किं धनैः?-रपयशो यद्यस्ति किं मृत्युना? ॥६॥

इति षड्रत्नं समाप्तम् ।

---

मेवेत्यर्थः । रोगाः कम् अपथ्यभुजम् अहितकरद्रव्याशिनं न सन्तापयन्ति? सर्वमेवेत्यर्थः । श्रीलक्ष्म्यः कं जनं न दर्पयति? नाहङ्कारयति? सर्वमेवेत्यर्थः । मृत्युः अन्तकः कं जनं न निहन्ति न नाशयति? सर्वमेवेत्यर्थः । ननु भोः स्त्रीकृता स्त्रीनिमित्ता इति भावः विषयाः व्यापाराः कं जनं न तापयन्ति न क्लेशयन्ति? सर्वमेवेत्यर्थः । वसन्ततिलकं वृत्तम् ॥ ५ ॥

लोभ इति । लोभः विषयस्पृहा अपि यदि अस्ति, तदा परैश्च शत्रुभिः किम्? न प्रयोजनमित्यर्थः सत्त्वगुणोत्पाटनकारिणि लोभे सति अन्यः उत्पाटनकारी शत्रुर्निष्फल इति भावः । उक्तञ्च मनुना । मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः । तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥ द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः । तं यत्नेन जयेल्लोभं तज्जावेताबुभौ गणौ ॥ इति यदि पिशुनता खलता अस्तीति शेषः, तदा पातकैः अपरैः पापैरित्यर्थः किम्? न किमपि प्रयोजनमित्यर्थः । यदि-सौजन्यं विनयः अस्ति, तदा गुणैः अन्यैरिति शेषः किम्? न प्रयोजनमित्यर्थः । यदि सुमहिमा सम्यक् महत्त्वम् औदार्यमित्यर्थः अस्ति, तदा मण्डनैः भूषणैः किम्? न प्रयोजनमित्यर्थः । चेद् यदि सत्यं सत्यवचनम् अस्तीति शेषः, तदा तपसा चान्द्रायणा-

# सप्तरत्नम् ।

वाञ्छा, राजा, तथा छेदो, हर्त्त, विलेन किं तथा ।
सर्गौ, धनेन किं श्रेयं सप्तरत्नमिदं क्रमात् ॥

वाञ्छा सज्जनसङ्गमे, परगुणे प्रीतिर्गुरौ नम्रता,
विद्यायां व्यसनं, स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिश्चक्रिणि, शक्तिरात्मदमने, संसर्गमुक्तिः खले,
एते यत्र वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ १ ॥

दिना किम् ? न किमपि प्रयोजनमित्यर्थः । यदि मनः शुचि विशुद्धम् अस्तीति शेषः, तदा तीर्थेन पुण्यक्षेत्रगमनेनेति भावः किम् ? न किमपि प्रयोजनमित्यर्थः । यदि सौहृद्या उत्तमा विद्या अस्तीति शेषः, तदा धनैः किम् ? धनं निष्प्रयोजनमित्यर्थः । यदि अपयशः अकीर्त्तिः अस्तीति शेषः, तदा मृत्युना किम् ? अपयश एव मृत्यु-रिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

---

वाञ्छेति । सज्जनसङ्गमे सत्सङ्गमे वाञ्छा अभिलाषः, परस्य गुणे दयादाक्षिण्यादौ प्रीतिः सन्तोषः न त्वीर्ष्येति भावः, गुरौ पित्रादौ नम्रता विनतिः, विद्यायां व्यसनम् आसक्तिः, स्वयोषिति निजभार्यायां न तु परकीयायामिति भावः रतिः अनुरागः, लोकापवादात् लोकनिन्दायाः भयं, चक्रिणि नारायणे भक्तिः भजनम्, आत्मनः अन्तरिन्द्रियस्य दमने विषयेभ्यो निवर्त्तने शक्तिः सामर्थ्यं, खले दुर्जने संसर्गमुक्तिः संसर्गत्यागः, एते निर्मलगुणाः यत्र येषु वसन्ति तिष्ठन्ति, तेभ्यः नरेभ्यः नमः, ते एव नराः पूज्या इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

राजा धर्मविना, द्विजः शुचिविना, ज्ञानं विना योगिनः,
कान्ता सत्यविना, हयो गतिविना, भूषा च ज्योतिर्विना।
योद्धा शूरविना, तपो व्रतविना, छन्दो विना गीयते,
भ्राता स्नेहविना, नरो हरिविना, मुञ्चन्ति शीघ्रं बुधाः ॥२॥
छेदश्चन्दनचूतचम्पकवने रक्षापि शाखोटके,
हिंसा हंस-मयूरकोकिलकुले काकेषु नित्यादरः।
मातङ्गेन खरक्रयः समतुला कर्पूरकार्पासयोः,
एषा यत्र विचारणा गुणिगणा! देशाय तस्मै नमः ॥ ३ ॥

राजेति। धर्मविना धर्मं विनेत्यर्थः राजा, शुचिविना शौचं विनेत्यर्थः द्विजः विप्रः, ज्ञानं विना योगिनः अन्य इति: अन्य अधर्मस्य ज्ञानस्याध्याहार्य्यादिति भावः। सत्यविना सत्यं विनेत्यर्थः कान्ता सुन्दरभाषिणी नारीत्यर्थः, गतिविना गमनं विनेति भावः हयः अश्वः, ज्योतिर्विना दीप्तिं विना भूषा अलङ्कारः, शूरविना शौर्यं विनेत्यर्थः योद्धा वीरः, व्रतविना नियमं विना तपः चान्द्रायणादिकं, छन्दः विना गीयते यदिति शेषः, स्नेहविना सौभ्रात्रं विनेत्यर्थः भ्राता, हरिविना हरिभक्तिं विनेत्यर्थः नरः अस्तीति सर्वत्राध्याहार्य्यं, योगिन इत्यत्र सन्तीत्यध्याहार्य्यञ्च। तं तान् तां तञ्च बुधा विद्वांसः शीघ्रं मुञ्चन्ति त्यजन्ति। धर्मविनेत्यादिकमपभ्रंश इति चिन्तनीयम्। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

छेद इति। हे गुणिगणाः! चन्दनचूतचम्पकवने छेदः, शाखोटके तदाख्ये नीचवृक्षे रक्षा पालनं, हंसमयूरकोकिलकुले हिंसा तेषां मारणमित्यर्थः, काकेषु नित्यादरः सततमादरः बह्वादर इति पाठान्तरम्। मातङ्गेन हस्तिना खरस्य गर्दभस्य क्रयः कर्पूरकार्पासयोः समतुला साम्येन तोलनं, यत्र यस्मिन् देशे एषा विचारणा

वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः,
पुष्पं पर्य्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टश्रियं मन्त्रिणः,
सर्वः कार्य्यवशाद् जनोऽभिरमते कस्यास्ति को वल्लभः? ॥४॥

वित्तेन किं? वितरणं यदि नास्ति दीने,
किं सेवया? यदि परोपकृतौ न यत्नः।
किं सङ्गमेन? तनयो यदि नेक्षणीयः,
किं यौवनेन? विरहो यदि वल्लभायाः ॥ ५ ॥

विचारः, तस्मै देवाय नमः स देवस्त्वाम् इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

वृक्षमिति। विहगाः पक्षिणः क्षीणफलं फलशून्यं वृक्षं तथा सारसाः जलपक्षिविशेषाः शुष्कं सरः जलाशयं त्यजन्ति। मधुपाः भ्रमराः पर्य्युषितं मधुराहितमिति भावः पुष्पं तथा मृगाः दग्धं भस्मीकृतं वनान्तं वनसीमानं त्यजन्ति। गणिकाः वेश्याः निर्द्रव्यं निर्धनं पुरुषं तथा मन्त्रिणः अमात्याः भ्रष्टश्रियं गतलक्ष्मीकं प्रभुमिति शेषः त्यजन्ति, सर्वो जनः कार्य्यवशात् अभिरमते आनुगत्यं करोति, को जनः कस्य जनस्य वल्लभः प्रियः अस्ति? न कोऽपि कस्यापीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

वित्तेनेति। यदि दीने दरिद्रे जने वितरणं दानं नास्ति, तदा वित्तेन धनेन किम्? धनं निष्फलमित्यर्थः। यदि परेषाम् उपकृतौ उपकारकरणे यत्नः न अस्ति प्रभोरिति शेषः, तदा सेवया तस्येति शेषः किम्? न किमपि प्रयोजनमित्यर्थः। यदि तनयः पुत्रः न ईक्षणीयः न दर्शनीयः न लभ्यतेति भावः, तदा सङ्गमेन स्त्रिया इति शेषः किम्? न किमपि प्रयोजनं स्त्रीसङ्गे इत्यर्थः। यदि वल्लभायाः प्रियायाः विरहः विच्छेदः स्यादिति शेषः, तदा

स्वर्गः किं ? यदि वल्लभा निजवधूः किं वा विभूषाविधिः ?
लावण्यं यदि किं सुधाकरकरैः ? शृङ्गारगर्भा गिरः ।
मृत्युः किं यदि दुर्जनेष्ववनतिः ? किं धिक् यदि प्रार्थना,
प्राप्तेष्टः करिकेतनो यदि भवेत् ? किं कल्पभूमीरुहैः ? ॥६॥

धनेन किं ? यो न ददाति याचके,
बलेन किं ? यश्च रिपुं न बाधते ।

यौवनेन किम् ? प्रियाविरहितं यौवनं विफलमित्यर्थः । वसन्ततिलकं वृत्तम् ॥ ५ ॥

स्वर्ग इति । यदि निजवधूः स्वीया कान्ता वल्लभा प्रिया अस्तीति शेषः, तदा स्वर्गः किम् ? स्वर्गस्तुच्छ इत्यर्थः । यदि लावण्यं मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इत्युक्तलक्षणं कान्तिविशेष इत्यर्थः अस्तीति शेषः, तदा विभूषाविधिः अलङ्करणविधानं किम् ? निष्फलो विभूषाविधिरित्यर्थः । शृङ्गारगर्भाः शृङ्गाररसबहुलाः गिरः वाचः सन्ति चेदिति शेषः, तदा सुधाकरस्य चन्द्रस्य करैः किरणैः किम् ? चन्द्रकिरणा न तादृक्प्रीतिकरा इति भावः । यदि दुर्जनेषु खलसमीपेष्वित्यर्थः अवनतिः प्रणतिः तदधीनतेति भावः अस्तीति शेषः, तदा मृत्युः किम् ? मृत्युर्न क्लेशकर इति भावः । यदि प्रार्थना याचना अस्तीति शेषः, तदा धिक् निर्भर्त्सननिन्दनसूचकं वाक्यमित्यर्थः किम् ? धिङ्निर्भर्त्सननिन्दयोरित्यमरः । यदि प्राप्तेष्टः पूर्णकामः अतएव करिकेतनः इन्द्रः वासव इत्यर्थः भवेत्, तदा कल्पभूमिरुहैः कल्पवृक्षैः किम् ? कल्पवृक्षाणां वाञ्छितफलप्रदत्वेऽपि प्राप्तेष्टस्य तदिच्छाविरहादिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

धनेनेति । यः याचके अर्थिनि न ददाति धनमिति शेषः, धनेन किम् ? तस्येति शेषः तस्य धनं निष्प्रयोजनमिति भावः । यश्च

श्रुतेन किं ? यो न च धर्म्ममाचरेत्,

किमात्मना ? यो न जितेन्द्रियो भवेत् ॥ ७ ॥

इति सप्तरत्नं समाप्तम् ।

---

## अष्टरत्नम् ।

---

अर्थो, व्योम, तथा नित्यं अश्वा, भोगे गणिन्यपि ।
गणो, निःस्वस्य, विज्ञेयमष्टरत्नमिदं क्रमात् ॥

अर्थागमो नित्यमरोगिता च

प्रिया च भार्य्या प्रियवादिनी च ।

वश्यश्च पुत्रोऽर्थकरी च विद्या

षड्जीवलोकेषु सुखानि राजन् ! ॥ १ ॥

रिपुं बलं न बाधते न पीड़यति, बलेन किम् ? तस्येति शेषः रिपुपीड़नाक्षमं बलं निष्फलमित्यर्थः । यः धर्म्मं न च आचरेत् नानुतिष्ठेत्, श्रुतेन शास्त्रज्ञानेन किम् ? तस्येति शेषः । यः जितेन्द्रियः दान्तः न भवेत्, आत्मना जीवनेनेत्यर्थः किम् ? तस्येति शेषः, अदान्तजीवनम् पशोरिव गर्हितमिति भावः । वंशस्थविलं वृत्तम् । वदन्ति वंशस्थविलं जतौ जरौ इति तल्लक्षणात् ॥ ७ ॥

---

अर्थागम इति । अर्थानां धनानाम् आगमः लाभः, नित्यं सततम् अरोगिता स्वास्थ्यमित्यर्थः, भार्य्या प्रिया प्रीतिकरी प्रिय-

व्योमैकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्त्यापदं,
बध्यन्ते निपुणैरगाधसलिलात् मत्स्याः समुद्रादपि।
दुर्नीते हि विधौ कुतः सुचरितं कः स्थानलाभे गुणः ?
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ २ ॥
नित्यं छेदस्तृणानां क्षितिनखलिखनं पादयोरल्पपूजा,
दन्तानामल्पशौचं वदनमलिनता रूक्षता मूर्द्धजानाम्।
द्वे सन्ध्ये चापि निद्रा विवसन-शयनं ग्रास-हासातिरेकः,
स्वाङ्गे पीठे च वाद्यं हरति धनपतेः केशवस्यापि लक्ष्मीम् ॥३॥

वादिनी मधुरालापिनी च, सुतः वश्यः वशंवदः, विद्या अर्थकरी अर्थोपार्जनसाधनी, हे राजन्! एतानि षट् जीवलोकेषु सुखानि सुखकराणि। उपजातिवृत्तम् ॥ १ ॥

व्योमेति। व्योम्नः आकाशस्य एकान्ते एकदेशे विहरन्ति विचरन्तीति तथोक्ताः कस्यापि क्षतिमकुर्वाणा इति भावः विहगाः पक्षिणः आपदं व्याधाद्युपघातजामिति भावः संप्राप्नुवन्ति लभन्ते। निपुणैः कुशलैः मत्स्यजीविभिरिति शेषः अगाधसलिलात् अतलस्पर्शजलात् समुद्रादपि अन्यस्माज्जलाशयात् किमु वक्तव्यमित्यपिशब्दार्थः मत्स्याः बध्यन्ते ध्रियन्ते। हि यस्माद्धि विधौ दैवे दुर्नीते विपरीते विरुद्धे इति यावत् सति सुचरितं सुष्ठु निःशङ्कमयेति भावः चेष्टां विचरणं कुतः? कुत्रेत्यर्थः न कुत्रापीत्यर्थः स्थानलाभे च निर्बाधस्थानप्राप्तावपीत्यर्थः कः गुणः? प्रतीकार इति भावः न कोऽपीत्यर्थः। कालः अन्तकः व्यसने विपदि प्रसारितकरः विस्तारितभुजः सन् दूरादपि का वार्ता निकटादित्यपिशब्दार्थः गृह्णाति हि गृह्णात्येव जन्तूनिति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

नित्यमिति। नित्यं सततं तृणानां छेदः कर्त्तनम्, क्षितौ भूमौ नखैः लिखनं, पादयोः अल्पपूजा सम्यगपूजनम् अक्षालनमित्यर्थः,

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे,
विष्णुर्येन दशावतारगहने न्यस्तो महासङ्कटे।
रुद्रो येन कपालपाणिरटनं भिक्षाटनं कारितः,
सूर्य्यो धावति नित्यमेव गगने तस्मै नमः कर्मणे ॥ ४ ॥
भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं,

दन्तानाम् अशौचम् असम्यक् शुद्धिः, वदनस्य मुखस्य मलिनता मालिन्यम् असंस्कार इत्यर्थः, मूर्द्धजानां केशानां रूक्षता तैलदानाभावादिति भावः, द्वे सन्ध्ये प्रातः सायञ्चेत्यर्थः निद्रा, विवसनं विवस्त्रं शयनं, ग्रासस्य कवलस्य हासस्य हास्यस्य च अतिरेकः अतिवृद्धिः, स्वस्य आत्मनः अङ्गे देहे पीठे च काष्ठासने च वाद्यम् एतत् सर्वं समस्तं व्यस्तं वा धनपतेः कुबेरस्य केशवस्य विष्णोरपि का कथान्येषामित्यपिशब्दार्थः लक्ष्मीं श्रियं हरति नाशयति। स्रग्धरावृत्तम्। म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥ ३ ॥

ब्रह्मेति। येन कर्मणा ब्रह्मा विधाता ब्रह्माण्डमेव भाण्डं पात्रविशेषः तस्योदरे अभ्यन्तरे कुलालवत् कुम्भकार इव नियमितः सृष्टिव्यापारे नियोजित इत्यर्थः, येन कर्मणा विष्णुर्नारायणः महासङ्कटे महापत्कारणे दशानां मीनकूर्मादीनाम् अवतारः तत्तद्रूपेणावतरणमित्यर्थः एव गहनं वनं तस्मिन् न्यस्तः निपातितः, येन कर्मणा रुद्रः कपालं नरशिरः पाणौ यस्य तथाभूतः सन् भिक्षया अशनं भोजनं यत्र तादृशम् अटनं भ्रमणं कारितः, येन चेति अध्याहार्य्यं, येन च कर्मणा सूर्य्यः नित्यमेव गगने अन्तरीक्षे धावति चरति, तस्मै कर्मणे नमः, सर्वमेव जगत् कर्मफलभुगिति भावः स्वकर्मफलभुक् पुमानिति शास्त्रात्। नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवतीत्येतत्समसंख्येयम्। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

मानि दैन्यभयं बले रिपुभयं रूपे तरुण्या भयम् ।
शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद्भयं,
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ ५ ॥

शशिनि खलु कलङ्कः कण्टकं पद्मनाले,
युवतिकुचनिपातः पक्कता केशजाले ।
जलधिजलमपेयं पण्डिते निर्धनत्वं,
वयसि धनविवेको निर्विवेको विधाता ॥ ६ ॥

भोगे इति । भोगे विषयाणां सम्यक् सम्भोगे रोगात् भयं, कुले च्युतिभयं कौलीन्यभ्रंशात् भयमित्यर्थः, वित्ते धने बहुले इति भावः नृपालात् राज्ञः भयं बहुधनदर्शनेन लोभोदयात् राजस्तद्धन-जिहीर्षा प्रबला भवतीति भावः । माने सम्माने सति दैन्यात् दारि-द्र्यात् भयं दारिद्र्यान्मानहानिर्भवतीति भावः, बले सामर्थ्ये सति रिपोः शत्रुसकाशादित्यर्थः भयम् अनेके बलवन्तः शत्रवो भवन्तीति भावः, रूपे सति तरुण्याः युवत्याः भयं रूपवन्तं युवतिः कामयते इति तदधीनता भवतीति भावः, शास्त्रे शास्त्रज्ञाने सति वादिनः भयं पराजयनिमित्तमिति भावः, गुणे खलात् दुर्जनात् भयं दुर्जना गुणिषु विद्विषन्तीति भावः, काये शरीरे कृतान्तात् यमात् भयं कदा कृतान्त एनं कवलयतीति धियेति भावः, अतः सर्वं वस्तु भुवि पृथिव्यां भयान्वितं सभयं, वैराग्यमेव संसारेषु विगतस्पृहत्वमेव अभयं भया-भाववदित्यर्थः । तस्मात् वैराग्यमेवाश्रयणीयमिति भावः । शार्दूल-विक्रीडितं वृत्तम् ॥ ५ ॥

शशिनीति । शशिनि चन्द्रे खल्विति पादपूरणार्थमव्ययं कलङ्कः मलः, पद्मनाले कमलदण्डे कण्टकं, युवतीनां तरुणीनां कुचनिपातः स्तनपतनं, केशजाले केशपाशे पक्कता पलितमिति भावः, जलधेः समुद्रस्य जलम् अपेयं पातुमनर्हं, पण्डिते विदुषि जने निर्ध-

शशी दिवसधूसरो गलितयौवना कामिनी,
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो,
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ७ ॥

निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेशतां वाञ्छति ।
चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्राह्मं पदं वाञ्छति,
ब्रह्मा शैवपदं शिवो हरिपदम् आशावधिं को गतः ॥ ८ ॥

इत्यष्टरत्नं समाप्तम् ।

---

गतं दारिद्र्यं, वयसि वार्द्धके इति भावः अनविवेकः धर्माधर्मादिषु विवेचनम् अस्तीति सर्वत्र योज्यं, तस्मात् विधाता निर्विवेकः अविमृश्यकारीत्यर्थः अयोग्ययोजनकारित्वादिति भावः । मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ॥ ६ ॥

शशीति । शशी चन्द्रः दिवसे धूसरः मलिनः, कामिनी गलितं क्षीणं यौवनं यस्यास्तथाभूता, सरः सरोवरं विगतवारिजं कमलशून्यं, स्वाकृतेः सुन्दराकृतेः जनस्य मुखम् अनक्षरम् अक्षरशून्यं वाक्यरहितमित्यर्थः, प्रभुः राजा धनपरायणः धनलुब्धः, सज्जनः साधुः सततदुर्गतः सततं दरिद्रः तथा खलः दुर्जनः नृपाङ्गणगतः राजसंसदि स्थितः राजमान्य इति भावः, एतानि सप्त मे मम मनसि शल्यानि शल्यास्वरूपाणि सर्वथा व्यथयन्त्येतानीति भावः । पृथ्वीवृत्तम् । तदुक्तं श्रुतबोधे । द्वितीयमविलङ्घ्यते गुरुषष्ठमष्टादशं चतुर्दशमथ प्रिये गुरुगभीरमाभिरुद्रे । सपञ्चदशमान्तिमं तदनु यत्र कान्ते यतिर्गिरीन्द्रफणभृत्कुलैर्भवति सुभ्रु पृथ्वीति सा ॥ इति ॥ ७ ॥

निःस्व इति । निःस्वः निर्धनः शतं द्रव्यमिति शेषः वष्टि

# नवरत्नानि ।

---

धन्वन्तरि-क्षपणकामरसिंहशङ्कु-
वेतालभट्ट-घटकर्पर-कालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥

---

## नवरत्नम् ।

---

मित्रमर्थौ तथा नीतिर्धर्म-कार्पण्य-मूर्खकाः ।
स्त्रीणां विद्वान् तथोत्खातान् नवरत्नमिदं क्रमात् ॥

मित्रं स्वच्छतया रिपुं नयबलैर्लुब्धं धनैरीश्वरं
कार्य्येण द्विजमादरेण युवतीं प्रेम्णा समैर्बान्धवान् ।

काङ्क्षते, शती शतसंख्यकद्रव्यशाली दशशतं सहस्रमित्यर्थः, सहस्राधिपः लक्षं, लक्षेशः लक्षपतिः क्षितिपालतां नृपत्वं वष्टीति पूर्वेणान्वयः । क्षितिपतिः चक्रेशतां साम्राज्यं वाञ्छति, चक्रेशः सम्राट् पुनः इन्द्रतां, सुरपतिरिन्द्रः ब्राह्मं पदं, ब्रह्मा शैवपदं, शिवः हरिपदं वाञ्छति अभिलषति, अतः को जनः आशावधिम् आकाङ्क्षाशेषं गतः प्राप्तः ? न कोऽपीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥८॥

---

मित्रमिति । स्वच्छतया अकैतवेन मित्रं, नयबलैः नीति-

अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं कथाभिर्बुधं
विद्याभीरसिकं रसेन सकलं शीलेन कुर्य्याद् वशम् ॥ १ ॥
अर्थी लाघवमुच्छ्रितो निपतनं कामातुरो वाञ्छनं,
लुब्धोऽकीर्त्तिमसङ्गरः परिभवं दुष्टोऽन्यदोषे रतिम् ।
निःस्वो वञ्चनमुन्मना विकलतां शोकाकुलः संशयं
दुर्वागप्रियतां दुरोदरवशः प्राप्नोति कष्टं मुहुः ॥ २ ॥

प्रयोगैः रिपुं शत्रुं, धनैः लुब्धं लोभिनं, कार्य्येण ईश्वरं प्रभुम्, आदरेण सम्मानेन द्विजं ब्राह्मणं, प्रेम्णा प्रणयेन युवतीं, समैः अपक्षपातैरित्यर्थः बान्धवान् भ्रात्रादीन्, स्तुतिभिः प्रशंसावादैः अत्युग्रम् अत्युद्धतं जनं, प्रणतिभिः गुरुं गुरुजनं पित्रादिमित्यर्थः, कथाभिः सन्तोषजनिकाभिरिति भावः मूर्खं, विद्याभिः शास्त्रगर्भाभिरिति भावः बुधं विद्वांसं, रसेन शृङ्गारादिवर्णनेन रसिकं, शीलेन सच्चरितेन सकलम् अन्यं सर्वं जनमित्यर्थः वशं कुर्य्यात् । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

अर्थीति । सङ्गरिति सर्वत्रान्वेति । अर्थी याचको जनः लाघवम् अनादरमिति भावः, उच्छ्रितः उन्नतः जनः निपतनं, कामातुरः मदनपीड़ितः जनः वाञ्छनं सन्तापं प्रियाविरहे इति शेषः, लुब्धः लोभी जनः अकीर्त्तिम् अपयशः, असङ्गरः असत्यप्रतिज्ञः परिभवम् अवज्ञां, दुष्टः दुर्जनः अन्येषां दोषे तत्कीर्त्तने इति भावः रतिं सन्तोषं, निःस्वः निर्धनः वञ्चनं प्रतारणाम्, उन्मनाः उत्कण्ठितचित्तो जनः विकलतां व्याकुलतां, शोकाकुलः जनः संशयं जीवनेषु शङ्कामित्यर्थः, दुर्वाक् कटुभाषी जनः अप्रियताम् अप्रीतिभाजनत्वं सर्वेषामिति शेषः तथा दुरोदरवशः द्यूतक्रीडासक्तः जनः कष्टं प्राप्नोति लभते । शार्दूलविक्रीड़ितं वृत्तम् ॥ २ ॥

नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां धृति-
र्दम्पत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो गिराम्।
लावण्यं वपुषः स्मृतिः सुमनसां शान्तिर्द्विजस्य क्षमा
शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थ्यं सतां मण्डनम् ॥ ३ ॥

धर्मः प्रागेव चिन्त्यः सचिवमतिगतिर्भावनीया सदैव,
ज्ञेयं लोकानुवृत्तं वरचरनयनैर्मण्डलं वीक्षणीयम्।
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ योजनीयौ च काले,
आत्मा यत्नेन रक्ष्यो रणशिरसि पुनः सोऽपि नापेक्षणीयः ॥४॥

नीतिरिति। भूमिभुजां राज्ञां नीतिः, गुणवतां विद्यावतां नतिः विनयः, अङ्गनानां स्त्रीणां ह्रीः लज्जा, दम्पत्योः स्त्रीपुंसयोः धृतिः सन्तोषः, गृहस्य शिशवः, बुद्धेः कविता काव्यरचना, गिरां वाचां प्रसादः नैर्मल्यं झटित्यर्थबोधकत्वमित्यर्थः, वपुषः शरीरस्य लावण्यं मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इत्युक्तलक्षणं कान्तिविशेष इति यावत्, सुमनसां स्मृतिः स्मरणं, द्विजस्य विप्रस्य शान्तिः अनौद्धत्यमिति यावत्, शक्तस्य सामर्थ्यवतः क्षमा अपराधसहिष्णुता, गृहाश्रमवतां गृहिणां द्रविणं धनं तथा सतां सज्जनानां स्वास्थ्यं स्वप्रकृतौ स्थितिः मण्डनं भूषणम्। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

धर्म इति। धर्मः विधिबोधितकर्मविशेषः प्रागेव पूर्वमेव सर्वस्मात् कार्य्यादिति भावः चिन्त्यः भावनीयः, ततः सदैव नियतमेव सचिवानाम् अमात्यानां मतिगतिः बुद्धिवृत्तिः स्वानुरागिणी परानुरागिणी वेति भावः भावनीया चिन्तनीया। ततः लोकानां परिजनानाम् अनुवृत्तम् आनुगत्यं वाह्याभ्यन्तरभावेनेति भावः ज्ञेयं वेदितव्यं, वराः श्रेष्ठाः गुणवन्त इत्यर्थः विश्वासयोग्या इति भावः ये चराः गूढपुरुषाः तेषां नयनैः मण्डलं स्वपरराष्ट्रं वीक्षणीयं द्रष्टव्यं

कार्पण्येन यशः क्रुधा गुणचयो दम्भेन सत्यं क्षुधा
मर्य्यादा व्यसनैर्धनानि विपदा स्थैर्य्यं प्रमादैर्द्विजः ।
पैशुन्येन कुलं मदेन विनयो दुश्चेष्टया पौरुषं
दारिद्र्येण जनादरो ममतया चात्मप्रकाशो हतः ॥ ५ ॥
मूर्खोऽशान्तस्तपस्वी क्षितिपतिरलसो मत्सरी धर्म्मशीलो,
दुःस्थो मानी गृहस्थः प्रभुरतिकृपणः शास्त्रविद्धर्म्महीनः ।

के केन यथा चरन्तीति बोद्धव्यमिति भावः राजानश्चारचक्षुष इति स्मरणात् । रागरोषौ प्रणयकोपौ प्रच्छाद्यौ गोप्यौ त्याज्याविति यावत् प्रणयित्वेन कमपि प्रति क्षमा अप्रणयित्वेन कमपि प्रति अक्षमा च न कार्य्येति भावः । काले योग्ये समये मृदुपरुषगुणौ सौम्यतीक्ष्णगुणौ क्षमाक्रोधाविति भावः योजनीयौ प्रयोक्तव्यौ, आत्मा स्वशरीरं यत्नेन रक्ष्यः आत्मानं सततं गोपायीतेति श्रुतेः । सोऽपि आत्मा रणाशिरसि न अपेक्षणीयः न रक्षार्थं यतनीय इत्यर्थः । राजधर्म्मवर्णनमिदम् । स्रग्धरावृत्तम् ॥ ४ ॥

कार्पण्येनेति । कार्पण्येन कृपणभावेन यशः, क्रुधा क्रोधेन गुणचयः गुणराशिः, दम्भेन कैतवेन सत्यं, क्षुधा क्षुधया मर्य्यादा स्थितिः, व्यसनैः स्त्रीमद्यादिभिः धनानि, विपदा स्थैर्य्यं धीरता, प्रमादैः अनवधानताभिः द्विजः ब्राह्मणः, पैशुन्येन दौर्जन्येन कुलं कौलीन्यमित्यर्थः, मदेन मद्यपानेन अहङ्कारेण वा विनयः शिष्टाचारः, दुश्चेष्टया अविहितकार्य्येण पौरुषं पुरुषकारः, दारिद्र्येण निर्धनतया जनेषु लोकेषु आदरः, ममतया संसारवासनया आत्मप्रकाशः परमात्मज्ञानमित्यर्थः हतः विनाशितः, वचनव्यत्ययः प्रकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

मूर्ख इति । मूर्खः ज्ञानहीनः अशान्तः अदान्तः जनः तपस्वी तपश्चर्य्यानिरतः, अलसः आलस्यपरः क्षितिपतिः राजा, धर्म्मशीलः

आज्ञाहीनो नरेन्द्रः शुचिरपि सततं यः पराद्रोपभोगी,
वृद्धो रोगी दरिद्रः स च युवतिपतिर्धिग् विडम्बप्रकारम्॥६॥
स्त्रीणां यौवनमर्थिनामनुगमो राज्ञां प्रतापः सतां
सत्यं स्वल्पधनस्य सञ्चितिरसद्वृत्तस्य वाग्डम्बरः।
साचारस्य मनोदमः परिणतेर्विद्या कुलस्यैकता,
सेवाया धनमुन्नतेर्गुणचयः शान्तेर्विवेको बलम्॥ ७॥
विद्वान् संसदि पाचिकः परवशो मानी दरिद्रो गृही,
वित्ताढ्यः कृपणः सुखी परवशो वृद्धो न तीर्थाश्रितः।

धार्मिकः सत्वरः अपरशुभद्वेषीत्यर्थः, दुःस्थः निर्धनः मानी अभिमानवान् गृहस्थः, प्रभुः अतिकृपणः अतिदीनः, शास्त्रवित् शास्त्रज्ञानवान् किन्तु धर्महीनः, आज्ञाहीनः यस्याज्ञा न केनापि गृह्यते तादृशः नरेन्द्रः नृपतिः, यः शुचिरपि विशुद्धचरितोऽपि पराद्रोपभोगी परभक्तभोजी वृद्धः रोगी दरिद्रः स च युवतिपतिः, इत्थं विडम्बप्रकारं विधातुरयोग्यविलसितमिति यावत् धिक् निन्दामीत्यर्थः, धिङ्निर्भर्त्सननिन्दयोरित्यमरः। स्रग्धरावृत्तम्॥ ६॥

स्त्रीणामिति। स्त्रीणां यौवनं तारुण्यम्, अर्थिनां याचकानाम् अनुगमः आनुगत्यं कथावत्नुगमान्विन इति स्मरणात्। राज्ञां प्रतापः, सतां साधूनां सत्यं, स्वल्पधनस्य सञ्चितिः सञ्चयः, असद्वृत्तस्य दुश्चरितस्य वाग्डम्बरः वाचालता, साचारस्य आचारवतः जनस्य मनसः दमः दमनम् इन्द्रियजय इत्यर्थः, परिणतेः वृद्धतायाः विद्या, कुलस्य एकता ऐकमत्यं, सेवायाः धनम्, उन्नतेः अभ्युदयस्य गुणानां विद्याशीलन्यादीनां चयः समूहः तथा शान्तेः मनसः विवेकः ज्ञानं बलं सामर्थ्यम्। शार्दूलविक्रीडितं वृत्तम्॥ ७॥

विद्वानिति। विद्वान् पण्डितः अथच संसदि सभायां पाचिकः पक्षावलम्बी, परवशः पराधीनः अथच मानी अभिमानवान्,

राजा दुःसचिवप्रियः कुलभवो मूर्खः पुमान् स्त्रीजितो
वेदान्ती हत-सत्क्रियः किमपरं हास्यास्पदं भूतले॥ ८॥
उत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वन् शिशून् वर्धयन्,
प्रोत्तुङ्गान् नमयन् नतान् समुदयन् विश्लेषयन् संहतान्।
तीव्रान् कण्टकिनो बहिर्नियमयन् म्लानान् मुहुः सेचयन्
मालाकार इव प्रयोगनिपुणो राजा चिरं नन्दतु॥ ९॥

इति नवरत्नं समाप्तम्।

---

दरिद्रः निर्धनः अथच लघ्वो परिवारप्राप्तो, विशाढ्यः धनी किन्तु कृपणः व्ययकुण्ठः, सुखी किन्तु परवशः पराधीनः, वृद्धः किन्तु तीर्थाश्रितः न अतीर्थसेवीत्यर्थः, दुःसचिवप्रियः दुर्मन्त्रिवशंवदः राजा, मूर्खः कुलभवः कुलीनः सत्कुलप्रसूत इत्यर्थः, पुमान् स्त्रीजितः नारीवशंवदः तथा वेदान्ती तत्त्ववित् अथच हता नाशिता सत्क्रिया धर्मचर्य्येत्यर्थः येन तादृशः अपरम् एतस्मात् पूर्वोक्तात् अपरम् अन्यत् किं हास्यास्पदम् न किमपीत्यर्थः, एतदेव हास्यास्पदं नान्यत् किमपीति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ८॥

उत्खातानिति। प्रयोगे सामादीनामिति भावः निपुणः कुशलः राजा मालाकार इव मालीव उत्खातान् निर्जितान् नृपतीनिति शेषः सर्वत्र योजनीयः। पक्षे उन्मूलितान् वृक्षानिति शेषः सर्वत्र योज्यः। प्रतिरोपयन् पुनः स्थापयन्, कुसुमितान् सञ्जातधनान् सञ्जातपुष्पांश्च चिन्वन् करान् पुष्पाणि च तेभ्यः आददान इत्यर्थः, शिशून् अप्राप्तवयसः क्षुद्रांश्च वर्द्धयन् विद्यादानादिना जलसेकादिना च पुष्णन्। प्रोत्तुङ्गान् अत्युन्नतान् नमयन् बलभ्रंशनेन शाखाकर्षनेन च विनतीकुर्वन्, नतान् विनयिनः फलपुष्पभरेण पतनोन्मुखांश्च समुदयन् संवर्द्धयन् आश्रयदानेनेति भावः। संहतान् सङ्गतान् द्वाभ्यां बहुभिर्वा मिलितानित्यर्थः विश्लेषयन् पृथक् कुर्वन् समीपने सति हानिः

# गुणरत्नम् ।

---

सानन्दं नन्दिहस्ताहत-मुरज-रवाहूत-कौमार-बर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोग-सङ्कोच-भाजि ।
गण्डोड्डीनालिमाला-मुखरित-ककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥ १ ॥

पक्षे अपुष्टता चेति भावः, तीक्ष्णान् मङ्क्षु कण्टकिनः यत्नात् कण्टकाकीर्णांश्च वृक्षान् स्वराष्ट्रात् बाह्ये देशे द्वीपादाविति भावः उद्यानस्य बहिर्भागे च नियमयन् स्थापयन् तथा म्लानान् विपन्नान् शुष्कांश्च मुहुः पुनः पुनः सेचयन् स्वस्थीकुर्वन् सन् चिरं नन्दतु सुखेन कालं नयत्विति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

---

सानन्दमिति । शूलपाणेः हरस्य ताण्डवे नृत्ये, ताण्डवं नटनं नृत्यमित्यमरः । सानन्दं यथा तथा नन्दिनः हस्तेन आहतः ताडितः यः मुरजः मृदङ्गवाद्यं तस्य रवेण नादेन आहूतः आकारितः उपस्थापित इति यावत् मेघध्वनिबोधेनेति भावः यः कौमारबर्ही कार्त्तिकेयमयूरः तस्मात् यः त्रासः भयं तस्मात् हेतोः भोगसङ्कोचभाजि कुञ्चितशरीरे फणिपतौ नागराजे हरदेहवर्त्तिनीति शेषः नासाग्ररन्ध्रं शुण्डाग्रविवरमित्यर्थः विशति प्रविशति सति सर्पाणामयं स्वभावः यत् छिद्रं दृष्ट्वा भयादिकारणात् तत्र प्रविशतीति भावः गण्डात् कपोलदेशात् उड्डीनाभिः उत्पतिताभिः सर्पभयादिति भावः अलिमालाभिः भ्रमरपङ्क्तिभिः तत्रस्थदानवारिलुब्धाभिरिति भावः मुखरिताः शब्दिताः ककुभः दिशः याभिः तथाभूताः चीत्कारवत्यः चीत्कारशब्दसहिताः विनायकस्य गणाधिपस्य इमा वैनायक्यः गण-पतिसम्बन्धिन्य इत्यर्थः, विनायके विघ्नराजद्वैमातुरगणाधिपा इत्य-

यत्कण्ठे गरलं विराजति सदा मौलौ च मन्दाकिनी,
यस्याङ्के गिरिजाननं कटितटे शार्दूलचर्म्माम्बरम् ।
यन्माया हि रुणद्धि विश्वमखिलं पायात् स वः शङ्करः
जम्बूवत् जलविन्दुवत् जलजवत् जम्बालवत् जालवत् ॥२॥
विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं,
विद्या भोगकरी यशः-शुभ-करी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं,
विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः ॥३॥

नरः। वदनस्य मुखस्य विधुतयः कम्पनानि वः युष्मान् चिरं पान्तु रक्षन्तु। स्रग्धरावृत्तम्। ग्रन्थकारस्य स्वाभीष्टस्य ग्रन्थस्य सिद्धये विघ्नहरस्य गणेशस्य कीर्त्तनरूपं मङ्गलाचरणमिदम् ॥ १ ॥

यत्कण्ठे इति। यत्कण्ठे यस्य शङ्करस्य कण्ठे गरलं कालकूटं सदा जम्बूवत् जम्बूफलमिव, यस्य शङ्करस्य मौलौ शिरसि मन्दाकिनी गङ्गा जलविन्दुवत् जलकण इव, यस्य अङ्के क्रोडे गिरिजायाः गौर्य्याः आननं मुखं जलजवत् पद्ममिव, यस्य कटितटे शार्दूलचर्म व्याघ्रकीर्त्तिरूपम् अम्बरं वसनं जम्बालवत् शैवालमिव विराजति शोभते, तथा यस्य माया अखिलं समस्तं विश्वं जालवत् जालमिव रुणद्धि व्याप्नोति आवृणोतीति यावत्, सः शङ्करः वः युष्मान् पायात् रक्षतु। शार्दूलविक्रीडितं वृत्तम्। शिववन्दनमेतत् ॥ २ ॥

सम्प्रति विद्यां प्रशंसति विद्येति। विद्या नाम वस्त्विति भावः नरस्य मानवस्य अधिकं स्वसौन्दर्य्यादिति शेषः रूपं सौन्दर्य्यं व्याध्यादिभिरहार्य्यत्वादिति भावः प्रच्छन्नगुप्तं निभृतरक्षितं धनं चौरादिभिरहार्य्यत्वादिति भावः। विद्या भोगकरी सुखसम्भोगसाधनीत्यर्थः यशःशुभकरी कीर्त्तिरूपसम्पादनीत्यर्थः। विद्या गुरूणां पित्रादीनाम् अपिरलाध्याहार्य्यः गुरुः आदरणीयेति भावः। विद्या

गुणी गुणं वेत्ति न वेत्ति निर्गुणो,
बली बलं वेत्ति न वेत्ति निर्बलः ।
पिको वसन्तस्य गुणं न वायसः,
करी च सिंहस्य बलं न मूषिकः ॥ ४ ॥

गुणा गुणज्ञेषु गुणा भवन्ति,
ते निर्गुणं प्राप्य भवन्ति दोषाः ।
सुस्वादुतोयाः प्रभवन्ति नद्यः
समुद्रमासाद्य भवन्त्यपेयाः ॥ ५ ॥

विदेशगमने बन्धुजनः बन्धुकार्यस्य सुवर्णस्तत्यादेः सम्पादनादिति भावः । विद्या परं महत् दैवतम् अतिशयेन पूजनीयेति भावः । विद्या राजसु नृपेषु सत्पूजनीयेभ्यस्तदर्थः पूज्यते आद्रियते राजानो विद्वांसमाद्रियन्ते इति भावः न हि धनं पूज्यते इति पूर्वेणान्वयः । तस्मात् विद्याविहीनो जनः पशुः । एवञ्च विद्या सर्वथैव अर्जनीयेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

गुणीति । गुणी गुणवान् जनः गुणं वेत्ति जानाति, निर्गुणो न वेत्तीति पूर्वेणान्वयः । बली बलवान् बलं सामर्थ्यं वेत्ति, निर्बलः सामर्थ्यहीनो न वेत्तीति पूर्वेणान्वयः । तथाहि पिकः कोकिलः वसन्तस्य गुणं वेत्तीति शेषः, वायसः काको न, करी च गजश्च सिंहस्य बलं वेत्ति, मूषिको न वेत्तीति शेषः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । तदुक्तं दर्पणे । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्यञ्च कारणेनेदं कार्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति । वसन्ततिलकं वृत्तम् ॥ ४ ॥

गुणा इति । गुणाः विद्याशौर्यादयः गुणज्ञेषु तज्ज्ञेष्वित्यर्थः गुणाः आदरणीया इति भावः भवन्ति । ते गुणाः निर्गुणं जनं प्राप्य आश्रित्येत्यर्थः दोषाः अनादृता भवन्ति दुर्जनाश्रिता विद्या-

गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते किमिति जगतां विस्मयपदम् ।
यथा जीमूतोऽयं लवणजलधेर्वारि मधुरं,
फणी पीत्वा क्षीरं वमति गरलं दुःसहतरम् ॥ ६ ॥

विद्या विवादाय धनं मदाय,
शक्तिः परेषां परिपीड़नाय ।
खलस्य साधोर्विपरीतमेतत्,
ज्ञानाय दानाय च रक्षणाय ॥ ७ ॥

इव: लोकपीड़नाय भवन्तीति भावः । सुस्वादु सुमधुरं तोयं यासां तथाविधा नद्यः प्रभवन्ति प्रकर्षेण राजन्ते इति भावः सज्जनसमीपे इति भावः किन्तु समुद्रम् आसाद्य प्राप्य अपेयाः पातुमनर्हाः भवन्ति लवणरूपदुष्टवस्तुसंयोगादिति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । उपजातिवृत्तम् ॥ ५ ॥

गुणायन्ते इति । सुजनानां वदने दोषाः गुणायन्ते गुणा इव आचरन्ति गुणत्वेन तैराद्रियन्ते इति भावः । दुर्जनानां मुखे गुणा दोषायन्ते दोषवदाचरन्ति दोषत्वेन तैर्निन्द्यन्ते इति भावः इत्येतत् जगति विस्मयपदम् अद्भुतं किम् ? नाद्भुतमेतदित्यर्थः । यथा तथाहीत्यर्थः अयं जीमूतः जलदः लवणजलधेः लवणसमुद्रस्य वारि जलं पीत्वा मधुरं वारि, फणी सर्पः क्षीरं दुग्धं पीत्वा दुःसहतरम् अतिदारुणं गरलं विषं वमति प्रसिद्धमेतदतो न विस्मयावहमिति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । शिखरिणी-वृत्तम् । रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ॥ ६ ॥

विद्येति । खलस्य दुर्जनस्य विद्या विवादाय कलहाय, धनं मदाय गर्वाय, शक्तिः योग्यता परेषाम् अन्येषां परिपीड़नाय भवतीति शेषः । साधोर्जनस्य एतत् विपरीतम् । तथाच विद्या ज्ञानाय

मतिरेव बलात् गरीयसी
तदभावे करिणामियं दशा।
इति घोषयतीव डिण्डिमः
करिणो हस्तिपकाहतः क्वणन्॥ ८॥

वरं गर्भस्रावो वरमपि च नैवाभिगमनं,
वरं जातप्रेतो वरमपि च कन्याभिजननम्।
वरं बन्ध्या भार्य्या वरमपि च गर्भेषु वसतिः,
न चाविद्वान् रूप-द्रविण-गुण-युक्तोऽपि तनयः॥ ९॥

या राका शशि-शोभना गतघना सा यामिनी यामिनी,

लोकानामुपदेशदानाय, धनं दानाय अर्थिभ्यः वितरणाय, शक्तिः परेषां रक्षणाय भवतीति शेषः। उपजातिवृत्तम्॥ ७॥

मतिरिति। मतिरेव बुद्धिरेव बलात् बलमपेक्ष्य गरीयसी श्रेष्ठा, तदभावे तस्याः मतेः अभावे करिणां हस्तिनाम् इयं दशा दुर्बलप्राणिवशंवदतेति भावः, हस्तिपकेन हस्तिपालेन आहतः ताड़ितः क्वणन् ध्वनन् डिण्डिमः वाद्यभेदः करिणः गजान् इति घोषयतीव घोषणेन ज्ञापयतीव। उत्प्रेक्षालङ्कारः॥ ८॥

वरमिति। गर्भस्य कुक्षिस्थजीवस्य स्रावः अकाले अपूर्णदशायां गर्भात् निःसरणं वरं मनाक् प्रियं, देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक् प्रिये इत्यमरः। अभिगमनञ्च भार्य्यायाः सङ्गश्च नैव वरम्, अपिच जातः उत्पन्नः सन् प्रेतः पञ्चत्वं गतश्च वरं मनाक् प्रिय इत्यर्थः, अपिच कन्याभिजननं कन्योत्पादनं च वरं मनाक् प्रियं, भार्य्या बन्ध्या च वरं, गर्भेषु वसतिश्च वरं, अविद्वान् मूर्खः रूपद्रविण-गुणोऽपि रूपवान् धनवानपि तनयः न च वरमिति शेषः। सर्वदा विद्यार्जनमिदम्। शिखरिणीवृत्तम्॥ ९॥

येति। शशिशोभना चन्द्रेण शोभमाना गतघना मेघावरण-

या सौन्दर्य्य-गुणान्विता पति-रता सा कामिनी कामिनी ।
या गोविन्द-रस-प्रमोद-मधुरा सा माधुरी माधुरी,
या लोकद्वय-साधनी तनुभृतां सा चातुरी चातुरी ॥ १० ॥

ज्ञातिभिर्वण्ट्यते नैव चौरेणापि न नीयते ।
दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥ ११ ॥
अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ १२ ॥

पूर्णा राका सम्पूर्णचन्द्रा या यामिनी रात्रिः सा यामिनी प्रशस्ता यामिनीत्यर्थः । या सौन्दर्य्येण गुणैश्च दयादाक्षिण्यादिभिः अन्विता युक्ता कामिनी, सा कामिनी प्रशस्ता कान्तेत्यर्थः । या गोविन्दे कृष्णे यो रसः अनुरागः तेन यः प्रमोदः प्रहर्षः प्रकृष्टानन्द इत्यर्थः तेन मधुरा मनोहारिणी माधुरी मधुरता सा माधुरी प्रशस्ता माधुरी । तनुभृतां शरीरिणां लोकद्वयसाधनी इहामुत्रोपकारिणी या चातुरी चातुर्य्यं नैपुण्यमित्यर्थः सा चातुरी प्रशस्ता चातुरीत्यर्थः । अत्र द्वितीययामिन्यादिशब्दाः पौनरुक्त्यभिया सामान्ययामिन्यादिरूपमुख्यार्थे बाध्यमानाः प्रशस्तादिगुणशालियामिन्यादिरूपमर्थं बोधयन्तीति मुख्यार्थस्य अविशेषरूपार्थान्तरे संक्रमणात् अर्थान्तरसंक्रमितवाच्यत्वं ध्वनेरिति बोध्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

ज्ञातिभिरिति । विद्यारत्नं महाधनं महामूल्यं धनमिति यावत्, यत् एतत् ज्ञातिभिः दायादैः नैव वण्ट्यते नैव विभज्यते, चौरेणापि न नीयते नापह्रियते, तथा दाने व्यये सत्यपि नैव क्षयं याति नैव क्षीयते इत्यर्थः । तस्मात् विद्यैव अन्यत् धनं नश्वरमपेक्ष्य उपार्जनीयेति भावः । अनुष्टुप् वृत्तम् । काव्यलिङ्गमलङ्कारः । तदुक्तं दर्पणे । हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति ॥ ११ ॥

अजरामरवदिति । प्राज्ञः बुद्धिमान् जनः अजरामरवत् अजर

गुणेन स्पृहणीयः स्यात् न रूपेण युतो जनः ।
सौगन्ध्यवर्ज्यं नादेयं पुष्पं कान्तमपि क्वचित् ॥ १२ ॥

इति श्रीमहाकवि भवभूतिविरचितं
गुणरत्नकाव्यं समाप्तम् ।

---

# नीतिरत्नम् ।

---

चतुर्मुख-मुखाम्भोज-शृङ्गाटक-विहारिणीम् ।
नित्य-प्रगल्भ-वाचालामुपतिष्ठे सरस्वतीम् ॥ १ ॥

इव अजर इव विद्याम् अर्थञ्च चिन्तयेत् विद्याया अर्थस्य च उपार्जने आत्मानं नाहं जराग्रस्तो भविष्यामि न मरिष्यामीत्येवंरूपं विभावयेदिति भावः । तथा केशेषु मृत्युना गृहीत इव धर्मम् आचरेत् धर्माचरणे अद्यमधुनैव मरिष्यामि न परत्र धर्माचरणकालः प्राप्य इति भावयेदिति भावः ॥ १२ ॥

गुणेनेति । गुणेन युतः जनः स्पृहणीयः स्यात् रूपेण युतः न, कान्तं रमणीयमपि पुष्पं सौगन्ध्यवर्जं सौरभहीनं क्वचित् न आदेयं न ग्राह्यम् । त्रिषु श्लोकेषु अनुष्टुब्वृत्तम् ।

---

चतुर्मुखेति । चतुर्मुखस्य ब्रह्मणः मुखाम्भोजानि मुखपद्मान्येव शृङ्गाटकं चतुष्पथं तस्मिन् विहरतीति तथोक्तां नित्यं सततं प्रगल्भं धृष्टम् अप्रतिहतमिति भावः यथा तथा वाचालां मुखरां सरस्वतीं वाग्देवीम् उपतिष्ठे आराधयामीत्यर्थः । मङ्गलाचरणमिदम् । अनुष्टुब्वृत्तम् ॥ १ ॥

इतर-तापशतानि यथेच्छया
वितर तानि सहे चतुरानन ! ।
अरसिकेषु रसस्य निवेदनं
शिरसि मा लिख मा लिख मा लिख ॥ २ ॥

संसार-विषवृक्षस्य द्वे फले अमृतोपमे ।
काव्यामृत-रसास्वाद आलापः सज्जनैः सह ॥ ३ ॥

पण्डितेषु गुणाः सर्वे मूर्खे दोषाश्च केवलाः ।
तस्मान्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ ४ ॥

पुरो रेवा-पारे गिरिरतिदुरारोह-शिखरो

इतरेति । हे चतुरानन ! विधातः ! इतराणि अन्यानि द्वितीयार्द्धलिखितव्यतिरिक्तानीति भावः तापशतानि क्लेशशतानि वितर देहि तानि तापशतानि सहे सोढुं शक्नोमीति भावः, किन्तु अरसिकेषु रसानभिज्ञेषु असहृदयेष्विति यावत् रसस्य सरसालापस्येत्यर्थः निवेदनं कथनं शिरसि ललाटे मा लिख मा लिख मा लिख, कदापि न लेखनीयं तत् सोढुं न शक्नोमीति भावः । द्रुतविलम्बितं वृत्तम् । द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात् ॥ २ ॥

संसारेति । काव्यरूपममृतं काव्यामृतं तस्य रसास्वादः आस्वादानुभव इत्यर्थः सज्जनैः साधुभिः सह आलापश्च एते द्वे संसार एव विषवृक्षः तस्य अमृतोपमे पीयूषसदृशे फले फलद्वयमित्यर्थः । अनुष्टुब्वृत्तम् ॥ ३ ॥

पण्डितेष्विति । पण्डितेषु विद्वत्सु सर्वे गुणाः दयादाक्षिण्यादयः वसन्ति इति शेषः, मूर्खे जने केवला दोषाश्च वसन्ति इति शेषः, तस्मात् मूर्खसहस्रेभ्यः बहुभ्योऽपि मूर्खानपेक्ष्येत्यर्थः एकः प्राज्ञः पण्डितः विशिष्यते विशेषेण मन्यते इत्यर्थः । अनुष्टुब्वृत्तम् ॥ ४ ॥

पुर इति । पुरः अग्रतः रेवा नर्मदा नदी, रेवा तु नर्मदेत्यमरः ।

धनुष्पाणिः पश्चात् शबरनिकरो धावति पुनः ।
सरः सव्येऽसव्ये दव-दहन-दाह-व्यतिकरः
क्व यामः ! किं कुर्मो ! हरिणशिशुरेवं विलपति ॥ ५ ॥
छेदश्चन्दन-चूत-चम्पक-वने रक्षा करीरद्रुमे,
हिंसा हंस-मयूर-कोकिलकुले काकेषु लीलारतिः ।
मातङ्गेन खरक्रयः, समतुला कर्पूरकार्पासयोः,
एषा यत्र विचारणा गुणिगणे ! देशाय तस्मै नमः ॥ ६ ॥

वर्त्तते इति शेषः एतामतिक्रम्य गन्तुं न शक्यते इति भावः । पारे कथमपि तामुत्तीर्य्य गमने सतीत्यर्थः अतिदुरारोहम् अतिशयेन आरोढुमशक्यं शिखरं शृङ्गं यस्य तथाभूतः गिरिः पर्वतः अस्तीति शेषः तत्र अत्यातुं न शक्यते येन रक्षा भवतीति भावः । शबर-निकरः व्याधसमूहः न त्वेको व्याधः येन कथमपि तं प्रतार्य्य पला-यितुं शक्यते इति भावः । धनुष्पाणिः गृहीतशरासनः सन् पुनः धावति द्रुतमायातीत्यर्थः, सव्ये वामे पार्श्वे इति शेषः सरः जलाशयः वर्त्तते इति शेषः तदपि नातिक्रमितुं शक्यते इति भावः, असव्ये दक्षिणे पार्श्वे इति शेषः दवदहनस्य दावानलस्य दाहव्यतिकरः दाह-प्रसरः दावाग्निर्व्वर्त्तते इति तदतिक्रमणं न शक्यमिति भावः तस्मात् क्व कुत्र यामः गच्छामः, किं कुर्मः न कश्चिन्मम परित्राणोपाय इति भावः । हरिणशिशुः मृगशावकः एवं विलपति विलापं करोती-त्यर्थः । कथमपि विपद्भ्यः उत्तरीतुमशक्तस्य विलपनमिदम् । अप्र-स्तुतप्रशंसालङ्कारः । उक्तञ्च दर्पणे । क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः । कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम् ॥ अप्रस्तुतात् प्रस्तुतश्चेद् गम्यते पञ्चधा ततः । अप्रस्तुत-प्रशंसा स्यादिति । शिखरिणीवृत्तम् ॥ ५ ॥

छेद इति पूर्व्वं व्याख्यातम् ॥ ६ ॥

भिनत्ति भीमं करिराजकुम्भं बिभर्त्ति वेगं पवनादतीव ।
करोति वासं गिरिगह्वरेषु तथापि सिंहः पशुरेव नान्यः ॥७॥
काकस्य चञ्चुर्यदि हेमयुक्ता माणिक्ययुक्तौ चरणौ च तस्य ।
एकैकपक्षे गजराजमुक्ता तथापि काको न च राजहंसः ॥८॥

दिव्यं चूतरसं पीत्वा न गर्वं याति कोकिलः ।
पीत्वा कर्दमपानीयं भेको मकमकायते ॥ ९ ॥
अगाधजलसञ्चारी न गर्वं याति रोहितः ।

भिनत्तीति । भीमं भयङ्करं करिराजस्य गजराजस्य कुम्भं भिनत्ति विदारयति, पवनात् वायोः अतीव अधिकमित्यर्थः वेगं बिभर्त्ति धत्ते । गिरिगह्वरेषु पर्वतगुहासु वासं करोति, तथापि इत्थं महत्त्वेऽपीति भावः सिंहः पशुरेव चतुष्पदेव, अन्यो न । उपेन्द्रवज्रावृत्तम् ॥ ७ ॥

काकस्येति । काकस्य चञ्चुः यदि हेमयुक्ता काञ्चनरञ्जितेत्यर्थः स्यादिति शेषः, तस्य काकस्य चरणौ च यदि माणिक्ययुक्तौ माणिक्यरत्नभूषितौ स्यातामिति शेषः, तथा एकैकपक्षे प्रतिपक्षं गजराजस्य करीन्द्रस्य मुक्ता वर्त्तते इति शेषः, तथापि ईदृशं भूषितत्वेऽपीत्यर्थः काकः राजहंसो न । शोभनपरिच्छदशाली अपि मूर्खः प्राज्ञवत् न आद्रियते इति भावः । अप्रस्तुतप्रशंसालङ्कारः । उपजातिवृत्तम् ॥ ८ ॥

दिव्यमिति । कोकिलः दिव्यम् उत्तमं चूतरसं रसालरसं पीत्वा गर्वं न याति न प्राप्नोति, भेकः मण्डूकः कर्दमपानीयं सकर्दमं जलं पीत्वा मकमकायते मकमकेति अव्यक्तं नदतीत्यर्थः हर्षादिति भावः । अप्रस्तुतप्रशंसया उत्तमाधमलोकयोः स्वभाववर्णनमिदम् । अनुष्टुब्वृत्तम् ॥ ९ ॥

अगाधेति । अगाधे अतलस्पर्शे जले सञ्चरतीति तथोक्तः रोहितः मत्स्यविशेषः न गर्वं याति । विकारी न चेति पाठा-

अङ्गुष्ठोदकमात्रेण सफरी फर्फरायते ॥ १० ॥
भद्रं कृतं कृतं मौनं कोकिलैर्जलदागमे।
दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम् ॥ ११ ॥
मणिर्लुठति पादेषु काचः शिरसि धार्यते।
यथैवास्ते तथैवास्तां काचः काचो मणिर्मणिः ॥ १२ ॥
काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः।
वसन्ते समुपायाते काकः काकः पिकः पिकः ॥ १३ ॥

न्तरम्। अङ्गुष्ठोदकमात्रेण अङ्गुष्ठपरिमितजलमात्रेणेत्यर्थः गण्डूष-जलमात्रेणेति पाठान्तरं सफरी शोठी फरफरायते स्पर्धां नृत्यतीति भावः। अप्रस्तुतप्रशंसया प्रकृतो नीचस्य च स्वभाववर्णनमिदम्। अनुष्टुब्वृत्तम् ॥ १० ॥

भद्रमिति। कोकिलैः जलदागमे वर्षास्वित्यर्थः मौनं तूष्णीम्भावः कृतम् अवलम्बितं यदिति शेषः तत् भद्रं साधु कृतम् आचरितम्। यत्र यस्मिन् काले देशे च दर्दुराः भेकाः वक्तारः वचनपटवः, तत्र मौनं शोभनं हि समीचीनमेव। अत्रापि अप्रस्तुतप्रशंसया अस्थानपतितस्य विदुषः स्वभाववर्णनमिदम्। अनुष्टुब्वृत्तम् ॥ ११ ॥

मणिरिति। मणिः पादेषु लुठति, काचः शिरसि धार्य्यते। काचः यथैव आस्ते तिष्ठति तथैव आस्तां तिष्ठतु किन्तु स काचः, मणिर्मणिरेव आस्ते तथैव आस्तां किन्तु सः मणिः। यो यादृशो लोकः तस्य तदनुरूपसम्माने अकृतेऽपि स तथैव तिष्ठति न तु तस्य केनापि अयथासत्कारे मानहानिर्भवतीति अप्रस्तुतप्रशंसा व्यज्यते। अनुष्टुब्वृत्तम् ॥ १२ ॥

काक इति। काकः कृष्णः कृष्णवर्णः, पिकः कृष्णः कृष्णवर्णः, तस्मात् पिककाकयोः कोकिलवायसयोः अभेदस्तु अभिन्नतैव। किन्तु वसन्ते समुपयाते समागते सति काकः काकः, पिकः कोकिलः पिकः

वरं वनं व्याघ्र-गजेन्द्र-सेवितं
द्रुमालयः पत्रफलाम्बुभोजनम् ।
तृणानि शय्या वसनञ्च वल्कलं
न बन्धुमध्ये धनहीनजीवनम् ॥ १४ ॥

साध्वी-स्त्रीणां दयितविरहे मानिनां मानभङ्गे
सल्लोकानामपि जनरवे निग्रहे पण्डितानाम् ।
अन्योद्रेके कुटिलमनसां निर्गुणानां विदेशे
भृत्याभावे भवति मरणं किन्तु सम्भावितानाम् ॥ १५ ॥

इति श्रीमहाकविवररुचिविरचितं
नीतिरत्नं सम्पूर्णम् ।

---

कोकिलः । अभिन्नाकारयोरपि मानवयोः समये गुणतः प्रभेदो भवतीति भावः । अप्रस्तुतप्रशंसेयम् । अनुष्टुब्वृत्तम् ॥ १३ ॥

वरमिति । व्याघ्रगजेन्द्रसेवितं शार्दूलदन्तावलाधिष्ठितम् अतिभयङ्करमिति यावत् वनं, द्रुमालयः वृक्षमूलाश्रयः, पत्रफलाम्बुभोजनं वने पत्राणां फलानाम् अम्बूनां जलानाञ्च भोजनं, तृणानि शय्या, वल्कलं वृक्षत्वक् वसनञ्च वरं मनाक् प्रियमित्यर्थः, तथापि एवं दुरवस्थानेऽपि बन्धूनां ज्ञातीनां मध्ये धनहीनं जीवनं न कर्त्तव्यमिति शेषः । वंशस्थविलं वृत्तम् । वदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात् ॥ १४ ॥

साध्वीति । साध्वीस्त्रीणां सतीनां योषितां दयितविरहे कान्तविच्छेदे, मानिनां सम्मानशालिनां मानभङ्गे सम्मानहानौ, सल्लोकानां सुजनानां जनरवे लोकवादे दुर्यशसीत्यर्थः पण्डितानां विदुषां निग्रहे अवमाने, कुटिलमनसां दुर्जनानां अन्यस्य अपरजनस्य याधो-

रिति यावत् उदूके अभ्युदये, निर्गुणानां मूर्खाणां विद्वेषे तथा भक्ष्याभावे दासाभावे किन्तु सम्भावितानां सम्भ्रान्तानां न तु सर्वेषामिति किन्तुशब्दार्थः। मरणं मृत्युर्भवति नितरां व्यथा भवतीति भावः। मन्दाक्रान्तावृत्तम्। मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात्॥ १५॥

---

# यतिपञ्चकम्।

---

वेदान्तवाक्येषु सदा रमन्तो,
भिक्षान्नमात्रेण च तुष्टिमन्तः।
विशोकमन्तःकरणे रमन्तः,
कौपीनवन्तः खलु भाग्यवन्तः॥ १॥

मूलं तरोः केवलमाश्रयन्तः,
पाणिद्वयं भोक्तुममन्त्रयन्तः।
कन्थामिव श्रीमपि कुत्सयन्तः,
कौपीनवन्तः खलु भाग्यवन्तः॥ २॥

---

वेदान्तेष्विति। वेदान्तवाक्येषु उपनिषत्सु ब्रह्मविद्यास्वित्यर्थः सदा रमन्तः संसक्ता इत्यर्थः भिक्षान्नमात्रेण न त्वन्यविधोपार्जनेनेति भावः तुष्टिमन्तः सन्तुष्टाः अन्तःकरणे मनसि विशोकं तापशून्यं यथा तथा रमन्तः तिष्ठन्तः कौपीनवन्तः वसनखण्डपरिधायिनः योगिन इति भावः भाग्यवन्तः सुखिन इति भावः॥ १॥

मूलमिति। केवलं तरोः वृक्षस्य मूलं तलं न तु अट्टमिति भावः आश्रयन्तः, अधितिष्ठन्तः पाणिद्वयं भुजयुगलं भोक्तुं भोजनार्थम् अमन्त्रयन्तः अनियोजयन्त इत्यर्थः, श्रीमपि लक्ष्मीमपि सम्पदमपीत्यर्थः

देहादिभावं परिवर्त्तयन्तः,
आत्मानमात्मन्यवलोकयन्तः ।
नान्तं न मध्यं न वहिः स्मरन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥ ३ ॥

स्वानन्दभावे परितुष्टिमन्तः
सुशान्त-सर्वेन्द्रियतुष्टिमन्तः ।
अहर्निशं ब्रह्मसुखे रमन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥ ४ ॥

पञ्चाक्षरं पावनमुच्चरन्तः
पतिं पशूनां हृदि भावयन्तः ।

कथामिव आत्मश्लाघामिव कुत्सयन्तः निन्दयन्तः आत्मश्लाघां स्त्रियश्च परिवर्जयन्तः इति भावः । अन्यत् व्याख्यातम् ॥ २ ॥

देहादीति । देहादिभावं देहस्य शरीरस्य आदिभावं सुखा-सक्तिवासनां परिवर्त्तयन्तः परित्यजन्त इत्यर्थः, आत्मनि स्वस्वरूपे आत्मानं परं पुरुषम् अवलोकयन्तः साक्षात् कुर्वन्तः, अन्तम् अवसानं न, मध्यं मध्यदशां न, वहिः वाह्यं विषयञ्च पुत्रकलत्रादिरूपं न स्मरन्तः न भावयन्तः । अन्यत् व्याख्यातम् ॥ ३ ॥

स्वानन्देति । स्वस्य आत्मन एव न तु परपरिजनादेरिति भावः आनन्दभावे आनन्दावस्थायां परितुष्टिमन्तः परितुष्टाः सुशान्तानि सुष्ठु शान्तिं गतानि यानि सर्वाणि इन्द्रियाणि चक्षुरादीनि तेषां तुष्टिः वाह्यवस्तुत्यागेन आत्मसाक्षात्कारे एव सन्तोषः तद्वन्तः तथा अहर्निशं दिवारात्रं ब्रह्मसुखे ब्रह्मसाक्षात्कारजनिते आनन्दे रमन्तः विहरन्तः । अन्यत् व्याख्यातम् ॥ ४ ॥

पञ्चाक्षरमिति । पावनम् आत्मशोधनं पञ्चाक्षरं शिवाय नम

भिक्षाशिनो दिक्षु परिभ्रमन्तः
कौपीनवन्तः खलु भाग्यवन्तः॥ ५॥

इति श्रीपरमहंसकाचार्य्य-शङ्कर-भगवत्-पूज्यपाद-
कृतं यतिपञ्चकं समाप्तम्।

---

## साधनपञ्चकम्।

---

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम्।
पापौघः परिधूयतां भवसुखे दोषोऽनुसन्धीयताम्
आत्मेच्छा व्यवसीयतां निजगृहात् तूर्णं विनिर्गम्यताम्॥१॥

इति पञ्चवर्णात्मकं मन्त्रमित्यर्थः उच्चरन्तः जपन्तः, हृदि पशूनां पतिं शङ्करं भावयन्तः चिन्तयन्तः तथा भिक्षाशिनः भैक्ष्यभुजः सन्तः दिक्षु परिभ्रमन्तः विचरन्तः। अन्यत् पूर्ववत्। उपजातिवृत्तमस्मिन् सन्दर्भे॥ ५॥

---

वेद इति। नित्यं सततं वेदः अधीयतां पठ्यताम्। तदुदितं वेदोक्तं कर्म स्वनुष्ठीयतां सुष्ठु अनुष्ठीयताम्। तेन वेदोक्तेन कर्मणा विधानेन ईशस्य परमेश्वरस्य अपचितिः पूजा विधीयतां क्रियताम्। काम्ये विषयभोगे मतिः बुद्धिः त्यज्यताम्। पापानाम् ओघः समूहः परिधूयतां निवार्य्यताम्। भवे संसारे यत् सुखं स्रक्चन्दनवनिताद्युपभोगजमिति भावः तत्र दोषः परिणामविरसत्वादिरूपः अनुसन्धीयतां भाव्यताम्। आत्मनि परमेश्वरे इच्छा अनुरागः व्यवसीयताम्

सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढा धीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु संत्यज्यताम् ।
सद्विद्वानुपसर्प्यतां प्रतिदिनं तत्पादुका सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥
वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां
दुस्तर्कात् सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम् ।
ब्रह्मैवास्मि विभाव्यताम् अहरहर्गर्वः परित्यज्यताम् ॥३॥

आधीयताम् । निजगृहात् गृहस्थाश्रमादित्यर्थः तूर्णं सत्वरं विनिर्गम्यताम् । गृहे स्थितो बहुदोषाणां सम्भवादिति भावः । शार्दूलविक्रीडितं वृत्तमस्मिन् सन्दर्भे ॥ १ ॥

सङ्ग इति । सत्सु साधुषु सङ्गः विधीयतां क्रियताम् । भगवतः भगवतीत्यर्थः सम्बन्धविवक्षया षष्ठी । दृढा भक्तिः धीयतां क्रियताम् । शान्त्यादिः आदिपदेन क्षमादमादीनां ग्रहणं, परिचीयताम् अभ्यस्यताम् । दृढतरं संसारबन्धनहेतुभूतमित्यर्थः कर्म सकाममिति भावः आशु शीघ्रं संत्यज्यताम् । सद्विद्यः सुविद्वान् जनः हि एव न तु तदन्य इति भावः उपसर्प्यतां सेव्यताम् । प्रतिदिनं तस्य पादुका सेव्यताम् उपास्यतामित्यर्थः । ब्रह्मणः परमात्मनः एकम् अक्षरं तद्बोधकं प्रणवमिति भावः अर्थ्यतां प्रार्थ्यतां सद्विदुषो गुरोः सकाशादिति भावः । श्रुतेर्वेदस्य शिरोवाक्यं वेदान्त इत्यर्थः समाकर्ण्यतां श्रूयताम् ॥ २ ॥

वाक्यार्थ इति । वाक्यार्थश्च तत्त्वमसीति वाक्यस्य अर्थः तात्पर्यं विचार्यतां सुतर्केण अनुसन्धीयतामित्यर्थः । श्रुतिशिरःपक्षः वेदान्तमतं समाश्रीयतां सेव्यताम् । दुस्तर्कात् श्रुतिविरुद्धात् तर्कादित्यर्थः सुविरम्यताम् एकान्तं विरतेन भूयताम् । श्रुतिमतः वैदिकात् वेदविद इत्यर्थः तर्कः विचारः अनुसन्धीयताम् अनुशील्यताम् ।

क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां
स्वाद्वन्नं न तु यत्यतां विधिवशात् प्राप्तेन सन्तुष्यताम् ।
शीतोष्णादि विषह्यतां न तु वृथावाक्यं समुच्चार्य्यतां
औदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्य्यमुत्सृज्यताम् ॥४॥

एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्व्यापितं दृश्यताम् ।
प्राक्कर्म प्रविलोप्यतां चितिबलान्नाप्युत्तरे श्लिष्यतां
प्रारब्धं त्विह भुज्यताम् अथ परब्रह्मात्मना स्थीयताम् ॥५॥

अस्मि अहं ब्रह्मैव इति विभाव्यतां चिन्त्यताम् । अहरहः प्रतिदिनं गर्वः अहं महानित्यभिमानः परित्यज्यताम् ॥ ३ ॥

क्षुद्व्याधिश्चेति । क्षुद्व्याधिः क्षुधारोगः चिकित्स्यताम् उपशाम्यताम् आहारार्थं यत्नः परित्यज्यतामिति भावः । प्रतिदिनं भिक्षौषधं भैक्षान्नम् औषधमिव भुज्यतामित्यर्थः । स्वादु अन्नं न तु नैव यत्यतां यत्नेन आह्रियतामित्यर्थः । विधिवशात् दैवात् प्राप्तेन अन्नेनेति शेषः सन्तुष्यताम् । शीतोष्णादि शीतग्रीष्मादिकं विशेषेण सह्यताम् । वृथा निरर्थकं धर्मबहिर्भूतमिति भावः वाक्यं न तु समुच्चार्य्यतां नैव कथ्यताम् । औदासीन्यम् अवधूः अभीप्स्यताम् अभिलष्यताम् । जनेषु कृपाया नैष्ठुर्य्यम् अदयभाव इत्यर्थः उत्सृज्यतां त्यज्यतां दया अवलम्ब्यतामिति भावः ॥ ४ ॥

एकान्ते इति । एकान्ते निर्जने सुखं यथा तथा आस्यताम् उपविश्यताम् । परतरे परमे ब्रह्मणि चेतः समाधीयतां समर्प्यताम् । पूर्णात्मा पूर्णं ब्रह्म अन्यत् सर्वमपूर्णमिति भावः सुसमीक्ष्यतां साक्षात् क्रियताम् । इदं जगत् तेन पूर्णात्मना व्यापितम् आवृतं दृश्यतां भाव्यतामिति भावः । प्राक् पूर्वतनं कर्म प्रविलोप्यतां प्रकर्षेण विलोपं नीयताम् । चितिबलात् ज्ञानप्रभावात् उत्तरे कर्मणि इति

यः श्लोकपञ्चकमिदं पठते मनुष्यः
सञ्चिन्तयत्यनुदिनं स्थिरतामुपेत्य ।
तस्याशु संसृतिदवानलतीव्रघोर-
तापः प्रशान्तिमुपयाति चितिप्रसादात् ॥ ६ ॥

इति श्रीशङ्कराचार्यविरचितं
साधनपञ्चकं समाप्तम् ।

---

## भ्रमराष्टकम् ।

---

गन्धाढ्यासौ भुवनविदिता केतकी स्वर्णवर्णा
पद्मभ्रान्त्या क्षुधितमधुपः पुष्पमध्ये पपात ।

शेषः न क्लिश्यतां न सज्यतां कर्मफलत्यागिन एव ब्रह्मावाप्त्यधिकारित्वादिति भावः । इह संसारे प्रारब्धं प्राक्तनकर्मफलं तु भुज्यताम् । अथ अनन्तरं प्राक्तनकर्मफलभोगात् परमित्यर्थः परब्रह्मात्मना परमेश्वरस्वरूपेण स्थीयताम् ॥ ५ ॥

य इति । यः मनुष्यः इदं श्लोकपञ्चकं पठते, तथा स्थिरतामुपेत्य सुस्थिरो भूत्वेत्यर्थः अनुदिनं सततं सञ्चिन्तयति, तस्य मनुष्यस्य चितिप्रसादात् एतत्पठनचिन्तनजनितज्ञानप्रभावादित्यर्थः संसृतिः संसारः एव दवानलः दावाग्निः तस्य तीव्रः दारुणः घोरः भीषणः तापः आशु शीघ्रं प्रशान्तिं प्रकर्षेण ध्वंसम् उपयाति गच्छति । वसन्ततिलकं वृत्तम् । सेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ ६ ॥

---

गन्धाढ्येति । असौ भुवनेषु विदिता गन्धाढ्या सौरभवती

पतत्येष शुकोऽप्येनं जम्बूभ्रान्त्या जिघांसति ॥ ५ ॥
दृष्ट्वा प्रीतोऽभवदलिरसौ लेख्यपद्मं विशालं
चित्रं चित्रं किमिति किमिति व्याहरन् निष्पपात ।
नास्मिन् गन्धो न च मधुकणा नास्ति तत् सौकुमार्य्यं
घूर्णन्मूर्द्धा बत नतशिरा व्रीड़या निर्जगाम ॥ ६ ॥
अलिरसौ नलिनीवनवल्लभः
कुमुदिनीकुलकेलिकलारसः ।
विधिवशेन विदेशमुपागतः
कुटजपुष्परसं बहु मन्यते ॥ ७ ॥

भ्रमेण शुकस्य पञ्जरः तुण्डे चञ्चुपुटे पपात । एष शुकोऽपि जम्बूभ्रान्त्या जम्बूफलभ्रमेण एनं मधुव्रतं जिघांसति हन्तुमिच्छति । अत्र भ्रान्तिमानलङ्कारः । तदुक्तं दर्पणे । साम्यादतस्मिंस्तद्बुद्धि-र्भ्रान्तिमान् प्रतिभोत्थितेति । अनुष्टुब्वृत्तम् ॥ ५ ॥

दृष्ट्वेति । असौ अलिर्भ्रमरः विशालं महत् लेख्यपद्मं चित्रित-कमलं दृष्ट्वा प्रीतः हर्षात् प्रफुल्ल इत्यर्थः अभवत् । चित्रं चित्रम् आश्चर्य्यमाश्चर्य्यं किमिति किमिति व्याहरन् वदन् निष्पपात तस्मिन् पपातेत्यर्थः । अस्मिन् लेख्यपद्मे गन्धो न, मधुकणाश्च मकरन्दबिन्द-वश्च न, तत् प्रसिद्धमित्यर्थः सौकुमार्य्यं कोमलता च नास्ति, अतः, बत खेदे, मूर्द्धां घूर्णन् व्रीड़या लज्जया नतशिराः अधोमुखः सन् निर्जगाम तस्मादिति शेषः । अप्रस्तुतप्रशंसया यथा कोऽपि कमपि सम्बद्धं जनं विश्वाय तत्र गत्वा हताशः तस्मात् निवर्त्तते तद्वदिति ध्वन्यते । मन्दाक्रान्तावृत्तम् ॥ ६ ॥

अलिरिति । नलिनीवनवल्लभः पद्मिनीसमूहप्रियः तथा कुमु-दिनीनां कुले या केलिकला तस्यां रसः रागो यस्य तथाभूतः असौ अलिः भ्रमरः विधिवशेन दैववशेन विदेशम् उपागतः प्राप्तः सन्

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पद्मजालम् ।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥ ८ ॥

इति भ्रमराष्टकं समाप्तम् ।

---

कुटजपुष्पाणां रसं स्वादं बहु यथा तथा मन्यते आद्रियते इत्यर्थः । अत्रापि अप्रस्तुतप्रशंसया स्वदेशच्युतस्य विदेशगमने क्लेशेन स्थिति-र्व्यज्यते । द्रुतविलम्बितं वृत्तम् । द्रुतविलम्बितमाह नभौ भरा-विति तल्लक्षणात् ॥ ७ ॥

रात्रिरिति । रात्रिः गमिष्यति यास्यति, सुप्रभातं भविष्यति, भास्वान् सूर्य्यः उदेष्यति उदयं प्राप्स्यति, पद्मजालं कमलवनं हसि-ष्यति विकसिष्यति, कोषगते रात्रिसुद्रितकमलकुसुमकोषगते द्विरेफे भ्रमरे इत्थम् एवंरूपं विचिन्तयति सति हा हन्त, हन्त इति खेदातिशय-सूचकमव्ययम् । गजः नलिनीं पद्मिनीम् उज्जहार उन्मूलित-वानित्यर्थः । अत्रापि अप्रस्तुतप्रशंसया विपदि पतितस्य कस्यचित् भविष्यच्छुभाशंसनसमये सहसा अन्यया विपदा आश्रयसहितस्य-विनाशः प्रतीयते । वसन्ततिलकं वृत्तम् ॥ ८ ॥

---

अन्धीभूतः कुसुमरजसा कण्टकैश्छिन्नपक्षः
स्थातुं गन्तुं द्वयमपि सखे! नैव शक्तो द्विरेफः॥ १॥
गन्धाढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां
दैवात् तां च विहाय चम्पकवनं पश्चात् सरोजं गतः।
बद्धस्तत्र निशाकरेण विधिना क्रन्दत्यसौ मूढधीः।
सन्तोषेण विना पराभवपदं प्राप्नोति मूढो जनः॥२॥
येऽमी ते मुकुलोद्गमादनुदिनं त्वामाश्रिताः षट्पदा-

स्वर्णवर्णा केतकी केतकलता अस्तीति शेषः क्षुधितमधुपः क्षुधातुरो भ्रमरः पद्मभ्रान्त्या कमलभ्रमेण पुष्पस्य केतकस्य मध्ये अभ्यन्तरे पपात। हे सखे! असौ द्विरेफः भ्रमरः कुसुमस्य रजसा परागेण अन्धीभूतः आच्छन्ननयन इति यावत् तथा कण्टकैश्छिन्नपक्षः सन् स्थातुं पुष्पमध्ये इति शेषः गन्तुं ततो निर्गन्तुमिति शेषः द्वयमपि नैव शक्तः नैव कर्तुं समर्थ इत्यर्थः। यथा कोऽपि कश्चित् गृहे कस्यामपि नायिकायां तदनिच्छया समासक्तः तद्गृहवासिभिः सन्ताड़ितः तत्र गतिस्थितिविधाने असमर्थो भवति तद्वदिति ध्वनिः। अप्रस्तुतप्रशंसालङ्कारः। मन्दाक्रान्तावृत्तम्॥ १॥

गन्धाढ्यामिति। मधुकरः भ्रमरः गन्धाढ्यां सौगन्ध्यपूर्णां नवमल्लिकां त्यक्त्वा यूथिकां गतः। दैवात् तां च यूथिकां च विहाय त्यक्त्वा चम्पकवनं, पश्चात् सरोजं पद्मं गतः। विधिना दैवेन तत्र पद्मे निशाकरेण चन्द्रेण बद्धः सन् रात्रौ पद्मस्य मुकुलीभावादिति भावः। असौ मूढधीः मूढमतिः क्रन्दति कथमितो निर्गच्छामीति रोदितीत्यर्थः। तथाहि मूढो जनः सन्तोषेण विना पराभवपदं विपदमिति भावः प्राप्नोति। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। शार्दूलविक्रीड़ितं वृत्तम्॥ २॥

ये इति। हे चूत! ये अमी षट्पदाः भ्रमराः ते तव मुकुलो-

स्ते भ्राम्यन्ति फलाद्बहिर्वहिरहो दृष्ट्वा न सम्भाषसे।
ये कीटास्तव दृक्पथञ्च न गतास्ते त्वत्फलाभ्यन्तरे
धिक् त्वां चूत ! यतः परापरपरिज्ञानानभिज्ञो भवान् ॥३॥
नीतं जन्म नवीन-नीरज-वने पीतं मधु स्वेच्छया
मालत्याः कुसुमेषु येन सततं केली कृता हेलया।
तेनेयं मधुगन्धलुब्धमनसा गुञ्जालता सेव्यते
हा धिग् दैवकृतं स एव मधुपः कां कां दशां नागतः ॥४॥
पलाशकुसुमभ्रान्त्या शुकतुण्डे मधुव्रतः।

द्रुमात् मुकुलोद्गमसारभ्य चतुर्दिनं सततं त्वाम् आश्रिताः, ते भ्रमराः फलात् बहिर्बहिः ते इति शेषः भ्राम्यन्ति भ्रमणं कुर्वन्ति। अहो आश्चर्यं दृष्ट्वा तानिति शेषः न सम्भाषसे नालपसीत्यर्थः, ये कीटाः तव दृक्पथञ्च दृष्टिविषयञ्च न गताः, ते तव फलानाम् अभ्यन्तरे तिष्ठन्तीति भावः त्वां धिक् निन्दामीत्यर्थः, धिङ्निर्भर्त्सननिन्दयोरित्यमरः। यतः भवान् परापरयोः परात्मीययोः परिज्ञाने अवबोधे अनभिज्ञः अविज्ञः। अप्रस्तुतप्रशंसया आत्मपरज्ञानरहितं कमपि प्रत्युक्तिरियम्। शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

नीतमिति। येन नवीनं नूतनं यत् नीरजवनं पद्मवनं तस्मिन् जन्म नीतं स्थापितमित्यर्थः, येन स्वेच्छया मधु पद्मानामिति भावः पीतं, येन मालत्याः कुसुमेषु सततं हेलया विलासेनेत्यर्थः केली विहारः कृता, तेन मधुपेन मधुगन्धेन लुब्धं मनो यस्य तथाभूतेन इयं गुञ्जालता सेव्यते भुज्यते, हा इति खेदे, दैवकृतं धिक्, स एव तादृक्सौभाग्यवानिति भावः मधुपः भ्रमरः कां कां दशाम् अवस्थां न गतः न प्राप्तः ? अपितु सर्वामेवेत्यर्थः। शार्दूलविक्रीडितं वृत्तम्। अत्रापि पूर्ववत् अप्रस्तुतप्रशंसालङ्कारः ॥ ४ ॥

पलाशेति। मधुव्रतः भ्रमरः पलाशकुसुमभ्रान्त्या पलाशपुष्प-

# वानराष्टकम् ।

---

ईर्षी दक्षः क्रतौ रूपं स्तब्धः शुष्को न्धनं जवः ।
दुर्मन्त्रणमिति श्लोकाः कथिता वानराष्टके ॥

ईर्षी घृणी त्वसन्तुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते दुःखभागिनः ॥ १ ॥

दक्षः श्रियमधिगच्छति पथ्याशी कल्यतां सुखमरोगी ।
उद्युक्तो विद्यां तथा धर्मार्थयशांसि विनीतः ॥ २ ॥

क्रतौ विवाहे व्यसने रिपुक्षये
यशस्करे कर्मणि मित्रसंग्रहे ।
प्रियासु नारीषु तथैव बान्धवे-
ऽप्यतिव्ययो नास्ति नराधिपाष्टसु ॥ ३ ॥

ईर्षीति । ईर्षी ईर्षा परश्रीकातरता तद्वान्, घृणा दया विद्यते अस्येति घृणी दयालुः सदा अशुचिरशुचिरिति मन्यमान इति वा, असन्तुष्टः, क्रोधनः क्रुद्धस्वभावः, नित्यशङ्कितः सततशङ्काकुलः, परस्य भाग्यम् उपजीवतीति तथोक्तः, एते षट् दुःखभागिनः दुःखं भजन्ते इत्यर्थः । अनुष्टुप् वृत्तम् ॥ १ ॥

दक्ष इति । दक्षः कार्य्यनिपुणः श्रियं सम्पदं, पथ्याशी पथ्यभोजी कल्यताम् आरोग्यम्, अरोगी सुखम्, उद्युक्तः उद्योगी पुरुषः विद्यां तथा विनीतः विनयी जनः धर्मार्थयशांसि अधिगच्छति प्राप्नोति । आर्य्यावृत्तम् । यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति तल्लक्षणात् ॥ २ ॥

क्रताविति । हे नराधिप ! राजन् ! क्रतौ यज्ञदीक्षायां, विवाहे, व्यसने विपदि, रिपूणां शत्रूणां क्षये क्षयकरणे इत्यर्थः

रूपं जरा सर्वसुखानि तृष्णा
खलेषु सेवा पुरुषाभिमानम् ।
याञ्चा गुरुत्वं गुणमात्मपूजा
चिन्ता बलं हन्त्यदया च लक्ष्मीम् ॥ ४ ॥
स्तब्धस्य नश्यति यशो विषमस्य मैत्री
नष्टक्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सुखं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ ५ ॥

यशस्करे कौशिजनके कर्मणि, भिक्षायां बन्धूनां संग्रहे वशीकरणे इति यावत्, प्रियासु प्रीतिप्रदासु नारीषु तथैव बान्धवे भ्रात्रादौ तत्प्रतिपालने इति भावः, एतेषु अष्टसु व्यापारेषु यः व्यय इत्यूह्यं सः अतिव्ययः बहुलो व्ययः न अस्ति न गण्यते इति भावः। वंशस्थविलं वृत्तम् ॥ ३ ॥

रूपमिति । जरा वार्द्धक्यं रूपं सौन्दर्य्यं, तृष्णा लोभः सर्वाणि सुखानि, खलेषु दुर्जनेषु सेवा आनुगत्यं पुरुषाभिमानं पुरुषोऽहमित्यभिमानमित्यर्थः, याच्ञा प्रार्थना भिक्षेति यावत् गुरुत्वं गौरवम्, आत्मनः पूजा प्रशंसा श्लाघेत्यर्थः गुणं, चिन्ता बलं सामर्थ्यम्, अदया प्राणिष्वननुकम्पेत्यर्थः लक्ष्मीं श्रियं हन्ति नाशयति । उपजातिवृत्तम् ॥ ४ ॥

स्तब्धस्येति । स्तब्धस्य जडस्य कार्य्यकाले निश्चेष्टस्येति भावः यशः, विषमस्य विरुद्धस्वभावस्य मैत्री सख्यं, नष्टक्रियस्य क्रियाहीनस्य कुलम्, अर्थपरस्य धनलोलुपस्य धर्मः, व्यसनिनः मृगयादिव्यसनासक्तस्य विद्याफलं, कृपणस्य सुखं चरित्रं तथा प्रमत्ताः अनवहिताः सचिवाः अमात्या यस्य तादृशस्य नराधिपस्य राज्ञः राज्यं नश्यति । वसन्ततिलकं वृत्तम् ॥ ५ ॥

शुष्केन्धने वह्निरुपैति वृद्धिं
बालेषु शोकश्चपलेषु कोपः ।
कान्तासु कामो निपुणेषु वित्तं
धर्मो दयावत्सु महत्सु धैर्य्यम् ॥ ६ ॥

जवो हि सप्तेः परमं विभूषणं
त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य विद्यैव मुनेरपि क्षमा
पराक्रमः शस्त्रबलोपजीविनाम् ॥ ७ ॥

दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ?
सन्तापयन्ति कमपथ्यभुजं न रोगाः ?
कं श्रीर्न मोहयति ? कं न निहन्ति मृत्युः ?
कं स्वीकृता न विषयाः परितापयन्ति ? ॥ ८ ॥

इति वानराष्टकं समाप्तम् ।

---

शुष्केन्धने इति । वह्निरग्निः शुष्केन्धने शुष्के काष्ठे, शोकः प्रियजनविरहदुःखं बालेषु अप्रौढेष्विति भावः कोपः चपलेषु अधीरेषु, कामः कान्तासु रमणीषु, वित्तं धनं निपुणेषु कार्य्यदक्षेषु, धर्मः दयावत्सु दयालुषु, धैर्य्यं महत्सु वृद्धिम् उपैति प्राप्नोति । इन्द्रवज्रावृत्तम् ॥ ६ ॥

जव इति । सप्तेः अश्वस्य जवो हि वेग एव, अङ्गनायाः नार्य्याः त्रपा लज्जा, तपस्विनः कृशता तपोऽनुष्ठानजनितं कार्श्यं, द्विजस्य ब्राह्मणस्य विद्यैव, मुनेः क्षमा, तथा शस्त्रबलोपजीविनां शस्त्राणाम् आयुधानां बलेन उपजीवन्तीति तथोक्तानां पराक्रमः परमम् उत्कृष्टं विभूषणम् अलङ्कारः । वंशस्थविलं वृत्तम् ॥ ७ ॥

दुर्मन्त्रिणमिति । नीतिदोषाः कं दुर्मन्त्रिणं दुष्टसचिवं नृपमिति

## वानर्य्यष्टकम् ।

माधुर्य्यं शास्त्रमारोग्यं दानं मूर्खो द्विजातिकः ।
वैद्यं सुजीर्णं दृत्तश्च वानर्य्युक्तमिहाष्टकम् ॥

माधुर्य्यं प्रमदाजनेषु ललितं दाक्षिण्यमार्य्ये जने
शौर्य्यं शत्रुषु नम्रता गुरुजने धर्मिष्ठता साधुषु ।
मर्मज्ञेष्वनुवर्त्तनं बहुविधं मानं जने पण्डिते
शाठ्यं पापिजने नरस्य कथिताः पर्य्यन्तमष्टौ गुणाः ॥१॥

शास्त्रं सुचिन्तितमपि प्रतिचिन्तनीयं
स्वाराधितोऽपि नृपतिः परिशङ्कनीयः ।
अङ्के स्थितापि युवतिः परिरक्षणीया
शास्त्रे नृपे च युवतौ च कुतो वशित्वम् ॥ २ ॥

शेषः न उपयान्ति न प्राप्नुवन्ति ? सर्वमेवेत्यर्थः । रोगाः कम् अपथ्य-भुजम् अपथ्याशिनं न सन्तापयन्ति ? सर्वमेवेत्यर्थः । स्त्री नारी कं जनं न मोहयति मुग्धं करोति ? सर्वमेवेत्यर्थः । मृत्युः कं जनं न निहन्ति ? सर्वमेवेत्यर्थः । स्वोक्रताः स्वोघटिता विषयाः व्यापाराः कं जनं न परितापयन्ति ? सर्वमेवेत्यर्थः । वसन्ततिलकं वृत्तम् ॥८॥

---

माधुर्य्यमिति । प्रमदाजनेषु नारीषु ललितं सुन्दरं माधुर्य्यं मनोहारित्वम्, आर्य्ये कुलीने जने दाक्षिण्यं सारल्यं, शत्रुषु शौर्य्यं बलं, गुरुजने नम्रता, साधुषु धर्मिष्ठता धर्मव्यवहारः, मर्मज्ञेषु आशयवित्सु अनुवर्त्तनं मर्मज्ञापनमित्यर्थः, पण्डिते जने बहुविधः मानः सम्मानः, तथा पापिजने शाठ्यं शठता, एते अष्टौ गुणाः नरस्य नरजातेः पर्य्यन्तं परमं वास्तीति भावः कथिताः । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

शास्त्रमिति पूर्वं व्याख्यातम् ॥ २ ॥

आरोग्यमानृण्यमविप्रवासः
सम्प्रत्यया वृत्तिरभीतिवासः ।
सद्भिर्मनुष्यैः सह संप्रयोगः
षड् जीवलोकेषु सुखानि राजन् ॥ ३ ॥
दानं दरिद्रे विभवेऽपि शान्ति-
र्यूनां तपो ज्ञानवताञ्च मौनम् ।
ईहानिवृत्तिश्च सुखोषितानां
दया च भूते त्रिदिवं नयन्ति ॥ ४ ॥
मूर्खो द्विजातिः स्थविरो गृहस्थो
गृही दरिद्रो धनवांस्तपस्वी ।
वेश्या कुरूपा नृपतिः कुधर्मी
लोके षडेतानि विडम्बितानि ॥ ५ ॥
वैद्यं पानरतं नटं कुपठितं स्वाध्यायहीनं द्विजं

आरोग्यमिति । हे राजन् ! आरोग्यं व्याध्यभावः, आनृण्यम् ऋणशून्यता, अविप्रवासः अप्रवासः, सम्यक् प्रत्ययः विश्वासः स्थैर्य्यं इति भावः यस्यां तादृशी वृत्तिर्जीविका, अभीतिवासः निर्भया वसतिः, तथा सद्भिः मनुष्यैः सह सम्प्रयोगः संव्यवहारः, एतानि षट् जीवलोकेषु सुखानि । इन्द्रवज्रावृत्तम् ॥ ३ ॥

दानमिति । दरिद्रे निर्धने दानं, विभवेऽपि सम्पत्स्वपि प्रशान्तापीति भावः शान्तिः क्षमेति यावत्, यूनां तरुणानां तपः चान्द्रायणाद्यनुष्ठानं, ज्ञानवतां मौनम् अवाचालता, सुखोषितानां सुखेन स्थितानाम् ईहानिवृत्तिः निरीहता, भूते प्राणिनि दया च त्रिदिवं स्वर्गं नयन्ति प्रापयन्ति । उपजातिवृत्तम् ॥ ४ ॥

मूर्ख इति पूर्वं व्याख्यातम् ॥ ५ ॥

युद्धे कापुरुषं हयं गतरयं मूर्खं परिव्राजकम् ।
राजानञ्च कुमन्त्रिभिः परिवृतं देशञ्च सोपद्रवं
भार्य्यां यौवनगर्विताां पररतां मुञ्चन्ति शीघ्रं बुधाः ॥ ६ ॥

सुजीर्णमन्नं सुविचक्षणः सुतः
सुशासिता स्त्री नृपतिः सुसेवितः ।
सुचिन्त्य चोक्तं सुविचार्य्य यत् कृतं
सुदीर्घकालेऽपि न याति विक्रियाम् ॥ ७ ॥

वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः
पुष्पं पर्य्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः ।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टश्रियं मन्त्रिणः
सर्वः कार्य्यवशात् जनोऽभिरमते कस्यास्ति को वल्लभः ॥ ८ ॥

इति वानर्य्यष्टकं समाप्तम् ।

---

वैद्यमिति पूर्वं व्याख्यातम् ॥ ६ ॥

सुजीर्णमिति । सुजीर्णं सुपक्वम् अन्नं, सुविचक्षणः सुपण्डितः सुतः, सुशासिता स्त्री, सुसेवितः सुष्ठु अनुवर्त्तनेनेति भावः सेवितः आराधितः नृपतिः, सुचिन्त्य सुविचिन्त्य उक्तं कथितं, सुविचार्य्य च यत् कृतं तत् सर्वं सुदीर्घकालेऽपि कदापीति भावः विक्रियां विकारं न याति न प्राप्नोति । वंशस्थविलं वृत्तम् ॥ ७ ॥

वृक्षमिति पूर्वं व्याख्यातम् ॥ ८ ॥

---

# पूर्वचातकाष्टकम्।

---

वातैर्विधूनय विभीषय भीमनादैः
सञ्चूर्णय त्वमथवा करकाभिघातैः।
त्वद्वारिबिन्दुपरिपालितजीवितस्य
नान्या गतिर्भवति वारिद! चातकस्य॥१॥

चातकस्त्रिचतुरान् पयःकणान्
याचते जलधरं पिपासितः।
सोऽपि पूरयति भूयसाम्भसा
चित्रमत्र महतामुदारता॥२॥

वातैरिति। हे वारिद! मेघ! त्वं वातैः वायुभिः विधूनय कम्पय, भीमनादैः भीषणगर्जनैः विभीषय विशेषेण भयं प्रदर्शय, अथवा करकाः वर्षोपलाः, वर्षोपलस्तु करकेत्यमरः। तासाम् अभिघातैः प्रहारैः संचूर्णय यथेच्छं कुर्विति भावः, तव वारिबिन्दुभिः जलकणैः परिपालितं जीवितं यस्य तादृशस्य चातकस्य अन्या गतिः उपायः न अस्ति। अत्राप्रस्तुतप्रशंसया कस्यचित् आश्रितस्य प्रभुं प्रति वचनं प्रतीयते। वसन्ततिलकं वृत्तम्॥१॥

चातक इति। चातकः पिपासितः सन् जलधरं त्रिचतुरान् पयःकणान् वारिबिन्दून् याचते प्रार्थयते। सोऽपि जलधरः भूयसा प्रचुरेण अम्भसा वारिणा पूरयति चातकस्य वाञ्छां सफलयति चित्रम् आश्चर्यम् अत्र जगति महताम् उदारता औदार्यम्। महान् जनः स्वल्पं प्रार्थितोऽपि बहु ददातीति भावः। अप्रस्तुतप्रशंसालङ्कारः। रथोद्धतावृत्तम्। रान्नराविह रथोद्धता लगाविति तल्लक्षणात्॥२॥

शक्यते येन केनापि जीवनेनैव जीवितुम्।
किन्तु कौलव्रतोऽङ्गप्रसङ्गः परदुःसहः॥ ३॥

गर्जसि मेघ! न यच्छसि तोयं
चातकपक्षी व्याकुलितोऽहम्।
दैवादिह यदि दक्षिणवातः
क्व त्वं क्वाहं क्व च जलपातः॥ ४॥

वापी स्वल्पजलाशयो विषमयो नीचापगाहो ह्रदः
क्षुद्रात् क्षुद्रतरो महाजलनिधिर्गण्डूषमेकं मुनेः।

शक्यते इति। येन केनापि जीवनेन जलेन एव जीवितुं शक्यते, किन्तु कौलं कुलक्रमागतं यत् व्रतं नियमः मेघवारिव्यतिरिक्तवार्य्यपानरूपमिति भावः तस्य उद्भङ्गः उच्चैर्भङ्गः सम्यक् त्याग इत्यर्थः तस्य प्रसङ्गः परदुःसहः नितरां सोढुमशक्यः। कुलधर्मरतानां तत्परित्यागो दुःसह इति भावः। अप्रस्तुतप्रशंसालङ्कारः। अनुष्टुव्वृत्तम्॥ ३॥

गर्जसीति। हे मेघ! त्वं गर्जसि नदसि, तोयं जलं न यच्छसि न ददासि, अहं चातकपक्षी व्याकुलितः पिपासयेति शेषः। दैवात् इह अस्मिन् प्रदेशे यदि दक्षिणवातः प्रसरतीति शेषः, तदा त्वं क्व? कुत्र? गच्छसीति शेषः, अहं क्व? कुत्र? गच्छामीति शेषः, जलपातश्च वृष्टिपतनञ्च क्व च? कुत्र? भवतीति शेषः, दक्षिणे पवने प्रसरति आकाशस्य नैर्मल्यं भवति, तेन च मेघादीनामसद्भाव इति भावः, यावज्जीवनम् अर्थिनः कामः पूरयितव्यः, जीवने गते सर्वं नश्यतीति भावः। दोधकं वृत्तम्। आद्यचतुर्थभकारैर्निमितस्त्वेवमष्टमकं दशमञ्च तथान्त्यम्। यत्र गुरु प्रकटाक्षरसारे तत् कथितं दोधकवृत्तमिति तल्लक्षणात्॥ ४॥

वापीति। वापी दीर्घिका स्वल्पजलाशयः, नीचानां क्षुद्राणाम्

गङ्गाद्याः सरितः पयोनिधिगताः सन्त्यज्य तस्मादिमान्
सम्मानो खलु चातको जलमुचामुच्चैः पयो वाञ्छति ॥ ५ ॥
बीजैरङ्कुरितं नदीभिरुदितं वल्मीभिरुज्जृम्भितं
वृक्षैः पल्लवितं जनैश्च मुदितं धाराधरे वर्षति।
भ्रातश्चातक! पातकं किमपि ते सम्यङ् न जानीमहे
यत्तेऽस्मिन् न पतन्ति चञ्चुपुटके छिन्नाः पयोबिन्दवः ॥ ६ ॥

अवगाढः यत्र तथाभूतः ह्रदः चक्रतिमस्थलेऽष्टतो जलाशयः विषमयः चिरन्तनत्वात् बहुभुजङ्गावासत्वेनेति भावः। महाजलनिधिः महासमुद्रः मुनेरगस्त्यस्य एकं गण्डूषम् अतः क्षुद्रात् क्षुद्रतरः अतिशयेन क्षुद्र इत्यर्थः। गङ्गाद्याः सरितः नद्यः पयोनिधिगताः तं क्षुद्रं समुद्रमाश्रिता इत्यर्थः क्षुद्राधीना इति भावः। तस्मात् सम्मानी चातकः इमान् वाप्यादीन् जलाशयान् सन्त्यज्य उच्चैः उच्चैः स्वरेण उत्कृष्टं वा जलमुचां मेघानां पयः जलं वाञ्छति अभिलषति। महान्तः क्षुद्रजनं न किमपि कथमपि प्रार्थयन्ते इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

बीजैरिति। धाराधरे मेघे वर्षति सति बीजैः धान्यादिभिः अङ्कुरितं, नदीभिः उदितं वृद्धिर्गतेत्यर्थः, वल्मीभिः तदाख्यकीटैः उज्जृम्भितं प्रकटितं, वृक्षैः पल्लवितं पल्लवैः भूषितमित्यर्थः, जनैश्च मुदितं हृष्टम्। हे भ्रातश्चातक! ते तव किमपि पातकम् अस्तीति शेषः सम्यक् न जानीमहे तदिति शेषः, यत् यतः पातकादिति शेषः अस्मिन् ते तव चञ्चुपुटके छिन्नाः पयोबिन्दवः जलकणाः न पतन्ति। कस्मिंश्चित् धनिनि धनं वितरति सर्व एव जनाः लब्धकामा जाताः, परं कश्चित् दीनो जनः स्वपातकवशात् न लब्धकाम इति अप्रस्तुतप्रशंसया व्यज्यते। शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

नदेभ्योऽपि ह्रदेभ्योऽपि पिबन्त्यन्ये सदा पयः ।
चातकस्य तु जीमूत ! भवानेवावलम्बनम् ॥ ७ ॥

नभसि निरवलम्बे सीदता दीर्घकालं
त्वदभिमुखनिविष्टोत्तानचञ्चूपुटेन ।
जलधर ! जलधारा दूरतस्तावदास्तां
ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन ॥ ८ ॥

इति पूर्वचातकाष्टकं समाप्तम् ।

---

नदेभ्य इति । हे जीमूत ! मेघ ! अन्ये जनाः सदा नदेभ्यः अपि ह्रदेभ्यः अपि पयः जलं पिबन्ति, तु किन्तु भवानेव चातकस्य अवलम्बनम् आश्रयः । अनुष्टुब्वृत्तम् ॥ ७ ॥

नभसीति । हे जलधर ! निरवलम्बे निराश्रये नभसि आकाशे दीर्घकालं व्याप्तौ द्वितीया, बहुकालं व्याप्येत्यर्थः सीदता कष्टं प्राप्नुवता तव अभिमुखे निविष्टम् उत्तानं चञ्चूपुटं येन तादृशेन चातकेन जलधारा तावत् दूरतः आस्तां दूरे तिष्ठतु ते तव मधुरो मनोहरः ध्वनिरपि न श्रुतः नाकर्णितः । धनिनः सुखापेक्षिणा केनचित् याचकेन प्रार्थनापूर्वकं दूरतस्तिष्ठतु वचनमपि तस्य न श्रुतमिति अप्रस्तुतप्रशंसया व्यज्यते । मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ८ ॥

---

# उत्तरचातकाष्टकम् ।

---

स्वच्छाः सौम्य! जलाशयाः प्रतिदिनं ते सन्तु मा सन्तु वा ।
स्वल्पं वा बहुधा जलं जलधर! त्वं देहि मा देहि वा ॥१॥
कासारेषु सरित्सु सिन्धुषु तथा नीचेषु नीरग्रहं
धिक् तत्रापि शिरोनतिः किमपरं हेयं भवेन्मानिनाम् ।
इत्यालोच्य विमुच्य चातकयुवा तेषु स्पृहामादरा-
दुद्ग्रीवस्तव वारिवाह! कुरुते धाराधरालोकनम् ॥ २ ॥
के वा न सन्ति भुवि तामरसावतंसा
हंसावलीवलयिनो जलसन्निवेशाः ।

स्वच्छा इति । हे सौम्य! भद्र! प्रतिदिनं स्वच्छाः निर्मलाः ते प्रसिद्धाः जलाशयाः समुद्रादय इति यावत् सन्तु तिष्ठन्तु, मा सन्तु न तिष्ठन्तु वा, त्वं स्वल्पं वा बहु वा जलं देहि, मा देहि वा । हे जलधर! कासारेषु सरसीषु, कासारः सरसी सर इत्यमरः । सरित्सु नदीषु तथा नीचेषु क्षुद्रेषु सिन्धुषु नदेषु, देशे नदविशेषे च सिन्धुर्ना सरिति स्त्रियामित्यमरः । नीरग्रहं जलपानमित्यर्थः धिक् निन्दामीत्यर्थः, तत्रापि तादृशेष्वपि क्षुद्रेष्विति भावः शिरोनतिः मस्तकनमनं कर्त्तव्येति शेषः? नैव कर्त्तव्येत्यर्थः, मानिनां सम्मानशालिनाम् अपरं हेयं किं भवेत्? न किमपीत्यर्थः । हे वारिवाह! हे धाराधर! चातकयुवा इति इत्यम् आलोच्य तेषु क्षुद्रेषु जलाशयेषु स्पृहां विमुच्य त्यक्त्वा उद्ग्रीवः उन्नमितग्रीवः सन् आदरात् तव आलोकनं कुरुते । षट्चरणोऽयं श्लोकः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १ ॥ २ ॥

के इति । भुवि पृथिव्यां के वा सन्ति वेत्यर्थः, तामरसं रक्तोत्-

किं चातकः फलमवेक्ष्य सवज्रपातां
पौरन्दरीमुपगतो नववारिधाराम् ॥ ३ ॥

रे धाराधर ! धीरनीरनिकरैरेषा रसा नीरसा-
शेषा पूषकरोत्करैरतिखरैरापूरि भूरि त्वया ।
एकान्तेन भवन्तमन्तरगतं स्वान्तेन सञ्चिन्तयन्
आश्चर्य्यं परिपीड़ितोऽभिरमते यत् चातकस्तृष्णया ॥४॥

आत्मानमम्भोनिधिरेतु शोषं

पलं, रक्तोत्पलं तामरसमित्यमरः । अवतंसः भूषणं येषां तथाभूताः हंसावलीवलयिनः हंसश्रेणिसञ्चारशोभना इति भावः जलसन्निवेशाः जलाशयाः न सन्ति ? अपितु बहवः सन्तीत्यर्थः, किन्तु चातकः किं फलम् अवेक्ष्य दृष्ट्वा आलोच्येत्यर्थः सवज्रपातां विपत्सङ्कुलामिति भावः पौरन्दरीम् ऐन्द्रीं नववारिधाराम् उपगतः आकाङ्क्षतीति भावः कुलव्रतभङ्गो मा भूदित्येव फलमिति भावः । अप्रस्तुतप्रशंसा-लङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ३ ॥

रे इति । रे इति विरक्तिसूचकसम्बोधनद्योतकमव्ययं, धारा-धर ! त्वया अतिखरैः अतितीक्ष्णैः पूष्णः सूर्य्यस्य करोत्करैः किरणसमूहैः नीरसा विशोषितेति भावः अशेषा समग्रा एषा रसा पृथिवी रसा विश्वम्भरा स्थिरेत्यमरः । धीरनीरनिकरैः गभीरजल-समूहैः भूरि सम्यक् यथा तथा आपूरि परिपूरिता, किन्तु चातकः तृष्णया परिपीड़ितः सन् एकान्तेन एकमात्रनिरतेन स्वान्तेन मनसा, स्वान्तं हृन्मानसं मन इत्यमरः । अन्तरगतं हृदयस्थं भवन्तं सञ्चिन्तयन् यत् अभिरमते विफलकामः भवतीत्यर्थः तत् आश्चर्य्यम् अद्भुतम् । सर्वस्त्वया सफलमनोरथः क्रियते केवलं नाहमिति केनचिदर्थिना कश्चित् धनी प्रोच्यते इति अप्रस्तुतप्रशंसया व्यज्यते । शार्दूल-विक्रीड़ितं वृत्तम् ॥ ४ ॥

आत्मानमिति । अम्भोनिधिः समुद्रः आत्मानं शोषम् एतु

ब्रह्माण्डमासिञ्चतु वा तरङ्गैः।
नास्ति क्षतिर्नोपचितिः कदापि
पयोदवृत्तेः खलु चातकस्य॥ ५॥

पयोद हे! वारि ददासि वा न वा।
त्वदेकचित्तः पुनरेष चातकः।
वरं महत्या म्रियते पिपासया
तथापि नान्यस्य करोत्युपासनाम्॥ ६॥

यद्यपि चातकपक्षी क्षपयति जलधरमकालवेलायाम्।
तदपि न कुप्यति जलदो गतिरिह नान्या यतस्तस्य॥७॥

नयत्वित्यर्थः अन्तर्भूतण्यर्थः। वा तरङ्गैः ब्रह्माण्डं जगत् आसिञ्चतु अभिषिञ्चतु। पयोदवृत्तेः मेघमात्रजीवनस्य चातकस्य कदापि समुद्रस्य शोषणे वर्द्धने वेति भावः क्षतिः हानिः न उपचितिः वृद्धिश्च न खलु नैव। एकमात्रावलम्बिनः अपरस्य हानौ वृद्धौ वा न क्षतिवृद्धी इति भावः। अप्रस्तुतप्रशंसालङ्कारः। उपजातिवृत्तम्॥ ५॥

पयोदेति। हे पयोद! मेघ! त्वं वारि जलं ददासि वा न वा ददासीति शेषः, पुनः किन्तु एष चातकः त्वदेकचित्तः त्वन्मात्रावलम्बन इति भावः। महत्या पिपासया वरं म्रियते चातक इति शेषः, तथापि अन्यस्य पयोदव्यतिरिक्तस्य उपासनां न करोति। अत्रापि अप्रस्तुतप्रशंसालङ्कारः। वंशस्थविलं वृत्तम्॥ ६॥

यद्यपीति। चातकपक्षी यद्यपि अकालवेलायाम् असमये इत्यर्थः जलधरं मेघं क्षपयति विरक्तीकरोतीत्यर्थः तदपि जलदः मेघः न कुप्यति, यतः तस्य चातकस्य इह जगति अन्या गतिः अपर उपायः न अस्तीति शेषः। आर्य्यावृत्तम्॥ ७॥

एक एव खगमणिश्चिरं जीवतु चातकः ।
पिपासया वा म्रियते याचते वा पुरन्दरम् ॥ ८ ॥

इति उत्तरचातकाष्टकं समाप्तम् ।

---

## शुकाष्टकम् ।

---

भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे
मायामोहौ क्षयमुपगतौ नष्टसन्देहवृत्तेः ।
शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं
निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥१॥

एक इति । एक एव अद्वितीय इत्यर्थः खगमणिः पक्षिरत्नं चातकः चिरं जीवतु, यः पिपासया म्रियते वा, पुरन्दरम् इन्द्रं याचते वा जलार्थमिति शेषः मेघानां पुरन्दरवाहनत्वेन तदधीनत्वादिति भावः ॥ ८ ॥

---

भेदाभेदाविति । सपदि तत्त्वावबोधमात्र एव भेदः अन्यबुद्धिः अभेदः आत्मबुद्धिः तौ गलितौ नष्टौ आत्मपरविवेकः ध्वस्त इति भावः पुण्यपापे विशीर्णे विलयं गते, पुण्यपापक्षययत एव ब्रह्मसाक्षात्कारस्य शास्त्रीयत्वादिति भावः माया अविद्या मोहः अज्ञानं तौ क्षयम् उपगतौ नाशं गतौ । शब्दातीतम् अशब्दवेद्यमित्यर्थः अनिर्वचनीयमिति यावत् त्रिगुणरहितं सत्त्वरजस्तमोऽतीतं तत्त्वावबोधं ब्रह्मज्ञानमित्यर्थः प्राप्य नष्टा सन्देहस्य इदं सत्यम् इदमसत्यं वेति संशयस्य वृत्तिः स्थितिः यस्य तथाभूतस्य असन्दिग्धमनस इत्यर्थः निस्त्रैगुण्ये

यद्वात्मानं सकलवपुषामेकमन्तर्बहिस्थं
दृष्ट्वा पूर्णं खमिव सततं सर्वभाण्डस्थमेकम् ।
नान्यत् कार्य्यं किमपि च ततः कारणाद् भिन्नरूपं
निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥२॥

हेम्नः कार्य्यं हुतवहगतं हेममेवेति यद्वत्
क्षीरे क्षीरं समरसतया तोयमेवाम्बुमध्ये ।
एवं सर्वं समरसतया त्वं पदं तत्पदार्थे
निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥३॥

त्रिगुणातीते पथि मार्गे आत्मज्ञानरूपे इति भावः विचरतः जनस्येति शेषः विधिः नित्यकाम्यनैमित्तिकव्यापारनियमः कः ? न कोऽपीत्यर्थः, निषेधः अवैधेषु प्रतिषेधः कः न कोऽपीत्यर्थः । मन्दाक्रान्ता-वृत्तमस्मिन् सन्दर्भे ॥ १ ॥

यद्वेति । यद्वा अथवा सकलवपुषां सर्वशरीराणाम् अन्तर्बहि-स्थम् अन्तःस्थं बहिःस्थञ्च सततं सर्वभाण्डस्थं सर्वपात्रगतम् एकम् अद्वितीयं खमिव आकाशमिव पूर्णम् आत्मानं ततः तस्मात् कार-णात् कारणभूतात् आत्मन इति शेषः भिन्नरूपम् अन्यत् अपरं किमपि कार्य्यं विश्वरूपं न इति च दृष्ट्वा निस्त्रैगुण्य इति ॥ २ ॥

हेम्न इति । हेम्नः काञ्चनस्य कार्य्यं कटककुण्डलादि हुतवह-गतम् अग्निप्रविष्टं यद्वत् यथा हेममेवेति नान्यदिति एवशब्दार्थः । यथा समरसतया अभिन्नस्वादतया क्षीरे दुग्धे क्षीरमेवेति शेषः; यथा च अम्बुमध्ये तोयं समरसतया तोयमेवेति शेषः, एवम् इत्थं सर्वं जगत् समरसतया ब्रह्ममेवेति शेषः, तस्मात् तत्पदार्थे ब्रह्मपदार्थे त्वं पदं तत्त्वमसीति वाक्यार्थमिति भावः दृष्ट्वेति शेषः निस्त्रैगुण्य इति ॥ ३ ॥

यस्मिन् विश्वं सकलभुवनं सामरस्यैकभूतं
उर्वी ह्यापोऽनलमनिलखं जीवमेवं क्रमेण ।
यत् क्षाराब्धौ समरसतया सैन्धवैकत्वभूतं
निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥४॥
यद्वन्नद्योऽर्णवसमरसाः सागरत्वं ह्यवाप्ताः
तद्वज्जीवा लयपरिगताः सामरस्यैकभूताः ।
भेदातीतं परिलयगतं सच्चिदानन्दरूपं
निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥५॥
दृष्ट्वा वेद्यं परमथ पदं स्वात्मबोधस्वरूपं
बुद्ध्वात्मानं सकलवपुषामेकमन्तर्बहिस्थम् ।

यस्मिन्निति । यस्मिन् निस्त्रैगुण्ये पथीत्यर्थः उर्वी पृथिवी, आपः जलानि, अनलम् अग्निः क्लीवत्वमार्षम् । अनिलखं वायुराकाशञ्च, जीवं जीवात्मा अस्यापि क्लीवत्वमार्षम् । एवं क्रमेण एततूपरिपाट्यां निर्मितमिति भावः सकलानि भुवनानि भूरादीनि यत्र तादृशं विश्वं सामरस्येन समरसतया एकभूतम् एकमेवेत्यर्थः, यच्च निस्त्रैगुण्यं क्षाराब्धौ लवणसमुद्रे समरसतया अभिन्नतया सैन्धवैकत्वभूतं लवणतया परिणतमिति भावः तस्मिन् निस्त्रैगुण्य इति ॥ ४ ॥

यद्वदिति । यद्वत् यथा नद्यः अर्णवस्य समः रसो यासां ताः सत्यः सागरत्वम् अवाप्ताः सागरे मिलिता इति यावत्, तद्वत् तथा जीवाः जीवात्मानः लयपरिगताः लयं प्राप्ताः देहात् विनिर्गता इति भावः सामरस्येन समरसत्वेन एकभूताः सन्तः भेदातीतम् अद्वितीयम् परिलये त्रैगुण्यराहित्ये गतं स्थितं सच्चिदानन्दरूपम् अवाप्ता इति शेषः तस्मिन् निस्त्रैगुण्ये पथीति ॥ ५ ॥

दृष्टेति । वेद्यं ज्ञेयं परं परमात्मानं दृष्ट्वा साक्षात्कृत्य अथ

भूत्वा नित्यं सदुदिततया स्वप्रकाशस्वरूपं
निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥६॥
कार्य्याकार्य्ये किमपि सततं नैव कर्त्तृत्वमस्ति
जीवन्मुक्तस्थितिरवगतो दग्धवस्त्रावभासः।
एवं देहे प्रविलयगते तिष्ठमानो विमुक्तो
निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥७॥
कस्मात् कोऽहं किमपि च भवान् कोऽयमत्र प्रपञ्चः
स्वं स्वं वेद्यं गगनसदृशं पूर्णतत्त्वप्रकाशम्।
आनन्दाख्यं समरसघने बाह्यमन्तर्विहीने
निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥८॥

अनन्तरं परमात्मसाक्षात्कारात्परमित्यर्थः स्वस्मिन् निजस्वरूपे आत्मनः परमात्मनः बोधस्वरूपं ज्ञानरूपं परं स्थानं इहेति पूर्वेणान्वयः, सकलवपुषां सर्वशरीराणाम् अन्तर्बहिस्थम् एकम् अद्वितीयम् आत्मानं बुद्ध्वा विज्ञाय तथा नित्यं सततं सदुदिततया स्वप्रकाशस्वरूपं भूत्वेति भावः भूत्वा निस्त्रैगुण्ये इति ॥ ६ ॥

कार्य्याकार्य्ये इति। कार्य्याकार्य्ये कर्त्तव्याकर्त्तव्ये न स्त इति शेषः, किमपि कर्त्तृत्वमपि सततं नैव अस्ति, जीवन् देहबद्धः मुक्तश्च देहादिति, भावः तस्य स्थितिः अवस्थानं, दग्धस्य भस्मीकृतस्य वस्त्रस्य अवभासः प्रकाशः अवगतः ज्ञातः। एवम् इत्थं देहे प्रकर्षेण विलयं गते सति विमुक्तः विशेषेण मुक्तिं गतः सन् जीव इति भावः तिष्ठमानो भवतीति शेषः तस्मिन् निस्त्रैगुण्ये इति ॥ ७ ॥

कस्मादिति। कस्मात् जगात् अहं कः उत्पन्न इति शेषः, भवान् किमपि च कश्चेत्यर्थः, अत्र जगति अयं प्रपञ्चः विस्तारः कः न किमप्येतदिति भावः। पूर्णः तत्त्वस्य प्रकाशो यस्य तादृशम् गगनसदृशम् आकाशोपमम् आनन्दाख्यं स्वं स्वं वेद्यं ज्ञेयं वाञ्छति

सत्यं सत्यं परममम्टतं सर्वकल्याणरूपं
मायारण्ये दहनमलिने शान्तनिर्वाणदीपम्।
तेजोभूतं निगमसदनं व्यासपुत्राष्टकं यः
प्रातःकाले पठति मनसा याति निर्वाणमार्गे॥ ९॥

इति श्रीपरमहंसशुकदेवविरचितं शुकाष्टकं समाप्तम्।

---

## गङ्गाष्टकम्।

---

यदवधि तव नीरं पातकी नैति गङ्गे!
तदवधि मलजालैर्नैव मुक्तः कलौ स्यात्।

शेषः समरमघने निविडैकरसरूपे वाह्यम् अन्तश्च वाह्याभ्यन्तराभ्यामित्यर्थः विच्छेदे रहिते सर्वतः समे इति भावः निस्त्रैगुण्य इत्यस्य विशेषणम्॥ ८॥

सत्यमिति। सत्यं सत्यम् अतिशयेन सत्यं परमम् उत्कृष्टम् अमृतं सर्वकल्याणरूपं सर्वमङ्गलमयं दहनमलिने अग्निरूपतापमलयमलिने मायारण्ये अविद्याकानने शान्तं निर्वाणं यस्य तादृशं सततप्रकाशमित्यर्थः दीपं दीपभूतं तेजोभूतं ज्योतिःस्वरूपं निगमस्य वेदस्य सदनम् आश्रयं व्यासपुत्रस्य शुकस्य अष्टकम् अष्टसंख्यकपद्यमित्यर्थः यः प्रातःकाले मनसा पठति, स निर्वाणमार्गे मोक्षवर्त्मनि याति गच्छति॥ ९॥

---

यदिति। हे गङ्गे! पातकी पापी जनः यदवधि तव नीरं जलं न नैति न प्राप्नोति, तदवधि कलौ कलियुगे मलजालैः पाप-

तव जलकणिकालं पापिनां पापशुद्धेय,
पतितपरमदीनान् त्वं हि पासि प्रपन्नान् ॥ १ ॥
तव शिवजललेशं वायुनीतं समेत्य
सपदि निरयजालं शून्यतामेति गङ्गे ! ।
समलगिरिसमूहाः प्रस्फुटन्ति प्रचण्डाः,
त्वयि सखि विशतां नः पापशङ्का कुतः स्यात् ? ॥ २ ॥
तव शिवजलजालं निःसृतं यर्हि गङ्गे ।
सकलभुवनजालं पूतपूतं तदाभूत् ।
यमभटकलिवार्त्ता देवि ! लुप्ता यमोऽपि
व्यधिकृतवरदेहाः पूर्णकामाः सकामाः ॥ ३ ॥

निचयैः नैव सङ्गः स्यात् । तव जलकणिका पापिनां पापशुद्ध्यै पापक्षालनाय अलं शक्तेत्यर्थः, अलं व्यर्थसमर्थयोरित्यमरः । हि यतः त्वं पतितान् अतएव परमदीनान् अतिदुःखितान् प्रपन्नान् शरणागतान् पासि रक्षसि । मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥१ ॥

तवेति । हे गङ्गे ! तव वायुना नीतं शिवजललेशं शुभजलकणां समेत्य प्राप्य सपदि तत्क्षणात् निरयजालं पापसङ्घः शून्यताम् एति प्राप्नोति नश्यतीति भावः । हे सखि ! त्वयि प्रचण्डाः विशालाः समलाः मलपूर्णाः गिरिसमूहाः पर्वतनिचयाः प्रस्फुटन्ति प्रकर्षेण विध्वस्तमला भवन्तीत्यर्थः, विशतां प्रविशतां नः अस्माकं पापशङ्का कुतः स्यात् ? न कुतोऽपीत्यर्थः । मालिनीवृत्तम् ॥ २ ॥

तवेति । हे गङ्गे ! यर्हि यदा तव शिवजलजालं शुभतोयनिचयः निःसृतं निर्गतं हिमालयादिति शेषः, तदा सकलभुवनजालं समग्रं विश्वमण्डलं पूतपूतम् अतिशयेन पूतम् अभूत् । हे देवि ! यमभटानां यमकिङ्कराणां कलेश्च वार्त्ता लुप्ता, यमोऽपि लुप्त इति

मधुमधुवनपूगैः रत्नपूगैर्नृपूगै-
र्मधुमधुवनपूगैर्देवपूगैः सुपूगैः ।
पुरहरपरमाङ्गे भासि मायेव गङ्गे !
शमयसि विषतापं देवदेवस्य वन्द्ये ! ॥ ४ ॥
चलितशशिकुलाभैस्तरङ्गैस्तरङ्गैः
अमितनदनदीनामङ्गसङ्गैरसङ्गैः ।
विहरसि जगदण्डे खण्डयन्ती गिरीन्द्रान्
रमयसि निजकान्तं सागरं कान्तकान्ते ! ॥ ५ ॥

लिङ्गव्यत्ययेनान्वयः । सकामाः सकामकर्मानुष्ठायिन इत्यर्थः पूर्णकामाः सफलमनोरथाः सन्तः विशेषेण अधिकतः प्राप्तः वरदेहः दिव्यशरीरं यैः तथाभूताः जाता इति शेषः । मालिनीवृत्तम् ॥ ३ ॥

मधुमिति । हे वन्द्ये वन्दनीये गङ्गे ! पुरहरपरमाङ्गे पुरहरस्य महादेवस्य परमाङ्गे उत्तमाङ्गे मूर्ध्नि माया आद्या शक्तिर्दुर्गा इव भासि त्वं प्रकाशसे यथा दुर्गा शिवस्य वामाङ्गे प्रकाशते तथा त्वं मूर्ध्नि प्रकाशसे इत्यर्थः । देवदेवस्य पीतकालकूटस्य शिवस्य विषतापं कालकूटविषजनितदाहं, मधुमधुवनपूगैः मधुतोऽपि मधूनि (अतिस्वादूनि इत्यर्थः) वनानि (जलानि) तेषां पूगैः (समूहैः) मन्त्रपूतसुस्वादुजलैरित्यर्थः । तथा रत्नपूगैः (मणिसमूहभूतैः) नृपूगैः नृसमूहैः करणकैः । विषनाशकमणिविशेषसदृशनृसमूहैरित्यर्थः । त्वङ्गतैः । मधुमधुवनपूगैश्च, मधु मधुरं मधुवनं कोकिलः तेषां पूगैः समूहैः मधुकण्ठकोकिलसमूहभूतैः सुपूगैः सु (सुष्ठु) पूगं (गानं छन्दः) येषां तैः, देवपूगैः देवसमूहैः विषवैद्यैरिव करणकैः वेदान् उच्चारयद्भिः देवगणैः स्तुवद्भिः इत्यर्थः, विषवैद्या यथा मन्त्रपूतजलैः विषहारकप्रस्तरैस्तथा विषहारकमन्त्रसङ्गीतैः विषदोषं नाशयन्ति तथा त्वमपि शमयसि निवारयसीत्यर्थः ॥ ४ ॥

चलितेति । हे कान्तकान्ते अतीव कान्ते प्रीतिकरीत्यर्थः अथवा

तव परमहिमानं चित्तवाचाममानं
हरिहरविधिशक्रा नापि गङ्गे! विदन्ति।
श्रुतिकुलमभिधत्ते शङ्कितं तं गुणान्तं
गुणगणसुविलापैर्नेति नेतीति सत्यम्॥ ६॥

तव नुतिनतिनामान्यप्यघं पावयन्ति
ददति परमशान्तिं दिव्यभोगान् जनानाम्।
इति पतितशरण्ये! त्वां प्रपन्नोऽस्मि मात-
र्ललिततरतरङ्गे! चाङ्गगङ्गे! प्रसीद॥ ७॥

कान्तः प्रियः कान्तः पतिर्यस्यास्तत्सम्बुद्धौ हे पतिवल्लभे इत्यर्थः चलितशशिकलाभैः चञ्चलचन्द्रसमूहनिभैः उत्तरङ्गैः उद्धतैः चलितानाम् असंख्यातानां नदनदीनाम् अङ्गसङ्गैः संसृष्टाङ्गैरित्यर्थः अथच असङ्गैः संश्लेषरहितैः स्वजलस्य केनाप्यमिश्रणादिति भावः तरङ्गैः जगदण्डे जगतीतले गिरीन्द्रान् पर्वतश्रेष्ठान् खण्डयन्ती खण्डीकुर्वती सती विहरसि विशेषेण हृत्वा नयसीत्यर्थः, तथा निजकान्तं स्वपतिं सागरं रमयसि सन्तोषयसि। मालिनीवृत्तम्॥५॥

तवेति। हे गङ्गे! हरिहरविधिशक्राः विष्णुशङ्करब्रह्मेन्द्रा अपि चित्तवाचाममानं वाङ्मनसयोरगोचरं तव परं महिमानं न विदन्ति न जानन्ति। श्रुतिकुलं वेदवाक्यनिचयः शङ्कितं सञ्जातशङ्कं सत्यमीभूतमेवेति संशयाकुलमित्यर्थः सत् गुणगणानां तवेति भावः सुविलापैः सुष्ठुख्यापनैः न इति न इति, इति सत्यं तव गुणान्तं गुणशेषम् अभिधत्ते कथयति प्रकटयतीत्यर्थः। मालिनीवृत्तम्॥ ६॥

तवेति। अङ्गेति सम्बोधनसूचकमव्ययम्। हे पतितशरण्ये पतितत्राणकर्त्रि! ललिततराः चारुतरास्तरङ्गा यस्यास्तत्सम्बुद्धौ हे गङ्गे! तव नुतिनामानि स्तोत्रनामानि, स्तवः स्तोत्रं स्तुतिर्नुतिरित्यमरः। अपि अघं पापं पावयन्ति, शोधयन्ति तथा जनानां

शुभतरकृतयोगाद्विश्वनाथप्रसादात्
भवहरवरविद्यां प्राप्य काश्यां हि गङ्गे ! ।
भगवति ! तव तीरे नीरसारं निपीय
मुदितहृदयकुञ्जे नन्दसूनुं भजेऽहम् ॥ ८

गङ्गाष्टकमिदं कृत्वा भुक्तिमुक्तिप्रदं नृणाम् ।
सत्यज्ञानानन्दतीर्थयतिना स्वर्पितं शिवे ॥ ९ ॥
तेन प्रीणातु भगवान् शिवो गङ्गाधरो विभुः ।
करोतु शङ्करः काश्यां जनानां सन्ततं शिवम् ॥१०॥

इति सत्यज्ञानानन्दतीर्थयतिना विरचितं
गङ्गाष्टकं सम्पूर्णम् ।

परमशान्तिं दिव्यभोगांश्च ददाति इति हेतोः हे मातः ! त्वां प्रपन्नः आश्रितः अस्मि, प्रसीद प्रसन्ना भव । मालिनीवृत्तम् ॥ ७ ॥

शुभेति । हे भगवति गङ्गे ! काश्यां शुभतरम् अतिशुभं पुण्यमित्यर्थः तस्य कृतं करणम् अनुष्ठानं तस्य योगात् बलात् विश्वनाथस्य शम्भोः प्रसादात् अनुग्रहात् भवहरा संसारनाशिनी वरा या विद्या परमात्मज्ञानमित्यर्थः तां प्राप्य तव तीरनीरसारं तटस्थम् उत्कृष्टं नीरमित्यर्थः निपीय सम्यक् पीत्वेत्यर्थः अहं मुदितं प्रफुल्लं हृदयमेव कुञ्जं केलिवनं तस्मिन् नन्दसूनुं कृष्णं भजे आराधयामीत्यर्थः । मालिनीवृत्तम् ॥ ८ ॥

गङ्गाष्टकमिति । सत्यज्ञानानन्दतीर्थयतिना नृणां भुक्तिमुक्तिप्रदम् इदं गङ्गाष्टकं कृत्वा रचयित्वा शिवे हरे स्वर्पितं सम्यक् उपहारीकृतम् । अनुष्टुब्वृत्तम् ॥ ९ ॥

तेनेति । शिवः मङ्गलमयः विभुः सर्वशक्तिमान् गङ्गाधरः भगवान् शङ्करः तेन गङ्गाष्टकेन प्रीणातु प्रीतो भवतु, तथा काश्यां सततं जनानां शिवं कल्याणं करोतु । अनुष्टुब्वृत्तम् ॥ १० ॥

---

# शृङ्गाररसाष्टकम्।

---

अविदितसुखदुःखं निर्गुणं वस्तु किञ्चित्
जड़मतिरिह कश्चित् मोक्ष इत्याचचक्षे।
मम तु मतमनङ्गस्मेरतारुण्यघूर्णन्-
मदकलमदिराक्षी-नीविमोक्षो हि मोक्षः॥ १॥
कदा कान्तागारे परिमलमिलत्पुष्पशयने
शयानः कान्तायाः कुचयुगमहं वक्षसि वहन्।
अये कान्ते! मुग्धे! कुटिलनयने! चन्द्रवदने!
प्रसीदेति क्रोशन् निमिषमिव नेष्यामि रजनीम् ॥२॥

अविदितेति। इह जगति कश्चित् जड़मतिः अतत्त्वविदिति भावः अविदितम् अज्ञातं सुखं दुःखञ्च यस्मिन् तथोक्तं निर्गुणं सत्त्वरजस्तमोगुणातीतं किञ्चित् अनिर्वचनीयं वस्तु निर्विकारमिति पाठे विकाररहितमित्यर्थः मोक्ष इति आचचक्षे उवाच। तु किन्तु अनङ्गेन कामेन तदावेशेनेति भावः स्मेरा मन्दं हसन्ती तारुण्येन यौवनेन घूर्णन्ती मदकला मदमत्ता या मदिराक्षी मत्तखञ्जननयना कान्तेति यावत् तस्याः नीविमोक्षः वसनग्रन्थिविमोचनं मोक्षः हि सुक्तिरेव इति मम मतम्। मालिनीवृत्तम्॥ १॥

कदेति। परिमलेन सौरभेण मिलत् सङ्गच्छत् पुष्पशयनं कुसुमशय्या यत्र तादृशे कान्तायाः आगारे गृहे रमणीयागारे वा शयानः अहं कदा कान्तायाः कुचयुगं स्तनद्वयं वक्षसि वहन् अये मुग्धे मनोहारिणि! कुटिलनयने वक्रनेत्रे! चन्द्रवदने शशिमुखि कान्ते! प्रसीद प्रसन्ना भवेति क्रोशन् उच्चरन् रजनीं निमिषमिव अत्यल्पक्षणमिव नेष्यामि गमयिष्यामि। शिखरिणीवृत्तम्॥ २॥

सायं नायमुदेति वासरमणिः, चन्द्रो न चण्डद्युति-
र्दावाग्निः कथमम्बरे? किमशनिः? स्वच्छान्तरीक्षे कुतः? ।
हन्तेदं निरणायि पान्थरमणीप्राणानिलाशाशया
धावद्घोरविभावरीविषधरीभोगस्य भीमो मणिः ॥ ३ ॥

आयाति याति पुनरेव जलं प्रयाति
पद्माङ्कुराणि विचिनोति धुनोति पक्षौ ।
उन्मत्तवद्भ्रमति कूजति मन्दमन्दं
कान्तावियोगविधुरो निशि चक्रवाकः ॥ ४ ॥

सायमिति । सायं सन्ध्याकाले अयं वासरमणिः सूर्य्यः न उदेति न उद्गच्छति, चन्द्रः चण्डा तीक्ष्णा द्युतिर्यस्य तादृशो न, अम्बरे आकाशे दावाग्निः वनवह्निः न, सम्भवतीति शेषः, किम् अशनिः वज्रम् अयमिति शेषः कुतः कस्मात् असौ स्वच्छे निर्मले मेघशून्ये इति भावः अन्तरीक्षे आकाशे ? न सम्भवत्येतदिति भावः हन्त खेदे, इदं निरणायि निर्णीतं जनैरिति शेषः यत् पान्थानां प्रोषितानां या रमण्यः तासां प्राणानिलानां प्राणवायूनाम् आशः अशनं पान-मित्यर्थः सर्पाणां पवनाशनत्वादिति भावः तस्य आशया अभिलाषेण धावन्ती द्रुतमायान्ती या घोरा भयङ्करी विभावरी रात्रिरेव विष-धरी भुजङ्गी तस्या भोगस्य फणस्य, भोगः सुखे स्त्र्यादिभृतावहेश्च फण-काययोरित्यमरः । भीमः भयङ्करः मणिः रत्नम् अयमिति शेषः । चन्द्रस्यातीवोद्दीपकत्वात् तथा वर्णनमिदम् । सन्देहालङ्कारः । तदुक्तं दर्पणे । सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थित इति । शार्दूल-विक्रीडितं वृत्तम् ॥ ३ ॥

आयातीति । कान्तायाश्चक्रवाक्याः वियोगेन विरहेण विधुरः कातरः चक्रवाकः निशि रात्रौ आयाति आगच्छति कान्तासन्निधिम् आगन्तुमिच्छतीति भावः, याति गच्छति कान्तासान्निध्यादिति भावः,

भंक्त्वा भोक्तुं न भुंक्ते कुटिलबिसलताखण्डमिन्दोर्वितर्कात्
ताराकारास्तृषार्त्तो न पिबति पयसां विप्रुषः पत्रसंस्थाः ।
छायामम्भोजिनीनामलिकुलशबलां वीक्ष्य सन्ध्यामसन्ध्यां
कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः ॥ ५ ॥

गन्धाढ्यासौ भुवनविदिता केतकी स्वर्णवर्णा
पद्मभ्रान्त्या चपलमधुपः पुष्पमध्ये पपात ।
अन्धीभूतः कुसुमरजसा कण्टकैर्लूनपक्षः
स्थातुं गन्तुं द्वयमपि सखे ! नैव शक्तो द्विरेफः ॥ ६ ॥

पुनरेव जलं प्रयाति विशति, पद्माङ्कुराणि विचिनोति अन्विच्छति, पक्षौ धुनोति कम्पयति, उन्मत्तवत् वातुल इव भ्रमति भ्रमणं करोति, तथा मन्दमन्दं कूजति शब्दायते । दीपकालङ्कारः । तदुक्तं दर्पणे । अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु यदीति । वसन्ततिलकं वृत्तम् ॥ ४ ॥

भङ्क्त्वेति । कान्तायाः विश्लेषात् विरहात् भीरुः शङ्कितः चक्रवाकः कुटिलं वक्राकारं बिसलताखण्डं मृणालशकलं भोक्तुं भङ्क्त्वा खण्डयित्वा इन्दोश्चन्द्रस्य वितर्कात् संशयात् इन्दुरयमिति सन्देहादिति यावत् न भुङ्क्ते न खादति, तृषार्त्तः पिपासितः सन् पत्रसंस्थाः पद्मपत्रस्थिताः ताराकाराः नक्षत्राकाराः पयसां जलानां विप्रुषः बिन्दून् न पिबति, अम्भोजिनीनां पद्मिनीनाम् अलिकुलशबलां भ्रमरकुलसङ्कुलां छायाम् असन्ध्यामपि सन्ध्यां वीक्ष्य दृष्ट्वा विविच्य दिनमपि रजनीं मन्यते बुध्यते । भ्रान्तिमानलङ्कारः । तदुक्तं दर्पणे । साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति । स्रग्धरावृत्तम् । अभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तिता सेति तल्लक्षणात् ॥ ५ ॥

गन्धाढ्येति पूर्वं व्याख्यातम् ।

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
निक्षेपणाय एव पदमुद्धृतमर्पयन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ७ ॥

का काबला निधुवनश्रमपीड़िताङ्गी
निद्रां गता दयितबाहुलतानुबद्धा ।
सा सा तु यातु भवनं मिहिरोद्गमोऽयं
सङ्केतवाक्यमिति काकचया वदन्ति ॥ ८ ॥

इति महाकविकालिदासविरचितं
शृङ्गाररसाष्टकं समाप्तम् ।

---

तमिति । शैलाधिराजतनया गौरी तं हरं वीक्ष्य दृष्ट्वा वेपथुमती कम्पमाना तथा सरसा सत्त्वोदयात् सञ्जातशृङ्गाररसावेशा इत्यर्थः निक्षेपणाय उद्धृतमेव उत्क्षिप्तमेव पदम् उद्वहन्ती दधती सती मार्गे अध्वनि यः अचलः पर्वतः तस्य व्यतिकरेण सम्पर्केण आकुलिता इतस्ततो निर्गन्तुमशक्नोति यावत् सिन्धुरिव नदीव न ययौ न तस्थौ । वसन्ततिलकं वृत्तम् ॥ ७ ॥

केति । का का अबला कान्ता निधुवनश्रमेण सुरतपरिश्रमेण पीड़िताङ्गी व्यथितदेहा अतएव दयितस्य कान्तस्य बाहुलतया अनुबद्धा आलिङ्गितेत्यर्थः सती निद्रां गता, सा सा तु भवनं यातु गच्छतु, अयं मिहिरस्य सूर्यस्य उद्गमः उदयः जात इति शेषः, काकचयाः वायससमूहाः इति सङ्केतवाक्यं कावेति इङ्गितवचनं वदन्ति । वसन्ततिलकं वृत्तम् ॥ ८ ॥

---

# मणिकर्णिकामहिमा।



अनेकजन्मसाहस्रतपोध्यानशिवार्चनैः।
अद्वैतानन्दसङ्गेन लब्धवेदान्तिसत्पदः ॥ १ ॥
सदाशिवसुतः शान्तः काश्यां गङ्गाधरः कविः।
सर्वतीर्थवरां देवीं स्तौति श्रीमणिकर्णिकाम् ॥ २ ॥

आनन्दकाननमिदं सुखदं पुरैव
तत्रापि चक्रसरसी मणिकर्णिकाथ।
स्वः सिन्धुसङ्गतिरथो परमास्पदञ्च
विश्वेशितुः किमिह तन्न विमुक्तये यत् ॥ ३ ॥

अनेकेति सदेति च। अनेकेषु जन्मसाहस्रेषु कृतं यत् तपः ध्यानं शिवार्चनं हराराधनं तैः हेतुभूतैः अद्वैतानन्दस्य कस्यचित् परमहंसस्य सङ्गेन संसर्गेण हेतुना च लब्धं प्राप्तं वेदान्तिनां ब्रह्मविदुषां सत् परमं पदं येन तथाभूतः सदाशिवस्य सुतः पुत्रः गङ्गाधरः नाम कविः काश्यां सर्वेषु तीर्थेषु वरा श्रेष्ठा तां देवीं मणिकर्णिकां स्तौति स्तुत्या कीर्त्तयतीत्यर्थः। विष्णुतपश्चर्यादर्शनात् विस्मयेन शिवस्य मणिमयकुण्डलपतनस्थाने काशीस्थे तीर्थभेदे मणिकर्णिका। अष्टचरणोऽयं श्लोकः। अनुष्टुब्वृत्तम् ॥१॥२॥

आनन्देति। इदं वाराणसीक्षेत्रम् आनन्दकाननम् अतएव पुरैव पूर्वमेव मणिकर्णिकोत्पत्तेरिति भावः सुखदम्। तत्रापि सुखदेऽपि अस्मिन् क्षेत्रे इत्यर्थः चक्रसरसी विष्णुचक्रेण निर्मितं सरः, अथ तत्र मणिकर्णिका, अथो अनन्तरं स्वःसिन्धुसङ्गतिः मन्दाकिनीसङ्गमः, अतएव परमास्पदं परं स्थानमिति शेषः, इह अस्मिन् आनन्दकानने विश्वेशितुः विश्वेश्वरस्य किं [illegible] अस्तीति

गर्जन्ति सर्वतीर्थानि स्वस्वधिष्ण्यगतान्यहो ।
केवलं बलमासाद्य सुमहत् माणिकर्णिकम् ॥ ४ ॥
शिवाद्या देवसङ्घाश्च सनकाद्या महर्षयः ।
ते सर्वे स्नातुमायान्ति मध्याह्ने मणिकर्णिकाम् ॥५॥
इच्छन्ति मरणं तत्र मुक्तये चामरा अपि ।
अतश्च स्वकृतैः श्लोकैस्तां देवीं प्रार्थयेऽन्वहम् ॥६॥

---

शेषः यत् विमुक्तये मुक्तिप्रदानाय न, सर्वमेवात्र वस्तु मुक्तिदमित्यर्थः । वसन्ततिलकं वृत्तम् ॥ ३ ॥

गर्जन्तीति । सर्वाणि तीर्थानि पुण्यक्षेत्राणि स्वस्वधिष्ण्यगतानि स्वस्वस्थानस्थितानि सन्ति, केवलं माणिकर्णिकं मणिकर्णिकासम्बद्धं सुमहत् बलम् आसाद्य प्राप्य गर्जन्ति स्पर्धन्ते अहो आश्चर्यम् । मणिकर्णिकायास्तीर्थमध्ये गणनादिति भावः । अनुष्टुब्वृत्तम् ॥ ४ ॥

शिवाद्या इति । ते प्रसिद्धाः सर्वे शिवाद्याः देवसङ्घाः सुरगणाः सनकाद्याः महर्षयश्च मध्याह्ने स्नातुं मणिकर्णिकाम् आयान्ति आगच्छन्ति । अनुष्टुब्वृत्तम् ॥ ५ ॥

इच्छन्तीति । अमरा अपि मृत्युवर्जिता अपि तत्र मणिकर्णिकायां मुक्तये मरणम् इच्छन्ति, अतः कारणात् स्वकृतैः श्लोकैः तां देवीं मणिकर्णिकाम् अन्वहं प्रतिदिनं प्रार्थये । अनुष्टुब्वृत्तम् ॥ ६ ॥

---

# मणिकर्णिकाष्टकम् ।

---

विष्णोः सुतप्ततपसां चलितोत्तमाङ्ग-
विश्लेषितुस्तडिदिवाम्बरतः सुकर्णात् ।
या चक्रतीर्थसलिले ललिता पपात
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥ १ ॥
चिन्तामणिस्तनुभृतां सहसान्तकाले
तत्तारकं व्यपदिशत्यथ कर्णिकायाम् ।
यस्यां मृतो न भवमेति भवप्रसादात्
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥ २ ॥

विष्णोरिति । विष्णोर्नारायणस्य सुतप्ततपसां सुचरिततपोभिरित्यर्थः सम्बन्धविवक्षया करणे षष्ठी । चलितम् उत्तमाङ्गं शिरः यस्य तथाभूतस्य विश्लेषितुर्विश्लेषकस्य सुकर्णात् शोभनात् कर्णात् अम्बरतः आकाशात् तडिदिव विद्युदिव ललिता शोभना या यो मणिरिति यावत् विधेयप्राधान्यात् स्त्रीत्वम् । चक्रतीर्थस्य सलिले जले पपात सा मणिकर्णिका मे मम सदा शिवकरी अस्तु भवतु । वसन्ततिलकं वृत्तमस्मिन् सन्दर्भे ॥ १ ॥

चिन्तामणिरिति । चिन्तामणिर्हरः तनुभृतां शरीरिणाम् अन्तकाले सहसा हठात् तत् प्रसिद्धं तारकं सन्तारकारणभूतं नामेति शेषः व्यपदिशति ददाति, अथ अनन्तरं यस्यां कर्णिकायां मृतः सन् भवस्य शिवस्य प्रसादात् भवं संसारं न एति न प्राप्नोति, सा मणिकर्णिकेति ॥ २ ॥

चन्द्रांशुका सुनयना धवला कुमारी
वेदैश्च पाणिकमलैर्वरमौक्तिकान्ता ।
या दृश्यते सुकृतिभिर्वरकाशिकायां,
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥ ३ ॥

मालां सुपङ्कजमयीं करकण्ठयोर्या
धत्ते वरोद्यतकरे शुभमातुलाङ्गम् ।
हृद्यञ्च पाणियुगलं शुभपश्चिमास्यं
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥ ४ ॥

दानावगाहसुरपूजनतर्पणादि
यस्यामनन्तफलदं भवति प्रसङ्गात् ।
भक्त्या कृतं यदि सदैव जगत् पुनाति
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥ ५ ॥

चन्द्रांशुकेति । वरकाशिकायां श्रेष्ठवाराणसीक्षेत्रे सुकृतिभिः पुण्यवद्भिः जनैः या चन्द्रांशुका चन्द्रवत् विशुद्धवसना सुनयना धवला श्वेताङ्गी कुमारी वेदैश्चतुर्भिरित्यर्थः पाणिकमलैः उपलक्षितेति यावत् चतुर्भुजेत्यर्थः, तथा वरा या मौक्तिः मुक्तामाला तद्वत् कान्ता रम्या दृश्यते, सा मणिकर्णिकेति ॥ ३ ॥

मालामिति । या करकण्ठयोः करे कण्ठे चेत्यर्थः सुपङ्कजमयीं चारुकमलमयीं मालां तथा वरदानार्थम् उद्यते उत्क्षिप्ते करे शुभं सुन्दरं मातुलाङ्गं तदाख्यं फलविशेषं शुभं पश्चिमास्यं पश्चिमदिगभिमुखं हृद्यं पाणियुगलञ्च धत्ते धारयति, सेति ॥ ४ ॥

दानेति । यस्यां प्रसङ्गात् दानम् अवगाहः सुरपूजनं तर्पणादि च यदि भक्त्या कृतं तत् अनन्तफलदं भवति, या च सदैव जगत् पुनाति पवित्रीकरोति, सेति ॥ ५ ॥

स्वर्गस्तृणं भवति चीरधरोऽपि राजा
मृत्युः सखा सुखहरोऽपि शवः शिवः स्यात्।
पातोऽपि यत्र सुरसम्मत उत्तमाद्या
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥ ६ ॥
सुप्तोऽपि योगिसमतां समुपैति यत्र
मग्नः स्मरेद्यदि शिवं स तु कालकालः।
यद्ध्यानतोऽप्यभयमेति च दूरवासी
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥ ७ ॥
संसारचिन्तामणिरत्र यस्मात्
तत्तारकं सज्जनकर्णिकायाम्।
शिवोऽभिधत्ते सहसान्तकाले।
तद्गीयतेऽसौ मणिकर्णिकेति ॥ ८ ॥

स्वर्ग इति। यत्र स्वर्गः तृणं तृणसम इत्यर्थः चीरधरोऽपि कौपीनवानपि राजा, मृत्युः सखा मित्रं भवति, तथा सुखहरोऽपि दुःखकरोऽपीत्यर्थः शवः मृतः जनः शिवः स्यात्, पातः अवगाहन-मपीत्यर्थः सुराणां देवानां सम्मतः अभीष्टः, या च उत्तमाद्या उत्तमेषु आद्या श्रेष्ठेत्यर्थः उत्तमा येति पाठान्तरम्। सेति ॥ ६ ॥

सुप्त इति। यत्र मणिकर्णिकायां सुप्तोऽपि निद्रितोऽपि जनः योगिनः समतां तुल्यतां समुपैति प्राप्नोति, यदि मग्नः अस्यामिति शेषः शिवं स्मरेत् ध्यायेत् तदा स तु कालस्य यमस्य कालः यमः। दूरवासी अपि जनः यस्या ध्यानतः स्मरणात् अभयम् एति च प्राप्नोति च, सेति ॥ ७ ॥

संसारेति। यस्मात् अत्र मणिकर्णिकायां संसारस्य चिन्ता-मणिः हरः सज्जनानां साधूनां कर्णिकायां कर्णरन्ध्रे अन्तकाले

मोक्षलक्ष्मीमहापीठमणिस्तच्चरणाब्जयोः ।
कर्णिकेति ततः प्राहुर्यां जना मणिकर्णिकाम् ॥ ९ ॥
मणिकर्ण्याः स्तोत्रमिदं भुक्तिमुक्तिप्रदं वरम् ।
पठतां शृण्वताञ्चाशु प्रसन्ना मणिकर्णिका ॥ १० ॥

इति श्रीगङ्गाधरकविविरचितं श्रीमणिकर्णिकास्तोत्रं सम्पूर्णम् ।

---

## मोहमुद्गरः ।

---

मूढ जहीहि धनागमतृष्णां,
कुरु तनुबुद्धे मनसि वितृष्णाम् ।

सङ्ख्या तत् प्रसिद्धं तारकं मन्त्रमिति यावत अभिधत्ते कथयति ददातीति यावत् तत् तस्मात् असौ मणिकर्णिकेति गीयते कीर्त्यते । उपजातिवृत्तम् ॥ ८ ॥

मोक्षेति । तस्याः मणिकर्णिकाया देव्याश्चरणाब्जयोः चरणकमलयोः कर्णिकेति नाम मोक्षलक्ष्म्याः महापीठमेव मणिः अस्तीति शेषः ततः कारणात् जनाः यां मणिकर्णिकां प्राहुः कथयन्ति । अनुष्टुब्वृत्तम् ॥ ९ ॥

मणिकर्ण्या इति । मणिकर्णिका इदं वरं श्रेष्ठं भुक्तिमुक्तिप्रदं मणिकर्ण्याः स्तोत्रं पठतां शृण्वताञ्च जनानां प्रसन्ना आशु भवतु । अनुष्टुब्वृत्तम् ॥ १० ॥

---

मूढेति । हे मूढ ! धनागमेषु अर्थोपार्जनेषु तृष्णां लालसां

यल्लभसे निजकर्मोपात्तं
वित्तं,तेन विनोदय चित्तम् ॥ १ ॥

अर्थमनर्थं भावय नित्यं, नास्ति ततः सुखलेशः सत्यम्।
पुत्रादपि धनभाजां भीतिः, सर्वत्रैषा विहिता रीतिः ॥२॥

का तव कान्ताः? कस्ते पुत्त्रः? संसारोऽयमतीव विचित्रः।
कस्य त्वं वा? कुत आयातः? तत्त्वं चिन्तय तदिदं भ्रातः॥३

मा कुरु धनजनयौवनगर्वं, हरति निमेषात् कालः सर्वम्।
मायामयमिदमखिलं हित्वा, ब्रह्मपदं प्रविशाशु विदित्वा॥४॥

जहीहि त्यज। हे तनुबुद्धे! अल्पमते! मनसि वितृष्णां तृष्णाराहित्यं कुरु। निजकर्मणा उपात्तं लब्धं यत् वित्तं धनं लभसे प्राप्नोषि तेन चित्तं मनः विनोदय सान्त्वय। अधिकेषु प्रयासो न कार्य्य इति भावः॥ १ ॥

अर्थमिति। अर्थं धनम् अनर्थं निष्प्रयोजनं विपद्धेतु वा नित्यं सततं भावय, ततः अर्थात् सुखलेशः नास्ति सत्यम्। धनभाजां धनिनां पुत्रादपि भीतिः भयं विद्यते इति शेषः, एषा रीतिः सर्वत्र विहिता स्थितेत्यर्थः॥ २ ॥

केति। तव कान्ता का? ते तव पुत्रः कः? न कापि कान्ता न कोऽपि पुत्र इत्यर्थः, अयं संसारः अतीव विचित्रः अद्भुतः, त्वं कस्य? कुतः कस्मात् आयातः आगतः, हे भ्रातः! तदिदं तत्त्वं चिन्तय भावय। कोऽपि कस्य नेति भावः॥ ३ ॥

मेति। धनजनयौवनेषु गर्वम् अहङ्कारं मा कुरु, कालः अन्तकः निमेषात् अत्यल्पादेव क्षणात् सर्वं हरति। अतः मायामयम् अविद्यामयम् इदम् अखिलं जगत् हित्वा त्यक्त्वा आशु शीघ्रं विदित्वा ब्रह्मपदं प्रविश॥ ४ ॥

नलिनीदलगतजलमतितरलं, तद्वज्जीवितमतिशयचपलम् ।
विद्धि व्याधिव्यालग्रस्तं, लोकं शोकहतञ्च समस्तम् ॥ ५ ॥
तत्त्वं चिन्तय सततं चित्ते, परिहर चिन्तां नश्वरवित्ते ।
क्षणमिह सज्जनसङ्गतिरेका, भवति भवार्णवतरणे नौका ॥ ६ ॥
अष्टकुलाचलसप्तसमुद्राः, ब्रह्म-पुरन्दर-दिनकर-रुद्राः ।
न त्वं, नाहं, नायं लोकः, तदपि किमर्थं क्रियते शोकः ॥ ७ ॥
यावद्वित्तोपार्जनशक्तः, तावत् निजपरिवारो रक्तः ।
तदनु च जरया जर्जरदेहे, वार्त्तां कोऽपि न पृच्छति गेहे ॥ ८ ॥

नलिनीति । नलिनीदलगतजलं पद्मपत्रस्थितं जलम् अतितरलम् अतिशयेन चञ्चलम् । जीवितं जीवनं तद्वत् नलिनीदलगतजलवत् अतिशयेन चपलम् । समस्तं लोकं व्याधयः रोगा एव व्यालाः तैर्ग्रस्तं कवलितं शोकहतञ्च विद्धि जानीहि । उपमारूपकयोः संसृष्टिः ॥ ५ ॥

तत्त्वमिति । चित्ते सततं तत्त्वं चिन्तय, नश्वरवित्ते अस्थिरधने चिन्तां परिहर त्यज । इह जगति क्षणम् अल्पकालमपि परत्राध्याहार्य्यः एका केवला सज्जनैः सङ्गतिः संसर्गः भवार्णवतरणे संसारसागरपारगमने नौका भवति । रूपकालङ्कारः ॥ ६ ॥

अष्टेति । अष्ट कुलाचलाः कुलपर्वताः हिमाद्रिप्रभृतयः सप्तसमुद्राः लवणेक्ष्वादयः ब्रह्मा पुरन्दरः इन्द्रः दिनकरः सूर्य्यः रुद्रश्च न स्थायिन इति शेषः । त्वं न, अहं न, अयं लोकः जगच्च न स्थायीति शेषः, तदपि तथापि किमर्थं शोकः क्रियते ? नैव शोकः कार्य्य इत्यर्थः ॥ ७ ॥

यावदिति । यावत् यत्कालपर्य्यन्तं वित्तस्य धनस्य उपार्जने शक्तः समर्थः भवति लोक इति शेषः तावत् निजपरिवारः रक्तः सन्तुष्टः तिष्ठतीति शेषः । तदनु तदनन्तरञ्च जरया वार्द्धक्येन

कामं क्रोधं लोभं मोहं, त्यक्त्वात्मानं पश्य हि कोऽहम् ।
आत्मज्ञानविहीना मूढ़ाः, ते पच्यन्ते नरकनिगूढ़ाः ॥ ९ ॥
सुरमन्दिरतरुमूलनिवासः, शय्या भूतलमजिनं वासः ।
सर्वपरिग्रहभोगत्यागः, कस्य सुखं न करोति विरागः ॥१०॥
बालस्तावत् क्रीड़ासक्तः, तरुणस्तावत् तरुणीरक्तः ।
वृद्धस्तावत् चिन्तामग्नः, परमे ब्रह्मणि कोऽपि न लग्नः ॥११
शत्रौ मित्रे पुत्रे बन्धौ, मा कुरु यत्नं विग्रहसन्धौ ।
भव समचित्तः सर्वत्र त्वं वाञ्छस्यचिराद् यदि विष्णुत्वम् ॥१२

जर्जरदेहे देहे जीर्णे इत्यर्थः अर्थोपार्जनाक्षमे इति भावः कोऽपि जनः गेहे वार्त्तामपि न पृच्छति ॥ ८ ॥

काममिति । कामं क्रोधं लोभं मोहञ्च त्यक्त्वा कोऽहमिति आत्मानं पश्य अवलोकय । ये मूढ़ाः आत्मनः ज्ञानेन कोऽहमिति पर्य्यालोचनेन विहीनाः, ते नरके निगूढ़ाः पतिताः सन्तः पच्यन्ते पाकं लभन्ते इत्यर्थः ॥ ९ ॥

सुरेति । सुरमन्दिरे देवागारे तरुमूले च निवासः, भूतलं शय्या, अजिनं मृगचर्म वासः वसनं तथा सर्वस्य वस्तुनः परिग्रहे भोगे च त्यागो यत्र तथाभूतः विरागः वासनाराहित्यं कस्य जनस्य सुखं न करोति ? अपितु सर्वस्यैवेत्यर्थः ॥ १० ॥

बाल इति । बालस्तावत् क्रीड़ायाम् आसक्तः भवति जन इति सर्वत्र योज्यम् । तरुणः युवा तावत् तरुणीषु युवतीषु रक्तः अनुरागवान् । वृद्धस्तावत् चिन्तासु मग्नः, किन्तु परमे ब्रह्मणि कोऽपि जनः न लग्नः न शक्त इत्यर्थः ॥ ११ ॥

शत्राविति । शत्रौ मित्रे पुत्रे बन्धौ विग्रहसन्धौ विरोधप्रणये विषये यत्नं मा कुरु । यदि अचिरात् शीघ्रं विष्णुत्वं मोक्षमिति

यावज्जननं तावन्मरणं, तावज्जननीजठरे शयनम् ।
इति संसारे स्फुटतरदोषः, कथमिह मानव! तव सन्तोषः १३
दिनयामिन्यौ सायं प्रातः, शिशिरवसन्तौ पुनरायातौ ।
कालः क्रीडति गच्छत्यायुः, तदपि न मुञ्चत्याशावायुः ॥१४॥
अङ्गं गलितं पलितं मुण्डं, दन्तविहीनं यातं तुण्डम् ।
करधृतकम्पितशोभितदण्डं, तदपि न मुञ्चत्याशाभाण्डम्॥१५
त्वयि मयि चान्यत्रैको विष्णुः, व्यर्थं कुप्यसि मय्यसहिष्णुः ।
सर्वं पश्यात्मन्यात्मानं, सर्वत्रोत्सृज भेदज्ञानम् ॥ १६ ॥

भावः वाञ्छसि अभिलषसि, तदा सर्वत्र शत्रु मित्रादिष्वित्यर्थः त्वं समचित्तः अभिन्नबुद्धिर्भव ॥ १२ ॥

यावदिति । यावत् जननं जन्मग्रहणं तावत् मरणं तावत् जननीजठरे मातृगर्भे शयनञ्च भवतीति शेषः । संसारे इति स्फुटतरदोषः अतिस्पष्टो दोषः, हे मानव! इह संसारे कथं तव सन्तोषः प्रीतिः? नैव सन्तोषः कार्य्य इति भावः ॥ १३ ॥

दिनेति । दिनयामिन्यौ दिवसरजन्यौ सायं प्रातः, शिशिरवसन्तौ पुनरायातौ पुनः पुनरेते आयान्ति यान्तीति भावः । कालः क्रीडति, आयुः जीवनकालः गच्छति, तदपि आशावायुः न मुञ्चति न त्यजति लोकमिति शेषः ॥ १४ ॥

अङ्गमिति । अङ्गं शरीरं गलितं शिथिलतां गतमित्यर्थः मुण्डं शिरः पलितं जरया श्वेतीकृतकेशमित्यर्थः । तुण्डं मुखं दन्तैः विहीनं जातम् । करेण धृतः कम्पितेन कम्पेन शोभितः दण्डो यष्टिर्यस्य तादृशं शरीरमिति शेषः, तदपि तथापि आशाभाण्डम् आशारूपं भाण्डं पात्रविशेषं मूलधनं वा न मुञ्चति न त्यजति ॥१५॥

त्वयीति । एको विष्णुरीश्वरः त्वयि मयि अन्यत्र च सर्वस्मिन् जने तिष्ठतीति शेषः । तदा असहिष्णुः सन् मयि व्यर्थं निरर्थकं

षोडशपञ्झटिकाभिरशेषः, शिष्याणां कथितोऽभ्युपदेशः।
येषां नैष करोति विवेकं, तेषां कः कुरुतामतिरेकम् ॥ १७॥

इति श्रीशङ्कराचार्यविरचितो मोहमुद्गरः समाप्तः।

---

# घटकर्परः।

---

निचितं खमुपेत्य नीरदैः प्रियहीना हृदयावनीरदैः।
सलिलैर्निहितं रजः क्षितौ रविचन्द्रावपि नोपलक्षितौ ॥१॥

कुप्यसि। यदि तव मया कश्चिदपराधः कृतः, स विष्णुना नियोजितेन कृतत्वात् सोढव्य इति भावः, त्वया हृषीकेश हृदिस्थितेन यथा नियुक्तोऽस्मि तथा करोमीति शास्त्रात्। आत्मनि सर्वं वस्तु आत्मानम् ईश्वररूपं पश्य अवधारयेत्यर्थः। सर्वत्र भेदज्ञानम् उत्सृज त्यज ॥ १६ ॥

षोडशेति। षोडशभिः पज्झटिकाभिः छन्दोविशेषैः शिष्याणाम् अशेषः सम्पूर्णः अभ्युपदेशः शोभन उपदेशः कथितः मयेति शेषः। एषः उपदेशः येषां विवेकं न करोति न जनयति, कः उपदेशः जनो वा तेषाम् अतिरेकम् एतस्मादुपदेशादधिकं कुरुताम् उपदिशत्वित्यर्थः न कोऽपीति भावः। पज्झटिकालक्षणमुक्तं छन्दोमञ्जर्याम्। प्रतिपदयमकितषोडशमात्रा इति ॥ १७ ॥

---

निचितमिति। प्रियहीनायाः विरहिण्याः हृदयमेव अवनी भूमिः तस्याः दरैः खण्डनकारिभिरित्यर्थः अतीवोद्दीपकत्वादिति भावः नीरदैः मेघैः निचितं व्याप्तं खम् आकाशम् उपेत्य प्राप्य

हंसा नदन्मेघभयाद् द्रवन्ति निशामुखान्यद्य न चन्द्रवन्ति ।
नवाम्बुमत्ताः शिखिनो नदन्ति मेघागमे कुन्दसमानदन्ति ॥ २ ॥

मेघावृतं निशि न भाति नभो वितारं
निद्राभ्युपैति च हरिं सुखसेवितारम् ।
सेन्द्रायुधश्च जलदोऽधरसन्निभानां
संरम्भमावहति भूधरसन्निभानाम् ॥ ३ ॥

सलिलैः वर्षवारिभिः क्षितौ पृथिव्यां रजः धूलिः निचितं व्याप्तं नाशितमित्यर्थः रविचन्द्रावपि न उपलक्षितौ न दृष्टौ । सुन्दरीवृत्तम् । विषमे ससजा गुरुः समे सभरालौ यदि सुन्दरी तदेति तल्लक्षणात् । अत्र पूर्वार्द्धे पादान्तयमकम् ॥ १ ॥

हंसा इति । कुन्दसमानदन्ति ! कुन्दपुष्पनिभदशने ! अद्य मेघागमे हंसाः नदद्भ्यः गर्जद्भ्यः मेघेभ्यः भयात् द्रवन्ति पलायन्ते मानसं गच्छन्तीति भावः । निशामुखानि न चन्द्रवन्ति चन्द्रोदय-रहितानीत्यर्थः मेघावृतत्वान्नभस इति भावः । नवैः अम्बुभिः जलैः मत्ताः प्रहृष्टाः शिखिनः मयूराः नदन्ति केकारवं कुर्वन्ती-त्यर्थः । कस्यचित् कान्तां प्रत्युक्तिरियम् । अत्र सर्वपादान्तयमकम् । यमकलक्षणमुक्तं दर्पणे । सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते इति । वसन्ततिलकं वृत्तम् ॥२॥

मेघावृतमिति । नभः आकाशं मेघावृतम् अतएव वितारं विग-तनक्षत्रमण्डलं सत् निशि रात्रौ न भाति न शोभते । निद्रा सुख-सेवितारं हरिं नारायणम् अभ्युपैति, वर्षायाम् आषाढशुक्लैकादशी-मारभ्य कार्त्तिकशुक्लैकादशीं यावत् हरिः शेते इति भावः । तथाच मत्स्यपुराणे । शेते विष्णुः सदाषाढे भाद्रे च परिवर्त्तते । कार्त्तिके परिबुध्येत शुक्लपक्षे हरेर्दिने ॥ सेन्द्रायुधः शक्रधनुर्युतः जलदो मेघः धरसन् पर्वतगामी सन् भूधरसन्निभानां पर्वततुल्यानाम् इभानां हस्तिनां संरम्भं क्रोधम् आवहति सम्पादयति ॥ ३ ॥

सतडित्जलदार्पितं नगेषु स्वनदम्भोधरभीतपन्नगेषु ।
परिधीररवं जलं दरीषु प्रपतत्यद्भुतरूपसुन्दरीषु ॥ ४ ॥

क्षिप्रं प्रसादयति सम्प्रति कोऽपि तानि
कान्तामुखानि रतिविग्रहकोपितानि ।
उत्कण्ठयन्ति पथिकान् जलदाः स्वनन्तः
शोकः समुद्भवति तद्वनितास्वनन्तः ॥ ५ ॥

छादिते दिनकरस्य भावने
खाज्जले पतति शोकभावने ।
मन्मथे च हृदि हन्तुमुद्यते
प्रोषितप्रमदयेदमुच्यते ॥ ६ ॥

सतडिदिति । स्वनद्भ्यः गर्जद्भ्यः अम्भोधरेभ्यः मेघेभ्यः भीताः पन्नगाः सर्पाः येषु तथाभूतेषु नगेषु पर्वतेषु परिधीरः गम्भीरः रवः ध्वनिः यस्य तादृशं सतडिद्भिः सविद्युद्भिः जलदैः अर्पितं दत्तं जलम् अद्भुतरूपाः आश्चर्यरूपाः अतएव सुन्दर्यः शोभनाः तासु दरीषु कन्दरासु प्रपतति प्रकर्षेण पतति । सर्वपादान्तयमकम् ॥ ४ ॥

क्षिप्रमिति । सम्प्रति मेघागमे कोऽपि युवेति भावः रतिविग्रहेण सुरतकलहेन कोपितानि तानि कान्तामुखानि क्षिप्रं शीघ्रं प्रसादयति प्रसन्नानि करोतीत्यर्थः । जलदाः मेघाः स्वनन्तः गर्जन्तः सन्तः पथिकान् विरहिण इत्यर्थः उत्कण्ठयन्ति उत्सुकान् स्वगृहगमनार्थमिति भावः कुर्वन्तीत्यर्थः । तेषां पथिकानां वनितासु कान्तासु अनन्तः महान् शोकः विरहदुःखमित्यर्थः समुद्भवति सञ्जायते । सर्वपादान्तयमकम् ॥ ५ ॥

छादित इति । दिनकरस्य सूर्यस्य भावने उदये छादिते आच्छन्ने, शोकभावने विरहदुःखोद्दीपके जले वर्षविले खात् आकाशात् पतति तथा मन्मथे कामे हृदि हन्तुम् उद्यते च सति प्रोषितप्रमदया

सर्वकालमवलम्ब्य तोयदा
आगता स्थ दयितो गतो यदा ।
निर्घृणेन परदेशसेविना
मारयिष्यथ हतेन मां विना ॥ ७ ॥
ब्रूत तं पथिकपांशुलं घनाः !
यूयमेव पथि शीघ्रलङ्घनाः ।
अन्यदेशरतिरद्य मुच्यतां
साथवा तव वधूः किमुच्यताम् ॥ ८ ॥
हंसपङ्क्तिरपि नाथ ! सम्प्रति
प्रस्थिता वियति मानसं प्रति ।

प्रोषितभर्तृकया इदम् उद्याने उच्यते । रथोद्धतावृत्तम् । रात् परै-र्नरलगैरथोद्धतेति तल्लक्षणात् । सर्वपादान्तयमकम् ॥ ६ ॥

सर्वेति । हे तोयदाः ! मेघाः ! सर्वकालम् अवलम्ब्य व्यतीत्य यदा दयितः कान्तः गतः विदेशमिति शेषः तदैव आगताः स्थ । निर्घृ-णेन निष्कृपेण परदेशवासिना प्रवासिना हतेन हतभाग्येनेति यावत् दयितेनेति शेषः विना मां मारयिष्यथ । रथोद्धतावृत्तम् । पादान्तयमकम् ॥ ७ ॥

ब्रूतेति । हे घनाः ! मेघाः ! यूयमेव न त्वन्ये इत्यन्यव्यवच्छेदक एवशब्दार्थः । पथि मार्गे शीघ्रलङ्घनाः द्रुतगामिनः अतः तं पथि-कपांशुलं पान्थाधमं ब्रूत कथयत । किमित्याह अन्येति । अद्य इदानीम् अन्यदेशे रतिः अनुरागः मुच्यतां त्यज्यताम् अथवा अत्यागे इति भावः सा तव वधूः कान्ता किम् उच्यतां कथ्यताम् । रथो-द्धतावृत्तम् । पादान्तयमकम् ॥ ८ ॥

हंसेति । हे नाथ ! सम्प्रति हंसपङ्क्तिरपि वियति आकाशे मानसं सर इति शेषः प्रति प्रस्थिताः, यातकोऽपि दयितः सन्

चातकोऽपि तृषितोऽम्बु याचते
दुःखिता पथिक! सा प्रिया च ते ॥ ९ ॥
नीलशस्यमभिभाति कोमलं
वारि विन्दति च चातकोऽमलम्।
अम्बुदैः शिखिगणो विनाद्यते।
का रतिर्दयितया विनाद्य ते ॥ १० ॥
मेघशब्दमुदिताः कलापिनः
प्रोषिता हृदयशोकलापिनः।
तोयदागमकृशापि सा द्य ते
दुर्धरेण मदनेन साद्यते ॥ ११ ॥

अम्बु जलं याचते प्रार्थयते। हे पथिक! सा च ते तव प्रिया दुःखिता त्वां याचते इति शेषः। अस्मिन् समये तिर्यञ्चोऽपि स्वं स्वमिष्टं कामयन्ते मानुषीं मां प्रति का कथेति भावः। रथोद्धतावृत्तम्। पादान्तयमकम् ॥ ९ ॥

नीलेति। कोमलं मृदुलं नीलशस्यम् अभिभाति राजते, चातकः अमलं निर्मलं वारि जलं विन्दति लभते च। शिखिगणः मयूरगणः अम्बुदैः मेघैः विनाद्यते विशेषेण शब्दाय्यते हर्षादिति भावः। अचेतनाः शस्यादयः अचेतनाश्च तिर्यञ्चः अद्य सुखमनुभवन्तीति भावः। अद्य इदानीं दयितया कान्तया विना ते तव का रतिः सन्तोषः? न कापीत्यर्थः। तस्मात् शीघ्रमागच्छेति भावः। रथोद्धतावृत्तम्। पादान्तयमकम् ॥ १० ॥

मेघेति। कलापिनः मयूराः मेघशब्देन मुदिताः प्रहृष्टाः। प्रोषिताः प्रवासिनः हृदयस्य शोकेन लपन्ति विलपन्तीति तथोक्ताः। अद्य सांप्रतं ते तव सा प्रिया तोयदागमेन वर्षागमेन कृशापि

किं क्रपापि तव नास्ति कान्तया
पाण्डुगण्डपतितालककान्तया ।
शोकसागरजलेऽद्य पातितां
त्वद्गुणस्मरणमेव पाति ताम् ॥ १२ ॥

कुसुमितकुटजेषु काननेषु
प्रियरहितेषु समुत्सुकाननेषु ।
वहति च कलुषे जले नदीनां
किमिति च मां समवेक्षसे न दीनाम् ॥ १३ ॥

मार्गेषु मेघसलिलेन विनाशितेषु

क्षीणापि दुर्धरेण दुःसहेन मदनेन बाध्यते पीड्यते । रथोद्धता-वृत्तम् । पादान्तयमकम् ॥ ११ ॥

किमिति । पाण्डौ पाण्डुवर्णे विरहादिति भावः गण्डे पतितः अलकानां चूर्णकुन्तलानाम् अन्तः यस्याः तथाभूतया विरहिण्याः केशसंस्कारनिषेधादिति भावः । कान्तया हेतुभूतयेत्यर्थः तव कृपापि दयापि किं नास्ति ? अद्य तव गुणस्मरणमेव शोक-सागरजले विरहदुःखसमुद्रसलिले पातितां तां तव कान्तामिति शेषः पाति रक्षति । तव गुणस्मरणेनैव सा जीवतीति भावः । रथो-द्धतावृत्तम् । पादान्तयमकम् ॥ १२ ॥

कुसुमितेति । काननेषु वनेषु कुसुमिताः सञ्जातपुष्पाः कुटजाः वृक्षभेदा येषु तथाभूतेषु सत्सु, प्रियरहितेषु कान्तविहीनेषु नारीजने-ष्विति शेषः समुत्सुकानि समुत्कण्ठितानि आननानि मुखानि येषां तादृशेषु सत्सु तथा नदीनां कलुषे आविले जले वहति च सति एतादृशोद्दीपनकाले इति भावः किमिति कथं दीनां कातरां मां न समवेक्षसे न पश्यसि ? पादान्तयमकम् ॥ १३ ॥

मार्गेष्विति । हे सखि ! मेघसलिलेन वृष्टिजलेन मार्गेषु

कामे धनुः स्पृशति तेन विना श्रितेषु ।
गम्भीरमेघरसितव्यथिता कदाहं
जह्यां सखि ! प्रियवियोगजशोकदाहम् ॥१४॥

कुसुमगन्धतया वने जितानां
स्वनदम्भोधरवायुवीजितानाम् ।
मदनस्य कृते निकेतकानां
प्रतिभान्त्यद्य वनानि केतकानाम् ॥ १५ ॥

तत् साधु, यत् त्वां सुतरं ससर्ज
प्रजापतिः कामनिवास सर्ज ! ।
त्वं मञ्जरीभिः प्रवरो वनानां
नेत्रोत्सवश्चासि सयौवनानाम् ॥ १६ ॥

पथिषु विनाशितेषु विध्वंसितेषु तथा तेन कान्तेन विना कामे श्रितेषु तीक्ष्णबाणं धनुः स्पृशति सति गम्भीरेण मेघरसितेन मेघरवेण व्यथिता अहं कदा प्रियाविबोगजशोकदाहं कान्तविरहदुःखसन्तापं जह्यां त्यजेयम् । वसन्ततिलकं वृत्तम् । पादान्तयमकम् ॥१४॥

कुसुमगन्धतयेति । अद्य साम्प्रतं वनेजितानां वनवर्द्धितानां स्वनतां गर्जताम् अम्भोधराणां वायुभिः वीजितानां कम्पितानां मदनस्य कामस्य कृते निकेतकानां विकसतामित्यर्थः केतकानां वनानि कुसुमगन्धतया अतीवसौरभवत्तया प्रतिभान्ति राजन्ते । पादान्तयमकम् ॥ १५ ॥

तदिति । हे कामनिवास ! मदनोद्दीपक सर्ज ! प्रजापतिः विधाता त्वां सुतरं यत् ससर्ज सृष्टवान् तत् साधु उचितमेवेत्यर्थः । त्वं मञ्जरीभिः वनानां प्रवरः श्रेष्ठः तथा सयौवनानां यूनां नेत्रोत्सवः नयनानन्दनश्च असि । उपजातिवृत्तम् । पादान्तयमकम् ॥ १६ ॥

नवकदम्ब ! शिरोवनतास्मि ते
वसति यत् मदनः कुसुमस्मिते ।
कुटज ! किं कुसुमैरुपहस्यते
निपतितास्मि सुदुःप्रसहस्य ते ॥ १७ ॥

तरुवर ! विनतास्मि ते सदाहं
हृदयं मे प्रकरोषि किं सदाहम् ।
तव कुसुमनिरीक्षणेऽपऽदेहं
विसृजेयं सहसैव नीप ! देहम् ॥ १८ ॥

कुसुमैरुपशोभितां सितै-
र्घनमुक्ताम्बुलवप्रकाशितैः ।
मधुनः समवेक्ष्य कालतां
भ्रमरश्चुम्बति यूथिकालताम् ॥ १९ ॥

नवेति । हे नवकदम्ब ! ते तव सकाशे इति शेषः शिरोवनता अवनतशिरा इत्यर्थः अस्मि भवामि त्वां प्रणमामीत्यर्थः । यत् यतः मदनः कामः ते तव कुसुमस्य स्मिते वसति अधितिष्ठति । कदम्बस्य कामोद्दीपकत्वादिति भावः । हे कुटज ! कुसुमैः किं कथम् उपाहस्यते उपहासः क्रियते त्वयेति शेषः, सुदुःप्रसहस्य अतिदुःसहस्य ते तव सकाशे इति शेषः निपतिता अस्मि त्वां प्रणमामीति भावः । द्रुतविलम्बितं* वृत्तम् । द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात् । पादान्तयमकम् ॥१७॥

तरुवरेति । हे नीप तरुवर ! अहं सदैव ते तव विनता अस्मि, मे मम हृदयं किं कथं सदाहं सन्तप्तं प्रकरोषि ? तव कुसुमनिरीक्षणे सति सहसैव अहम् अपदे अस्थाने देहं विसृजेयं त्यजेयम् । पादान्तयमकम् ॥ १८ ॥

कुसुमैरिति । भ्रमरः मधुनः वसन्तस्य कालतां समयत्वं सम-

तासामृतुः सफल एव हि या दिनेषु
सेन्द्रायुधाम्बुधरगर्जितदुर्दिनेषु ।
रत्युत्सवं प्रियतमैः सह मानयन्ति
मेघागमे प्रियसखीश्च समानयन्ति ॥ २० ॥

एतन्निशम्य विरहानलपीड़िताया:
तस्या वचः खलु दयालुरपीड़िताया: ।
स्वं स्वारवेण कथितं जलदैरमोघैः
प्रत्याययौ स गृहमूनदिनैरमोघैः ॥ २१ ॥

आलम्ब्य चाम्बु तृषितः करकोषपेयम्

वेच्म दृष्ट्वा घनैः मेघैः मुक्तानाम् त्यक्तानाम् अम्बूनां जलानां लवा बिन्दव इव प्रकाशितानि तैः सितैः शुभ्रैः कुसुमैः उपशोभितां यूथिकालतां चुम्बति । सुन्दरीवृत्तम् । पादान्तयमकम् ॥ १९ ॥

तासामिति । याः सेन्द्रायुधानाम् अम्बुधराणां मेघानां गर्जितेन दुर्दिनेषु दुःखदेष्विति भावः दिनेषु प्रियतमैः सह रत्युत्सवं सुरतसुखं मानयन्ति कुर्वन्तीत्यर्थः तथा मेघागमे प्रियसखीः समानयन्ति समीपे रक्षन्तीति भावः तासां नारीणाम् एष ऋतुः वर्षाकालः सफलो हि सफल एव । वसन्ततिलकं वृत्तम् । पादान्तयमकम् ॥ २० ॥

एतदिति । स दयालुः कान्तः गृहपतिरिति यावत् विरहानलेन पीड़िताया: सन्तापग्रस्तायाः अपीड़िताया: रोगरहिताया: तस्याः कान्तायाः अमोघैः अव्यर्थैः सजलैरित्यर्थः । महत्तमैः समूहैरिति वार्थः । मेघैः स्वारवेण निजध्वनिना कथितम् एतत् वचः निशम्य अनु श्रुत्वेवेत्यर्थः अमोघैः विलम्बरहितैरिति भावः ऊनदिनैः अल्पदिनैः स्वं गृहं प्रत्याययौ । वसन्ततिलकं वृत्तम् । पादान्तयमकम् ॥ २१ ॥

आलम्ब्येति । अहं तृषितः पिपासितः सन् करकोषपेयं

भावानुरक्तवनितासुरतैः शपेयम् ।
जीयेय येन कविना यमकैः परेण
तस्मै वहेयमुदकं घटकर्परेण ॥ २२ ॥

इति श्रीघटकर्परकविकृतं यमककाव्यं समाप्तम् ।

---

# नीतिप्रदीपः ।

---

रत्नाकरः किं कुरुते स्वरत्नैः ?
विन्ध्याचलः किं करिभिः करोति ? ।
श्रीखण्डखण्डैर्मलयाचलः किं ?
परोपकाराय सतां विभूतिः ॥ १ ॥

कराञ्जलिपानीयम् अम्बु जलम् आलम्ब्य गृहीत्वा भावेन प्रेम्णा अनुरक्ता या वनिता कान्ता तस्याः सुरतैश्च शपेयं येन परेण अन्येन कविना यमकैः यमककाव्यैः जीयेय अहमिति शेषः, तस्मै तदर्थं घटकर्परेण कलसखण्डेन उदकं वहेयम् । यद्यहं पराजितः सन् घटकर्परेण उदकं न वहामि तदा मे तृषितस्य पानीयपानं प्रेयस्या च सह सुरतसुखं कदापि मा भूदिति शपथं करोमीति निष्कर्षः । वसन्ततिलकं वृत्तम् । पादान्तयमकम् ॥ २२ ॥

---

रत्नाकर इति । रत्नाकरः समुद्रः स्वरत्नैः किं कुरुते ? विन्ध्याचलः करिभिः स्वजनितैरिति शेषः किं करोति ? मलयाचलः श्रीखण्डखण्डैः चन्दनकाष्ठैः किं करोतीति शेषः, सतां विभूतिः सम्पद् परेषाम् उपकाराय भवतीत्यर्थः । परोपकारं करोतीति

कर्णावघातनिपुणेन च ताड्यमाना
दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ २ ॥

येनाकारि मृणालपत्रमशनं क्रीड़ा करिण्या सह
स्वच्छन्दं भ्रमणञ्च कन्दरगणे पीतं पयो निर्झरम् ।
सोऽयं वन्यकरी नरेषु पतितः पुष्णाति देहं तृणैः
यद्दैवेन ललाटपत्रलिखितं तत् प्रोज्झितुं कः क्षमः ॥३॥

सविशेषोत्तरम् । उपजातिवृत्तम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १ ॥

कर्णेति । भृङ्गाः भ्रमराः कर्णाभ्यामवघातः ताड़नं तत्र निपुणेन दक्षेण करिवरेण गजेन्द्रेण मदान्धा या बुद्धिः तया हेतुना ताड्यमानाः निराक्रियमाणाः अतएव दूरीकृताः भवन्ति, एषा भृङ्गाणां दूरीकरणमित्यर्थः विधेयप्राधान्यात् स्त्रीत्वम् । तस्यैव करिवरस्यैव गण्डयुगस्य कपोलयोरित्यर्थः मण्डनहानिः शोभाक्षयः । ते पुनर्भृङ्गाः पद्मवने कमलकानने चरन्ति । मूर्खसन्निधौ अवज्ञाता अपि पण्डिताः विद्वत्समाजे माननीया भवन्ति, मूर्खाणान्तु पण्डितसहवासजनितसौभाग्यं नश्यत्येवेति अप्रस्तुतप्रशंसया व्यज्यते । वसन्ततिलकं वृत्तम् ॥ २ ॥

येनेति । येन वन्यकरिणा मृणालपत्रम् अशनं भोजनं, करिण्या हस्तिन्या सह क्रीड़ा स्वच्छन्दं स्वेच्छं भ्रमणं पर्यटनञ्च अकारि कृतं, येन च कन्दरगणे सर्वासु दरीषु निर्झरं पयः जलं पीतं, सोऽयं वन्यकरी वनगजः नरेषु पतितः सन् तृणैः देहं पुष्णाति । अतः दैवेन विधिना यत् ललाटपट्टे लिखितं, तत् प्रोज्झितुं

शशिदिवाकरयोर्ग्रहपीड़नं
गजभुजङ्गमयोरपि बन्धनम् ।
मतिमताञ्च विलोक्य दरिद्रतां
विधिरहो बलवान् इति मे मतिः ॥ ४ ॥

व्योमैकान्तविहारिणोऽपि विहगाः सम्प्राप्नुवन्त्यापदं
बध्यन्ते निपुणैरगाधसलिलात् मत्स्याः समुद्रादपि ।
दुर्नीते हि विधौ किमस्ति चरितं कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥५॥

अविदलन्मुकुले वकुले यया
पदमधायि कदापि न हेलया ।
अहह ! सा सहसा विधुरे विधौ
मधुकरी वदरीमनुवर्त्तते ॥ ६ ॥

त्यक्तुम् अतिक्रमितुमित्यर्थः कः जनः क्षमः शक्तः ? न कोपीत्यर्थः । पराधीनता महाक्लेशकरीति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥३॥

शशीति । शशिदिवाकरयोः चन्द्रसूर्य्ययोः ग्रहेण राहुणा पीड़नं, गजभुजङ्गमयोरपि बन्धनं, मतिमतां बुद्धिमतां दरिद्रतां दीनताञ्च विलोक्य अहो आश्चर्य्यं विधिः दैवं, विधिर्विधाने दैवे चेत्यमरः। बलवान् इति मे मम मतिः । द्रुतविलम्बितं वृत्तम् ॥ ४ ॥

व्योमेति व्याख्यातं प्राक् ॥ ५ ॥

अविदलदिति । यया मधुकर्य्या अविदलत् अविकसत् मुकुलं यस्य तादृशे वकुले हेलया अवज्ञया कदापि पदं न अधायि नार्पितं, अहह खेदे, सा मधुकरी सहसा विधौ दैवे विधुरे प्रतिकूले सति अन्यस्य वस्तुनः अलाभे इति भावः, वदरीं कोलिम् अनुवर्त्तते अनुसरति । सुसमये यः साधुमवजानाति तस्य दुःसमये

गतोऽस्मि तीरं जलधेः पिपासया
स चापि शुष्कश्चुलुकीकृतो मया ।
न दृश्यते दोषलवोऽपि तोयधेः
ममैव तत्कर्मफलं विजृम्भते ॥ ७ ॥

सिंहक्षुण्णकरीन्द्रकुम्भगलितं रक्ताक्तमुक्ताफलं
कान्तारे बदरीधिया द्रुतमगाद् भिल्लस्य पत्नी मुदा ।
पाणिभ्यामवगुह्य शुक्लकठिनं तद्वीक्ष्य दूरे जहौ
अस्थाने पततामतीव महतामेतादृशी स्याद् गतिः ॥ ८ ॥

किं ते नम्रतया किमुन्नततया किं ते घनच्छायया

नीचेष्वनुवृत्तिर्भवतीति भावः । अप्रस्तुतप्रशंसालङ्कारः । द्रुतविलम्बितं वृत्तम् ॥ ६ ॥

गत इति । पिपासया जलधेः तीरं गतः अस्मि, स चापि जलधिः मया चुलुकीकृतः गण्डूषेण पीतः अतएव शुष्कः, अतः वारिधेः समुद्रस्य दोषलवोऽपि अल्पोऽपि दोषः न दृश्यते । ममैव तत् कर्मणः फलं विजृम्भते प्रकाशते । अप्रस्तुतप्रशंसालङ्कारः । वंशस्थविलं वृत्तम् ॥ ७ ॥

सिंहेति । भिल्लस्य व्याधजातीयस्य कस्यचित् पत्नी कान्तारे वने बदरीधिया बदरीफलबोधेन सिंहेन क्षुण्णः विदारितः यः करीन्द्रस्य गजेन्द्रस्य कुम्भः तस्मात् गलितं प्रभ्रष्टं रक्ताक्तं मुक्ताफलं प्रतीति शेषः मुदा हर्षेण द्रुतम् अगात् जगाम । ततः पाणिभ्याम् अवगुह्य गृहीत्वा शुष्ककठिनं तत् मुक्ताफलं वीक्ष्य दृष्ट्वा दूरे जहौ तत्याज । तथाहि, अस्थाने अयोग्ये देशे पतताम् अतीव महतां महामहिमशालिनाम् एतादृशी गतिः अवस्था असज्जनावज्ञारूपेति भावः स्यात् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

किं ते पल्लवलीलया किमनया चाशोक ! पुष्पश्रिया ।
यत्त्वन्मूलनिषण्णखिन्नपथिकस्तोमः स्तुवन्नन्वयं
न स्वादूनि मृदूनि खादति फलान्याकण्ठमुत्कण्ठितः ॥९॥
दूरे मार्गान्निवससि पुनः कण्टकैरावृतोऽसि
छायाशून्यः फलमपि च ते वानरैरप्यभक्ष्यम् ।
निर्गन्धस्त्वं मधुररहितः शाल्मले ! सारशून्यः
सेवास्माकं भवति विफला तिष्ठ निश्चस्य यामः ॥१०॥

किमिति । हे अशोक ! ते तव नम्रतया विनतभावेन किम् ? उन्नतया उत्तुङ्गतया किम् ? ते तव घना निविडा छाया तया किम् ? ते तव पल्लवानां लीलया विलासेन किम् ? अनया पुष्पाणां श्रिया शोभया च किम् ? एतत् सर्वं ते निष्प्रयोजनमिति भावः । ननु भोः यत् यतः अयं तव मूले निषण्णः स्थितः खिन्नः श्रान्तः पथिकानां स्तोमः समूहः उत्कण्ठितः क्षुन्निवारणार्थं व्यग्रः अतएव स्तुवन् त्वां प्रशंसन् सन् स्वादूनि मृदूनि कोमलानि फलानि ते इति शेषः आकण्ठम् आकण्ठमित्यर्थः न खादति न भुङ्क्ते । वस्तुतः शोभा-सन्दर्शनेन न जनानां तृप्तिः, सततजनानां क्षुन्निवारणेन जनतृप्तिः कार्य्येति भावः । अप्रस्तुतप्रशंसालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

दूरे इति । हे शाल्मले ! त्वं मार्गात् अध्वनः दूरे निवससि, पथिकानाम् आश्रयदाने तव वैमुख्यमिति भावः । पुनः किञ्च कण्टकैः आवृतः आच्छादितः असि कण्टकभयात् कथञ्चिदपि तवा-श्रयो न पथिकैः स्पृहणीय इति भावः, छायाशून्यः, यदाश्रया तव आश्रयः क्रियते सापि तव नास्तीति भावः, ते तव फलमपि वानरै-रपि अभक्ष्यं न खाद्यम् । त्वं निर्गन्धः अतएव मधुपैः भ्रमरैः रहितः सुतरां सारशून्यः असारश्च । अतः अस्माकं सेवा आनुगत्यं तवेति शेषः विफला भवति, तस्मात् तिष्ठ, निश्चस्य किञ्चित् विश्र-

हंसा पद्मवनाशया मधुलिहः सौरभ्यलाभाशया
पान्थाः स्वादुफलाशया बलिभुजो गृध्राश्च मांसाशया ।
दूरादुन्नतपुष्परागनिकरैर्निःसारमिथ्योन्नते
रे रे शाल्मलिपादप ! प्रतिदिनं के न त्वया वञ्चिताः ॥११॥

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्र स्थिता हि तरवस्तरवस्त एव ।
वन्दामहे मलयमेव यदाश्रयेण
शाखोटनिम्बकुटजान्यपि चन्दनानि ॥ १२ ॥

स्तीति भावः यामः गच्छामः । कमपि दुर्जनवेष्टितं परोपकारविरतं नीचजातीयं धनिनं प्रति लोभेन तदाश्रयप्राप्तानां केषाञ्चित् वचनमिदमिति अप्रस्तुतप्रशंसया व्यज्यते । मन्दाक्रान्तावृत्तम् ॥ १० ॥

हंसा इति । रे रे शाल्मलिपादप ! त्वया दूरात् निःसारैः मिथ्योन्नतैः उन्नतानां विकसितानां पुष्पाणां रागनिकरैः प्रतिदिनं हंसाः पद्मवनाशया कमलनिचयविकाशप्रत्याशया, मधुलिहः भ्रमराः सौरभ्यलाभाशया सौगन्ध्यवासनया, पान्थाः पथिकाः स्वादुफलाशया सुस्वादुफलानि प्राप्स्याम इति लोभेन बलिभुजः काकाः गृध्राश्च मांसाशया सद्योमांसबोधेनेत्यर्थः किमधिकेन, के जनाः न वञ्चिताः न प्रतारिताः ? सर्वे एव प्रतारिता इत्यर्थः । अन्तःसारहीनस्य कस्यचन दृष्टा प्रत्याशया धावतां वैफल्यं भवतीति भावः । अप्रस्तुतप्रशंसालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

किमिति । तेन हेमगिरिणा सुमेरुणा रजताद्रिणा कैलासेन वा किम् ? न किमपि प्रयोजनमित्यर्थः, यत्र हेमगिरौ रजताद्रौ च स्थितास्तरवः तरव एव सामान्यवृक्षपदवाच्या एव । वयन्तु मलयमेव वन्दामहे प्रशंसामः, यस्य मलयस्य आश्रयेण शाखोटनिम्बकुटजानि अपि कटुरसा अपीति भावः चन्दनानि चन्दनरसा अव-

निर्वाणदीपे किमु तैलदानं
चौरे गते वा किमु सावधानम् ।
वयोगते किं वनिताविलासः
पयोगते किं खलु सेतुबन्धः ॥ १३ ॥

शीतेऽतीते वसनमशनं वासरान्ते निशान्ते
क्रीड़ारम्भः कुवलयदृशां यौवनान्ते विवाहः ।
सेतोर्बन्धः पयसि गलिते प्रस्थिते लग्नचिन्ता
सर्वञ्चैतद्भवति विफलं स्वस्वकाले व्यतीते ॥ १४ ॥

न्तीत्यर्थः । यदाश्रयेण परेषामुपकारः स एव महान् परोपकार-रहिताः महान्तो अपि न गण्यन्ते इति भावः । वसन्ततिलकं वृत्तम् । व्यतिरेकालङ्कारः ॥ १२ ॥

निर्वाणेति । निर्वाणदीपे तैलदानं किमु ? किमर्थम् ? न तैलदाने प्रयोजनमित्यर्थः, चौरे गते चौर्य्यं कृत्वा पलायिते इत्यर्थः सावधानं स्वस्य आत्मनः अवधानम् अप्रमादः वा किम् ? नावधाने प्रयोजनमित्यर्थः । वयोगते यौवनविगमे वनितया कान्तया सह विलासः विहारः किम् ? तथा पयोगते जलनिर्गमने खलु सेतुबन्धः आलिबन्धनं किम् ? न प्रयोजनमेषामित्यर्थः । उपजातिवृत्तम् ॥१३॥

शीते इति । शीते अतीते सति वसनम् आच्छादनं गात्रस्येति शेषः, वासरान्ते दिनान्ते सायंकाले इत्यर्थः अशनं भोजनं, निशान्ते निशावसाने कुवलयदृशां नीलोत्पलाक्षीणां क्रीड़ारम्भः सुरतप्रसङ्गः, यौवनान्ते तारुण्यापगमे विवाहः, पयसि जले गलिते गते सति सेतोर्बन्धः, प्रस्थिते प्रस्थाने कृते सति लग्नस्य शोभनयात्रिकसमयस्य चिन्ता, किमन्यद् वक्तव्यं सर्वञ्चैतत् एवंविधमित्यर्थः स्वस्वकाले व्यतीते अतिक्रान्ते विफलं निरर्थकं भवति । मन्दाक्रान्तावृत्तम् ॥१४॥

नवं वस्त्रं नवं छत्रं नव्या स्त्री नूतनं गृहम् ।
सर्वत्र नूतनं शस्तं सेवकान्ने पुरातने ॥ १५ ॥
समायाति यदा लक्ष्मीर्नारिकेलफलाम्बुवत् ।
विनिर्याति यदा लक्ष्मीर्गजभुक्तकपित्थवत् ॥ १६ ॥

इति श्रीमहाकविवेतालभट्टविरचितं
नीतिप्रदीपकाव्यं समाप्तम् ।

---

नवमिति । सर्वत्र सर्वस्मिन् देशे नवं वस्त्रं, नवं छत्रं, नव्या स्त्री, नूतनं गृहं, किमन्यत् सर्वं नूतनं वस्तु शस्तं प्रशंसया कीर्त्तितम् । सेवकाश्च भृत्यः अन्नञ्च पुरातनं शस्तमित्यनेनान्वयः । अनुष्टुब् वृत्तम् ॥ १५ ॥

समायातीति । यदा लक्ष्मीः समायाति तदागमनमित्यध्याहार्य्यं, नारिकेलफलाम्बुवत् यथा नारिकेलफले अम्बु कदा आगतं कैरपि कथमपि न विज्ञायते, तथा लक्ष्म्या आगमनं कदा कथमिति न ज्ञायते इति भावः । यदा लक्ष्मीः विनिर्याति गृहात् निर्गच्छति तत् विनिर्गमनं गजभुक्तकपित्थवत् यथा गजेन भुक्तं कपित्थं बहिः यथापूर्वं दृश्यते किन्तु अन्तर्निःसारं भवति तथा लक्ष्मीविनिर्याणे लोकः पूर्ववदेव दृश्यते किन्तु अन्तःसारशून्यः स्यादिति भावः । उपमालङ्कारः । अनुष्टुब् वृत्तम् ॥ १६ ॥

---

# नीतिसारम् ।

गिरौ कलापी गगने पयोदः
लक्षान्तरेऽर्कश्च जलेषु पद्मम् ।
इन्दुर्द्विलक्षे कुमुदस्य बन्धु-
र्यो यस्य मित्रं न हि तस्य दूरम् ॥ १ ॥

माता निन्दति नाभिनन्दति पिता भ्राता न सम्भाषते
भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते ।
अर्थप्रार्थनशङ्कया न कुरुतेऽप्यालापमात्रं सुहृत्
तस्मादर्थमुपार्जयस्व च सखे ! ह्यर्थस्य सर्वे वशाः ॥ २ ॥

गिराविति । कलापी मयूरः गिरौ पर्वते, पयोदः मेघः गगने आकाशे तिष्ठतीति शेषः, तथा लक्षान्तरे लक्षयोजनान्तरे अन्तरीक्ष इति शेषः अर्कः सूर्य्यः, जलेषु च पद्मं तिष्ठतीति शेषः । इन्दुश्चन्द्रः द्विलक्षे लक्षयोजनद्वयान्तरे इति यावत् भूस्थो योजनलक्षोऽर्कं पद्मं लक्षद्वयाद्विधुमिति मुग्धबोधैकवाक्यत्वादिति बोध्यम् । स्थितोऽपीति अध्याहार्य्यं कुमुदस्य बन्धुः मित्रं तद्विकाशकत्वादिति भावः । तस्मात् यत् वस्तु यस्य मित्रं बन्धुभूतं तत् वस्तु तस्य न हि नैव दूरं भवतीति शेषः । उपजातिवृत्तम् ॥ १ ॥

मातेति । माता निन्दति निर्धनं पुत्रमिति शेषः, पिता न अभिनन्दति नाद्रियते । भ्राता न सम्भाषते नालपति निर्धनं भ्रातरमिति शेषः । भृत्यः कुप्यति निर्धनाय प्रभवे इति शेषः । सुतः पुत्रः न अनुगच्छति निर्धनं पितरमिति शेषः । कान्ता च न आलिङ्गते निर्धनं भर्त्तारमिति शेषः सुहृत् सखा अर्थप्रार्थनशङ्कया आलापमात्रमपि न

धनैर्निष्कुलीनाः कुलीना भवन्ति
धनैरापदं मानवा निस्तरन्ति।
धनेभ्यः परो बान्धवो नास्ति लोके
धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ ३ ॥

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्।
इति सत्यं महाराज! बद्धोऽस्म्यर्थेन कौरवैः॥ ४ ॥

त्रिविक्रमोऽभूदपि वामनोऽसौ
स शूकरश्चेति स वै नृसिंहः।
नीचैरनीचैरतिनीचनीचैः
सर्वैरुपायैः फलमेव साध्यम् ॥ ५ ॥

कुरुते। हे सखे! तस्मात् कारणात् अर्थम् उपार्जयस्व, हि यतः सर्वे जनाः अर्थस्य वशाः अधीनाः। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

धनैरिति। निष्कुलीनाः अकुलीना जनाः धनैः कुलीनाः भवन्ति, धनेन कुलमिति वैयाकरणाः। मानवाः धनैः आपदं निस्तरन्ति विपन्मुक्ता भवन्तीत्यर्थः। लोके जगति धनेभ्यः परः श्रेष्ठः बान्धवः नास्ति। तस्मात् धनानि अर्जयध्वं धनानि अर्जयध्वम् अत्यावश्यकत्वद्योतनार्थं पुनरुक्तिः। भुजङ्गप्रयातं वृत्तम्। भुजङ्गप्रयातं चतुर्भिर्यकारैरिति तल्लक्षणात्। कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥३॥

अर्थस्येति। पुरुषः अर्थस्य धनस्य दासः, अर्थस्तु न कस्यचित् जनस्य दासः। हे महाराज! इति सत्यम् अतः अस्मि अहं कौरवैः दुर्य्योधनादिभिः अर्थेन बद्धः वशीकृतः। युधिष्ठिरं प्रति भीष्मवाक्यम्। अनुष्टुव्वृत्तम् ॥ ४ ॥

त्रिविक्रम इति। असौ वामनः खर्व्वाकृतिः पुरुषः त्रिविक्रमः त्रिषु स्वर्गमर्त्त्यपातालेषु विक्रमः पदक्रमो वा यस्य तथाभूतः अपि

चलच्चित्तं चलद्वित्तं चलज्जीवनयौवनम् ।
चलाचलमिदं सर्वं कीर्त्तिर्यस्य स जीवति ॥ ६ ॥
स जीवति यशो यस्य कीर्त्तिर्यस्य स जीवति ।
अयशोऽकीर्तिसंयुक्तो जीवन्नपि मृतोपमः ॥ ७ ॥
वृद्धस्य वचनं ग्राह्यमापत्काले ह्युपस्थिते ।
सर्वत्रैवं विचारेण नाहारे न च मैथुने ॥ ८ ॥

अभूत्, स वामनः शूकरश्च वराहश्च, स वामनः नृसिंहश्च अभूदिति पूर्वेणान्वयः । इतिशब्दः वेशब्दस्य पादपूरणार्थः । तथाच नीचैः नत्रैः अनीचैः मर्डाङ्गैः अतिनीचनीचैः अतिशयेन लघुभिरिति भावः सर्वैः उपायैः फलं कार्य्यं साध्यमेव न कथमपि कार्य्यसाधनात् निवर्त्तितव्यमिति भावः । उपजातिवृत्तम् ॥ ५ ॥

चलदिति । चित्तं मनः चलत् चञ्चलं, वित्तं धनं चलत् चञ्चलं, जीवनं यौवनञ्च चलत् चञ्चलम् । (किमधिकेन) इदं सर्वं जगदिति शेषः चलाचलं पुनः पुनरतिशयेन चञ्चलमित्यर्थः । तस्मात् यस्य कीर्त्तिः यशः अस्तीति शेषः स जीवति न चलतीति भावः । अनुष्टुब्वृत्तम् ॥ ६ ॥

स इति । यस्य यशः अस्तीति शेषः स जीवति, यस्य कीर्त्तिरस्तीति शेषः स जीवति, अयशः अख्यातिः अकीर्त्तिः ख्यात्यभावः ताभ्यां संयुक्तो जनः जीवन्नपि मृतोपमः मृततुल्यः । अनुष्टुब्वृत्तम् ॥ ७ ॥

वृद्धस्येति । आपत्काले उपस्थिते हि उपस्थित एव वृद्धस्य वचनं ग्राह्यम् आदरणीयम् । सर्वत्र सर्वस्मिन् विषये विचारेण विवेचनया एवं वृद्धस्य वचनं ग्राह्यमिति भावः । किन्तु आहारे न, मैथुने स्त्रीसङ्गमे च न, एतयोर्द्वयोर्वृद्धवचनानुसारेण न अवस्थेति भावः । अनुष्टुब्वृत्तम् ॥ ८ ॥

क्वचिद्रुष्टः क्वचित्तुष्टः रुष्टतुष्टः क्षणे क्षणे ।
अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः ॥ ९ ॥

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति ।
अकारणद्वेषि मनस्तु यस्य
कथं जनस्तं परितोषयिष्यति ॥ १० ॥

शूकर उवाच ।

दश व्याघ्रा जिताः पूर्वं सप्त सिंहास्त्रयो गजाः ।
पश्यन्तु देवताः सर्वा अद्य युद्धं त्वया मया ॥ ११ ॥

सिंह उवाच ।

गच्छ शूकर ! भद्रं ते ब्रूहि सिंहो मया जितः ।
पण्डिता एव जानन्ति सिंहशूकरयोर्बलम् ॥ १२ ॥

क्वचिदिति । अव्यवस्थितचित्तो जनः क्वचित् रुष्टः क्रुद्धः, क्वचित् तुष्टः, क्षणे क्षणे च रुष्टः तुष्टश्च, अतः तस्य प्रसादोऽपि तोषोऽपि भयङ्करः अस्थिरत्वादिति भावः । अनुष्टुब्वृत्तम् ॥ ९ ॥

निमित्तमिति । यः जनः निमित्तं कारणम् उद्दिश्य हि लक्षयित्वैव प्रकुप्यति, स जनः ध्रुवं निश्चितं तस्य निमित्तस्य अपगमे अपमाने प्रसीदति प्रसन्नो भवति । यस्य तु मनः अकारणद्वेषि विना हेतुं द्वेष्टीत्यर्थः, जनः लोकः कथं केन प्रकारेण तं जनं परितोषयिष्यति ? दुर्जनः कथमपि न प्रसादनार्ह इति भावः । वंशस्थविलं वृत्तम् ॥ १० ॥

दशेति । पूर्वं दश व्याघ्राः सप्त सिंहाः त्रयः गजाः जिताः मयेति शेषः, अद्य सर्वा देवताः त्वया मया युद्धं पश्यन्तु । अनुष्टुब्वृत्तम् ॥ ११ ॥

गच्छेति । हे शूकर ! गच्छ पलायस्व, ते तव भद्रं कुशलम्

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी
दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ? ॥१३॥

एका भार्य्या प्रकृतिमुखरा चञ्चला च द्वितीया
पुत्रस्त्वेको भुवनविजयी मन्मथो दुर्निवारः ।
शेषः शय्या शयनमुदधौ वाहनं पन्नगारिः
स्मारं स्मारं स्वगृहचरितं दारुभूतो मुरारिः ॥ १४ ॥

अस्त्विति शेषः, अहो पद मया सिंहः जित इतीति शेषः । किन्तु पण्डिताः विद्वांस एव सिंहसूकरयोः बलं जानन्ति । अप्रस्तुतप्रशंसया मूर्खपण्डितयोः संवादो व्यज्यते । अनुष्टुब्वृत्तम् ॥ १२ ॥

उद्योगिनमिति । लक्ष्मीः सम्पद् उद्योगिनं कार्य्यपरं पुरुषसिंहम् उपैति प्राप्नोति, कापुरुषाः लघवो जनाः दैवेन देयं शुभमिति शेषः नात्र पुरुषकारस्य प्रयोजनमिति भावः इति वदन्ति । तस्मात् दैवं निहत्य तुच्छीकृत्येति भावः आत्मनः शक्त्या सामर्थ्येन पौरुषं पुरुषकारं कुरु । यत्ने उद्योगे कृते यदि न सिध्यति, अत्र अस्मिन् विषये को दोषः ? न कोऽपीत्यर्थः । वसन्ततिलकं वृत्तम् ॥१३॥

एकेति । एका भार्य्या सरस्वती प्रकृत्या स्वभावेन मुखरा वाचाला कलहकारिणीति भावः, द्वितीया भार्य्या लक्ष्मीः चञ्चला अस्थिरा, पुत्रस्तु एकः भुवनविजयी दुर्निवारः अबाध्यः मन्मथः कामः, शेषः अनन्तनागः शय्या, उदधौ समुद्रे शयनं, पन्नगारिः गरुड़ः वाहनं रथः । इत्थं स्वगृहस्य चरितं व्यापारं अतिक्लेशकरमिति भावः स्मारं स्मारं स्मृत्वा स्मृत्वा मुरारिः हरिः दारुभूतः काष्ठमूर्त्तिरभूदिति शेषः । मन्दाक्रान्तावृत्तम् ॥ १४ ॥

अतिदूरपथश्रान्ताश्छायां यान्ति च शीतलाम्।
शीतलाश्च पुनर्यान्ति का कस्य परिदेवना ॥ १५ ॥

अपमानं पुरस्कृत्य मानं कृत्वा च पृष्ठके।
स्वकार्य्यमुद्धरेत् प्राज्ञः कार्य्यध्वंसे हि मूर्खता ॥ १६ ॥

एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोरिति यो बभाषे।
नूनं न दृष्टं कविनापि तेन
दारिद्र्यदोषो गुणराशिनाशी ॥ १७ ॥

अतीति। अतिदूरेण पथा श्रान्ताः लोका इति शेषः शीतलां छायां यान्ति आश्रयन्ति, शीतलाश्च विश्रान्ताश्चेति यावत् पुनर्यान्ति गच्छन्ति। अतः कस्य जनस्य परिदेवना का? न कापीत्यर्थः। अनुष्टुब्वृत्तम् ॥ १५ ॥

अपमानमिति। प्राज्ञो जनः अपमानं पुरस्कृत्य मानञ्च पृष्ठके कृत्वा अगणयित्वेति भावः स्वकार्य्यम् उद्धरेत्। हि यतः कार्य्यध्वंसे मूर्खता प्रकाशते इति भावः। अनुष्टुब्वृत्तम् ॥ १६ ॥

एक इति। इन्दोश्चन्द्रस्य गुणसन्निपाते गुणसमूहे एको दोषः कलङ्कित्वमिति भावः निमज्जति अन्तर्लीयते इत्यर्थः। यः कविः इति बभाषे उवाच, एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः इति, तेन कविना कालिदासेन दारिद्र्यमेव दोषः गुणराशिनाशी गुणसमूहनाशक इति नूनं निश्चितं न दृष्टम्। तथाच, दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते चेतसो निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते। निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ किञ्च, दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम्। अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखमिति मृच्छकटिके चारुदत्तः। उपजातिवृत्तम् ॥ १७ ॥

मृतस्य करणं नास्ति मृतस्य मरणं तथा ।
गतस्य शोचनं नास्ति ह्येतद्वेदविदां मतम् ॥ १८ ॥
नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि ।
कुशकण्टकविद्धोऽपि प्राप्तकालो न जीवति ॥ १९ ॥
निमग्नस्य पयोराशौ पर्वतात् पतितस्य च ।
तक्षकेणापि दष्टस्य आयुर्मर्माणि रक्षति ॥ २० ॥
करोतु नाम नीतिज्ञो व्यवसायमितस्ततः ।
फलं पुनस्तदेव स्याद् यद्विधेर्मनसि स्थितम् ॥ २१ ॥

इति श्रीमहाकविघटकर्परविरचितं
नीतिसारं समाप्तम् ।

---

मृतस्येति । मृतस्य करणं तथा मृतस्य मरणं नास्ति, किन्तु गतस्य अतीतस्य विषयस्य शोचनं नास्ति हि नास्त्येव एतत् वेदविदां मतम् । अनुष्टुब्वृत्तम् ॥ १८ ॥

नाकाले इति । जन्तुः जीवः शरशतैः विद्धोऽपि अकाले असमये सति आयुषोऽत्यर्थः न म्रियते । किन्तु प्राप्तकालः गतायुर्जनः कुशस्य कण्टकेन अग्रावयवेन विद्धोऽपि न जीवति । अनुष्टुब्वृत्तम् ॥ १९ ॥

निमग्नस्येति । पयोराशौ समुद्रे निमग्नस्य, पर्वतात् पतितस्य च तथा तक्षकेण नागराजेन दष्टस्यापि आयुः जीवनकालः मर्माणि मरणस्थानानि येषु स्थानेषु पीड़या म्रियते तानि स्थानानि रक्षति पालयति । अनुष्टुब्वृत्तम् ॥ २० ॥

करोत्विति । नीतिज्ञो जनः इतस्ततः बहुधेति भावः व्यवसायं करोतु नाम, पुनः किन्तु विधेः मनसि यत् स्थितं तदेव फलं स्यात् विध्यतिक्रमो न केनापि कर्तुं शक्य इति भावः । अनुष्टुब्वृत्तम् ॥२१॥

---

# धर्मविवेकः ।

---

श्रद्धाबीजो विप्रवेदाम्बुसिक्तः
शाखा विद्यास्ताश्चतस्रो दशापि ।
पुष्पाण्यर्थौ द्वे फले स्थूलसूक्ष्मे
मोक्षः कामो धर्मवृक्षोऽयमीड्यः ॥ १ ॥

यातः क्ष्मामखिलां प्रदाय हरये पातालमूलं बलिः
शक्तुप्रस्थविसर्जनात् स च मुनिः स्वर्गं समारोपितः ।
या बाल्यादसती सती सुरपुरीं कुन्ती समारोहयत्
हा ! सीता पतिदेवतागमदधो धर्मस्य सूक्ष्मा गतिः ॥२॥

श्रद्धाबीज इति । श्रद्धा गुरुजनवचनेषु विश्वासः बीजं मूलकारणं यस्य तथाभूतः, विप्राः ब्राह्मणाः वेदाश्च एव अम्बूनि जलानि तैः सिक्तः पुष्टिं नीत इति भावः अयं धर्मवृक्षः धर्मरूपस्तरुः ईड्यः स्तुत्यः ईडस्तुतावित्यस्मात् कर्मणि यप्रत्ययः । लोकैरिति शेषः । अस्य धर्मवृक्षस्य ताः प्रसिद्धाः चतस्रः दशापि चतुर्दशेत्यर्थः विद्याः, अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दशेत्युक्ताः शाखाः, विस्तृतांशा इति भावः । मोक्षः कामः स्वर्ग इति यावत् स्थूलसूक्ष्मे स्थूलं महत् सूक्ष्मं क्षुद्रं ते द्वे फले, पुष्पाणि धर्मानुष्ठानजनितानि अपूर्वाणीत्यर्थः अर्थाः फलयोः मूल्यभूतधनानीत्यर्थः । रूपकमलङ्कारः । शालिनीवृत्तम् । शात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात् ॥ १ ॥

यात इति । बलिः दैत्यराजः हरये वामनाय अखिलां समग्रां क्ष्मां पृथिवीं प्रदाय पातालमूलं यातः गतः । स च मुनिः शक्तु-

कानीनस्य मुनेः स्व-बान्धव-वधू-वैधव्य-विध्वंसिनो
नप्तारः खलु गोलकस्य तनयाः कुण्डाः स्वयं पाण्डवाः ।
तेऽमी पञ्च समानयोनिरतयः तेषां गुणोत्कीर्त्तनात्
अक्षय्यं सुकृतं भवेदविकलं धर्मस्य सूक्ष्मा गतिः ॥ ३ ॥

प्रस्थस्य प्रस्थपरिमितस्य सक्तोरित्यर्थः विसर्जनात् दानात् स्वर्गं समारोपितः गमितः दानफलेनेति भावः। या बाल्यात् शैशवमारभ्य कुन्ती असती दुश्चारिणी सती सुरपुरीं स्वर्गं समारोहयत् अगमदित्यर्थः स्वार्थे णिजन्तप्रयोगः। हा खेदे, पतिदेवता पतिव्रता सीता अधः पातालम् अगमत्, धर्मस्य गतिः सूक्ष्मा न केनापि ज्ञातुं शक्यते इति भावः। शार्दूलविक्रीडितं वृत्तम्। कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ २ ॥

कानीनस्येति। कानीनस्य कन्या कुमारी तस्यां जातस्य सत्यवत्यामपरिणीतायां पराशरेण उत्पन्नस्य स्वस्य आत्मनः बान्धवः भ्राता विचित्रवीर्य्य इत्यर्थः तस्य वध्वोः अम्बिकाम्बालिकयोर्वैधव्यविध्वंसिनः पातिव्रत्यनाशिनः तयोरभिगमनेनेति भावः मुनेः द्वैपायनस्य व्यासस्येत्यर्थः नप्तारः पौत्राः गोलकस्य पितरि मृते अन्येन जनितस्येति भावः पाण्डोरिति भावः, तनयाः स्वयं कुण्डाः सति पितरि अन्यैरुत्पादिता इति भावः, अमृते जारजः कुण्डो मृते भर्त्तरि गोलक इत्यमरः। पाण्डवाः युधिष्ठिरादयः पञ्च भ्रातरः। ते अमी पञ्च भ्रातर इति शेषः समानयोनिरतयः एकयोनिविहारिणः द्रौपद्याः सर्व्वेषां पत्नीत्वादिति भावः। तेषां पाण्डवानां गुणानां दयादाक्षिण्यादीनाम् उत्कीर्त्तनात् उच्चैः प्रशंसनात् अविकलं सम्यक् अक्षय्यम् अविनश्वरं सुकृतं पुण्यं भवेत्। अतः धर्मस्य गतिः भावः सूक्ष्माः न केनाप्यवगम्यते इति भावः। शार्दूलविक्रीडितं वृत्तम्। कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३ ॥

आहारे शुचिता ध्वनौ मधुरता नीड़े पराधीनता
बन्धौ निर्ममता वने रसिकता वाचालता माधवे।
यस्यैते गुणराशयः पिकवरं त्यक्त्वा किमेते जना
वन्दन्ते खलु खञ्जनं कृमिभुजं चित्रा गतिः कर्मणाम्॥४॥
कान्तं वक्ति कपोतिकाकुलतया नाथान्तकालोऽधुना
व्याधोऽधो धृतचापसज्जितशरः श्येनः परिभ्राम्यति।
इत्थं सत्यहिना स दष्ट इषुणा श्येनोऽपि तेनाहतः
तूर्णं तौ तु यमालयम्प्रति गतौ दैवी विचित्रा गतिः॥५॥

आहारे इति। यस्य पिकवरस्य आहारे भोजने शुचिता पवित्रता अशुचि वस्तु न खादतीति भावः, ध्वनौ रवे मधुरता मनोहारित्वं, नीड़े कुलाये पराधीनता परस्य काकस्येति भावः अधीनता वश्यता, तं वश्यत्विन्यता तत्कुलाये स्थितिः तेन शैशवे पालनस्येति भावः, बन्धौ प्रतिपालके काके इति भावः निर्ममता स्नेहराहित्यं, वने कानने अयोग्ये देशेऽपीति भावः रसिकता, माधवे वसन्ते अयच कण्ठा वाचालता वाग्मित्वम्, एते गुणराशयः सन्तीति शेषः, तं पिकवरं कोकिलश्रेष्ठं त्यक्त्वा एते जनाः किं कथं कृमिभुजम् अशुद्धभोजिनमिति भावः खञ्जनं तदाख्यं पक्षिणं वन्दन्ते प्रशंसन्ति खलु, अतः कर्मणां शुभाशुभानामिति शेषः गतिः भावः चित्रा चमत्कारिणी। कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः। शार्दूलविक्रीड़ितं वृत्तम्॥४॥

कान्तमिति। कपोतिका कपोतकान्ता आकुलतया कान्तं कपोतं वक्ति कथयति, हे कान्त! नाथेति क्वचित् पाठः। अधुना सम्प्रति नः अन्तकालः मृत्युकालः अवाकमिति शेषः, यतः व्याधः लुब्धकः अधः इतस्तले इति भावः धृतः चापः धनुः सज्जितः शरः येन तथाभूतः वर्त्तते इति शेषः, श्येनः पक्षिविशेषः परिभ्राम्यति आका-

शुण्ठीगोक्षुरयोर्विचार्य मनसा क्वाथकं यन्मया
प्रोक्तं तद्विपरीतकं क्वतमभो गोः क्षुरमात्रं ददौ ।
मार्गो मूर्खजनालये न च सुखं नो वा यशो लभ्यते
सद्वैद्ये कविभूपतौ हरिहरे लाभः परं गोवधः ॥ ६ ॥
पञ्चास्यस्य पराभवाय मूषको मांसेन गोर्भूयसा
दुग्धैरपि पायसैः प्रतिदिनं सम्वर्धितो यो मया ।

मिति शेषः, इत्थं सति एवं गते अहिना सर्पेण सः व्याधः दष्टः, तेन क्षुधया शरेण व्याधक्षिप्तेनेति भावः श्येनः अपि हिंस्रपक्षी अपि हतः विद्धः, अतः तौ व्याधश्येनौ तूर्णं तत्क्षणात् यमालयं प्रति गतौ मृतावित्यर्थः । तस्मात् दैवी गतिः दैवचरितं विचित्रा अघटनकारिणी । कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

शुण्ठीति । मया मनसा विचार्य विविच्य शुण्ठीगोक्षुरयोः ओषधिविशेषयोः यत् क्वाथनं क्वाथभोजनं प्रोक्तम् औषधत्वेन कथितं, तत्तु विपरीतकं विपर्ययः क्वतं रोगिपरिचारकेणेति भावः, अहो आश्चर्यं गोः पशुविशेषस्य क्षुरमात्रं क्वथितमिति भावः ददौ रोगिणे दत्तम् शेषः । अतः मूर्खजनानाम् अज्ञजनानाम् आलये गृहे अर्थो न धनं न इत्थमवस्थायामारोग्याभावादिति भावः, सुखम् सन्तोषश्च न, यशः ख्यातिश्च नो वा लभ्यते नैव प्राप्यते इत्यर्थः, तस्मात् सद्वैद्ये कविभूपतौ कविराजे हरिहरे मयीति भावः परं केवलं गोवधः गोहत्या तदन्यथा क्षुरलाभाभावादिति भावः लाभः अस्मेति शेषः । हरिहरस्य मूर्खजनचिकित्सायां खेदोक्तिरियम् । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

पञ्चास्येति । मया पञ्चास्यस्य सिंहस्य, सिंहो मृगेन्द्रः पञ्चास्य इत्यमरः । पराभवाय पराजयाय गोः भूयसा प्रचुरेण मांसेन दुग्धैः दुग्धैः पायसैः परमान्नैरपि यः मूषकः संवर्धितः पोषितः,

सोऽयं सिंहरवाद् गुहान्तरगमद्भीत्याकुलः सम्भ्रमाद्
हन्ताशा विलयं गता हतविधेर्लाभः परं गोवधः ॥ ७ ॥
पारीन्द्रस्य पराभवाय सुरभीमांसेन दुर्मेधसा
पुष्यन्ते किल पीवराः कटुगिरः श्वानः प्रयत्नादमी।
न त्वेतन्मदमत्तवारणचमूविद्रावणः केशरी
जेतव्यो भवता किरातनृपते! लाभः परं गोवधः ॥ ८ ॥
एका भूरुभयोरैक्यमुभयोर्दलकाण्डयोः।
शालिश्यामाकयोर्भेदः फलेन परिचीयते ॥ ९ ॥
जातः सूर्य्यकुले पिता दशरथः क्षौणीभुजामग्रणीः

सोऽयं मूषकः सिंहरवात् भीत्याकुलः शङ्काकुलः सन् सम्भ्रमात् गुहान्तः गुहाभ्यन्तरम् अगमत्। हन्त खेदे, आशा सिंहपराजयवासना विलयं गता विनष्टा, हे हतविधे! हतविधेः दुर्दैवादिति वा परं केवलं गोवधो लाभः। शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

पारीन्द्रस्येति। हे किरातनृपते! व्याधराज! दुर्मेधसा दुर्बुद्धिना भवता पारीन्द्रस्य सिंहस्य पराभवाय प्रयत्नात् अतियत्नेनेत्यर्थः सुरभीमांसेन गवीमांसेन कटुगिरः कर्कशस्वनाः पीवराः स्थूलकायाः अमी श्वानः कुक्कुराः पुष्यन्ते किल पाल्यन्त एव। तु किन्तु एतासां मदमत्तवारणचमूनां मदोद्धतहस्तिनिचयानां विद्रावणः निराकरणः केशरी न जेतव्यः न जेतुं शक्यः। परं केवलं गोवधः गोहत्या लाभः। शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

एकेति। उभयोः शालिश्यामाकयोः भूः उत्पत्तिस्थानम् एका अभिन्ना, उभयोः दलकाण्डयोः ऐक्यम् अभेदः। किन्तु शालिश्यामाकयोः ब्रीहिश्यामाकाख्यतृणयोः भेदः विशेषः फलेन फलोत्पत्त्या परिचीयते ज्ञायते। एकवंशीययोरपि विद्यादिफलवत्ताभेदेन तारतम्यं जायते इति अप्रस्तुतप्रशंसया व्यज्यते ॥ ९ ॥

सीता सत्यपरायणा प्रणयिनी यस्यानुजो लक्ष्मणः ।
दोर्दण्डेन समो न चास्ति भुवने प्रत्यक्षविष्णुः स्वयं
रामो येन विडम्बितोऽपि विधिना चान्ये परे का कथा ॥१०॥

एका भार्य्या प्रकृतिमुखरा चञ्चला च द्वितीया
पुत्रस्त्वेको भुवनविजयी मन्मथो दुर्निवारः ।
शेषः शय्या शयनमुदधौ वाहनं पन्नगारिः
स्मारं स्मारं स्वगृहचरितं दारुभूतो मुरारिः ॥ ११ ॥

असारे खलु संसारे सारं श्वशुरमन्दिरम् ।
हरो हिमालये शेते विष्णुः शेते महोदधौ ॥ १२ ॥

जात इति । सूर्य्यकुले महावंश इति भावः जातः उत्पन्नः महाकुलप्रसूत इत्यर्थः । क्षौणीभुजां पृथिवीपालानाम् अग्रणीः श्रेष्ठः दशरथः पिता । सत्यपरायणा सीता प्रणयिनी कान्ता । लक्ष्मणः यस्य अनुजः कनिष्ठः महावीरः आज्ञावह इति भावः, दोर्दण्डेन बाहुबलेन भुवने त्रिलोक्यां यस्य समः सदृशः नास्ति, यश्च स्वयं प्रत्यक्षविष्णुः साक्षात् नारायणः । सोऽपि रामः येन विधिना दैवेन विडम्बितः प्रतारितः मारीचमाययेति भावः अन्ये परे का कथा किं कर्त्तव्यम् । विधिः सर्व्वमेव प्रतारयतीति भावः । अन्ये इति कवीनां निरङ्कुशत्वात् सप्तम्यन्तं बोद्धव्यम् । अर्थापत्तिरलङ्कारः । उक्तञ्च दर्पणे । दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते इति । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

एकेति व्याख्यातं प्राक् ॥ ११ ॥

असारे इति । असारे साररहिते अस्थिरे इत्यर्थः संसारे श्वशुरस्य मन्दिरं खलु सारम् उत्कृष्टमित्यर्थः । तथाहि हरः शिवः हिमालये श्वशुरमन्दिरे इति भावः शेते, विष्णुः महोदधौ महासमुद्रे श्वशुरालये इति भावः शेते । गौरीपिता हिमालयः, लक्ष्मीपिता समुद्र इति बोध्यम् । अनुष्टुप् वृत्तम् ॥ १२ ॥

असारे खलु संसारे सारमेतच्चतुष्टयम्।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भुसेवनम्॥ १३॥
आपदर्थं धनं रक्षेद्दारान् रक्षेद् धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि॥ १४॥
चिन्ता ज्वरो मनुष्याणां वस्त्राणामातपो ज्वरः।
असौभाग्यं ज्वरः स्त्रीणामश्वानां मैथुनं ज्वरः॥ १५॥
यदि कृष्णपदे चिन्ता भक्तिस्तत्पदपङ्कजे।
विषमे दुर्गमे वापि का चिन्ता मरणे रणे॥ १६॥
देवे तीर्थे द्विजे मन्त्रे दैवज्ञे भेषजे गुरौ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी॥ १७॥

असारे इति। असारे संसारे काश्यां वासः, सतां साधूनां सङ्गः सहवासः, गङ्गाम्भः गङ्गाजलं, तथा शम्भोर्हरस्य सेवनम् एतच्चतुष्टयं सारं खलु सारमेव। अनुष्टुब्वृत्तम्॥ १३॥

आपदर्थमिति। आपदर्थम् आपन्निवारणार्थं धनं रक्षेत् सञ्चिनुयात्, धनैरपि दारान् पत्नीं रक्षेत्, तथा आत्मानं दारैरपि धनैरपि सततं रक्षेत्। अनुष्टुब्वृत्तम्॥ १४॥

चिन्तेति। चिन्ता मनुष्याणां ज्वरः, आतपः वस्त्राणां ज्वरः, असौभाग्यं पतिवात्सल्यानवाप्तिः स्त्रीणां ज्वरः, मैथुनं रमणम् अश्वानां ज्वरः दौर्बल्यकारणमिति भावः॥ १५॥

यदीति। यदि कृष्णस्य पदे चिन्ता, तथा तस्य पदपङ्कजे भक्तिरस्तीति शेषः, तदा विषमे भीषणे मरणे दुर्गमे वापि रणे संग्रामे का चिन्ता नैव चिन्ता कार्य्येति भावः। अनुष्टुब्वृत्तम्॥ १६॥

देवे इति। देवे देवतायां तीर्थे पुण्यक्षेत्रे, द्विजे ब्राह्मणे, मन्त्रे, दैवज्ञे गणके, भेषजे औषधे, तथा गुरौ यस्य जनस्य यादृशी भावना, तस्य तादृशी सिद्धिः भवति। अनुष्टुब्वृत्तम्॥ १७॥

न माता शपते पुत्रं न दोषं लभते मही ।
न हिंसां कुरुते साधुर्न देवः सृष्टिनाशकः ॥ १८ ॥
जल्पन्ति सूरयः सर्वे धर्मो रक्षति धार्मिकम् ।
एतज्ज्ञातव्यमद्यैव किमत्र च भविष्यति ॥ १९ ॥
जयोऽस्तु पाण्डुपुत्राणां येषां पक्षे जनार्दनः ।
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ॥ २० ॥
इति श्रीमहाकविहलायुधविरचितं धर्मविवेककाव्यं
समाप्तम् ।

---

नेति । माता पुत्रं न शपते नाभिसम्पातेन योजयतीत्यर्थः, मही पृथ्वी दोषं तदुपरि विविधात्याचारजनितमिति भावः न लभते न गृह्णाति, साधुः सज्जनः हिंसां परेषामिति शेषः न कुरुते । देवः सृष्टिनाशकः सृष्टिध्वंसी न भवतीति शेषः । अनुष्टुब्वृत्तम् ॥ १८ ॥

जल्पन्तीति । सर्वे सूरयः विद्वांसः जल्पन्ति कथयन्ति, धर्मः धार्मिकं रक्षति इतीति शेषः । अद्यैव एतत् धर्मस्य धार्मिकरक्षणमिति भावः ज्ञातव्यं कथं धर्मो धार्मिकं रक्षतीति वेदितव्यमित्यर्थः अत्र च धार्मिकरक्षणे कर्त्तव्ये इति भावः किञ्च भविष्यति तदपि ज्ञातव्यमिति पूर्वेणान्वयः । अनुष्टुब्वृत्तम् ॥ १९ ॥

जय इति । येषां पक्षे जनार्दनः कृष्णः तिष्ठतीति शेषः, तेषां पाण्डुपुत्राणां जयः अस्तु । कृष्णः यतः यस्मिन् पक्षे इति शेषः, ततः तस्मिन् पक्षे इति भावः धर्मः तिष्ठतीति शेषः । धर्मः यतः यस्मिन् पक्षे अस्तीति शेषः, ततः तस्मिन् पक्षे जयः भवतीति शेषः । अनुष्टुब्वृत्तम् ॥ २० ॥

---

# वेदसारशिवस्तवः।

---

पशूनां पतिं पापनाशं परेशं
गजेन्द्रस्य कृत्तिं वसानं वरेण्यम्।
जटाजूटमध्ये स्फुरद्गाङ्गवारिं
महादेवमेकं स्मरामि स्मरारिम्॥ १॥
महेशं सुरेशं सुरारातिनाशं,
विभुं विश्वनाथं विभूत्यङ्गभूषम्।
विरूपाक्षमिन्द्वर्कवह्नित्रिनेत्रं
सदानन्दमीडे प्रभुं पञ्चवक्त्रम्॥ २॥
गिरीशं गणेशं गले नीलवर्णं
गवेन्द्राधिरूढं गुणातीतरूपम्।

पशूनामिति। पशूनां प्राणिनां पतिं पापनाशं दुरितक्षयकरं परेशं परमेश्वरं गजेन्द्रस्य कृत्तिं चर्म वसानं परिदधानं वरेण्यं श्रेष्ठं जटाजूटमध्ये स्फुरत् प्रसरत् गाङ्गवारि गङ्गाजलं यस्य तथाभूतं स्मरारिं मदनरिपुम् एकम् अद्वितीयं महादेवं स्मरामि चिन्तयामि। भुजङ्गप्रयातं वृत्तम् अस्मिन् सन्दर्भे॥ १॥

महेशमिति। महेशं सुरेशं सुरारातिनाशम् असुरसूदनं विभुं नित्यव्यापकत्वसमर्थं विश्वनाथं विभूतिभिः भस्मभिः अङ्गस्य भूषा विलेपनं यस्य तथोक्तं विरूपाक्षं विषमनेत्रम् इन्द्वर्कवह्नित्रिनेत्रं चन्द्रसूर्य्याग्निरूपनयनत्रयं सदानन्दं प्रभुं पञ्चवक्त्रं पञ्चाननम् ईडे स्तौमि॥ २॥

गिरीशमिति। गिरीशं गणेशं गणानां प्रमथानाम् ईशं गले

भवं भास्वरं भस्मना भूषिताङ्गं
भवानीकलत्रं भजे पञ्चवक्त्रम्॥ ३॥
शिवाकान्त! शम्भो! शशाङ्कार्द्धमौले!
महेशान! शूलिन्! जटाजूटधारिन्!।
त्वमेको जगद्व्यापको विश्वरूप!
प्रसीद प्रसीद प्रभो! पूर्णरूप!॥ ४॥
परात्मानमेकं जगद्बीजमाद्यं
निरीहं निराकारमोङ्कारवेद्यम्।
यतो जायते पाल्यते येन विश्वं
तमीशं भजे लीयते यत्र विश्वम्॥ ५॥
न भूमिर्न चापो न वह्निर्न वायु-
र्न चाकाशमास्ते न तन्द्रा न निद्रा।

कण्ठे नीलवर्णं गजेन्द्राधिरूढं वृषारूढं गुणातीतरूपं निर्गुणस्वरूपं भास्वरं दीप्यमानं भस्मना भूषितम् अङ्गं यस्य तादृशं भवानी गौरी कलत्रं पत्नी यस्य तथोक्तं पञ्चवक्त्रं भवं भजे॥ ३॥

शिवेति। हे शिवाकान्त! गौरीवल्लभ! शम्भो! शशाङ्कार्द्ध-मौले! चन्द्रार्द्धशेखर! महेशान! शूलिन्! जटाजूटधारिन्! एकस्त्वं जगद्व्यापकः हे विश्वरूप! पूर्णरूप! प्रभो! प्रसीद प्रसन्नो भव॥ ४॥

परात्मानमिति। परात्मानं परमेश्वरम् एकम् अद्वितीयं जगतां बीजं मूलम् आद्यम् आदिपुरुषं निरीहम् ईहा चेष्टा तद्रहितं निराकारं लौकिकाकारशून्यं ओङ्कारेण प्रणवेन वेद्यं, विश्वं जगत् यतो जायते, येन पाल्यते, यत्र विश्वं लीयते अन्तर्भवति, तम् ईशं हरं भजे सेवे॥ ५॥

नेति। यत्र भूमिः न, आपः जलानि न, वह्निः न, वायुः

न शीतो न शीतं न देशो न वेशो
न यस्यास्ति मूर्तिस्त्रिमूर्तिं तमीडे ॥ ६ ॥
अजं शाश्वतं कारणं कारणानां
शिवं केवलं भासकं भासकानाम् ।
तुरीयं तमः पारमाद्यन्तहीनं
प्रपद्ये परं पावनं द्वैतहीनम् ॥ ७ ॥
नमस्ते नमस्ते विभो विश्वमूर्त्ते !
नमस्ते नमस्ते चिदानन्दमूर्त्ते ! ।
नमस्ते नमस्ते तपोयोगगम्य !
नमस्ते नमस्ते श्रुतिज्ञानगम्य ! ॥ ८ ॥
प्रभो ! शूलपाणे ! विभो ! विश्वनाथ !

न, आकाशश्च न आस्ते, पाञ्चभौतिकं कलेवरं नास्तीत्यर्थः, यस्य तन्द्रा आलस्यं न, निद्रा न, ग्रीष्मः न, शीतं न, देशः न, वेशः न, मूर्त्तिश्च न अस्ति, तं त्रिमूर्त्तिं सृष्टिस्थितिप्रलयभेदात् ब्रह्मविष्णु-शिवरूपमूर्त्तित्रयम् ईडे स्तौमि ॥ ६ ॥

अजमिति । अजं जन्मरहितं शाश्वतं नित्यं कारणानां कारणं केवलम् अद्वितीयं भासकानां दीप्तिमतां सूर्य्यादीनां भासकं दीप्तिप्रदं तुरीयं त्रिगुणातीतं तमःपारं तमोगुणात् पारे स्थितम् आद्यन्त-हीनं परं श्रेष्ठं पावनं पवित्रकरं द्वैतहीनम् एकरूपं शिवं प्रपद्ये शरणं व्रजामीत्यर्थः ॥ ७ ॥

नम इति । हे विश्वमूर्त्ते विभो ! ते तुभ्यं नमः, ते तुभ्यं नमः, हे चिदानन्दमूर्त्ते ! ज्ञानानन्दस्वरूप ! नम इत्यादि । हे तपोयोगाभ्यां गम्य ! लभ्य ! नम इत्यादि । हे श्रुतिज्ञानेन वेद-ज्ञानेन गम्य ! नम इत्यादि ॥ ८ ॥

महादेव ! शम्भो ! महेश ! त्रिनेत्र ! ।
शिवाकान्त ! शान्त ! स्मरारे ! पुरारे !
त्वदन्यो वरेण्यो न मान्यो न गण्यः ॥ ९ ॥

शम्भो ! महेश ! करुणामय ! शूलपाणे !
गौरीपते ! पशुपते ! पशुपाशनाशिन् !
काशीपते ! करुणया जगदेतदेक-
स्त्वं हंसि पासि विदधासि महेश्वरोऽसि ॥ १० ॥

त्वत्तो जगद्भवति देव ! भव ! स्मरारे !
त्वय्येव तिष्ठति जगन्मृड ! विश्वनाथ ! ।
त्वय्येव गच्छति लयं जगदेतदीश !
लिङ्गात्मके हर ! चराचरविश्वरूपिन् ! ॥ ११ ॥

इति श्रीमद्भगवच्छङ्कराचार्य्यविरचितं वेदसार-
शिवस्तोत्रं सम्पूर्णम् ।

प्रभो इति । हे प्रभो ! इत्यादि सुगमम् । त्वदन्यः त्वद्भिन्नः देव इति शेषः वरेण्यः श्रेष्ठः न, मान्यः न, गण्यः संख्येयश्च न ॥ ९ ॥

शम्भो इति । शम्भो इत्यादि काशीपते इति यावत् सम्बोधनपदम् । त्वम् एकः करुणया कृपया एतत् जगत् हंसि संहरसि, पासि रक्षसि, विदधासि सृजसि च, अतः त्वं महेश्वरः परमात्मा असि भवसि ॥ १० ॥

त्वत्त इति । हे भव देव स्मरारे ! जगत् विश्वं त्वत्तः भवति जायते, हे मृड ! हे विश्वनाथ ! जगत् त्वय्येव तिष्ठति, हे ईश ! हे चराचरविश्वरूपिन् हर ! एतत् जगत् लिङ्गात्मके लिङ्गरूपे त्वय्येव लयं गच्छति ॥ ११ ॥

---

# पद्यसंग्रहः ।

नत्वा तां परमेश्वरीं शिवकरीं श्रीभारतीं भास्वतीं
गङ्गातीरनिवासिना सुकविना लोकोपकारार्थिना ।
नानापण्डितवक्त्रनिर्गतवतां निर्मीयते केनचित्
पद्यानामिह संग्रहोऽमृतकथाप्रस्तावविस्तारिणाम् ॥ १ ॥

काव्ये भव्यतमेऽपि विज्ञनिवहैरास्वाद्यमाने मुहु-
र्दोषान्वेषणमेव मत्सरजुषां नैसर्गिको दुर्ग्रहः ।
कासारेऽपि विकाशिपङ्कजचये खेलन्मराले पुनः
क्रौञ्चश्चञ्चुपुटेन कुञ्चितवपुः शम्बूकमन्वेषते ॥ २ ॥

नत्वेति । गङ्गातीरनिवासिना लोकानाम् उपकारार्थिना केनचित् सुकविना तां प्रसिद्धां शिवकरीं कल्याणकरीं भास्वतीं दीप्तिमतीं परमेश्वरीं श्रीभारतीं वाग्देवीं नत्वा प्रणम्य नाना पण्डिताः बहवो विद्वांसः तेषां वक्त्रेभ्यः मुखेभ्यः निर्गतवतां निःसृतानाम् अमृतकथाप्रस्तावेन पीयूषसदृशवाक्यप्रसङ्गेन विस्तारिणां विस्तृतिं गतानां पद्यानां श्लोकानां संग्रहः इह अस्मिन् सन्दर्भे निर्मीयते क्रियते । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

काव्ये इति । विज्ञाननिवहैः विद्वद्वृन्दैः मुहुः पुनः पुनः आस्वाद्यमाने अतएव भव्यतमे अत्युत्तमेऽपि काव्ये मत्सरजुषां विद्वेषिणां दोषान्वेषणमेव नैसर्गिकः स्वाभाविकः दुर्ग्रहः निर्बन्धः । तथाहि विकाशिपङ्कजचये प्रफुल्लकमलनिवहे पुनः खेलन्तः क्रीडन्तः मरालाः हंसा यस्मिन् तथाभूते कासारे सरस्यपि क्रौञ्चः वकः कुञ्चितवपुः सङ्कुचितशरीरः सन् शम्बूकानां तस्करोरदर्शने अपसरणशङ्कयेति

अतिरमणीये काव्येऽपि पिशुनो दूषणमन्वेषयति ।
अतिरमणीये वपुषि व्रणमिव मक्षिकानिकरः ॥ ३ ॥
कीर्त्तिस्वर्गतरङ्गिणीभिरभितो वैकुण्ठमाप्लावितं
क्षौणीनाथ ! तव प्रतापतपनैः सन्तापितः क्षीरधिः ।
इत्येवं दयितायुगेन हरिणा त्वं याचितः स्वाश्रयं
हृत्पद्मं हरये श्रिये स्वभवनं कण्ठं गिरे दत्तवान् ॥ ४ ॥
रवेः कवेः किं समरस्य सारं ?
कृषेर्भयं किं किमदन्ति भृङ्गाः ? ।

भावः चञ्चुपुटेन शम्बूकम् अन्वेषते अन्विच्छति । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

अतीति । पिशुनः खलः अतिरमणीये काव्येऽपि अतिरमणीये वपुषि शरीरे मक्षिकानिकरः व्रणमिव क्षतमिव दूषणम् अन्वेषयति अनुसन्दधाति । उपमालङ्कारः ॥ ३ ॥

कीर्त्तीति । हे क्षौणीनाथ ! राजन् ! तव अभितः समन्तात् सर्वव्यापिनीभिरिति भावः कीर्त्तिस्वर्गतरङ्गिणीभिः कीर्त्तिमन्दाकिनीभिः वैकुण्ठम् आप्लावितं व्याप्तमिति भावः न तत्र वस्तुं शक्यते इति भावः । तव प्रतापतपनैः प्रतापरविभिः क्षीरधिः क्षीरसमुद्रः सन्तापितः उष्णीकृत इत्यर्थः नापि तत्र स्थातुं शक्यते इति भावः । इत्येवं हेतोरिति यावत् दयितायुगेन पत्नीद्वयेन सहेत्यर्थः हरिणा नारायणेन त्वं स्वाश्रयं स्वनिवासस्थानं याचितः सन् हरये हृत्पद्मं हृदयरूपं कमलं श्रिये लक्ष्म्यै स्वभवनं गिरे सरस्वत्यै कण्ठं दत्तवान् । त्वं विष्णुभक्तः लक्ष्मीमान् विद्वांश्चेति भावः । शार्दूलविक्रीडितं वृत्तम् । रूपकमलङ्कारः ॥ ४ ॥

रवेरिति । रवेः सूर्य्यस्य कवेः काव्यकर्त्तुः समरस्य संग्रामस्य च सारं किम् ? कृषेः कृषिकार्य्यस्य भयं किम् ? भृङ्गाः भ्रमराः किम्

सदा भयं चाप्यभयञ्च केषां ?
भागीरथीतीरसमाश्रितानाम् ॥ ५ ॥

वासः काञ्चनपिञ्जरे नृपकराम्भोजैस्तनूमार्जनं
भक्ष्यं स्वादुरसालदाड़िमफलं पेयं सुधाभं पयः ।
पाठः संसदि रामनाम सततं धीरस्य कीरस्य मे
हाहा हन्त ! तथापि जन्मविटपिक्रोड़ं मनो धावति ॥६॥

उदयति यदि भानुः पश्चिमे दिग्विभागे
विकसति यदि पद्मं पर्वतानां शिखाग्रे ।

खादन्ति खादन्ति ? केषां जनानां सदा भयम् ? केषाञ्च सदा अभयम् ? इति प्रश्नवाक्यानि । भागीरथीतीरसमाश्रितानामिति उत्तरवाक्यम् । तथाहि रवेः सारं भा दीप्तिः । कवेः सारं गीर्वाणीत्यर्थः । समरस्य सारं रथी रथारूढ़ो वीर इत्यर्थः । कस्यैर्भयम् इती अतिवृष्ट्यादय इत्यर्थः, अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षड़ेता ईतयः स्मृता इति । भक्ष्यम् खादन्ति । आश्रितानां सदा भयम् । भागीरथीतीरसमाश्रितानां सदा अभयम् । उपजातिवृत्तम् ॥ ५ ॥

वास इति । धीरस्य कीरस्य शुकस्य मे मम काञ्चनपिञ्जरे स्वर्णनिर्मितपिञ्जरे वासः स्थितिः, नृपस्य राज्ञः कराम्भोजैः करकमलैः तनूमार्जनं शरीरशोधणं, स्वादु सुस्वादं रसालदाड़िमफलं भक्ष्यं खाद्यं, सुधाभम् अमृतोपमं पयः जलं पेयं पानीयम् । संसदि सभायां सततं रामनामपाठः । हा हा हन्तेति खेदसूचकशब्दानां प्रयोगः दुःखातिशयद्योतनार्थः । तथापि इत्थं सौभाग्येऽपीति भावः मनः जन्मविटपिक्रोड़ं जन्मतरुवृक्षं धावति गच्छति । जन्मस्थानममता दुस्त्यजेति भावः । अप्रस्तुतप्रशंसालङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६ ॥

प्रचलति यदि मेरुः शीततां याति वह्नि-
र्न चलति खलु वाक्यं सज्जनानां कदाचित् ॥ ७

निर्वाणदीपे किमु तैलदानं ?
चौरे गते वा किमु सावधानम् ? ।
वयोगते किं वनिताविलासः ?
पयोगते किं खलु सेतुबन्धः ? ॥ ८ ॥

वरमसिधारा तरुतलवासो
वरमिह भिक्षा वरमुपवासः ।
वरमपि घोरे नरके पतनं
न च धनगर्वितबान्धवशरणम् ॥ ९ ॥

कुग्रामवासः कुजनस्य सेवा
कुभोजनं क्रोधमुखी च भार्य्या ।

उदयतीति । भानुः सूर्य्यः यदि पश्चिमे दिग्विभागे उदयति उद्गच्छति, पद्मं यदि पर्वतानां शिखाग्रे शृङ्गे विकसति, मेरुः सुमेरुपर्वतः यदि प्रचलति स्वस्थानात् भ्रश्यति, वह्निरग्निः यदि शीततां शीतलत्वं याति, तथापि सज्जनानां वाक्यं कदाचित् न खलु नैव चलति नान्यथा भवतीत्यर्थः । मालिनीवृत्तम् । भानु-पद्ममेरुवह्निभ्यः सज्जनानाम् आधिक्यवर्णनात् व्यतिरेकालङ्कारः । तदुक्तं दर्पणे । आधिक्यमुपमेयस्योपमानान्न्यूनताथवेति ॥ ७ ॥

निर्वाणेति व्याख्यातं प्राक् ॥ ८ ॥

वरमिति । असिधारा वरम् असिप्रहारेण प्राणत्यागो वरमिति भावः, तरुतलेषु वासः वृक्षमूलेषु वसतिः वरम्, घोरे दारुणे नरकेऽपि पतनं वरं मनाक्प्रियमित्यर्थः, धनेन गर्वितः मत्तः बान्धवः ज्ञातिः एव शरणम् आश्रयः न च वरमित्यनेनान्वयः ॥ ९ ॥

कुग्रामेति । कुत्सिते ग्रामे वासः, कुजनस्य सेवा, कुभोजनं,

मूर्खश्च पुत्रो विधवा च कन्या
विनाग्निना संदहते शरीरम् ॥ १० ॥

वरं मौनं कार्य्यं न च वचनमुक्तं यदनृतं
वरं क्लैव्यं पुंसां न च परकलत्राभिगमनम्।
वरं भैक्ष्याशित्वं न च परधनास्वादनसुखं
वरं प्राणत्यागो न च पिशुनवादेष्वभिरतिः ॥ ११ ॥

निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपः
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेश्वरत्वं पुनः।
चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्राह्मं पदं वाञ्छति
ब्रह्मा विष्णुपदं हरिः शिवपदं त्वाशावधिं के गताः? ॥१२॥

ख्यातः शक्रो भगाङ्की विधुरपि मलिनो माधवो गोपजातो
वेश्यापुत्रो वशिष्ठः सरुजपदयमः सर्वभक्ष्यो हुताशः।

क्रोधमुखी कोपना भार्य्या, मूर्खः पुत्रः, विधवा कन्या च अग्निना विना शरीरं संदहते सम्यक् दहति ॥ १० ॥

वरमिति। मौनं तूष्णीम्भावः कार्य्यं वरम्, अनृतम् असत्यम् उक्तं वचनं यत् तत् न च वरम्। पुंसां क्लैव्यं स्त्रीसम्भोगे अक्षमत्वमिति भावः वरं, परेषां कलत्रेषु स्त्रीषु अभिगमनं न च वरमिति शेषः। भैक्षाशित्वं भिक्षया भोजनं वरं, परधनानाम् आस्वादनसुखं भोगसुखं न च वरमिति शेषः। प्राणानां त्यागः वरं, पिशुनवादेषु दुर्वाक्येषु अभिरतिः अनुरागो न च वरमिति शेषः। शिखरिण्यावृत्तम् ॥ ११ ॥

निःस्व इति व्याख्यातं प्राक् ॥ १२ ॥

ख्यात इति। त्रिभुवने वसतां जनानां मध्ये कस्य जनस्य दोषः न जातः? सर्वस्यैव जात इत्यर्थः। तथाच शक्रः इन्द्रः भगाङ्कः

व्यासो मत्स्योदरीयः सलवण उदधिः पाण्डवा जारजाता
रुद्रः प्रेतास्थिधारी त्रिभुवनवसतां कस्य दोषो न जातः ॥ १३ ॥

तुरगशतसहस्रं गो-गजानाञ्च लक्षं
कनकरजतपात्रं मेदिनीं सागरान्ताम् ।
विमलकुलवधूनां कोटिकन्याश्च दद्यात्
न हि न हि सममेतैरन्नदानं प्रधानम् ॥ १४ ॥

कालिदासकविता नवं वयः माहिषं दधि सशर्करं पयः ।
ऐनमांसमबला च कोमला सम्भवन्तु मम जन्मजन्मनि ॥ १५ ॥

सहस्रयोनिशरीरः ख्यातः प्रसिद्धः । जात इति पाठान्तरम् । विधुरपि चन्द्रोऽपि मलिनः कलङ्की । माधवः कृष्णः गोपजातः गोपपुत्रः । वशिष्ठः वेश्यायाः उर्वश्याः पुत्रः । यमः खञ्जपदः सरोगचरणः । हुताशः अग्निः सर्वभक्षः सर्वाणि भक्ष्याणि यस्य तथोक्तः । व्यासः मत्स्योदरीयः मत्स्योदरे जाताया मत्स्यगन्धायाः पुत्र इत्यर्थः । उदधिः समुद्रः सलवणः लवणाक्तः । पाण्डवाः युधिष्ठिरादयः पञ्च जारजाताः उपपतिपुत्राः । रुद्रः हरः प्रेतानां शवानाम् अस्थिधारी कङ्कालधरः । स्रग्धरावृत्तम् ॥ १३ ॥

तुरगेति । तुरगाणाम् अश्वानां शतसहस्रं गोगजानां लक्षञ्च, कनकरजतपात्रं स्वर्णरौप्यभाजनं सागरान्तां मेदिनीं तथा विमलकुलवधूनां निर्मलकुलजातनारीणां कोटिकन्याः कोटिसंख्यकाः कन्याश्च दद्यात् लोक इति शेषः, किन्तु अन्नदानं न हि न हि नैव नैव एतैः पूर्वोक्तैः दानैः समं तुल्यं, तस्मात् प्रधानं श्रेष्ठं सर्वेभ्यः दानेभ्य इति शेषः । मालिनीवृत्तम् ॥ १४ ॥

कालिदासेति । कालिदासस्य कविता काव्यं, नवं वयः यौवनं, माहिषं दधि, सशर्करं शर्करायुतं पयः दुग्धम्, ऐनमांसं हरिणमांसं, तथा कोमला सुकुमारी अबला कान्ता च एताः मम जन्मजन्मनि प्रतिजन्मेत्यर्थः सम्भवन्तु सुलभा भवन्त्वित्यर्थः । रथोद्धतावृत्तम् ॥ १५ ॥

नाक्षराणि पठता किमपाठि ?
पाठितोऽपि किमु विस्मृत एव ? ।
इत्थमर्थिजनसंशयदोला-
खेलनां खलु चकार नकारः ॥ १६ ॥

लक्ष्मणसेन उवाच ।

शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे ।
किं चातः परमं तव स्तुतिपदं त्वं जीवनं जीविनां
त्वं चेन्नीचपथेन गच्छसि पयः ! कस्त्वां निरोद्धुं क्षमः ? ॥१७॥

वल्लालसेन उवाच ।

तापो नापगतस्तृषा न च कृशा धौता न धूली तनो-

नाक्षराणीति । अक्षराणि वर्णमाला इत्यर्थः पठता अनेन किं न अपाठि ? न पठितं सर्वमेव पठितमित्यर्थः । पाठितोऽपि अध्यापितोऽपि किमु कथं विस्मृत एव, नकारः इत्थम् अर्थिजनानां संशयदोलाखेलनां खलु चकार । इन्द्रवज्रावृत्तम् ॥ १६ ॥

शैत्यमिति । शैत्यं शीतलत्वं नाम गुणः तव सहज एव स्वाभाविक एव, स्वच्छता नैर्मल्यं तव स्वाभाविकी नैसर्गिकी । तव शुचितां विशुद्धतां किं ब्रूमः कथयामः ? यस्य तव स्पर्शेन अपरे जनाः शुचयः शुद्धाः भवन्ति । त्वं जीविनां प्राणिनां जीव्यते अनेनेति जीवनम्, अतः परं तव स्तुतिपदं स्तोत्रस्थानं किम् ? न किमपीत्यर्थः । हे पयः ! चेत् यदि त्वं नीचपथेन गच्छसि, तदा कः जनः त्वां निरोद्धुं निवारयितुं क्षमः शक्तः ? न कोऽपीत्यर्थः । अति-घृणं कुमार्गगमनोद्यतं पितरं प्रति राजपुत्रस्य लक्ष्मणसेनस्य उक्तिः । अप्रस्तुतप्रशंसालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

ताप इति । तापः सन्तापः न अपगतः विनष्टः । तृषा

नो स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा ।
दूरोत्क्षिप्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी
प्रारब्धो मधुपैरकारणमहो झङ्कारकोलाहलः ॥ १८ ॥

लक्ष्मणसेन उवाच ।

परीवादस्तथ्यो भवति वितथो वापि महताम्
अतथ्यस्तथ्यो वा हरति महिमानं जनरवः ।
तुलोत्तीर्णस्यापि प्रकटितहताशेषतमसो
रवेस्तादृक्तेजो न हि भवति कन्यां गतवतः ॥ १९ ॥

पिपासा न च क्षुधा न च शोषा । तनोः शरीरस्य धूली न धौता न क्षालिता । कन्दकवलः पद्मानां मृणालभक्षणं स्वच्छन्दं यथा तथा न अकारि न कृतः । केलीकथा विहारकथा का नाम किं वक्तव्यम् । नैव प्रस्तुतेति शेषः । हन्त खेदे, दूरात् उत्क्षिप्तः करः येन तथाभूतेन करिणा हस्तिना पद्मिनी न वा नैव स्पृष्टा । अहो आश्चर्यं मधुपैः भ्रमरैः अकारणं निरर्थकं झङ्कारकोलाहलः प्रारब्धः । कामपि नीचजातीयां कामिनीं प्रति अनुरागे समुद्यतस्य राज्ञः बल्लालसेनस्य प्रारम्भ एव व्याघाते उक्तिरियम् । अप्रस्तुतप्रशंसालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

परीवाद इति । परीवादः लोकापवादः तथ्यः सत्यः वितथः असत्यो वापि भवति, किन्तु अतथ्यः असत्यः तथ्यः सत्यो वा जनरवः महतां जनानां महिमानं हरति नाशयति । तुलोत्तीर्णस्यापि तुलाराशिमतिक्रान्तस्यापि अनुपमस्यापीति ध्वनिः । प्रकटितेन प्रकाशेन उदयेनेति यावत् हतम् अशेषं तमः अन्धकारः अज्ञानञ्चेति ध्वनिः येन तथाभूतस्य किन्तु कन्यां कन्याराशिं कुमारीञ्चेति ध्वनिः । गतवतः रवेः सूर्य्यस्य तादृक् तथाभूतं तुलास्थितस्येति भावः तेजः प्रभावश्चेति ध्वनिः न हि भवति । शिखरिणीवृत्तम् ॥ १९ ॥

राजोवाच ।

सुधांशोर्जातेयं कथमपि कलङ्कस्य कणिका
विधातुर्दोषोऽयं न च गुणनिधेस्तस्य किमपि ।
स किं नात्रेः पुत्रो न किमु हरचूडार्चनमणि-
र्न वा हन्ति ध्वान्तं जगदुपरि किं वा न वसति ॥२०॥

इति श्रीकविभट्टकृतः पद्यसंग्रहः समाप्तः ।

---

## महापद्मम् ।

---

अस्थिवद्दधिवच्चैव शङ्खवद्बकवत्तथा ।
राजन् ! तव यशो भाति पुनः सन्न्यासिदन्तवत् ॥ १ ॥

सुधांशोरिति । सुधांशोश्चन्द्रस्य इयं कलङ्कस्य कणिका अल्पः कलङ्क इत्यर्थः जाता, अयं तादृशस्य कलङ्ककरणमिति भावः विधातुः दैवस्य दोषः, दैवाधीनः कलङ्कः न तु वास्तव इति भावः । गुणनिधेः अशेषगुणाकरस्य तस्य किमपि दोषकारणमित्यर्थः न च अस्तीति शेषः ! सः सुधांशुः अत्रेः महर्षेः पुत्रः किं न ? अपि तु अत्रिपुत्र एवेत्यर्थः । हरस्य चूडाया अर्चनमणिः पूजनरत्नं किमु न ? अपि तु चूडार्चनरत्नमेवेत्यर्थः । ध्वान्तं तिमिरं न वा हन्ति नाशयति ? हन्त्येवेत्यर्थः, किं वा जगताम् उपरि न वसति ? अपि तु वसत्येवेत्यर्थः । शिखरिणीवृत्तम् ॥ २० ॥

---

अस्थिवदिति । हे राजन् ! तव यशः अस्थिवत् कङ्कालवत्,

कालिदास इमं श्लोकं स्वकवित्वस्य गोपकम् ।
लिखित्वा प्रददौ पत्रं कवये शङ्कराय वै ॥ २ ॥
पठित्वा शङ्करः श्लोकं प्रहसन् कौतुकाय तत् ।
पत्रं करे समादाय सानन्दस्त्वरया तदा ॥ ३ ॥
कालिदासेन सहितो भोजराजसभां ययौ ।
अथ दृष्ट्वा स राजानमाशिषं प्रजगाद ह ॥ ४ ॥

---

राजन् ! अभ्युदयोऽस्तु शङ्करकवे ! किं पत्रिकायामिदं ?
पद्यं—कस्य ? तवैव कीर्त्तिरचना तत् पठ्यतां—पठ्यते ।
किन्त्वासामरविन्दसुन्दरदृशां द्राक् चामरान्दोलना-
दुद्वेलद्भुजवल्लिकङ्कणझणत्कारः क्षणं वार्यताम् ॥ ५ ॥

दधिवत्, शङ्खवत्, तथा चकवत् पुनः किञ्च सन्ध्यासिनां दन्तवत् भाति राजते । अनुष्टुब्वृत्तम् ॥ १ ॥

कालिदास इति । कालिदासः स्वकवित्वस्य गोपकम इमं श्लोकं लिखित्वा शङ्कराय कवये पत्रं प्रददौ । अनुष्टुब्वृत्तम् ॥२॥

पठित्वेति । तदा शङ्करः कविः श्लोकं पठित्वा प्रहसन् सन् कौतुकाय तत् पत्रं करे हस्ते समादाय गृहीत्वा सानन्दः सन् त्वरया कालिदासेन सहितः भोजराजस्य सभां ययौ । अथानन्तरं स कविः राजानं दृष्ट्वा आशिषं प्रजगाद प्रोवाच । युग्मम् । अनुष्टुब्वृत्तम् ॥ ३ ॥ ४ ॥

राजन्निति । हे राजन् ! अभ्युदयः मङ्गलम् अस्तु तवेति शेषः, हे शङ्करकवे ! पत्रिकायां किमिदम् ? राजोक्तिरियम् । पद्यम् इति कवेरुक्तिः । कस्य ? पद्यमिति शेषः । राजोक्तिरियम् । तवैव कीर्त्तिरचना इति कवेरुक्तिः । तत् तदा पठ्यताम् इति

महाराज ! श्रीमन् ! जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते ।
कपर्दी कैलासं करिवरमथोऽयं कुलिशभृत्
कलानाथं राहुः कमलभवनो हंसमधुना ॥ ६ ॥

नीरक्षीरे गृहीत्वा सकलखगपतीन् याति नालीकजन्मा
तक्रं धृत्वा कराग्रे सकलजलनिधीन् चक्रपाणिर्मुकुन्दः ।
सर्वानुत्तुङ्गशैलान्दहति पशुपतिर्भालनेत्रेण पश्यन्
व्याप्ता त्वत्कीर्त्तिकान्ता सकलवसुमतीं भोजराज ! क्षितीन्द्र ! ७

राजोक्तिः । पठ्यते इति मधुरकविमाक्षिप्य कालिदासस्योक्तिः । किन्तु द्राक् झटिति साम्प्रतमिति भावः अरविन्दसुन्दरदृशां मञ्जुलाक्षीणाम् आसां किङ्करीणामिति शेषः चामराणाम् आन्दोलनात् सञ्चालनात् उद्वेल्लन्तीनां चलन्तीनां भुजवल्लीनां बाहुलतानां कङ्कणझणत्कारः करभूषणाव्यक्तध्वनिविशेषः क्षणं मत्पठनकालपर्य्यन्तं वार्य्यतां निषिध्यतां येन भवता श्रूयते इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

महाराजेति । हे श्रीमन् महाराज ! ते तव यशसा जगति धवलिते श्वेतीकृते सति अधुना अयं परमपुरुषः नारायणः पयःपारावारं क्षीरसागरं, कपर्दी हरः कैलासम्, अयं कुलिशभृत् वज्री इन्द्रः करिवरम् ऐरावतं, राहुः कलानाथं चन्द्रं, तथा कमलभवनः पद्मयोनिः ब्रह्मा हंसं स्ववाहनमिति भावः मृगयते अन्विच्छति, सर्वस्य जगतः श्वेतीभूतत्वात् श्वेतवस्तूनां क्षीरसागरादीनां तदन्तर्लीनत्वेन मार्गणमुचितमेवेति भावः । भ्रान्तिमानलङ्कारः । शिखरिणीवृत्तम् ॥ ६ ॥

नीरक्षीरे इति । हे क्षितीन्द्र भोजराज ! तव कीर्त्तिकान्ता कीर्त्तिदेवी सकलवसुमतीं समग्रां पृथिवीं व्याप्ता आक्रम्य स्थितेत्यर्थः । तथा हि नालीकजन्मा कमलसम्भवः ब्रह्मेत्यर्थः नीरक्षीरे

श्रीमद्राजशिखामणे ! तुलयितुं धाता त्वदीयं यशः
कैलासञ्च निरीक्ष्य तत्र लघुतां तत्पूर्तये पर्यधात् ।
उक्षाणं तदुपर्युमासहचरं तन्मूर्ध्नि गङ्गाभरं
तस्याग्रे फणिपुङ्गवं तदुपरि स्फारं सुधादीधितिम् ॥ ८ ॥

अपायि मुनिना पुरा पुनरमायि मर्य्यादया

अलदुग्धे मत्वा सकलान् समपतीन् पक्षिणः याति गच्छति चक्रपाणिः मुकुन्दः नारायणः कराङ्के करतलके तक्रं धृत्वा नीत्वा सकलान् जलनिधीन् यातीत्यनेन सम्बन्धः । पशुपतिः हरः सर्वान् शैलान् उद्दृत्य उत्पाद्य भालनेत्रेण ललाटनयनेन पश्यन् सन् दहति भस्मीकरोति । तव कीर्त्त्या सर्वस्य जगतः श्वेतीभूतत्वात् पक्षिषु हंसः क इति विचारात् नीरक्षीरपक्षं नीरक्षीरसंयोगे हंसाः नीरं त्यक्त्वा क्षीरमेव गृह्णन्तीति भावः, हंसः क्षीरमिवाम्भस इति द्रष्टव्यम् । जलनिधिषु श्वेतीभूतेषु कः क्षीरनिधिरिति विचारात् तक्रपक्षं तक्रसंयोगे वास्तवस्य क्षीरनिधेर्विकृतत्वसम्भवादिति भावः । पर्वतेषु श्वेतीकृतेषु तेषां भस्मीकरणेन रजतपर्वतस्य कैलासस्य ज्ञानं भवति तस्य रजतमयत्वात् भस्माभाव इति भावः । स्रग्धरावृत्तम् । भ्रान्तिमानलङ्कारः ॥ ७ ॥

श्रीमदिति । हे श्रीमन् राजशिखामणे ! धाता विधाता त्वदीयं यशः कीर्त्तिं तुलयितुं कैलासं तत्र लघुतां तव यशस्तोलने, असामर्थ्यञ्च निरीक्ष्य विविच्येत्यर्थः तस्य कैलासस्य पूर्त्तये पूरणाय तदुपरि तस्य कैलासस्य उपरि उक्षाणं वृषं तदुपरि उमासहचरं हरं तस्य मूर्ध्नि शिरसि, गङ्गाभरं गङ्गाप्रवाहं तस्याग्रे फणिपुङ्गवं नागराजं तदुपरि तस्य हरस्य उपरि शिरसीत्यर्थः स्फारं विशालं सुधादीधितिं चन्द्रं पर्य्यधात् समर्पयत् अस्थापयदित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

अपायीति । हे वसुधापते ! पृथिवीपाल ! तव यशोऽम्बुभिः

अतारि कपिना पुरा पुनरदाहि लङ्कारिणा ।
अमन्थि सुरवैरिणा पुनरबन्धि लङ्कारिणा
क नाम वसुधापते ! तव यशोऽम्बुधिः क्वाम्बुधिः ॥९॥

स्वस्ति श्रीभोजराज त्रिभुवनविजयी धार्मिकः सत्यवादी
पिता ते मे गृहीता नवनवतियुता रत्नकोटिर्मदीया ।
तां त्वं मे देहि शीघ्रं सकलबुधजनैर्ज्ञायते सत्यमेतत्
नो वा जानन्ति केचिन्नवकृतमिति चेद् देहि लक्षं ततो मे१०

कीर्त्तिसमुद्रः क नाम अम्बुधिः समुद्रश्च क ? नानयोः साम्यं युज्यते इति भावः । तथाहि समुद्रः पुरा पूर्वं मुनिना अगस्त्येन अपायि पीतः गण्डूषेणेति शेषः । अयन्तु तव यशोऽम्बुधिस्तथा नेति भावः । मर्य्यादया सीमया पुनः अमायि परिमितः । अयन्तु यशोऽम्बुधिर्न परिमीयते इति भावः । पुरा पूर्वञ्च अरिणा शत्रुणा कपिना अतारि तीर्णः, लङ्का पुनः अदाहि भस्मीकृतेत्यर्थः । नायं केनापि तीर्ण इति भावः । सुरवैरिणा नारायणेन अमन्थि मथितः । अयन्तु यशोऽम्बुधिः न केनापि मथित इति भावः । लङ्कारिणा रामेण पुनः अबन्धि बद्धः । अयन्तु यशोऽम्बुधिः न तथेति भावः ।
विषमालङ्कारः । तदुक्तं दर्पणे । विरूपयोः सङ्घटना या च तद्विषमं मतमिति । पृथ्वीवृत्तम् ॥ ९ ॥

स्वस्तीति । स्वस्ति शुभमस्तु, हे श्रीभोजराज ! त्वं त्रिभुवनविजयी धार्मिकः सत्यवादी च । ते तव पिता मे मम सकाशादिति शेषः मदीया नवनवतियुता रत्नानां कोटिः गृहीता, त्वं तां रत्नकोटिं मे मम शीघ्रं देहि । तूर्णमिति पाठान्तरम् । सकलबुधजनैः सर्वैः विद्वद्भिः तव सभासद्भिरिति शेषः ज्ञायते, एतत् मदुक्तं सत्यम् । वा यदि वा केचित् नो जानन्ति, तदा नवकृतमेतत् पद्यमिति चेत् ततः तदा मे मह्यं लक्षं लक्षसंख्यकमुद्रां देहि । भोजराजस्य सभः

मा गाः प्रत्युपकारकातरधिया वैमुख्यमाकर्णय
श्रीकर्णाटवसुन्धराधिप ! सुधासिक्तानि सूक्तानि मे ।
वर्ण्यन्ते कति नाम नार्णवनदीभूगोलविन्ध्याटवी
झञ्झामारुतचन्द्रमप्रभृतयस्तेभ्यः किमाप्तं मया ॥ ११ ॥

इति श्रीमहाकविकालिदासकृतं महापद्यषट्कं
समाप्तम् ।

---

सभासदः पण्डिता आसन्, तेषु एकः श्रुतिधरः, द्वितीयः द्विश्रुतिधरः तृतीयः त्रिश्रुतिधरः। राजा स्वयं चतुःश्रुतिधरः आसीत्। स राजा प्रतिज्ञातवान् यः कश्चित् नूतनं पद्यं मे श्रावयति तस्मै अहं लक्षमुद्रां दास्यामीति। ततश्च यः कश्चन कविः तत्सकाशे नूतनं श्लोकं रचयित्वा श्रावयति, तं राजचतुर्थाः सभासदः कविमुखात् श्रुत्वैव क्रमेण तं श्लोकं पठन्ति, पुरातनमिति कथयन्ति च। ततश्च कालिदासेन कौशलं कृत्वा पद्यमिदं तत्सकाशे पठितमिति किंवदन्ती श्रूयते। स्रग्धरावृत्तम् ॥ १० ॥

मा गा इति। हे भोजराज इत्यध्याहार्य्यं, प्रत्युपकारे कातरा विमूढा धीः मतिः तया वैमुख्यं पराङ्मुखत्वं मा गाः न गच्छ, प्रत्युपकारकरणे अनिच्छावशात् मां प्रति विमुखो न भवेति भावः। हे श्रीकर्णाटवसुन्धराधिप! सुधासिक्तानि मे मम सूक्तानि शोभनानि वचनानि आकर्णय शृणु। कति नाम अर्णवाः समुद्राः नद्यः भूगोलः विन्ध्याटवी विन्ध्यपर्वतकाननं झञ्झामारुताः चन्द्रमःप्रभृतयः न वर्ण्यन्ते? अपि तु सर्वे एव वर्ण्यन्ते। तेभ्यः वर्णितेभ्यः मया किं प्राप्तं लब्धं न किमपीत्यर्थः। मया तव कीर्त्तिवर्णना कृतेति न पुरस्कारमर्थये अपि तु मद्वाक्यं श्रोतव्यमेवेति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

---

# मुकुन्दमाला ।

---

वन्दे मुकुन्दमरविन्ददलायताक्षं
कुन्देन्दुशङ्खदशनं शिशुगोपवेशम् ।
इन्द्रादिदेवगणवन्दितपादपीठं
वृन्दावनालयमहं वसुदेवसूनुम् ॥ १ ॥

श्रीवल्लभेति वरदेति दयापरेति
भक्तप्रियेति भवलुण्ठनकोविदेति ।
नाथेति नागशयनेति जगन्निवासे-
त्यालापिनं प्रतिदिनं कुरु मां मुकुन्द ! ॥ २ ॥

वन्दे इति । अहम् अरविन्ददलायताक्षं पद्मपत्रायतविशाल-लोचनं कुन्दवत् इन्दुवत् शङ्खवच्च दशनाः दन्ता यस्य तथोक्तं शिशु-गोपवेशं गोपबालकवेशम् इन्द्रादिदेवगणैः वन्दितं पादपीठं यस्य तथाभूतं वृन्दावनालयं वृन्दावनवासिनं वसुदेवसूनुं वासुदेवं मुकुन्दं वन्दे प्रणमामि । वसन्ततिलकं वृत्तम् ॥ १ ॥

श्रीवल्लभेति । हे मुकुन्द ! त्वं मां श्रीवल्लभ रमाकान्त इति, वरद अभीष्टप्रद इति, दयापर दयामय इति, भक्तप्रिय इति, भवस्य संसारस्य लुण्ठने विमोचने कोविद कुशल इति, नाथ स्वामिन् इति, नागशयन अनन्तशायिन् इति, तथा जगन्निवास जगदाधार इति प्रतिदिनम् आलापिनं कीर्त्तनकं कुरु । वसन्ततिलकं वृत्तम् ॥२॥

जयत्विति । अयं देवकीनन्दनः देवः जयतु जयतु सर्वोत्कर्षेण वर्त्ततामित्यर्थः । वृष्णिवंशप्रदीपः यदुवंशोज्ज्वलकरः कृष्णः जयतु जयतु । मेघश्यामलः मेघवत् श्यामवर्णः कोमलम् अङ्गं यस्य तथाभूतः ।

जयतु जयतु देवो देवकीनन्दनोऽयं
जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलाङ्गो
जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ ३ ॥

मुकुन्द ! मूर्ध्ना प्रणिपत्य याचे
भवन्तमेकान्तमियन्तमर्थम् ।
अविस्मृतिस्त्वच्चरणारविन्दे
भवे भवे मेऽस्तु तव प्रसादात् ॥ ४ ॥

श्रीगोविन्दपदाम्भोजमधुनो महदद्भुतम् ।
यत्पायिनो न मुञ्चन्ति मुञ्चन्ति यदपायिनः ॥ ५ ॥

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं गुरुमपि हरे ! नारकं नापनेतुम् ।

अन्यत् सुगमम् । पृथ्वीभारनाशो भूभारहरणार्थमवतीर्ण इति भावः । अन्यत् सुगमम् । मालिनीवृत्तम् ॥ ३ ॥

मुकुन्देति । हे मुकुन्द ! भवन्तं मूर्ध्ना शिरसा प्रणिपत्य इयन्तम् एतावन्तम् अर्थम् एकान्तं नितरां याचे प्रार्थये । किमित्याह अविस्मृतिरिति, तव प्रसादात् भवे भवे प्रतिजन्म इत्यर्थः मे मम तव चरणारविन्दे अविस्मृतिः स्मृतिरित्यर्थः अस्तु भवतु । उपेन्द्रवज्रा वृत्तम् ॥ ४ ॥

श्रीति । श्रीगोविन्दस्य पदाम्भोजे यत् मधु तस्य महत् अद्भुतं माहात्म्यमिति शेषः, यत्पायिनः यस्य मधुनः पायिनः पानकर्त्तारः मुञ्चन्ति न त्यजन्ति तत् गच्छन्तीति शेषः, यदपायिनः यस्य पानाकारिणः मुञ्चन्ति त्यजन्ति तत् पातुं नेच्छन्तीति भावः । अनुष्टुब्वृत्तम् ॥ ५ ॥

नाहमिति । हे हरे ! अहम् अद्वन्द्वहेतोः द्वन्द्वं शीतोष्णादि-

रम्या रामा मृदुतनुलता नन्दने नापि रन्तुं
भावे भावे हृदयभवने भावयेऽहं भवन्तम् ॥ ६ ॥

नास्था धर्मे न वसु-निचये नैव कामोपभोगे
यद्भाव्यं तद्भवतु भगवन् ! पूर्वकर्मानुरूपम् ।
एतत् प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि
त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥ ७ ॥

दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक ! प्रकामम् ।
अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि ॥ ८ ॥

दुःखानभिज्ञता तत्परित्यागहेतोः मुक्तिहेतोरिति भावः न, कल्पो-पाकं गुरुं महान्तमपि नरकं अपनेतुं न, नन्दने देवोद्याने मृदु-तनुलताः कोमलाङ्गीः रम्याः मनोहारिणीः रामाः कान्ताः रन्तुं नापि, तव चरणयोर्द्वन्द्वं पदयुगलं वन्दे, अहं भावे भावे जन्मनि जन्मनि हृदयभवने भवन्तं भावये चिन्तये । प्रतिजन्म भवत्स्मरण-कामनया भवन्तं वन्दे इति भावः । मन्दाक्रान्तावृत्तम् ॥ ६ ॥

नास्थेति । हे भगवन् ! धर्मे वेदादिविधौ न, वसुनिचये धन-सञ्चये न, कामोपभोगे विषयसम्भोगे नैव, आस्था यत्नः ममेति शेषः, पूर्वकर्मानुरूपं प्राक्तनकर्माधीनं यत् भाव्यं भवितव्यं तत् भवतु । एतत् मम बहुमतं प्रार्थ्यं निवेदनीयं यत् जन्मजन्मान्तरे-ऽपि तव पादाम्भोरुहयुगगता निश्चला भक्तिः अस्तु मे इति शेषः । मन्दाक्रान्तावृत्तम् ॥ ७ ॥

दिवीति । हे नरकान्तक ! नरकरिपो ! दिवि वा स्वर्गे वा, भुवि वा पृथिव्यां वा, नरके वा, मम प्रकामं सम्यक् वासोऽस्तु, किन्तु मर-णेऽपि [illegible] अवधीरितम् अवज्ञातं निर्जितमित्यर्थः शारदं

सरसिजनयने सशङ्खचक्रे
मुरभिदि मा विरमेह चित्त ! रन्तुम् ।
सुखतरमपरं न जातु जाने
हरिचरणस्मरणामृतेन तुल्यम् ॥ ९ ॥

मा भैर्मन्द मनो विचिन्त्य बहुधा यामीश्चिरं यातना
नैवामी प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं
लोकस्य व्यसनापनोदकरणे दासस्य किं न क्षमः ? ॥१०॥

भवजलधिगतानां द्वन्द्ववाताहतानां
सुत-दुहितृ-कलत्रत्राणभारावृतानाम् ।

शरत्कालीनम् अरविन्दं कमलं याभ्यां तथाभूतौ ते तव चरणौ चिन्तयामि ॥ ८ ॥

सरसिजेति । हे चित्त ! सरसिजनयने पद्मनेत्रे सशङ्खचक्रे शङ्खचक्रधारिणि इह अस्मिन् मुरभिदि कृष्णे रन्तुं विहर्तुं मा विरम विरतं मा भव । हरिचरणस्मरणमेव अमृतं तेन तुल्यम् अपरं सुखतरम् अत्यन्तसुखं जातु कदाचित् न जाने ॥ ९ ॥

मेति । हे मन्द मूढ़ मनः ! चिरं बहुधा विविधाः यामीः यमसम्बन्धिनीः यातनाः विचिन्त्य मा भैः भयं मा कुरु । अमी पापरिपवः पापरूपाः शत्रवः नैव प्रभवन्ति नैव यातनां दातुं समर्थाः भवन्ति । ननु यतः श्रीधरः कृष्णः स्वामी प्रभुरस्ति तवेति शेषः । तस्मात् आलस्यं व्यपनीय परित्यज्य भक्तिसुलभं नारायणं ध्यायस्व चिन्तय । स नारायणः दासस्य लोकस्य जनस्य व्यसनं विपत् तस्य अपनोदः निवारणं तस्य करणे किं न क्षमः न शक्तः ? अपितु शक्त एवेत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १० ॥

भवेति । विष्णु देव पोतः जलयानविशेषः एकः केवलः भव-

विषमविषयतोये मज्जतामप्लवानां
भवति शरणमेको विष्णुपोतो नराणाम् ॥ ११ ॥
रजसि निपतितानां मोहजालावृतानां
जननमरणदोलादुर्गसंसर्गकाणाम्।
अशरणमशरणानामेक एवातुराणां
कुशलपथनियुक्तश्चक्रपाणिर्नराणाम् ॥ १२ ॥
अपराधसहस्रसङ्कुलं पतितं भीमभवार्णवोदरे।
अगतिं शरणागतं हरे! कृपया केवलमात्मसात् कुरु ॥१३॥

अवधिगतानां संसाररूपसागरपतितानां द्वन्द्वं शीतोष्णादिदुःखमेव वातः वायुः तेन आहतानां ताडितानां सुतानां पुत्राणां दुहितॄणां कन्यानां कलत्राणां पत्नीनां त्राणं रक्षणमेव भारः तेन आहतानां व्याक्रान्तानां विषमः दुरतिक्रम इति यावत् विषयः स्रक्चन्दनवनितादिरूप एव तोयं जलं तस्मिन् मज्जतां विचरताम् अप्लवानां पारगमनाक्षमाणामिति यावत् नराणां शरणम् आश्रयः भवति। रूपकालङ्कारः। मालिनीवृत्तम् ॥ ११ ॥

रजसीति। कुशलपथे मङ्गलमार्गे नियुक्तः एक एव चक्रपाणिः कृष्णः रजसि रजोगुणव्यापारे रागद्वेषादिरूपे निपतितानां मोहजालेन अज्ञानविषयेण आवृतानां जननमरणमेव दोला सैव दुर्गं दुःखाकरस्थानं तस्मिन् संसर्गः येषां तथोक्तानां, स्वार्थे कप्रत्ययः। अशरणानां निराश्रयाणाम् आतुराणां क्लिष्टानां नराणां शरणम् आश्रयः। रूपकालङ्कारः। मालिनीवृत्तम् ॥ १२ ॥

अपराधेति। हे हरे! अपराधसहस्रेण सङ्कुलं व्याप्तमिति भावः भीमः भयङ्करः भवः संसार एव अर्णवः समुद्रः तस्योदरे अभ्यन्तरे पतितम् अगतिं निराश्रयं शरणागतं जनमिति शेषः कृपया अनुकम्पया केवलम् आत्मसात् कुरु आधीनं कुर्वित्यर्थः ॥ १३ ॥

मा मे स्त्रीत्वं मा च मे स्यात् कुभावो
मा मूर्खत्वं मा कुदेशेषु जन्म।
मिथ्यादृष्टिर्मा च मे स्यात् कदाचित्
जातौ जातौ विष्णुभक्तो भवेयम्॥ १४॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वानुसृतिप्रमादात्।
करोमि यद्यत् सकलं परस्मै
नारायणायैव समर्पयामि॥ १५॥

यत् कृतं यत् करिष्यामि तत् सर्वं न मया कृतम्।
त्वया कृतन्तु फलभुक् त्वमेव मधुसूदन!॥ १६॥

मेति। मे मम स्त्रीत्वं नारीत्वं मा, मे मम कुभावः कुत्सित-भावश्च मा, तथा मूर्खत्वम् अज्ञत्वं मा, कुदेशेषु जन्म मा स्यात् न भवत्वित्यर्थः। तथा कदाचित् मे मम मिथ्यादृष्टिः नास्तिकता च मा स्यात् न भवतु, मिथ्यादृष्टिर्नास्तिकतेत्यमरः। जातौ जातौ जन्मनि जन्मनि अहं विष्णुभक्तः भवेयम्। शालिनीवृत्तम्॥ १४॥

कायेनेति। कायेन शरीरेण वाचा मनसा इन्द्रियैः चक्षुरादि-भिश्च बुद्ध्या आत्मना वा अनुसृतिः अनुसरणम् अन्यकृतकार्य्यस्यानु-करणमिति भावः, प्रमादः अनवधानता च तद्वशात् यत् यत् करोमि, तत् सकलं परस्मै परमात्मने नारायणाय एव समर्पयामि। उप॰ जातिवृत्तम्॥ १५॥

यदिति। हे मधुसूदन! यत् कृतं मयेति शेषः, यच्च करि-ष्यामि, तत् सर्वं मया न कृतं, त्वया कृतन्तु कृतमेव, तथाचोक्तं, जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः। त्वया हृषीकेश हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमीति। अतः त्वमेव फलभुक् पापपुण्यफलयोर्भोक्तेत्यर्थः। अनुष्टुब्वृत्तम्॥ १६॥

भवजलधिमगाधं दुस्तरं निस्तरेयं
कथमहमिति चेतो मा स्म गाः कातरत्वम्।
सरसिजदृशि देवे तावकी भक्तिरेका
नरकभिदि निषण्णा तारयिष्यत्यवश्यम्॥१७॥
तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले
दारावर्त्ते नयनसहजग्राहशङ्काकुले च।
संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्!
पादाम्भोजे वरद! भवतो भक्तिभावे प्रसीद॥१८॥
पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुः स्फुलिङ्गो लघुः

भवेति। हे चेतः! कथम् अहम् अगाधम् अतलस्पर्शम् अत एव दुस्तरम् अपारं भवजलधिं संसारसागरं निस्तरेयम् इति हेतोः कातरत्वं मा स्म गाः व्याकुलं न भवेत्यर्थः। सरसिजदृशि कमलनयने नरकभिदि नरकान्तके देवे नारायणे इति भावः। निषण्णा स्थिता एका अद्वितीया तावकी त्वदीया भक्तिः अवश्यं तारयिष्यति उद्धरिष्यति त्वामिति शेषः। मालिनीवृत्तम्॥१७॥

तृष्णेति। हे त्रिधामन्! त्रिविक्रम! हे वरद! तृष्णा वासना तोयं जलं यस्य तथोक्ते मदनः काम एव पवनः तेन उद्धूता उत्थापिता मोहा एव ऊर्मिमालाः तरङ्गराजयः यस्मिन् तादृशे, दाराः कलत्राणि आवर्त्ताः भ्रमयः यत्र तथाभूते तनयः सुत एव सहजः स्वभावजातः ग्राहः जलजन्तुभेदः तस्मात् या शङ्का भयं तया आकुले संसाराख्ये संसारनामनि महति जलधौ मज्जतां निपततां नः अस्माकं भवतः पादाम्भोजे चरणकमले भक्तिभावं प्रसीद प्रसन्नो [illegible]। भवसमुद्रपारगतिर्भक्तिरेव संसारिणां शरणं गतिरिति भावः। मन्दाक्रान्तावृत्तम्॥१८॥

पृथ्वीति। यत्र श्रीपादपद्माश्रये दृष्टे [illegible] पृथ्वीरेणुः अणुः

तेजो निःश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः ।
क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा
दृष्टे यत्र स तारको विजयते श्रीपादधूलीकणः ॥१९॥
आम्नायाभ्यसनान्यरण्यरुदितं कृच्छ्रव्रतान्यन्वहं
मेदश्छेदपदानि पूर्त्तविधयः सर्वं हुतं भस्मनि ।
तीर्थानामवगाहनानि च गजस्नानं विना यत्पद-
द्वन्द्वाम्भोरुहसंस्तुतिं विजयते देवः स नारायणः ॥२०॥

अल्पः अतिलघुरित्यर्थः पयांसि जलानि कणिकाः अतिसूक्ष्म इत्यर्थः तेजः ज्योतिः फल्गुः असारः स्फुलिङ्गः कणः यस्य तादृशम् अतएव लघु तुच्छमित्यर्थः । मरुत् वायुः निःश्वसनं निःश्वासमात्रम् अतितुच्छमित्यर्थः । नभः आकाशं तनुतरं क्षुद्रतरं सुसूक्ष्मं रन्ध्रं छिद्रम् अकिञ्चिदिति भावः पञ्च महाभूतानि अतितुच्छानीति सर्व-निष्कर्षः । रुद्रपितामहप्रभृतयः शिवविरिञ्चिप्रभृतयः समस्ताः सुराः देवाः क्षुद्राः कीटाः कीटतुल्या इति यावत् प्रतीयन्ते इति शेषः स तारकः संसारतरणकारी श्रीपादधूलीकणः भगवच्चरणरेणुबिन्दुः विजयते सर्वोत्कर्षेण वर्त्तते । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

आम्नायेति । यस्य पदद्वन्द्वमेव अम्भोरुहं पद्मं तस्य संस्तुतिं सम्यक् स्तवनं विना आम्नायस्य वेदस्य अभ्यसनानि पुनःपुनरनुशील-नानि अरण्यरुदितं वनेषु रोदनं निष्फलानीति भावः । अन्वहं सततं कृच्छ्रव्रतानि क्लेशसाध्यानि चान्द्रायणादीनि मेदसां छेदपदानि क्षयस्थानानि केवलं शरीरक्षयकराणीति यावत् । पूर्त्तं खातादि-कर्म, पूर्त्तं खातादिकर्मणीत्यमरः । तस्य विधयः अनुष्ठानानि भस्मनि हुतं सर्वं निष्फलानीति भावः । तीर्थानां पुण्यक्षेत्राणाम् अवगाह-नानि च गजस्नानं हस्तिस्नानं जलकेलिमात्रमिति भावः, स देवः नारायणः विजयते सर्वोत्कर्षेण वर्त्तते । शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

आनन्द गोविन्द मुकुन्द राम
नारायणानन्त निरामयेति।
वक्तुं समर्थोऽपि न वक्ति कश्चिद्
अहो जनानां व्यसनानि मोक्षे ॥ २१ ॥

क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये।
भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥२२॥

इति श्रीकुलशेखरेण राज्ञा विरचिता
मुकुन्दमाला समाप्ता।

---

आनन्देति। आनन्देत्यादि सम्बोधनपदम्। इति वक्तुं समर्थोऽपि कश्चित् न वक्ति नोच्चरति। अहो आश्चर्यं खेदसूचकं वा, जनानां मोक्षे भवमोचने इति यावत् व्यसनानि प्रतिबन्धाः। आनन्दादिनामोच्चारणे कृते एव भवमुक्तिर्भवति, किन्तु लोकस्य दौर्भाग्यात् मुक्ते तत्राप नायातीति भावः। उपजातिवृत्तम् ॥ २१ ॥

क्षीरेति। क्षीरसागरस्य तरङ्गशीकराणाम् ऊर्मिकणानामित्यर्थः आसारैः धारासम्पातैः, धारासम्पात आसार इत्यमरः। तारकिता तारकाकीर्णेति भावः अतएव चारुर्मनोहारिणी मूर्त्तिर्यस्य तथाभूताय भोगिनः नागराजस्य भोगः शरीरमेव शयनीयं शय्या तत्र शेते इति तथोक्ताय मधुविद्विषे मधुसूदनाय माधवाय लक्ष्मीकान्ताय नमः। रथोद्धतावृत्तम् ॥ २२ ॥

---

# व्रजविहारः ।

---

गायन्तीनां गोपसीमन्तिनीनां
स्फीताकाङ्क्षामश्रुनीराम्बुमालाम् ।
नित्यावास्यामात्मवक्त्रारविन्दे
कुर्वन्नव्याद्देवकीनन्दनो वः ॥ १ ॥

सुपर्णस्वर्णाद्रौ रचितमणिशृङ्गो जलधिजा-
मुखाम्भोजे भृङ्गो निगमविलसत्पञ्जरशुकः ।
त्रिलोकीकस्तूरीतिलककमनीयो व्रजवधू-
विहारी श्रीकृष्णो दिशतु भवतां शर्म सततम् ॥ २ ॥

गायन्तीनामिति । गायन्तीनां गोपसीमन्तिनीनां गोपाङ्गनानां स्फीता प्रवृद्धा आकाङ्क्षा तद्दर्शनेच्छेति भावः यस्याः तादृशीम् अश्रुनीराम्बुमालां नेत्रजलराजिम् आत्मनः स्वस्य वक्त्रमेव मुखमेव अरविन्दं पद्मं तस्मिन् नित्यावास्यां नित्यवासत्वेन स्थितामित्यर्थः कुर्वन् देवकीनन्दनः वः युष्मान् अव्यात् रक्षतु । शालिनीवृत्तम् ॥ १ ॥

सुपर्णेति । सुपर्णः गरुड एव स्वर्णाद्रिः सुमेरुः तत्र रचितः निर्मितः मणिशृङ्गः रत्नमयशृङ्गः पुंस्त्वं कवीनां निरङ्कुशत्वात् बोद्धव्यम् । जलधिजायाः कमलायाः मुखमेव अम्भोजं पद्मं तत्र भृङ्गः भ्रमरः, निगमो वेद एव विलसन् राजन् शोभमान इति यावत् यः पञ्जरः तस्य शुकः कीराख्यपक्षिविशेषः त्रिलोक्याः त्रिजगतीरूपकामिन्याः कस्तूरीतिलकं मृगनाभिरचितं विशेषकम् अतएव कमनीयः स्पृहणीयः व्रजवधूभिः व्रजनारीभिः विहरतीति तथोक्तः श्रीकृष्णः भवतां सततं निरन्तरं शर्म सुखं, शर्मशातसुखानि चेत्यमरः । दिशतु ददातु । रूपकमलङ्कारः । शिखरिणीवृत्तम् ॥ २ ॥

कस्त्वं बाल ? बलानुजस्त्वमिह किं ? मन्मन्दिराशङ्कया
बुद्धं तत् नवनीतकुम्भविवरे हस्तं कथं न्यस्यसि ? ।
कर्त्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिताः ?
बाला वत्सगतिं विवेक्तुमिति संजल्पन् हरिः पातु वः ॥३॥

जीर्णा तरिः सरिदतीवगभीरनीरा
बाला वयं सकलमित्यमनर्थहेतुः ।
निस्तारबीजमिदमेव कृशोदरीणां
यन्माधव त्वमसि सम्प्रति कर्णधारः ॥ ४ ॥

क इति । हे बाल ! शिशो ! कस्त्वम् ? इति प्रश्नः । बलस्य बलभद्रस्य अनुजः कनिष्ठः अहमिति शेषः, इत्युत्तरम् । त्वम् इह अस्मिन् गृहे इति शेषः किं किमर्थम् आगत इति शेषः, इति प्रश्नः । मम मन्दिरस्य गृहस्य आशङ्कया बोधेन, मदीयं गृहमेतदिति भ्रमेणेति यावत्, उत्तरमिदम् । बुद्धं ज्ञातं तत्, नवनीतस्य यः कुम्भः तस्य विवरे अभ्यन्तरे कथं हस्तं न्यस्यसि अर्पयसि ? इति प्रश्नः । तत्र कुम्भमध्ये इति भावः पिपीलिकानां नवनीतलालसया गच्छन्तीनामिति भावः अपनयनं निराकरणं कर्त्तुं हस्तं न्यस्यामीति शेषः, उत्तरमिदम् । सुप्ताः निद्रिताः बालाः शिशवः श्रीदामादय इति भावः किं कथं उद्बोधिताः जागरयित्वा उत्थापिता इत्यर्थः, इति प्रश्नः । वत्सानां गोशिशूनां गतिं विवेक्तुं क्व ते गता इति ज्ञातुमित्यर्थः, उत्तरमिदम् । इतीत्थं संजल्पन् संकथयन् हरिः वः युष्मान् पातु रक्षतु । शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

जीर्णेति । हे माधव ! तरिः नौका जीर्णा श्लथेत्यर्थः, सरित् नदी यमुनेत्यर्थः अतीव गभीरं नीरं जलं यस्याः तादृशी, वयं बालाः नवयौवना इति भावः, इत्थं सकलं सर्वम् अनर्थहेतुः विपत्कारणम् । इदमेव कृशोदरीणाम् अस्माकमिति शेषः निस्तार-

श्रीश्रीकृष्णो जयति जगतां जन्मदाता च पाता
हर्त्ता चान्ते हरति भजतां यश्च संसारभीतिम् ।
राधानाथः सजलजलदश्यामलः पीतवासा
वृन्दारण्ये विहरति सदा सच्चिदानन्दरूपः ॥ ५ ॥

ज्योतीरूपं परमपुरुषं निर्गुणं नित्यमेकं
नित्यानन्दं निखिलजगतामीश्वरं विश्वबीजम् ।
गोलोकेशं द्विभुजमुरलीधारिणं राधिकेशं
वन्दे वृन्दारकहरिहरब्रह्मवन्द्यांघ्रिपद्मम् ॥ ६ ॥

बीजम् उद्धारकारणं यत् त्वं भवसि कर्णधारः नाविकः अपि । त्वया नाविकेनास्माभिरवश्यमेव तरणीयमिति भावः । वसन्ततिलकं वृत्तम् ॥ ४ ॥

श्रीति । जगतां जन्मदाता स्रष्टा पाता पालयिता च अन्ते हर्त्ता च यः भजतां सेवमानानां संसारभीतिं भवभयं हरति नाशयति, यश्च सजलजलदश्यामलः पीतवासाः पीताम्बरः सच्चिदानन्दरूपः परब्रह्मस्वरूप इत्यर्थः वृन्दारण्ये राधानाथः राधास्वरूपः ननु सदा विहरति स श्रीश्रीकृष्णः जयति सर्वोत्कर्षेण वर्त्तते । मन्दाक्रान्तावृत्तम् ॥ ५ ॥

ज्योतीरूपमिति । ज्योतीरूपं तेजःस्वरूपं परमपुरुषं परमात्मानं निर्गुणं गुणातीतं नित्यं चिरन्तनम् एकम् अद्वितीयं नित्यानन्दं सुखमयं निखिलजगताम् ईश्वरं प्रभुं विश्वस्य जगतः बीजं मूलकारणं गोलोकेशं गोलोकपतिं द्वाभ्यां भुजाभ्यां मुरलीधारिणं वेणुधरं वृन्दारकैः देवैः हरिहरब्रह्मभिश्च वन्द्यम् अङ्घ्रिपद्मं चरणकमलं यस्य तथाभूतं राधिकेशं राधाकान्तं वन्दे प्रणमामि । मन्दाक्रान्तावृत्तम् ॥ ६ ॥

येषां श्रीमद्यशोदासुतपदकमले
नास्ति भक्तिर्नराणां
येषामाभीरकन्याप्रियगुणकथने
नानुरक्ता रसज्ञा।
येषां श्रीकृष्णलीलाललितगुणकथा-
सादरौ नैव कर्णौ
धिक् तान् धिक् तान् धिगेतान् कथयति नितरां
कीर्त्तनस्थो मृदङ्गः। ७ ॥
केचिद् वदन्ति धनहीनजनो जघन्यः
केचिद् वदन्ति गुणहीनजनो जघन्यः।
व्यासो वदत्यखिलवेदविशेषविज्ञो
नारायणस्मरणहीनजनो जघन्यः ॥ ८ ॥

येषामिति। श्रीमान् यशोदासुतः कृष्णः तस्य पदकमले येषां नराणां भक्तिः नास्ति, येषां रसज्ञा रसना आभीरकन्यानां गोपीनां प्रियस्य कृष्णस्य गुणकथने चरितकीर्त्तने न अनुरक्ता नानुरागिणी, येषां कर्णौ श्रीकृष्णस्य लीलाललितानां विलासमाधुरीणां गुणकथायां न सादरौ न आदरवन्तौ, तान् भक्तिरहितानिति भावः धिक्, तान् अननुरक्तरसनानिति भावः धिक्, एतान् अनादरकर्णानिति भावः धिक्, इत्थं कीर्त्तनस्थः भगवन्नामसंकीर्त्तने स्थितः मृदङ्गः वाद्यभेदः नितरां कथयति स्वरवेण व्यञ्जयतीति भावः। स्रग्धरावृत्तम् ॥७॥

केचिदिति। केचित् जनाः धनहीनजनो जघन्यः नीच इति वदन्ति, केचित् जनाः गुणहीनजनः जघन्य इति वदन्ति। अखिल-वेदानां सर्ववेदानां विशेषविज्ञः व्यासः नारायणस्य स्मरणहीनजनः जघन्य इति वदति। वसन्ततिलकं वृत्तम् ॥ ८ ॥

वृन्दावने वृक्षलताप्रतानै-<br>
र्वृन्दावनेशस्य विहारहेतोः ।<br>
पुरा विधात्रा रचितान् सुकुञ्जान्<br>
जगाम कृष्णः सह राधया सः ॥ ९ ॥

नवीनमेघोपमनीलदेहः<br>
सुपीतपट्टाम्बरयुग्मधारी ।<br>
स्मिताननः कुण्डलवान् किरीटी<br>
वंशीधरो मालतिमाल्यधारी ॥ १० ॥

नवीननीलाम्बुदकान्तिमद्वपुः<br>
सस्मेरवक्त्राम्बुजवेणुवादनः ।<br>
अनेकरत्नाभरणैर्विभूषितः<br>
स सुन्दराङ्गो महसा महोज्ज्वलः ॥ ११ ॥

वृन्दावन इति । सः कृष्णः राधया सह वृन्दावने वृन्दावनेशस्य कृष्णस्य विहारहेतोः विहारार्थं पुरा पूर्वं विधात्रा ब्रह्मणा वृक्षलतानां प्रतानैः प्रपञ्चैः रचितान् निर्मितान् सुकुञ्जान् शोभनान् कुञ्जान् लतादिपिहितमण्डपानीति यावत्, निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे इत्यमरः । जगाम । उपजातिवृत्तम् ॥ ९ ॥

नवीनेति । नवीनमेघोपमः नूतनजलधरनिभः नीलः देहो यस्य तथोक्तः, सुपीतं पट्टाम्बरयुग्मं धरतीति तथाभूतः, स्मिताननः हास्यमुखः, कुण्डलवान् कर्णभूषणशाली, किरीटी मुकुटधारी, वंशीधरः वेणुवादनशीलः तथा मालतीमाल्यं धरतीति तथाभूतः कृष्णः विराजते इति शेषः । उपजातिवृत्तम् ॥ १० ॥

नवीनेति । नवीनः नीलाम्बुदः नीलमेघः स इव कान्तिमत् शोभमानं वपुः शरीरं यस्य तथाभूतः, सस्मेरेण मन्दं हसता वक्त्रा-

गोपीजनानन्दकरो मुरारिः
वृन्दावनेन्द्रो वनमालशोभी ।
वंशीनिनादेन व्रजाङ्गनानां
मनांसि सम्मोहितवान् स कामी ॥ १२ ॥

मायाय बालकगणस्य च कंसराजः
तां पूतनां मानुषराक्षसीं च ।
संप्रेषयामास यदा तदा तां
मायाभिज्ञः प्राणसमं मुमोष ॥ १३ ॥

जिघांसया समायान्तीं पूतनां राक्षसीवराम् ।
क्रोड़े कृत्वा स्तन्यदात्रीं जघान बालको हरिः ॥१४॥

मञ्जुलेन वदनकमलेन वेणुवादनः वंशीवाद्यकरः, अनेकैः विविधैः रत्नाभरणैः रत्नावहारैः विभूषितः विशेषेण शोभितः, सुन्दरं मनोहरम् अङ्गं यस्य तादृशः तथा महता तेजसा महोज्ज्वलः अभिदीप्यमानः सः कृष्णः रराजेति शेषः । वंशस्थविलं वृत्तम् ॥ ११ ॥

गोपीति । गोपीजनानाम् आनन्दकरः, वृन्दावनेन्दुः वृन्दावनप्रभुः, वनमालया शोभते इति तथोक्तः, कामी स मुरारिः कृष्णः वंशीनिनादेन वेणुरवेण व्रजाङ्गनानां मनांसि सम्मोहितवान् अहारेत्यर्थः । उपजातिवृत्तम् ॥ १२ ॥

मायावेति । कंसराजः बालकगणस्य कृष्णादीनामित्यर्थः मायाय मायवितुमित्यर्थः तां मानुषराक्षसीं पूतनां यदा संप्रेषयामास, तदा सः मायाभिज्ञः कृष्णः तां पूतनां प्राणसमं प्राणैः सह मुमोष जघानेत्यर्थः । वसन्ततिलकं वृत्तम् ॥ १२ ॥

जिघांसयेति । बालकः हरिः कृष्णः जिघांसया वधेच्छया

गोपीगणा यमिह कामदृशा भजन्ते
यं भक्तिभाज इह केवलभक्तिभावैः ।
यं योगिनो हृदि धिया परिचिन्तयन्ति
तं केवलं कमललोचनमाश्रयेऽहम् ॥ १५ ॥

कृष्णे कारुण्यपूर्णे शशधरवदने पीतकौषेयवस्त्रे
रत्नालङ्कारभूषे सजलजलधरश्यामले सुन्दराङ्गे ।
वंशीवाद्यप्रमोदे व्रजजनयुवतीजीवने यादवेन्द्रे
भूयाद्भक्तिर्दृढा मे सकलसुरवरैः सेव्यमाने मुरारौ ॥१६॥

समायान्तीं समागच्छन्तीं क्रोडे कृत्वा स्तन्यदात्रीं तां राक्षसीं वरा श्रेष्ठा तां पूतनां जघान हतवान् । अनुष्टुब्वृत्तम् ॥ १४ ॥

गोपीगणा इति । इह वृन्दावने इति शेषः गोपीगणाः यं कामदृशा कामदृष्ट्या भजन्ते सेवन्ते, इह जगति भक्तिभाजः भक्ता जनाः केवलैः अद्वितीयैः भक्तिभावैः यं भजन्ते इति पूर्वेणान्वयः । योगिनः हृदि अन्तरात्मनि धिया बुद्ध्या यं परिचिन्तयन्ति भावयन्ति, अहं केवलं तं कमललोचनं पद्मनेत्रं हरिमिति शेषः आश्रये शरणं व्रजामीत्यर्थः । वसन्ततिलकं वृत्तम् ॥ १५ ॥

कृष्णे इति । कारुण्यपूर्णे दयामये, शशधरवदने चन्द्रमुखे, पीतं कौषेयं कृमिकोषोत्थं वस्त्रं यस्य तथोक्ते पीताम्बरे इति यावत्, रत्नालङ्कारः भूषा भूषणं यस्य तथोक्ते, सजलो यो जलधरः मेघः तद्वत् श्यामलः तस्मिन्, सुन्दराङ्गे मनोहराङ्गे, वंशीवाद्ये प्रमोदः अनुरागः आनन्द इति यावत् यस्य तादृशे, व्रजजनानां युवत्यः तासां जीवने प्राणभूते, यादवेन्द्रे यदुकुलश्रेष्ठे, सकलैः सुरवरैः ब्रह्मादिभिः सेव्यमाने आराध्यमाने मुरारौ मुरदैत्यनाशिनि कृष्णे मे मम दृढा भक्तिः भूयात् अस्तु । स्रग्धरावृत्तम् ॥ १६ ॥

वृन्दारण्ये विहरति सदा वासुदेवो दयालु-
र्गोपस्त्रीभिः स्मरशरशतैर्भिन्नहृत्कामुकीभिः ।
गोपैर्बालैरपि सहचरैः सार्धमानन्दयुक्तै-
र्योऽसौ कृष्णः परमकरुणस्तं सदा चिन्तयेऽहम् ॥ १७ ॥

वृन्दावनस्थानविहारहेतो-
राधासमं कुञ्जगृहप्रवेशम् ।
चकार गोपीजनवल्लभोऽसौ
पायादपायादपि मां मुरारिः ॥ १८ ॥

वने वने कुञ्जवने मुरारि-
र्भ्रमन् भ्रमन् भ्राजति राधिका च ।
सदैव कुञ्जे रमते च राधया
पायादपायादिह कृष्ण एकः ॥ १९ ॥

वृन्दारण्ये इति । योऽसौ परमकरुणः दयानिधिः दयालुः वासुदेवः वसुदेवसुतः कृष्णः वृन्दारण्ये स्मरस्य कामस्य शरशतैः भिन्नं विद्धं हृत् हृदयं यासां तथाभूताः याः कामुक्यः कान्ताः ताभिः गोपस्त्रीभिः तथा सहचरैः बालैः शिशुभिः आनन्दयुक्तैः गोपैरपि सार्धं सह सदा विहरति, अहं तं कृष्णं सदा चिन्तये स्मरामि । मन्दाक्रान्तावृत्तम् ॥ १७ ॥

वृन्दावनेति । यः गोपीजनानां वल्लभः वृन्दावनस्थानेषु विहार-हेतोः विहारार्थं राधया समं सह कुञ्जगृहेषु निकुञ्जनिकेतनेषु प्रवेशं चकार, असौ मुरारिः कृष्णः अपायादपि नाशादपि का कथान्याभ्यः विपद्भ्य इत्यपिशब्दार्थः । मां पायात् रक्षतु । उप-जातिवृत्तम् ॥ १८ ॥

वने इति । यः मुरारिः वने वने प्रतिवनं कुञ्जवने लतादि-

अनन्त! विश्वम्भर! वासुदेव!
समस्तदेवैरपि वन्द्यपाद!
निरामय! माधवपते! मुरारे!
हरे! हराशेषमहाघसङ्घम् ॥ २० ॥

इति श्रीधरस्वामिना विरचितं व्रजविहारकाव्यं
समाप्तम्।

---

## अपराधभञ्जनस्तोत्रम्।

---

शान्तं पद्मासनस्थं शशधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं
शूलं वज्रञ्च खड्गं परशुमपि वरं दक्षिणाङ्गे वहन्तम्।

पिच्छितोदरस्थाने इत्यर्थः भ्रमन् भ्रमन् पर्यटन् पर्यटन् भ्राजति राजते, राधिका च येन सह भ्राजतीति शेषः, यस्य राधया सहैव कुञ्जे रमते च क्रीड़ति यं, स एकः कृष्णः इह संसारे अपायात् नाशात् पापात् रक्षतु। उपजातिवृत्तम् ॥ १९ ॥

अनन्तेति। हे अनन्त! विश्वम्भर! वासुदेव! समस्तैर्देवैरपि वन्द्यौ पादौ यस्य तत्सम्बुद्धौ, हे निरामय! व्याधिरहित! हे माधवपते! लक्ष्मीनाथ! मुरारे! हरे! अशेषं समग्रं महाघसङ्घं महापातकसमूहं हर नाशय। उपेन्द्रवज्रावृत्तम् ॥ २० ॥

---

शान्तमिति। शान्तं पद्मासने तिष्ठतीति तथोक्तं, शशधरः चन्द्रः मुकुटः शिरोभूषणं यस्य तथाभूतं, पञ्चवक्त्रं पञ्चाननं त्रिनेत्रं प्रति-वक्त्रमिति शेषः, दक्षिणाङ्गे शूलं वज्रं खड्गं परशुं तथा वरं अभ-

नागं पाशञ्च घण्टां डमरुकसहितं चाङ्कुशं वामभागे
नानालङ्कारदीप्तं स्फटिकमणिनिभं पार्वतीशं भजामि ॥१॥

वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणं
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्य्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियं
वन्दे भक्तजनाश्रयञ्च वरदं वन्दे शिवं शङ्करम् ॥ २ ॥

आदौ कर्मप्रसङ्गात् कलयति कलुषं मातृकुक्षौ स्थितः सन्
विण्मूत्रामेध्यमध्ये व्यथयति नितरां जाठरो जातवेदाः ।
यद्यद्वा तत्र दुःखं विषयति विषमं शक्यते केन वक्तुं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो ॥ ३

जनेभ्यः देयं कार्मणिति भावः तथा वामभागे वामाङ्गे नागं भुजङ्गं पाशं घण्टां डमरुणा सहितम् अङ्कुशञ्च दधानं, नानालङ्कारैः दीप्तं विराजितं स्फाटिकमणिनिभं स्वच्छप्रभमिति यावत्, पार्वतीशं शङ्करं भजामि आराधयामि । स्रग्धराछन्दम् ॥ १ ॥

वन्दे इति । उमापतिं देवं वन्दे प्रणमामि, जगतां कारणं सुरगुरुं देवदेवमित्यर्थः वन्दे । पन्नगभूषणं भुजङ्गभूषणं मृगधरं मृगहस्तं ?? ?? हरं वन्दे । पशूनां देहिनां पतिं वन्दे । सूर्य्यशशाङ्कवह्निनयनं सूर्य्यचन्द्राग्निरूपनयनत्रयवन्तं वन्दे । मुकुन्दस्य कृष्णस्य प्रियं हरं वन्दे । भक्तजनानाम् आश्रयं वरदं देवं वन्दे, शिवं शङ्करञ्च वन्दे प्रणमामीत्यर्थः । शार्दूलविक्रीडितं छन्दम् ॥ २ ॥

आदाविति । आदौ प्रथमं मातृकुक्षौ जननीजठरे स्थितः सन् जीव इति शेषः कर्मप्रसङ्गात् प्राक्तनकर्मवशात् कलुषं पापं पूर्वकृतमिति शेषः कलयति भुङ्क्ते । तत्र जाठरो जातवेदाः उदराग्निः विण्मूत्रामेध्यमध्ये विष्ठामूत्ररूपापवित्रवस्तुमध्ये स्थितमिति शेषः नितराम् अत्यर्थं व्यथयति पीडयति । तत्र यत् यत् त्रिमकं दुःखं

बाल्ये दुःखातिरेको मललुलितवपुः स्तन्यपाने पिपासा
नो शक्तश्चेन्द्रियेभ्यो भवगुणजनिता जन्तवो मां तुदन्ति।
नानारोगोत्थदुःखादुदरपरिवशः शङ्करं न स्मरामि
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो! ४

प्रौढोऽहं यौवनस्थो विषयविषधरैः पञ्चभिर्मर्मसन्धौ
दष्टो नष्टो विवेकः सुतधनयुवतीस्वादुसौख्ये निषण्णः।
शैवे चिन्ताविहीनं मम हृदयमहो मानगर्वाधिरूढं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो! ५

विचरति शिवमिव आचरति तत् केन वा वक्तुं शक्यते नैव केनापि शक्यते इत्यर्थः अनिर्वचनीय तदिति भावः, अतः भोः शिव शिव शिव श्रीमहादेव शम्भो! मे मम अपराधः क्षन्तव्यः सोढव्यः येन मे तादृशे मातृकुक्षौ पुनर्न पतनं स्यादिति भावः। स्रग्धरा वृत्तम् ॥ ३ ॥

बाल्ये इति। बाल्ये शैशवे दुःखातिरेकः अत्यन्तं दुःखं, मलेषु लुलितं व्याकुलं वपुः शरीरं, स्तन्यपाने पिपासा आकाङ्क्षा भवतीति शेषः, इन्द्रियेभ्यः चक्षुरादिभ्यः नो शक्तश्च। इन्द्रियेषु सत्स्वपि न तत्तद्विषयग्रहणशक्तिरस्तीति भावः। भवस्य संसारस्य गुणेन धर्मेण स्वभावेनेत्यर्थः जनिताः उत्पादिताः जन्तवः दंशमशकादय इति भावः मां तुदन्ति व्यथयन्ति। नानारोगोत्थदुःखात् विविधरोगजनितात् क्लेशात् तथा उदरपरिवशः जठरज्वालार्त्त इत्यर्थः शङ्करं त्वां न स्मरामि, अतः मे अपराधः क्षन्तव्य इत्यादि। स्रग्धरा वृत्तम् ॥ ४ ॥

प्रौढ इति। प्रौढः [illegible] यौवनस्थः अहं पञ्चभिः विषयाः रूपरसस्पर्शगन्धशब्दा एव विषधराः तैः मर्मसन्धौ दष्टः, अतएव सुतधनयुवतीनां स्वादसौख्ये आस्वादसुखे निषण्णः स्थितः, पुनरा विवेकः [illegible] नष्टः, शैवे शिवस्य [illegible] तदर्थः चिन्ता-विहीनं परिज्ञानचिन्तारहितं मम हृदयं मानगर्वौ सम्मानाहङ्कारौ

वार्धक्ये चेन्द्रियाणां विगतगतमतेराधिदैवादितापैः
पापै रोगैर्वियोगैरसदृशवपुषं प्रौढ़हीनञ्च दीनम् ।
मिथ्यामोहाभिलाषैर्भ्रमति मम मनो धूर्जटेर्ध्यानशून्यं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो ॥ ६

नो शक्यं स्मार्त्तकर्म प्रतिपदगहनं प्रत्यवायाकुलाख्यं
श्रौते वार्त्ता कथं मे द्विजकुलविहिते ब्रह्ममार्गे च सारे ।
नष्टो धर्मो विचारः श्रवणमननयोः को निदिध्यासितव्यः
क्षन्तव्यो मेऽपराधः शिव शिवं शिव भोः श्रीमहादेव शम्भो ॥ ७

अधिहृदम् आश्रितम् अहो आश्चर्यम् । क्षन्तव्य इत्यादि । स्रग्धरा-वृत्तम् ॥ ५ ॥

वार्द्धक्ये इति । वार्द्धक्ये च इन्द्रियाणां विगतेन विनाशेन असामर्थ्येनेत्यर्थः गतमतेः नष्टबुद्धेः मम आधिदैवादितापैः आध्या-त्मिकाधिभौतिकाधिदैविकैः त्रिविधैः तापैः मनोव्यथाभिः पापैः रोगैः वियोगैः सुतकलत्रादीनां विच्छेदैश्च असदृशम् अतुल्यं रूपं विरूप-मिति यावत् वपुषं कलेवरम् अवस्येति यावत् यस्य तथाभूतं वपुष-शब्दोऽत्राकारान्त इति चिन्त्यम् । प्रौढ़म् अत्यन्तं हीनं दीनं कातरं तथा धूर्जटेः हरस्य ध्यानशून्यं सत् मिथ्यामोहात् ये अभिलाषाः तैः भ्रमति घूर्णति, तस्मात् क्षन्तव्य इत्यादि । स्रग्धरावृत्तम् ॥ ६ ॥

नो इति । प्रतिपदं प्रतिविषयं गहनं दुरूहं प्रत्यवायैः विघ्नैः आकुला आख्या कीर्त्तनमपीति भावः यस्य तथाभूतं स्मार्त्तं स्मृति-विहितं कर्म नो शक्यं कर्त्तुमिति शेषः । श्रौते इति । द्विजकुल-विहिते ब्राह्मणकुलैरनुष्ठिते श्रौते वैदिके कर्मणीति शेषः तथा सारे परमे ब्रह्ममार्गे ब्रह्मतत्त्वावबोधे चेत्यर्थः मे वार्त्ता संवादः कथम् ? नैव जानातीति भावः । श्रवणमननयोः धर्मः विचारश्च नष्टः नास्तीति भावः कः निदिध्यासितव्यः चिन्तयितव्य इत्यर्थः इत्यहं न जानामीति भावः । तस्मात् क्षन्तव्य इत्यादि । स्रग्धरावृत्तम् ॥ ७ ॥

स्नात्वा प्रत्यूषकाले स्नपनविधिविधौ नाहृतं गाङ्गतोयं
पूजार्थं वा कदाचिद् बहुतरगहनात् खण्डबिल्वैकपत्रम् ।
नानीता पद्ममाला सरसि विकसिता गन्धपुष्पे त्वदर्थं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो ॥८॥

दुग्धैर्मध्वाज्ययुक्तैर्घटशतसहितैः स्नापितं नैव लिङ्गं
नो लिप्तं चन्दनाद्यैः कनकविरचितैः पूजितं न प्रसूनैः ।
धूपैः कर्पूरदीपैर्विविधरसयुतैर्नैव भक्ष्योपहारैः
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो ॥९॥

नग्नो निःसङ्गशुद्धस्त्रिगुणविरहितो ध्वस्तमोहान्धकारो
नासाग्रे न्यस्तदृष्टिर्विहरभवगुणैर्नैव दृष्टं कदाचित् ।

स्नात्वेति । प्रत्यूषकाले प्रभाते स्नात्वा स्नपनमेव विधिः तस्य विधौ अनुष्ठाने गाङ्गतोयं गङ्गाजलं न आहृतं वा अथवा कदाचित् पूजार्थं बहुतरगहनात् प्रभूतदृक्षवनात् खण्डं बिल्वस्य एकं पत्रं न आहृतमिति पूर्वेणान्वयः । सरसि विकसिता प्रस्फुटिता पद्ममाला त्वदर्थं तव पूजार्थं न आनीता, गन्धपुष्पे च न आहृते इति शेषः । तस्मात् क्षन्तव्य इत्यादि । स्रग्धरावृत्तम् ॥ ८ ॥

दुग्धैरिति । घटशतसहितैः कुम्भशतपूरितैः मधुभिराज्यैर्घृतैश्च युक्तैः दुग्धैः लिङ्गं ते इति शेषः नैव स्नापितं चन्दनाद्यैः नो लिप्तं विलेपनेन नो रञ्जितमित्यर्थः, कनकविरचितैः स्वर्णनिर्मितैः प्रसूनैः पुष्पैः न पूजितं, धूपैः कर्पूरदीपैः विविधेन रसेन सुस्वादद्रव्येण युतैः भक्ष्योपचारैः नैवेद्यैरिति यावत् नैव पूजितमित्यनेन सम्बन्धः । तस्मात् क्षन्तव्य इत्यादि । स्रग्धरावृत्तम् ॥ ९ ॥

नग्न इति । नग्नः विगतवसन इत्यर्थः निःसङ्गेन दारापत्यादिसंसर्गराहित्येन शुद्धः एककः, त्रिभिर्गुणैः रजःप्रभृतिभिः विरहितः, ध्वस्तः विनष्टः मोह एव अन्धकारो यस्य तथाभूतः, नासाग्रे न्यस्ता

उन्मत्तावस्थया त्वां विगतकलिमलं शङ्करं न स्मरामि
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो॥१०
ध्यानं चित्ते शिवाख्यं प्रचुरतरधनं नैव दत्तं द्विजेभ्यो
हव्यं ते लक्षसंख्यं हुतवहवदने नार्पितं बीजमन्त्रैः।
नो जप्तं गाङ्गतीरे व्रतपरिचरणैरुद्रजप्यैर्न वेदैः
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो॥११
स्थित्वा स्थाने सरोजे प्रणवमयमरुत्कुम्भके सूक्ष्ममार्गे
शान्ते स्वान्ते प्रलीने प्रकटितगहने ज्योतिरूपे पराख्ये।
लिङ्गं त्वद्ब्रह्मवाच्यं सकलमभिमतं नैव दृष्टं कदाचित्,
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो॥१२

निहिता इन्द्रियैर्न तथाविधः सन् विश्वस्य शम्भून्यस्य हृदाचन-रहितस्येति यावत् भवस्य संसारस्य, सांसारिकलोकस्येति भावः गुणैः धर्मैः दारापत्यादिपालनपरैरिति भावः नैव कदाचित् दुष्टं विगतकलिमलं विध्वस्तकलिकालजनितपापं शङ्करं त्वाम् उन्मत्ताव-स्थया विषयसुखव्यापृततद्रूपोन्माददशया केवलेनेत्यर्थः न स्मरामि, तस्मात् क्षमस्व इत्यादि। स्रग्धरावृत्तम्॥ १०॥

ध्यानमिति। चित्ते मनसि शिवाख्यं शिवनामरूपं ध्यानं तथा द्विजेभ्यः ब्राह्मणेभ्यः प्रचुरधनं नैव दत्तं नैव अर्पितम्। हुत-वहवदने अग्निमुखे ते तव बीजमन्त्रैः लक्षसंख्यं लक्षसंख्यापरिमितं हव्यं न अर्पितं न दत्तम्। तथा गाङ्गतीरे गङ्गातटे व्रतपरिचरणैः नियमदैवतविधानैः नो जप्तं तथा रुद्रः जप्यः ध्येयः यैः तादृशैः वेदैः वैदिकमन्त्रैः न जप्तं न चिन्तितं तव नामेति शेषः। तस्मात् क्षमस्व इत्यादि। स्रग्धरावृत्तम्॥ ११॥

स्थित्वेति। सरोजे स्थाने पद्मासने इत्यर्थः स्थित्वा उपविश्ये-त्यर्थः प्रणवमयस्य ओङ्काररूपस्य मरुतः वायोः कुम्भकं स्तम्भनं यत्र

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ।
लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्युत्-चलं जीवनं
तस्मान्मां शरणागतं शरणद ! त्वं रक्ष रक्षाधुना ॥ १३ ॥

चन्द्रोद्भासितशेखरे स्मरहरे गङ्गाधरे शङ्करे
सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थ-वैश्वानरे ।
दन्तित्वक्कृतसुन्दराम्बरधरे त्रैलोक्यसारे हरे
मोक्षार्थं कुरु चित्तवृत्तिममलामन्यैस्तु किं कर्मभिः ॥ १४ ॥

तादृशे सूक्ष्ममार्गे सूक्ष्मपथि स्वरूपे इत्यर्थः शान्ते विषयेभ्यो विनिवृत्ते इति भावः स्वान्ते मनसि, स्वान्तं हृन्मानसं मन इत्यमरः । प्रलीने स्थिते प्रकटितेन प्रकाशेन स्फुटीभूते इति यावत् गहने निविड़े घने इति यावत् परात्मन्ये परमात्मसंज्ञके ज्योतिःरूपे तेजःस्वरूपे, ज्योतीरूपे इति प्रयोक्तव्ये ज्योतिरूप इति छन्दोभङ्गभयात् प्रयोग-श्चिन्त्यः । तत्र ब्रह्मवाच्ये ब्रह्माभिधेये एकस्मिन् सम्पूर्णम् अभिमतं वाञ्छितं वस्तु सर्वजनसम्मतं किञ्च नैव कदाचित् दृष्टं भवतीति शेषः, तस्मात् चान्यत्र इत्यादि । स्रग्धरावृत्तम् ॥ १२ ॥

आयुरिति । प्रतिदिनं पश्यतां जनानाम् अनादरे षष्ठी पश्यतो जनाननादृत्येत्यर्थः आयुः जीवनकालः नश्यति अपगच्छति, यौवनं क्षयं नाशं याति, गताः दिवसाः न पुनः प्रत्यायान्ति प्रत्यागच्छन्ति । कालः जगतां भक्षकः नाशक इति यावत् । लक्ष्मीः सम्पदित्यर्थः तोयानां जलानां तरङ्गभङ्गवत् चपला अस्थिरेत्यर्थः, जीवनं विद्युदिव चलम् अस्थिरं, तस्मात् हे शरणद ! लोकपते ! त्वम् अधुना शरणागतं मां रक्ष रक्ष । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

चन्द्रेति । मोक्षार्थं मुक्तये यदि मुक्तिमिच्छसि तदेति भावः चन्द्रेण उद्भासितं राजितं शेखरं शिरोभूषणम् अथवा चन्द्र एव उद्भासितं विराजितं शेखरं शिरोभूषणं यस्य तथाभूते स्मरहरे मद-

किं दानेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं
किं वा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम्।
ज्ञात्वैतत् क्षणभङ्गुरं सपदि रे! त्याज्यं मनो! दूरतः
स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम्॥ १५॥

करचरणकृतं वा कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वापराधम्।
विहितमविहितं वा सर्वमेतत् क्षमस्व
जय जय करुणाब्धे! श्रीमहादेव! शम्भो!॥ १६॥

नान्तके गङ्गाधरे गङ्गाम्बुधारिणि, सर्पैः भुजङ्गैः भूषितं कण्ठकर्ण-विवरं यस्य तथोक्ते, नेत्रात् तृतीयादिति भावः उत्थः उद्गतः वैश्वानरः अग्निः यस्य तथाविधे, दन्तिनः गजस्य त्वगेव चर्मैव स्मृति-सुन्दरम् अत्यन्तसुन्दरं यत् अम्बरं वसनं तस्य धरतीति धरः, पचा-द्यच्प्रत्ययः। तस्मिन् त्रैलोक्यस्य त्रिभुवनस्य सारे परमे वस्तुनीति भावः शङ्करे शिवदायिनि हरे अमलां मालिन्यरहितां चित्तवृत्तिं कुरु निवेशयेत्यर्थः अन्यैः कर्मभिस्तु देवार्चनादिभिरिति भावः किम्? न किमपि प्रयोजनमस्तीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ १४॥

किमिति। दानेन दानप्राप्तेनेति यावत् धनेन किम्? वाजि-करिभिः अश्वहस्तिभिः प्राप्तैरिति शेषः तथा प्राप्तेन राज्येन किम्? किमपि प्रयोजनं नास्तीत्यर्थः। पुत्रकलत्रमित्रपशुभिर्वा किम्? देहेन शरीरसौष्ठवेनेति भावः गेहेन वा किम्? किमपि प्रयो-जनं नास्तीत्यर्थः, रे मनः! एतत् पूर्वोक्तं वस्तुजातं क्षणभङ्गुरम् अस्थायि अतएव दूरतः त्याज्यं त्यागार्हम् अथवा कदापि लङ्घ्यं ज्ञात्वा सपदि झटिति स्वात्मार्थं स्वस्य आत्मनः कृते निजोपकारार्थेति भावः गुरुवाक्यतः गुरुवचनानुसारेण श्रीपार्वतीवल्लभं भज भज पुनः पुनराराधयेत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ १५॥

करेति। हे करुणाब्धे! दयासिन्धो! श्रीमहादेव! शम्भो

गात्रं भस्मसितं सितञ्च हसितं हस्ते कपालं सितं
खट्वाङ्गञ्च सितं सितश्च वृषभः कर्णे सिते कुण्डले ।
गङ्गाफेनसिता जटा पयसि तच्चन्द्रः सितो मूर्द्धनि
सोऽयं सर्व्वसितो ददातु विभवं पापक्षयं शङ्करः ॥१७॥

इति श्रीपरमहंसपरिव्राजकाचार्य्य-श्रीशङ्कराचार्य्य-भगवत्कृतमपराधभञ्जनस्तोत्रं समाप्तम् ।

---

## शृङ्गारतिलकम् ।

---

बाहू द्वौ च मृणालमास्यकमलं लावण्यलीला जलं
श्रोणी तीर्थशिला च नेत्रसफरं धम्मिल्लशैवालकम् ।

कराभ्यां चरणाभ्यां कृतं वा कायजं देहजं कर्मजं वा श्रवणेन नयनेन वा जातं वा मानसम् अपराधं वा विहितम् अविहितम् अभावं वा सर्व्वमेतत् क्षमस्व शङ्कर, जय जय सततं सर्व्वोत्कर्षेण वर्त्तस्वेत्यर्थः । मालिनीवृत्तम् ॥ १६ ॥

गात्रमिति । गात्रं शरीरं भस्मना भूतिलेपनेन सितं श्वेतं, हसितं हास्यञ्च सितं, हस्ते स्थितमिति शेषः कपालं नरशिरः सितं, खट्वाङ्गञ्च सितं, वृषभः वाहनविशेषः सितः, कर्णे कुण्डले सिते शुभ्रे, पयसि स्थिता जटा गङ्गाफेनेन सिता शुभ्रा, मूर्द्धनि स्थितः तच्चन्द्रः तस्य महादेवस्य चन्द्रः सितः शुभ्रः तस्मात् सर्व्वसितः सर्व्वथा श्वेतः शङ्करः विभवं सम्पदं पापक्षयञ्च ददातु । शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

---

बाहू इति । कन्दर्पबाणानलैः मदनशराग्निभिः दन्दह्यमानाम् सन्तप्तानामपि बाहू कामिनामिति शेषः अवगाहनाय वापाप-

कान्तायाः स्तनचक्रवाकयुगलं कन्दर्पबाणानलै-
र्दग्धानामवगाहनाय विधिना रम्यं सरो निर्मितम् ॥१॥

आयाता मधुयामिनी यदि पुनर्नायात एव प्रभुः
प्राणा यान्तु विभावसौ यदि पुनर्जन्मग्रहं प्रार्थये।
व्याधः कोकिलबन्धने विधुपरिध्वंसे च राहुग्रहः
कन्दर्पे हरनेत्रदीधितिरहं प्राणेश्वरे मन्मथः ॥२॥

इन्दीवरेण नयनं मुखमम्बुजेन
कुन्देन दन्तमधरं नवपल्लवेन।

लोडनायेति भावः विधिना विधात्रा रम्यं मनोहरं सरः सरोवरं कान्तारूपमिति भावः निर्मितं सृष्टम्। तथाहि, कान्तायाः द्वौ बाहू मृणालम्, आस्यं मुखं कमलं, लावण्यलीला, मुक्ताफलेषु छायाया-स्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इत्युक्तलक्षणं यत् लावण्यं तस्य लीला विलासः जलं, श्रोणी नितम्बः तीर्थस्य जलावतरणमार्गस्य शिला प्रस्तरः, नेत्रं शफरं प्रोष्ठी-मत्स्यभेदः, धम्मिल्लः संयतकेशः, धम्मिल्लाः संयताः कचा इत्यमरः। शैवालकं जलनीली, जलनीली तु शैवालमित्यमरः। कान्तायाः स्तनौ चक्रवाकयोः युगलम्। शार्दूलविक्रीडितं वृत्तम्। रूपकमलङ्कारः ॥१॥

आयातेति। मधुयामिनी वसन्तरजनी चैत्ररात्रिर्वा आयाता आगता, प्रभुः कान्तः यदि पुनः यद्यपि न आयात एव नागत एव, तदा प्राणाः विभावसौ अग्नौ यान्तु अग्निं प्रविशामीति भावः। यदि पुनः किन्तु यदि जन्मग्रहं प्रार्थये, तदा कोकिलानां बन्धने बन्धनार्थमित्यर्थः व्याधः, विधुपरिध्वंसे चन्द्रोपरागे राहुग्रहः, कन्दर्पे कामे हरनेत्रदीधितिः हरनेत्रानल इति भावः तथा प्राणेश्वरे कान्ते मन्मथः कामः अहं भवेयमिति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥२॥

इन्दीवरेणेति। हे कान्ते! स प्रसिद्धो धाता इन्दीवरेण

अङ्गानि चम्पकदलैः स विधाय धाता
कान्ते! कथं घटितवानुपलेन चेतः॥ ३॥
एको हि खञ्जनवरो नलिनीदलस्थो
दृष्टः करोति चतुरङ्गबलाधिपत्यम्।
किं मे करिष्यति? भवद्वदनारविन्दे
जानामि नो नयनखञ्जनयुग्ममेतत्॥ ४॥
ये ये खञ्जनमेकमेव कमले पश्यन्ति दैवात् क्वचित्
ते सर्वे मनुजा भवन्ति सुतरां प्रख्यातभूमीभुजः।
त्वद्वक्त्राम्बुजनेत्रखञ्जनयुगं पश्यन्ति ये ये जना-
स्ते ते मन्मथबाणजालविकला मुग्धे! किमित्यद्भुतम्॥ ५॥

नीलोत्पलेन नयनम्, अम्बुजेन पद्मेन मुखं, कुन्देन दन्तं, नवपल्लवेन अधरं तथा चम्पकदलैः अङ्गानि विधाय सृष्ट्वा उपलेन पाषाणेन चेतः चित्तं ते इति सर्वत्र शेषे योज्यम्। कथं घटितवान् निर्मितवान्। अतिकठिनमनास्त्वमिति भावः। वसन्ततिलकं वृत्तम्॥ ३॥

एक इति। हीति प्रसिद्धौ, एकः नलिनीदलस्थः पद्मपत्राग्र-स्थितः खञ्जनवरः तदाख्यपक्षिश्रेष्ठः दृष्टः अवलोकितः सन् चतुरङ्गबलानां हस्त्यश्वरथपादातरूपसैन्यानाम् आधिपत्यं राजत्वमिति भावः करोति जनयति तादृशशुभसूचकमेतद्दर्शनमिति भावः। भवत्या वदनारविन्दे एतत् नयनखञ्जनयुग्मं नेत्ररूपं खञ्जनपक्षियुगलं मया दृष्टमिति शेषः, मे मम किं शुभमिति शेषः करिष्यति, तत् नो जानामि। वसन्ततिलकं वृत्तम्। रूपकमलङ्कारः॥ ४॥

ये इति। ये ये जनाः दैवात् क्वचित् कमले पद्मे एकमेव न तु द्वौ वा त्रीन् वेति भावः खञ्जनं पश्यन्ति, ते सर्वे मनुजाः सुतराम् अतिशयेन प्रख्याताः प्रसिद्धाः भूमीभुजः राजानः भवन्ति। ये ये जनाः तव वक्त्राम्बुजे मुखकमले नेत्रखञ्जनयुगं पश्यन्ति, हे मुग्धे!

झटिति प्रविश गेहं मा बहिस्तिष्ठ कान्ते!
ग्रहणसमयवेला वर्त्तते शीतरश्मेः।
अयि! सुविमलकान्तिं वीक्ष्य नूनं स राहु-
र्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय॥ ६॥

कस्तूरीवरपत्रभङ्गनिकरो भ्रष्टो न गण्डस्थले
नो लुप्तं सखि! चन्दनं स्तनतटे धौतं न नेत्राञ्जनम्।
रागो न स्खलितस्तवाधरपुटे ताम्बूलसंवर्द्धितः
किं रुष्टासि गजेन्द्रमन्दगमने! किंवा शिशुस्ते पतिः? ॥७॥

सुन्दरि! ते ते जनाः भवत्याः कामजालैः शरनिवहैः विकलाः विवशाः व्यथिता इति भावः भवन्तीति शेषः किम् अद्भुतम् आश्चर्यम्। रूपकालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ५॥

झटितीति। हे कान्ते! झटिति शीघ्रं गेहं प्रविश, बहिः बाह्ये देशे मा तिष्ठ न स्थितिं कुरु। शीतरश्मेश्चन्द्रस्य ग्रहणसमयवेला वर्त्तते, अयि प्रिये इति सम्बोधनमूहनीयं, स राहुः सुविमला समुज्ज्वला इत्यर्थः कान्तिर्यस्य तादृशं तव मुखेन्दुं वीक्ष्य दृष्ट्वा नूनं निश्चितं पूर्णचन्द्रं विहाय तव मुखेन्दुं ग्रसति। अत्र रूपकानुप्राणितो भ्रान्तिमानलङ्कारः। मालिनीवृत्तम्॥ ६॥

कस्तूरीति। हे सखि! कस्तूरी मृगनाभिः तया रचित इति भावः पत्रभङ्गानां पत्ररचनानां निकरः गण्डस्थले न भ्रष्टः न लुप्त इत्यर्थः, स्तनतटे चन्दनं नो लुप्तं न नष्टं, नेत्रयोः अञ्जनं न धौतं न विलुप्तं, तव अधरपुटे ताम्बूलसंवर्द्धितः रागः लौहित्यं न स्खलितः न लुप्तः, अतः हे गजेन्द्रमन्दगमने! किं रुष्टा कुपिता असि इति शेषः अपि? किंवा ते पतिः शिशुः? नायिकां प्रति सख्या वचनमिदम्॥ ७॥

समायाते कान्ते कथमपि च कालेन बहुना
कथाभिर्देशानां सखि ! रजनिरर्द्धं गतवती ।
ततो यावल्लीलाकलहकुपितास्मि प्रियतमे
सपत्नीव प्राची दिगियमभवत् तावदरुणा ॥ ८ ॥

श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातपः
क्लेशः श्लाघ्यतरः सुपङ्कनिचयैः श्लाघ्योऽतिदाहोऽनलैः ।
यत् कान्ताकुचपार्श्वबाहुलतिकाहिन्दोललीलासुखं
लब्धं कुम्भवर ! त्वया, न हि सुखं दुःखैर्विना लभ्यते ॥ ९ ॥

समायाते इति । हे सखि ! कथमपि बहुना कालेन कान्ते समायाते सति देशानां कथाभिः वार्त्ताभिः रजनिः रात्रिः अर्द्धं गतवती । ततः अनन्तरं यावदहं लीलाकलहेन सुरतकलहेन प्रियतमे कुपिता अस्मि कोपेन किञ्चित् कालं स्थितास्मीति भावः, तावत् सपत्नीव इयं प्राची दिक् अरुणा अरुणोदयवती कोपरक्ता च अभवत् । तस्मात् कान्तेन सह क्रीडाकौतुकस्य नावसरः प्राप्त इति सखीं प्रति नायिकायाः प्रतिवचनम् । उपमालङ्कारः । शिखरिणी वृत्तम् ॥ ८ ॥

श्लाघ्यमिति । हे कुम्भवर ! नीरसैः कठिनैः काष्ठैः दण्डैरित्यर्थः ताडनशतं प्रहारशतं श्लाघ्यं प्रशंसनीयं तवेति सर्वत्र योज्यम् । प्रचण्डातपः श्लाघ्यः, सुपङ्कनिचयैः अत्यन्तपङ्कप्रलेपैरिति यावत् क्लेशः श्लाघ्यतरः अतिशयेन श्लाघ्यः, अनलैः अग्निभिः अतिदाहश्च श्लाघ्यः, यत् यस्मात् त्वया कान्तायाः कुचपार्श्वे स्तनपार्श्वदेशे बाहुलतिकया यः हिन्दोलः दोलनं तेन लीलासुखं विहारसुखं लब्धं प्राप्तम् । हि तथाहि दुःखैः विना सुखं न लभ्यते । त्वं तादृशं दुःखातिशयमकरोरिति तथाभूतं सुखं लब्धमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

किं मे वक्त्रमुपेत्य चुम्बसि बलात् निर्लज्ज ! लज्जा न ते
वस्त्रान्तं शठ ! मुञ्च मुञ्च शपथैः किं धूर्त्त ! निर्वञ्चसे ।
क्षीणाहं तव रात्रिजागरवशात् तामेव याहि प्रियां
निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः ॥१०॥
वाणिज्येन गतः स मे गृहपतिर्वार्त्तापि न श्रूयते
प्रातस्तज्जननी प्रसूततनयागेहं तथा वै गता ।
बालाहं नवयौवना निशि कथं स्थातव्यमस्मद्गृहे
सायं सम्प्रति वर्त्तते पथिक हे ! स्थानान्तरं गम्यताम् ॥११॥

किमिति । हे निर्लज्ज ! उपेत्य समीपमागत्य बलात् किं कथं मे वक्त्रं मुखं चुम्बसि, ते तव लज्जा न अस्तीति शेषः, हे शठ ! धूर्त ! वस्त्रान्तं वसनाञ्चलं मुञ्च त्यज, मुञ्च त्यज, हे धूर्त्त ! शपथैः दिव्यैः नाहं कदापि एवं करिष्यामि कृते मम एतत् पापं भवितेत्यादिरूपैरिति यावत् किं निर्वञ्चसे प्रतारयसि ? तव रात्रिजागरवशात् त्वदर्थं रात्रौ जागरणात् कदा आगमिष्यति प्रेयानिति भावः अहं क्षीणा दुर्बला, तामेव यत्समीपे रात्रिर्नीतेति भावः प्रियां याहि गच्छ, निर्माल्यवत् उज्झितः त्यक्तः पुष्पदामनिकरः पुष्पमाल्यसमूहः तस्मिन् षट्पदानां भ्रमराणां रतिरनुरागः का ? नैवानुराग इत्यर्थः । इदानीं पुराणाहं, नवीनां तामुपयाहीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

वाणिज्येनेति । स मे मम गृहपतिः पतिरित्यर्थः वाणिज्येन वाणिज्यार्थमित्यर्थः गतः, वार्त्तापि संवादः अपि न श्रूयते, प्रातः अद्य प्रातःकाले तस्य जननी मम श्वश्रूरिति भावः प्रसूतायाः तनयाया गेहं तथा वै गता । अहं बाला नवयौवना च, तस्मात् निशि रात्रौ कथम् अस्माकं गृहे स्थातव्यं त्वयेति शेषः, सम्प्रति सायं सन्ध्याकालः वर्त्तते, हे

यामिन्येषा बहुलजलदैर्बद्धभीमान्धकारा
निद्रां यातो मम पतिरसौ क्लेशितः कर्मदुःखी ।
बाला चाहं मनसिजभयात् प्राप्तगाढप्रकम्पा
ग्रामश्चौरैरयमुपहृतः पान्थ ! निद्रां जहीहि ॥ १२ ॥

क भ्रातश्चलितोऽसि ? वैद्यकगृहं, किं तत्र ? शान्त्यै रुजां
किं ते नास्ति सखे ! गृहे प्रियतमा सर्वं गदं हन्ति या ? ।
वातश्चेत् कुचकुम्भमर्दनवशात् पित्तञ्च वक्त्रामृतात्
श्लेष्माणं विनिहन्ति हन्त ! सुरतव्यापारकेलिश्रमात् ॥१३॥

पथिक ! स्थानान्तरं गम्यताम् । अत्र विपरीतलक्षणया अत्रैव त्वं तिष्ठेति प्रतीयते । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

यामिनीति । एषा यामिनी रात्रिः बहुलजलदैः प्रभूतमेघैः बद्धः जनितः भीमः भयङ्करः अन्धकारः यस्यां तथाभूता, असौ मम पतिः कर्मणा परिश्रमेण दुःखी आर्त्तः क्लेशितः प्राप्तक्लेशः अतएव निद्रां यातः गतः निद्रित इत्यर्थः, अहञ्च बाला नवयौवना मनसिजस्य कामस्य भयात् आवेगजनितादिति भावः, प्राप्तः गाढः अत्यन्तः प्रकम्पः यया तादृशी कामार्त्तेति भावः अयं ग्रामः चौरैः तस्करैः उपहृतः, हे पान्थ ! पथिक ! निद्रां जहीहि त्यज । निद्रां त्यक्त्वा मामनुगृहाणेति भावः । मन्दाक्रान्तावृत्तम् ॥ १२ ॥

केति । हे भ्रातः ! क कुत्र चलितः असि, गच्छसीत्यर्थः इति प्रश्नः, वैद्यकगृहं चिकित्सकगृहं चलितोऽस्मीति प्रतिवचनम् । तत्र वैद्यकगृहे किं किमर्थं चलितोऽसीति शेषः, प्रश्नोऽयम् । रुजां रोगाणां शान्त्यै उपशमाय चलितोऽस्मीति प्रतिवचनम् । हे सखे ! ते तव गृहे प्रियतमा किं नास्ति ? या सर्वं गदं रोगं हन्ति, चेत् यदि वातः वायुदोषजः व्याधिस्तव स्यादिति शेषः, तदा कुचकुम्भयोर्मर्दनवशात् तं वातमित्यध्याहार्य्यं, वक्त्रामृतात् मुखामृतपानात् पित्तं

दृष्टिं देहि पुनर्बाले ! कमलायतलोचने ! ।
श्रूयते हि पुरा लोके विषस्य विषमौषधम् ॥ १४ ॥

अन्तर्गता मदनवह्निशिखावली या
सा बाधते किमिह चन्दनलेपनेन ।
यत् कुम्भकारपवनोपरि पङ्कलेप-
स्तापाय केवलमसौ न तु तापशान्त्यै ॥ १५ ॥

दृष्टा यासां नयनसुभगं वञ्चवाराङ्गनानां
देशत्यागः परमकृतिभिः कृष्णसारैरकारि ।
तासामेव स्तनयुगजिता दन्तिनः सन्ति मत्ताः
प्रायो मूर्खः परिभवविधौ नाभिमानं तनोति ॥ १६ ॥

पित्तदोषजं रोगं, तथा हन्त इर्षं सुरतव्यापारे यः क्रीडितः तस्य अभावात् श्लेष्माधिक्यं श्लेष्मदोषजरोगं विनिघ्नन्ति विशेषेण नाशयति। शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

दृष्टिमिति । हे कमलायतलोचने ! पद्मविशालनेत्रे ! बाले सुन्दरि ! पुनः दृष्टिं देहि, हि यतः पुरा पूर्वं लोके जगति विषस्य औषधं विषं श्रूयते श्रुतमिति यावत्, अतीते लट्प्रत्ययो बोध्यः । सकृत् कटाक्षविषदिग्धोऽहं पुनः कटाक्षविशेषेण शान्तिं लप्स्ये इति भावः ॥ १४ ॥

अन्तर्गतेति । या मदनवह्निशिखावली अन्तर्गता सा बाधते अन्तर्व्यथयतीत्यर्थः इह अस्मिन् शरीरे इति शेषः चन्दनलेपनेन किम् ? न किमपि प्रयोजनमित्यर्थः । यः कुम्भकारस्य पवनस्य कुम्भादिदहनार्थं सञ्चितस्य चुल्लीविशेषस्य उपरि पङ्कलेपः, असौ केवलं तापाय अतिसन्तापाय, न तु तापस्य शान्त्यै उपशमाय भवतीति शेषः । दृष्टान्तालङ्कारः । वसन्ततिलकं वृत्तम् ॥ १५ ॥

दृष्टेति । यासां वञ्चवाराङ्गनानां वञ्चीयवेश्यानां नयनसुभगं

अपूर्वो दृश्यते वह्निः कामिन्याः स्तनमण्डले।
दूरतो दहते गात्रं हृदि लग्नस्तु शीतलः॥ १७॥
कुसुमे कुसुमोत्पत्तिः श्रूयते न तु दृश्यते।
बाले! तव मुखाम्भोजे कथमिन्दीवरद्वयम्॥ १८॥
अयि मन्मथचूतमञ्जरि! श्रवणायतचारुलोचने!।
अपहृत्य मनः क्व यासि मे किमराजकमत्र राजते॥१९॥

मेतद्विचार्य इहा परमकृतिभिः सुपण्डितैरिति यावत् पराजितैर्जेतृ-समीपे न स्थातव्यमिति ज्ञानाङ्कुरित भावः कृष्णसारैः मृगविशेषैः देशत्यागः वङ्गदेशपरिहारः अकारि, वङ्गदेशे कृष्णसारा न चरन्तीति प्रसिद्धिः। तासामेव वङ्गवाराङ्गनानां स्तनयुगैः जिताः पराभूताः दन्तिनः गजाः मत्ताः अतएव वर्त्तन्ते तिष्ठन्ति अस्मिन् वङ्गदेशे इति शेषः। तथाहि मूर्खो जनः प्रायः बाहुल्येन परिभवविधौ पराजय-व्यापारे अभिमानम् अहङ्कारं न तनोति न प्रकटयति नावबुध्यते इति यावत्। मूर्खाणां मानापमानबोधो नास्तीति भावः। मन्दा-क्रान्तावृत्तम्॥ १६॥

अपूर्व इति। कामिन्याः स्तनमण्डले अपूर्वः अद्भुतः वह्निः दृश्यते। अपूर्वत्वे हेतुमाह दूरत इति। दूरतः दूरात् गात्रं दहते सन्तापयतीति यावत्, हृदि वक्षसि लग्नस्तु लग्न एव शीतलः भव-तीति शेषः॥ १७॥

कुसुमे इति। कुसुमे पुष्पे कुसुमस्य पुष्पस्य उत्पत्तिः श्रूयते, न च दृश्यते। हे बाले! तव मुखाम्भोजे वदनकमले कथम् इन्दी-वरद्वयं नीलोत्पलयुगलं दृश्यते इति शेषः। अत्रेन्दीवरद्वयं नेत्रयुगल-मिति भेदेऽप्यभेदरूपातिशयोक्तिरलङ्कारः। तदुक्तं दर्पणे। सिद्धत्वेऽध्य-वसायस्यातिशयोक्तिर्निगद्यते। भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययाविति। अनुष्टुब्वृत्तम्॥ १८॥

अयीति। अयि मन्मथस्य कामस्य चूतमञ्जरि! श्रवणायते

कोपस्त्वया यदि कृतो मयि पङ्कजाक्षि!
सोऽस्तु प्रियस्तव किमत्र विधेयमन्यत्।
आश्लेषमर्पय मदर्पितपूर्वमुच्चै-
रुच्चैः समर्पय मदर्पितचुम्बनञ्च॥ २०॥

इति श्रीकालिदासकृतं शृङ्गारतिलकं समाप्तम्।

---

# हंसदूतः।

---

दुकूलं बिभ्राणो दलितहरितालद्युतिहरं
अवापुष्पश्रेणीरुचिरुचिरपादाम्बुजतलः।

आकर्षकष्टे चाहृषि मनोहरे बोधने यथासन्नृपस्य तौ, मे मम मनः चपहृत्य क्व यासि? अत्र अस्मिन् देशे किम् अराजकं राजाभावः राजते। वर्त्तते इति पाठान्तरम्। मेवाभाराजकं, तस्मात् ते मनःचौर्यरूपस्य कार्य्यस्यावश्यं यासनं भविष्यतीति भावः॥ १९॥

कोप इति। हे पङ्कजाक्षि पद्मनेत्रे! त्वया यदि मयि कोपः कृतः, सः कोपः तव प्रियः नाऽहमिति भावः अस्तु भवतु, अत्र अस्मिन् विषये अन्यत् किं विधेयं कर्त्तव्यं न किमपि करणीयमस्ति ममेति भावः। किन्तु मया अर्पितपूर्वं पूर्वं दत्तम् आश्लेषम् आलिङ्गनम् उच्चैः गाढं यथा तथा अर्पय प्रतिदेहि, मया अर्पितं चुम्बनञ्च उच्चैः समर्पय। वसन्ततिलकं वृत्तम्॥ २०॥

---

दुकूलमिति। दलितं खण्डितं यत् हरितालं तस्य द्युतिहरं कान्तिचौरं पीतमिति भावः दुकूलं वसनं दधानः परिदधत् अवापु-

तमालश्यामाङ्गो दरहसितलीलाञ्चितमुखः
परानन्दाभोगः स्फुरतु हृदि मे कोऽपि पुरुषः ॥ १ ॥
यदा यातो गोपीहृदयमदनो नन्दसदनात्
मुकुन्दो गान्दिन्यास्तनयमनुविन्दन् मधुपुरीम्।
तदामाङ्क्षीच्चिन्तासरिति घनघूर्णापरिचयै-
रगाधायां बाधामयपयसि राधा विरहिणी ॥ २ ॥
कदाचित् खेदाग्निं विघटयितुमन्तर्गतमसौ
सहालीभिर्लेभे तरलितमना यामुनतटीम्।

श्यामां श्यामा रुचिर्दीप्तिः कान्तिरिव रुचिर्यस्य तादृशं रुचिरं मनोज्ञं माद्राम्बुजतमं चरणकमलतलं यस्य तथाभूतः तमालवत् श्यामम् अङ्गं यस्य तथोक्तः दरहसितस्य मन्दस्मितस्य लीलया विलासेन अञ्चितं पूजितं शोभितमिति भावः मुखं यस्य तथाभूतः परः महान् आनन्दस्य आभोगः परिपूर्णता यस्य तादृशः अथवा परमानन्दमय स्वरूपः कोऽपि अनिर्वचनीयः पुरुषः कृष्ण इति भावः मे मम हृदि स्फुरतु राजताम्। शिखरिणीवृत्तमस्मिन् सन्दर्भे। उपमालङ्कारः। ग्रन्थारम्भे विघ्नविनाशाय कवेरिष्टदेवतासंकीर्त्तनरूपं मङ्गलाचरणमिदम् ॥ १ ॥

यदेति। गोपीनां हृदयमदनः मनोमोहनः मुकुन्दः कृष्णः यदा गान्दिन्याः तनयम् अक्रूरम् अनुविन्दन् अनुलभमानः अनुसरन् वा नन्दसदनात् नन्दावासात् मधुपुरीं मथुरां यातः गतः, तदा विरहिणी राधा घनाः सान्द्रा या घूर्णाः भ्रमयः तासां परिचयैः सङ्गैः अगाधायाम् अतलस्पर्शायाम् अपारायामिति भावः बाधामयानि दुःखमयानि पयांसि जलानि यस्यां तथाभूतायां चिन्तासरिति अमाङ्क्षीत् निममज्ज। रूपकालङ्कारः ॥ २ ॥

कदाचिदिति। कदाचित् असौ राधा आलीभिः सखीभिः सह

चिरादस्याश्चित्तं परिचितकुटीरावकलनाद्
अवस्थां तस्तार स्फुटमथ सुषुप्तेः प्रियसखीम् ॥ ३ ॥
तदा निष्पन्दाङ्गी कलितनलिनीपत्रशकलैः
परीवाहात् प्रेम्णामकुशलशताशङ्कितहृदयैः ।
दृगम्भोगम्भीरीकृतमिहिरपुत्रीलहरिभि-
र्विलीना धूलीनामुपरि परिवव्रे परिजनैः ॥ ४ ॥
ततस्तां न्यस्ताङ्गीमुरसि ललितायाः कमलिनी-
पलाशैः कालिन्दीसलिलशिशिरैर्वीजिततनुम् ।

अन्तर्गतं खेदाग्निं विरहजमपोज्झ्यानवं विघटयितुं निर्वापयितुं तर-लितमनाः चञ्चलितचित्ता सती यामुनतटीं यमुनातीरं लेभे गत-वती । अथ यमुनातीरप्राप्त्यनन्तरम् अस्या राधायाः चित्तं मनः चिरात् परिचितानां भुक्तानामिति भावः कुटीराणां कुञ्जानामिति भावः अवकलनात् अवलोकनात् सुषुप्तेः सुखमहमस्वाप्सं न किञ्चि-दवेदिषमित्येवंरूपा संवित् यदन्ते स्यात् सा निद्रा सुषुप्तिः तस्याः प्रियसखीम् अवस्थां मूर्च्छामिति भावः स्फुटं सम्यक् यथा तथा तस्तार प्राप लुलोठेति भावः ॥ ३ ॥

तदेति । तदा तस्मिन् काले मूर्च्छावस्थायामिति भावः निष्पन्दं निश्चलम् अङ्गं यस्याः तथाभूता अतएव धूलीनामुपरि विलीना लुण्ठिता सा कलितं गृहीतं नलिनीपत्रशकलं पद्मपत्रखण्डः व्यजनार्थमिति भावः यैः तथोक्तैः, प्रेम्णां परीवाहात् आतिशय्यात् अकुशलशतम् अमङ्गलशतं जीवति न वेत्यादिरूपम् आशङ्कते इति तादृशं हृदयं येषां तैः, दृगम्भोभिः नयनजलैः गम्भीरीकृता पूरितेति यावत् मिहिरपुत्र्याः यमुनायाः लहरिस्तरङ्गः यैः तथाभूतैः परिजनैः सखीभिरिति भावः परिवव्रे परितः वेष्टिता ॥ ४ ॥

तत इति । ततः अनन्तरं ललितायाः तदाख्यसख्याः उरसि

परावृत्तश्वासाङ्कुरचलितकण्ठीं कथयतां
सखीसन्दोहानां प्रमदभरभावी ध्वनिरभूत् ॥ ५ ॥
निधायाङ्के पङ्केरुहदलविटङ्कस्य ललिता
ततो राधां नीराहरणसरणीन्यस्तचरणा ।
मिलन्तं कालिन्दीपुलिनभुवि खेलाञ्चितगतिं
ददर्शाग्रे कञ्चिन्मधुरविरुतं श्वेतगरुतम् ॥ ६ ॥
तदालोकस्तोकोच्छ्वसितहृदया सादरमसौ
प्रणामं शंसन्ती लघु लघु समासाद्य सविधम् ।
धृतोत्कण्ठा सद्यो हरिसदसि सन्देशहरणे
वरं दूतं मेने तमतिललितं हन्त ! ललिता ॥ ७ ॥

क्वचिदिति न्यस्ताङ्गीं निहितकलेवरां कालिन्द्याः यमुनायाः सलिलेन शिशिरैः शीतलैः कमलिनीपत्रार्थैः पद्मपत्रैः वीजिता ततुः शरीरं यस्याः तथोक्तां पराहृत्तेन प्रत्यागतेन श्वासाङ्कुरेण मन्दश्वासेनेत्यर्थः चलितः स्पन्दितः कण्ठो यस्याः तादृशीं कथयतां वदतां सखीसन्दोहानां सहचरीसङ्घानां प्रमदभरेण हर्षातिशयेन शालते शोभते इति तथोक्तः ध्वनिः आनन्दकोलाहल इति यावत् अभूत् ॥ ५ ॥

निधायेति । ततः अनन्तरं प्रत्यागतश्वासानन्तरं ललिता नीराहरणार्थं जलाहरणार्थं या सरणी सोपानं तस्यां न्यस्तचरणा अर्पितपादा सती पङ्केरुहदलविटङ्कस्य पद्मपत्ररचितशयनीयस्येति यावत् अङ्के क्रोडे उपरीत्यर्थः राधां निधाय स्थापयित्वा कालिन्द्याः यमुनायाः पुलिनभुवि सैकतदेशे मिलन्तं चरन्तम् अग्रे खेलया विलासेन अञ्चिता प्रशंसिता गतिर्गमनं यस्य तथोक्तं मधुरविरुतं मनोज्ञनिनादं कञ्चित् श्वेतगरुतं शुभ्रपक्षं हंसमिति यावत् ददर्श ॥ ६ ॥

तदेति । हन्त खेदे, असौ ललिता तस्य हंसस्य आलोकेन दर्शनेन स्तोकम् अल्पम् उच्छ्वसितम् उत्फुल्लं हृदयं यस्यास्तथाभूता

अमर्षात् प्रेमेर्ष्यां सपदि दधती कंसमथने
प्रवृत्ता हंसाय स्वमभिलषितं शंसितुमसौ ।
न तस्या दोषोऽयं यदिह विहगं प्रार्थितवती
न कस्मिन् विश्रम्भं दिशति हरिभक्तिप्रणयिता ॥ ८ ॥

पवित्रेषु प्रायो विरचयसि तोयेषु वसतिं
प्रमोदं नालीके वहसि विशदात्मा स्वयमसि ।
अतोऽहं दुःखार्त्ता शरणमबला त्वां गतवती
न भिक्षा सत्पक्षे व्रजति हि कदाचिद्विफलताम् ॥९॥

तथा हृतोत्कण्ठा उत्सुकचित्तेत्यर्थः लघु लघु शनैः शनैः सविधं समीपं समासाद्य आगत्य सादरं प्रणामं शंसन्ती प्रणमन्तीति यावत् सद्यः तत्क्षणं हारिसदृशि कृष्णसभावां मथुरायामिति भावः सन्देशहरणे वाचिकप्रेषणे वाचिकप्रेषणार्थमित्यर्थः तम् अतिललितं सुन्दरं हंसं वरं श्रेष्ठं दूतं सन्देशहरं, स्यात् सन्देशहरो दूत इत्यमरः । मेने दौत्याय प्रेरयितुमभिमतवतीत्यर्थः ॥ ७ ॥

अमर्षादिति । अमर्षात् कोपात् सपदि तत्क्षणं कंसमथने कृष्णे प्रेमेर्ष्यां प्रेमजनिताम् ईर्ष्यां दधती असौ ललिता हंसाय स्वम् अभिलषितं शंसितुं कथयितुं प्रवृत्ता प्रारेभे । इह विषये सन्देशहरणे इत्यर्थः यत् सा विहगं पक्षिणं हंसं प्रार्थितवती, अयं तस्या ललितायाः दोषः अविमृश्यकारित्वरूप इति भावः न, हरिभक्तिप्रणयिता हरौ भक्त्यतिरेक इति यावत् कस्मिन् जने विश्रम्भं विश्वासं न दिशति, न जनयति ? अपितु सर्वस्मिन्नेव विश्रम्भं दिशतीत्यर्थः । अर्थान्तरन्यासः ॥ ८ ॥

पवित्रेष्विति । प्रायः बाहुल्येन पवित्रेषु विशुद्धेषु तोयेषु वसतिम् अवस्थानं विरचयसि करोषि, नालीके कमलमृणाले मदुःमक्षणे इति भावः प्रमोदम् आनन्दं वहसि, स्वयञ्च विशदात्मा

चिरं विस्मृत्यास्मान् विरहदहनज्वालविकलाः
कलावान् सानन्दं वसति मथुरायां मधुरिपुः ।
तदेतं सन्देशं स्वमनसि समाधाय निखिलं
भवान् क्षिप्रं तस्य श्रवणपदवीं सङ्गमयतु ॥ १० ॥
निरस्तप्रत्यूहं भवतु भवतो वर्त्मनि शिवं
समुत्तिष्ठ क्षिप्रं मनसि मुदमाधाय सदयम् ।
अधस्ताद्धावन्तो लघु लघु समुत्ताननयनै-
र्भवन्तं वीक्षन्तां कुतुकतरला गोपशिशवः ॥ ११ ॥

स्वच्छान्तःकरणः असि । अतः कारणात् दुःखार्त्ता अबलाहं त्वां शरणं गतवती, हि यतः सत्पक्षे साधुजने उत्कृष्टपक्षशालिनि च भिक्षा प्रार्थना कदाचित् विफलतां व्यर्थतां न व्रजति न गच्छति । अर्थान्तरन्यासोऽलङ्कारः ॥ ९ ॥

चिरमिति । कलावान् चतुःषष्टिकलापूर्णः मधुरिपुः कृष्णः विरहदहनस्य विच्छेदाग्नेः ज्वालेन विकलाः व्याकुलाः अस्मान् विस्मृत्य मथुरायां चिरं दीर्घकालं सानन्दं वसति । तत् तस्मात् भवान् एतं निखिलं समग्रं सन्देशं स्वमनसि समाधाय स्थापयित्वा क्षिप्रं शीघ्रं तस्य मधुरिपोः श्रवणपदवीं श्रोत्रेन्द्रियं सङ्गमयतु प्रापयतु ॥१०॥

निरस्तेति । भवतः वर्त्मनि पथि निरस्तः गतः प्रत्यूहः विघ्नः यस्मात् तथाभूतं शिवं मङ्गलं भवतु । सदयं सानुकम्पं मनसि मुदं हर्षम् आधाय क्षिप्रं शीघ्रं समुत्तिष्ठ यात्रां कुर्वित्यर्थः । कुतुकेन कौतूहलेन तरलाश्चपलाः गोपानां शिशवः बालकाः लघु लघु द्रुतं द्रुतम् अधस्तात् तलदेशे धावन्तः सन्तः समुत्ताननयनैः उत्क्षिप्तनेत्रैः भवन्तम् उड्डयमानमिति भावः वीक्षन्ताम् अवलोकयन्तु ॥ ११ ॥

किशोरोत्तंसोऽसौ कठिनमतिना दानपतिना
यया निन्ये तूर्णं पशुप-युवतीजीवितपतिः ।
तया गन्तव्या ते निखिलजगदेकप्रथितया
पदव्या भव्यानां तिलक! किल दाशार्हनगरी ॥ १२ ॥

गलद्बाष्पासारप्लुतधवलगण्डा मृगदृशो
विदूयन्ते यत्र प्रबलमदना वेशविवशाः ।
त्वया विज्ञातव्या हरिचरणसङ्गप्रणयिनो
ध्रुवं सा चक्राङ्की रतिसखशताङ्गस्य पदवी ॥ १३ ॥

किशोरेति । पशुपयुवतीनां गोपाङ्गनानां जीवितपतिः प्राणेश्वरः किशोरोत्तंसः कुमारश्रेष्ठः असौ कृष्णः कठिनमतिना क्रूरबुद्धिना दानपतिना अक्रूरेण यया पदव्या पथा निन्ये नीतः, हे भव्यानां साधूनां तिलक! तया निखिलजगत्सु सर्वभूमण्डलेषु एकप्रथितया सम्यक् प्रसिद्धया पदव्या तूर्णं शीघ्रं दाशार्हनगरी दाशार्हाणां यादवविशेषाणां नगरी पुरी मथुरेत्यर्थः ते तव गन्तव्या यातव्या ॥ १२ ॥

गलदिति । यत्र यस्यां पदव्यां गलद्भिः पतद्भिः बाष्पासारैः अश्रुधाराभिः प्लुतौ व्याप्तौ धवलौ स्वच्छौ गण्डौ यासां ताः, प्रबलः मदनः कामः यासां तथोक्ताः कृष्णादर्शनादिति भावः, वेशे वेश्यालये, वेशो वेश्याजनाश्रय इत्यमरः । विवशाः कामार्त्ता इति यावत् मृगदृशः मृगनयनाः नार्य्य इत्यर्थः विदूयन्ते व्यथन्ते सतत् कृष्णादर्शनानन्तरमेव तदवलोकनादिति भावः, हरिचरणस्य सङ्गप्रणयिनी अतएव चक्राङ्की चक्रचिह्निता रतिसखशतवत् कामशतवत् मनोहरमिति भावः अङ्गं यस्य तादृशस्य कृष्णस्येति यावत् सा पदवी पन्थाः त्वया ध्रुवं निश्चितं तत्तदवलोकनेनेति भावः विज्ञातव्या विशेषेण वेदितव्या ॥ १३ ॥

पिबन् जम्बुश्यामं मिहिरदुहितुर्वारि मधुरं
मृणालीर्भुञ्जानो हिमकरकलाकोमलरुचः ।
क्षणं हृष्टस्तिष्ठन् निविड़विटपे शाखिनि सखे !
सुखेन प्रस्थानं रचयतु भवान् द्वारिणनगरे ॥ १४ ॥

बलादाक्रन्दन्ती रथपथिकमक्रूरमिलितं
विदूरादाभीरीततिरनुययौ येन रमणम् ।
तमादौ पन्थानं रचय चरितार्था भवतु ते
विराजन्ती सर्वोपरि परमहंसस्थितिरियम् ॥ १५ ॥

अकस्मादस्माकं हरिरपहरन् शुकचयं
समारूढ़ो गूढ़प्रणयलहरीं कन्दलयितुम् ।

पिबन्निति । हे सखे ! भवान् जम्बुवत् श्यामं कृष्णं मिहिरदुहितुः यमुनायाः मधुरं वारि जलं पिबन् हिमकरकला चन्द्रकला तद्वत् कोमलाः रुचः प्रभाः यासां ताः मृणालीः भुञ्जानः क्षणं हृष्टः निविड़विटपे घनशाखे शाखिनि वृक्षे तिष्ठन् द्वारिणनगरे यदुपुर्यां सुखेन प्रस्थानं रचयतु करोतु ॥ १४ ॥

बलादिति । बलात् वेगात् अतिशयेनेत्यर्थः विदूरात् आक्रन्दन्ती रुदती आभीरीततिः गोपनारीसंहतिः येन पथा रथपथिकं रथेन यान्तम् अक्रूरमिलितम् अक्रूरेण सह सङ्गतं रमणं कान्तं कृष्णमित्यर्थः अनुययौ अनुयाति स्म, आदौ प्रथमं तं पन्थानं रचय गच्छ, ते तव सर्वोपरि सर्वेषाम् उपरि विराजन्ती उत्कर्षेण वर्त्तमानेति भावः इयं परमहंसस्थितिः परमहंसस्य योगिनश्च स्थितिः अवस्थानं मर्यादा च चरितार्था सफला भवतु तन्मार्गदर्शनादिति भावः ॥ १५ ॥

अकस्मादिति । हे कादम्ब ! कलहंस ! हरिः कृष्णः अकस्मात् सहसा अस्माकम् शुकचयं वसनसमूहम् अपहरन् चोरयन्

तव श्रान्तस्यान्तःस्थगितरविबिम्बः किसलयैः
कदम्बः कादम्ब ! त्वरितमवलम्बः स भविता ॥ १६ ॥
किरन्ती लावण्यं दिशि दिशि शिखण्डस्तबकिनी
दधाना साधीयः कनकविमलद्योतिवसनम् ।
तमालश्यामाङ्गी सरलमुरलीचुम्बितमुखी
जगौ चित्रं यत्र प्रकटपरमानन्दलहरी ॥ १७ ॥
तया भूयः क्रीड़ारभसविकसद्बल्लववधू-
वपुर्वल्लीभ्यश्च्युन्मृगमदकणश्यामलिकया ।

गूढ़ा गुप्ता या प्रणयलहरी प्रेमतरङ्गः तां कन्दलयितुं प्रकटयितुं कलङ्कयितुं वा यत्र आरूढ़ः, किशलयैः पल्लवैः अन्तः अभ्यन्तरे स्थगितं तिरोहितं रविबिम्बं सूर्य्यरश्मिरिति भावः येन तथाभूतः कदम्बः सः कदम्बतरुः श्रान्तस्य अध्वगमनादिति भावः तव त्वरितं शीघ्रम् अविदूरस्थितत्वादिति भावः अवलम्बः आश्रयः भविता। तमाश्रित्य त्वया विश्रमितव्यमिति भावः ॥ १६ ॥

किरन्तीति। यत्र कदम्बे स्थितेति शेषः, दिशि दिशि लावण्यं किरन्ती विक्षिपन्ती, शिखण्डस्तबकिनी मयूरपिच्छगुच्छकर्णाङ्कितेत्यर्थः साधीयः अतिमनोज्ञं कनकवत् विमलं यथा तथा द्योतते दीप्यते इति तथोक्तं वसनं पीतम् अम्बरमित्यर्थः दधाना वसाना, तमालवत् श्यामम् अङ्गं यस्यास्तादृशी सरलया अकुटिलया मुरल्या चुम्बितं मुखं यस्यास्तादृशी, प्रकटा उद्भटा परमानन्दानां लहरी तरङ्गः कृष्ण इति भावः चित्रं मनोज्ञं यथा तथा जगौ गीतवतीत्यर्थः ॥१७॥

तयेति। भूयः पुनः क्रीड़ायां निधुवनोत्सवे यो रभसः वेगो हर्षो वा, रभसो वेगहर्षयोरित्यमरः। तेन विकसन्त्यः याः बल्लवानां गोपानां वध्वः तासां वपुर्वल्लीभ्यः अङ्गलताभ्यः च्युद्भिः गलद्भिः

विधातव्यो हल्लीसकदम्बितमल्लीलतिकया-
समन्तादुल्लासस्तव मनसि रासस्थलिकया ॥ १८ ॥
तदन्ते वासन्तीविरचितमनङ्गोत्सवकला-
चतुःशालं शौरेः स्फुरति न दृशौ तत्र विकिरेः ।
तदालोकोद्भेदप्रमदभरविस्मारितगति-
क्रिये जाने तावत्त्वयि बत हता गोपवनिता ॥ १९ ॥
मम स्यादर्थानां क्षतिरिह विलम्बाद्यदपि ते
विलोकेथाः सर्वं तदपि हरिकेलिस्थलमिदम् ।

भ्रमरदकषैः कस्तूरीबिन्दुभिः श्यामलिकया मालिन्यं नीतयेत्यर्थः हल्लीसैः मधुकरैः कदम्बिता व्याकीर्णा मल्लीलतिका मल्लिकालता यस्यां तथाभूतया रासस्थलिकया रासोत्सवस्थलेन तव मनसि समन्तात् सर्वतः उल्लासः आनन्दः विधातव्यः जनयितव्यः । रासोत्सवस्थलावलोकनेन पथि तव महान् आनन्दो भविष्यतीति भावः ॥ १८ ॥

तदिति । तस्याः रासस्थलिकायाः अन्ते वासन्ती वसन्तोत्सवः तया तदर्थमिति भावः विरचितम् अनङ्गोत्सवः कामोत्सव एव कला व्यापारः तस्याः चतुःशालं शालाचतुष्टयान्वितं सदनमिति यावत् स्फुरति राजते, तत्र चतुःशाले दृशौ नयने न विकिरेः नार्पय । बत खेदे तस्य चतुःशालस्य आलोकेन दर्शनेन उद्भेदः उदयः यस्य तथोक्तः प्रमदभरः आनन्दातिशयः तेन विस्मारिता विस्मृतिं नीता गतिक्रिया गमनव्यापारः यस्य तादृशे त्वयि सति गोपवनिता गोपाङ्गना हता नाशं गता, तावत् जाने मन्ये । काव्यलिङ्गमलङ्कारः । हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति दर्पणकारः ॥ १९ ॥

ममेति । यदपि यद्यपि ते तव इह विलम्बात् मम अर्थानां कार्याणां क्षतिः हानिः स्यात् यदपि तथापि सर्वं हरिकेलिस्थल-

तवेयं न व्यर्था भवतु मुखिता कः स हि सखे !
गुणो यश्चाणूरद्विषि मयि निवेशाय न भवेत् ॥ २० ॥
सकृद्वंशीनादश्रवणमिलिताभीरवनिता-
रहःक्रीड़ासाक्षी प्रतिपदलतासद्मसुभगः ।
स धेनूनां बन्धुर्मधुमथनखट्टायितशिलः
करिष्यत्यानन्दं सपदि तव गोवर्द्धनगिरिः ॥ २१ ॥
तमेवाद्रिं चक्राङ्कितकरपरिष्वङ्गरसिकं
महीचक्रे शङ्कमहि शिखरिणां शेखरतया ।

मिदं विलोकेथाः पश्येः । हे सखे ! तव इयं मुखिता खच्छन्देन्द्रेहता पवित्रतेति भावः व्यर्था विफलार्था न भवतु अन्वर्था भवत्विति यावत् तत्स्थानदर्शनेनेति भावः । हि यतः कः स गुणः अस्तीति शेषः यः चाणूरद्विषि चाणूरासुरघातिनि कृष्णे मयि निवेशाय मदन्तःकरणप्रवेशाय न भवेत्, अपितु सर्व एव गुणः कृष्णस्य मदन्तरात्मनि निविष्टः आसीत् येन गुणेन तव तदीयवासोत्सवस्थानदर्शनेन निशुद्धता स्यादिति भावः ॥ २० ॥

सकृदिति । सकृत् एकवारं वंशीनादश्रवणेन मिलितानां सङ्गतानाम् आभीरवनितानां गोपीनां रहसि विजने या क्रीड़ा सुरतोत्सवः तस्य साक्षी साक्षात् द्रष्टा प्रतिपदे स्थाने स्थाने लतासद्मभिः लतावेष्टितगृहैः सुभगः मनोहरः धेनूनां गवां बन्धुः गवां सुखेन चरणस्थानमित्यर्थः मधुमथनस्य कृष्णस्य खट्वायिता पर्य्यङ्कवदाचरिता शिला यस्य तथोक्तः स गोवर्द्धनगिरिः सपदि दृष्टमात्र एव ते तव आनन्दं करिष्यति जनयिष्यति ॥ २१ ॥

तमिति । चक्राङ्कितेन चक्रलाञ्छितेन करेण यः परिष्वङ्गः आलिङ्गनं स्पर्शमिति यावत् तस्य रसिकं रसज्ञं तज्जनितसुखाभिज्ञमित्यर्थः तम् एव अद्रिं पर्वतं महीचक्रे भूमण्डले शिखरिणां

अरातिं ज्ञातीनां ननु हरिहयं यः परिभवन्
यथार्थं स्वं नाम व्यधित भुवि गोवर्द्धन इति ॥ २२ ॥
तमालस्यालोकाद्गिरिपरिसरे सन्ति चपलाः
पुलिन्दो गोविन्दस्मरणरभसोत्तप्तवपुषः ।
शनैस्तापं तासां चणमपनयन् यास्यति भवान्
अवश्यं कालिन्दीसलिलशिशिरैः पक्षपवनैः ॥ २३ ॥

पर्वतानां शेखरतया शिरोभूषणतया शङ्के मन्ये स एव शिखर सर्वेषां शिखरिणां श्रेष्ठ इति मन्यामहे इत्यर्थः । ननु भोः यः अद्रिः ज्ञातीनां पर्वतानामिति भावः अरातिं शत्रुं पक्षच्छेदिनमिति भावः हरिहयम् इन्द्रं परिभवन् पराजयमानः सन् भुवि पृथिव्यां गोवर्द्धन इति स्वं नाम यथार्थम् अन्वर्थं कुपितेन्द्रनियोजितमेघैः सप्ताहं वर्षणेऽपि गोकुलरक्षणादिति भावः व्यधित कृतवान् । पुरा इन्द्रमखं निषिध्य कृष्णेन गोवर्द्धनोत्सवे कृते इन्द्रः कुपितः सप्ताहं गोकुलं मुषलधारया वृष्ट्या आच्छादयामास । तदवलोक्य कृष्णः गोकुलं रिरक्षिषुः करेण गोवर्द्धनं धृत्वा तत्तले गोपान् गा वत्सांश्च निवेश्य वर्षापदं निवारयामासेति भागवती वार्त्ता ॥ २२ ॥

तमालस्येति । गिरेः गोवर्द्धनस्य परिसरे पार्श्वदेशे तमालस्य तमालतरोरालोकात् दर्शनात् चपलाः उत्सुकाः अतएव गोविन्दस्मरणेन यः रभसः आवेगः तेन उत्तप्तं वपुः शरीरं येषां तथाभूताः पुलिन्दाः म्लेच्छजातिविशेषाः सन्ति वसन्तीत्यर्थः । भवान् कालिन्दीसलिलेन यमुनाजलसङ्गेनेति भावः शिशिरैः शीतलैः पक्षपवनैः तेषां पक्षं पक्षिकमित्यर्थः गोविन्दस्मरणकाले तदनवलोकनजमिति भावः तापम् अवश्यम् अपनयन् अपनुदन् शनैः मन्दं मन्दं यास्यति गमिष्यति ॥ २३ ॥

तदन्ते श्रीकान्तस्मरसमरधाटी पुलकिता
कदम्बानां वाटी रसिकपरिपाटीं स्फुटयति।
त्वमासीनस्तस्यां न यदि परितो नन्दसि ततो
बभूव व्यर्था ते घनरसनिवेशव्यसनिता॥ २४॥
शरन्मेघश्रेणीप्रतिभटमरिष्टासुरशिर-
श्चिरं शुष्कं वृन्दावनपरिसरे द्रक्ष्यति भवान्।
यदारोढुं दूरान्मिलति किल कैलासशिखरि-
भ्रमाक्रान्तस्वान्तो गिरिशसुहृदः किङ्करगणः॥ २५॥

तदन्ते इति। तस्य गिरेः अन्ते शेषे श्रीकान्तस्य कृष्णस्य स्मरसमरस्य कामसंग्रामस्य मदनोत्सवस्येत्यर्थः धाटी तत्रायष्टिभूतेत्यर्थः परीक्षास्थानमिति भावः अतएव पुलकिता कुसुमोद्गमात् सञ्जातपुलकेत्यर्थः तदुत्सवस्मरणादिति भावः कदम्बानां वाटी कदम्बवनवेष्टितकुञ्जमिति यावत् रसिकानां परिपाटीं श्रेणीं स्फुटयति रसम् आस्वादयतीति भावः। त्वं यदि तस्याः कदम्बपरिपाट्याम् आसीन, उपविष्टः सन् परितः समन्तात् न नन्दसि आनन्दमनुभवसि, ततस्तदा ते तव घनरसे आद्यरसे योऽभिनिवेशः समासक्तिः तस्मिन् व्यसनिता प्रवृत्तिरिति यावत् व्यर्था विफला बभूव भवतीति यावत्, वर्त्तमाने लिट्प्रयोगश्चिन्त्यः॥ २४॥

शरदिति। वृन्दावनपरिसरे भवान् चिरं शुष्कम् अतएव शरन्मेघश्रेणीप्रतिभटं शरत्कालीनमेघराजिसदृशमित्यर्थः अरिष्टासुरस्य अरिष्टाख्यदानवस्य शिरः द्रक्ष्यति, किल प्रसिद्धौ, गिरिशस्य हरस्य यः सुहृत् सखा कुवेरः तस्य किङ्करगणः यक्षगणः कैलासशिखरिणः कैलासपर्वतस्य भ्रमेण आक्रान्तं स्वान्तं मनः यस्य तथाभूतः सन् दूरात् यत् शिरः आरोढुं मिलति आगच्छति। भ्रान्तिमानलङ्कारः॥ २५॥

क्वणन् याहि स्वैरं चरमदृशया चुम्बितरुचो
नितम्बिन्यो वृन्दावनभुवि सखे ! सन्ति बहवः ।
परावर्त्तिष्यन्ते तुलितमुरजिन्नूपुररवात्
तव ध्वानात् तासां बहिरपि गताः क्षिप्रमसवः ॥२६॥
त्वमासीनः शाखान्तरमिलितचण्डत्विषि सुखं
दधीथा भाण्डीरे क्षणमपि घनश्यामलरुचौ ।
ततो हंसा बिभ्रन्निखिलनभसश्चिक्रमिषया
स वर्द्धिष्णुं विष्णुं कलितदरचक्रं तुलयिता ॥ २७ ॥
त्वमष्टाभिर्नेत्रैर्विगलदमलप्रेमसलिले-

क्वणन्निति । हे सखे त्वं स्वैरम् उच्चैः क्वणन् नदन् वृन्दावनभुवि वृन्दारण्ये बहवः नितम्बिन्यः चरमदृशया कृष्णविरहेण प्राप्तया अन्त्यदशया चुम्बिताः आक्रान्ताः रुचः कान्तयः यासां तथाभूताः सन्ति । तुलितः समीकृतः अनुकृत इति यावत् मुरजितः कृष्णस्य नूपुररवः येन तस्मात् तव ध्वानात् निनादात् तासां बहिरपि गताः असवः प्राणाः क्षिप्रं परावर्त्तिष्यन्ते प्रत्यागमिष्यन्ति ॥ २६ ॥

त्वमिति । शाखान्तरेषु मिलितः सङ्गतः चण्डत्विट् सूर्य्यः यस्य तथोक्ते गगनस्पर्शिनीति भावः घनाः श्यामलाः रुचयः कान्तयः यस्य तथोक्ते भाण्डीरे वृक्षभेदे क्षणमपि आसीनः उपविष्टः त्वं सुखं दधीथाः अनुभवेः । ततः अनन्तरं हे हंस ! आबिभ्रत् त्वया शोभां गच्छन् स भाण्डीरः निखिलस्य समस्तस्य नभसः आकाशस्य चिक्रमिषया क्रमितुमिच्छया वर्द्धिष्णुं वर्द्धनशीलं कलितं स्वीकृतं दरचक्रं शङ्खचक्रात्मकं येन तथोक्तं विष्णुं वामनरूपिणमिति यावत् तुलयिता समीकर्त्ता अनुकरिष्यतीत्यर्थः ॥ २७ ॥

त्वमिति । हे चतुर ! विगलन्ति क्षरन्ति अमलानि निर्मलानि

मुहुः सिक्तास्तम्भां चतुर ! चतुरास्यस्तुतिभुवम् ।
जिहीथा विख्यातां स्फुटमिह भवद्वान्धवरथं
प्रविष्टं मंस्यन्ते विधिमटविदेव्यस्त्वयि गते ॥ २८ ॥

उदश्चन्नेत्राम्भःप्रसरलहरीपिच्छिलपथ-
स्खलत्पादन्यासप्रणिहितविलम्बाकुलधियः ।
हरौ यस्मिन्मग्ने त्वरितयमुनाकूलगमन-
स्पृहाक्षिप्ता गोप्यो ययुरनुपदं कामपि दशाम् ॥ २९ ॥

प्रेमसलिलानि आनन्दाश्रूणि येभ्यः तथाभूतैः अष्टाभिः नेत्रैः मुहुः पुनः पुनः सिक्तः स्तम्भः आधारदण्डः यस्यास्ताम् अतएव विख्यातां चतुरास्यस्य चतुर्मुखस्य ब्रह्मणः स्तुतिभुवं स्तोत्रस्थानं यत्र स्थितो ब्रह्मा निजमोहावसाने भगवन्तं कृष्णं तुष्टावेति भावः जिहीथाः गच्छ । इह अस्मिन् प्रदेशे त्वयि गते सति अटविदेव्यः अरण्याधिष्ठातृदेवताः भवतः बान्धवः हंस इत्यर्थः स एव रथो यस्य तादृशं विधिं ब्रह्माणं प्रविष्टं काननमिति शेषः मंस्यन्ते तर्कयिष्यन्ति स्फुटमुत्प्रेक्षे । तदीयवाहनानुरूपं भवन्तं दृष्ट्वा ब्रह्मा पुनरागत इति अनुमास्यन्तीति भावः ॥ २८ ॥

उदञ्चदिति । यस्मिन् कालियह्रदे इत्युत्तरेण सम्बन्धः हरौ कृष्णे मग्ने सति त्वरितं शीघ्रं यमुनाकूले यत् गमनं तत्र स्पृहया इच्छया आक्षिप्ताः आकृष्टाः गोप्यः अनुपदं प्रतिपादन्यासम् उदञ्चताम् उद्गच्छतां नेत्राम्भसां नयनसलिलानां प्रसराः धारा एव लहर्य्यो वीचयः ताभिः पिच्छिले पथि स्खलन् स्थानात् भ्रश्यन् यः पदन्यासः तस्मिन् प्रणिहिता नियुक्ता विलम्बेन आकुला धीर्बुद्धिर्यासां तथाभूताः सत्यः कामपि अनिर्वचनीयां दशाम् अवस्थां ययुः प्रापुः ॥ २९ ॥

मुहुर्लास्यक्रीड़ाप्रमदमिलदाहोपुरुषिका-
विकाशेन भ्रष्टैः फणिमणिकुलैर्धूमलरुचौ ।
पुरस्तस्मिन्नीपद्रुमकुसुमकिञ्जल्कसुरभौ
त्वया पुण्ये पेयं मधुरमुदकं कालियह्रदे ॥ २० ॥

तृणावर्त्तारातेर्विरहदवसन्तापिततनोः
सदाभीरीवृन्दप्रणयबहुमानोन्नतिविदः ।
प्रणेतव्यो नव्यस्तवकभरसंवर्द्धितशुच-
स्त्वया वृन्दादेव्याः परमविनयाद्वन्दनविधिः ॥ २१ ॥

मुहुरिति । पुरः अग्रतः मुहुः पुनः पुनः लास्यक्रीड़ायां नृत्य-लीलायां यः प्रमदः प्रहर्षः तेन मिलन्ती मङ्गच्छन्ती या आहोपुरु-षिका अहोपुरुषत्वाभिव्यभिमानः मया कालियं निर्जित्य पुरुषकारः कृत इत्यहङ्कार इति यावत् भ्रष्टैः विच्युतैः फणिनः कालियस्य मणिकुलैः शिरोरत्नसमूहैः धूमला कृष्णलोहिता रुचिः प्रभा यस्य तथाभूते कालियह्रदस्य यमुनान्तर्गतत्वात् स्वतः कृष्णत्वं तत्र रक्त-प्रभमणीनां भ्रंशनेन कृष्णलोहितत्वमिति भावः, नीपद्रुमस्य कदम्ब-तरोः कुसुमानां किञ्जल्कैः केशरैः सुरभिः सुगन्धः तस्मिन् पुण्ये पवित्रे कालियह्रदे त्वया मधुरम् उदकं पेयम् ॥ २० ॥

तृणावर्त्तारातेरिति । त्वया परमविनयात् अतिविनयेनेत्यर्थः तृणावर्त्तस्य तदाख्यस्य असुरस्य अरातेः शत्रोः कृष्णस्य विरहदवेन विच्छेदानलेन सन्तापिता तनुः शरीरं यस्याः तथाभूतायाः सदा आभीरीवृन्दस्य गोपाङ्गनासमूहस्य प्रणयं बहुमानञ्च तयोः उन्नति-विदः नव्यानां स्तवकानां भरे वृद्धौ संवर्द्धिता शुक् शोकः यस्याः नव्यस्तवकोत्पत्तौ कृष्णस्य प्रीतिरासीत् स चेदानीं दूरं गत इति शोक इति भावः तथाभूतायाः वृन्दादेव्याः वृन्दारण्ये देवतायाः वन्दनविधिः प्रणाम इत्यर्थः प्रणेतव्यः कर्त्तव्यः ॥ २१ ॥

इति क्रान्त्वा केकाकृतविरुतिमेकादशवनीं
घनीभूतं चूतैर्व्रजमनुवनं द्वादशमिदम्।
पुरी यस्मिन्नास्ते यदुकुलभुवां निर्मलयशो-
भराणां धाराभिर्धवलितधरित्रीपरिसरा॥ ३२॥
निकेतैराकीर्णा गिरिशगिरिडिम्भप्रतिभटै-
रवष्टम्भस्तम्भावलिविलसितैः पुष्पितवना।
निविष्टा कालिन्दीतटभुवि तवाधास्यति सखे!
समन्तादानन्दं मधुरजनवृन्दा मधुपुरी॥ ३३॥
वृषः शम्भोर्यस्यां दशति नवमेकत्र यवसं
विरिञ्चेरन्यस्मिन् गिलति कलहंसो विसलताम्।

इतीति निकेतैरिति च। हे सखे! इति इत्थं केकाभिर्मयूरनादैः कृता विरुतिः शब्दः यया तथोक्तां मयूरझङ्कारवतीमिति भावः एकादशवनीम् एकादशं वनमित्यर्थः पुरः अग्रतः यस्मिन् स्थाने व्रजम् अनु व्रजस्य पश्चात् चूतैः रसालैः घनीभूतं द्वादशं वनम् आस्ते, इदञ्च क्रान्त्वा अतीत्य गतस्येति अध्याहार्य्यं तव यदुकुलभुवां यादवानां निर्मलयशोभराणां कीर्त्तिव्रजानां धाराभिः धवलितः सितीकृतः धरित्र्या भूमेः परिसरः प्रसारः यस्याः तथोक्ता गिरिशस्य हरस्य यो गिरिः कैलास इत्यर्थः तस्य डिम्भाः शावकाः तेषां प्रतिभटैः प्रतिद्वन्द्विभिः तत्सदृशैरिति भावः अवष्टम्भाः आधारभूताः याः स्तम्भावलयः स्तम्भश्रेणयः ताभिर्विलसितैः विराजितैः निकेतैः गृहैः आकीर्णा व्याप्ता, पुष्पितं वनम् उद्यानं यस्याः तथोक्ता, कालिन्दीतटभुवि यमुनातीरभूमौ निविष्टाः मधुरं मनोहरं जनानां वृन्दं यस्याः तादृशी मधुपुरी समन्तात् सर्वतः आनन्दम् आधास्यति जनयिष्यति। युग्मकमेतत् ॥ ३२॥ ३३॥

वृष इति। यस्यां पुरि शम्भोर्हरस्य वृषः एकत्र एकस्मिन् स्थाने

क्वचित् क्रौञ्चारातेः कवलयति केकी विषधरं
विलीढे शल्लक्या बलरिपुकरी पल्लवमितः॥ २४॥
अबोधिष्ठाः काशानहि विघटितां प्रच्छदपटीं
विमुक्तामज्ञासीः पथि पथि न मुक्तावलिमपि।
अयि श्रीगोविन्दस्मरणमदिरामत्तहृदये!
सतीति ख्यातिं ते हसति कुलटानां कुलमिदम्॥२५॥
असव्यं बिभ्राणा पदमहृतलाक्षारसमसौ
प्रयाताहं मुग्धे! विरम मम वेशैः किमधुना।
अमन्दादाशङ्के सखि! पुरपुरन्ध्रीकलकलाद्
अलिन्दाग्रे वृन्दावनकुसुमधन्वा विजयते॥ २६॥

नवं यवसं तृणं दर्शति खादति, अस्मिन् स्थाने विरिञ्चेः ब्रह्मणः कलहंसः बिसलतां मृणालवल्लीं गिलति भक्षयति, क्वचित् स्थाने क्रौञ्चारातेः स्कन्दस्य केकी मयूरः विषधरं भुजङ्गं कवलयति ग्रसति, इतः अस्मिन् बलरिपोरिन्द्रस्य करी ऐरावतः शल्लक्याः गजप्रियवृक्षविशेषस्य पल्लवं विलीढे आस्वादयति। कृष्णदर्शनार्थं शम्भुप्रभृतयः देवा यत्रागच्छन्तीति भावः॥ २४॥

इतः परं पञ्चभिः पुरीं वर्णयति अबोधिष्ठा इत्यादिभिः। अयि श्रीगोविन्दस्य स्मरणमेव मदिरा तया मत्तं हृदयं यस्यास्तत्सम्बुद्धौ, पथि मार्गे काशान् अबोधिष्ठाः ज्ञातवत्यसि, विघटितं स्खलितात् भ्रष्टां प्रच्छदपटीम् उत्तरीयवसनं न? पथि विमुक्तां भ्रष्टां मुक्तावलिं मुक्ताहारमपि न अज्ञासीः न ज्ञातवत्यसि, कुलटानाम् असतीनाम् इदं कुलं ते तव सतीति साध्वीति ख्यातिं हसति ईदृशी साध्वीयं यत् कृष्णदर्शनेन ज्ञानशून्या जातेति भावः॥ २५॥

असव्यमिति। असौ नारी अहृतलाक्षारसम् अलक्तकानङ्कितम्

अयं लीलापाङ्गस्नपितपुरवीथीपरिसरो
नवाशोकोत्तंसश्चलति पुरतः कंसविजयी।
किमस्मानेतस्मान्मणिभवनपृष्ठाद्विनुदती
त्वमेका स्तब्धाक्षि! स्थगयसि गवाक्षावलिमपि ॥ ३७ ॥

मुहुः शून्यां दृष्टिं वहसि रहसि ध्यायसि सदा
शृणोषि प्रत्यक्षं न परिजनविज्ञापनशतम्।
अतः शङ्के पङ्केरुहमुखि! ययौ श्यामलरुचिः
स यूनामुत्तंसस्तव नयनवीथीपथिकताम् ॥ ३८ ॥

अवश्यं वामं पदम् एतेन दक्षिणं पदं लाक्षारसरञ्जितमिति व्यज्यते। विलासा दधाना गच्छतीति शेषः, हे मुग्धे! मूढ़े! अहं प्रयाता चलिता, विरम निवर्त्तस्व प्रसाधनादिति भावः अधुना वेशैः प्रसाधनैः किम्? न किमपि प्रयोजनमित्यर्थः। हे सखि! अमन्दात् उच्चात् पुरपुरन्ध्रीणां पुरनारीणां कलकलात् कोलाहलात् वृन्दावनस्य कुसुमधन्वा कामः कृष्ण इत्यर्थः अविन्दस्य बहुभूमिविशेषस्य अग्रे पुरतः विजयते सर्वोत्कर्षेण वर्त्तते इति आशङ्के मन्ये ॥ २६ ॥

अयमिति। लीलापाङ्गेन विलासकटाक्षेण स्नापितः आर्द्रीकृतः पुरवीथीनां नगरपदवीनां परिसरः स्थानं येन तथाभूतः, नवम् अशोककुसुमम् उत्तंसः कर्णभूषणं यस्य तथाविधः, अयं कंसविजयी कृष्णः पुरतः अग्रतः चलति गच्छति। हे स्तब्धाक्षि! निश्चलनेत्रे! केवलं कृष्णदर्शनार्थं व्यापारितनयने इति यावत् एका त्वम् एतस्मात् मणिभवनपृष्ठात् रत्नमयहर्म्योपरिदेशात् अस्मान् विनुदती ताड़यन्ती ताड़नार्थमिति भावः गवाक्षावलिं वातायनपङ्क्तिम् अपि किं किमर्थं स्थगयसि आवृणोषि? ॥ २७ ॥

मुहुरिति। हे पङ्केरुहमुखि! कमलवदने! मुहुः पुनः पुनः शून्यां लक्ष्यरहितामिति भावः दृष्टिं वहसि, सदा रहसि निर्जने

विलज्जं मा रोटीरिह सखि ! पुनर्यास्यति हरि-
स्तवापाङ्गक्रीडां निविडपरिचर्य्यामभिलताम् ।
इति स्वैरं यस्यां पथि पथि मुरारेरभिनव-
प्रवेशे नारीणां रतिरभसजल्पा ववनिरे ॥ ३९ ॥

पञ्चभिः कुलकम् ।

सखे ! साक्षाद्दामोदरवदनचन्द्रावकलन-
स्फुरत्प्रेमानन्दप्रकरलहरीचुम्बितधियः ।
मुहुस्तत्राभीरीसमुदयशिरोन्यस्तविपद-
स्तवाक्ष्णोरानन्दं विदधति पुरा पौरवनिताः ॥ ४० ॥

ध्यायसि चिन्तयसि, प्रत्यक्षम् अक्ष्णोः समीपे परिजनानां विज्ञापन-
गतं न शृणोषि नाकर्णयसि, अतः कारणात् अहं वर्णयामि
स श्यामलरुचिः नीलकान्तिः यूनां तरुणानाम् उत्तंसः श्रेष्ठः कृष्ण
इति भावः तव नयनवीथीनां नेत्रराजीनां पथिकतां गोचरतां यातौ
पुनः पुनर्नयनपथं प्राप्तेत्यर्थः ॥ ३८ ॥

विलज्जमिति । हे सखि ! विलज्जं निर्लज्जं यथा तथा मा
रोटीः न रुदिहि, इह अस्मिन् नगरे हरिः कृष्णः तव अपाङ्ग-
क्रीडया कटाक्षलीलया निविडा सान्द्रा अत्यन्तेत्यर्थः या परिचर्य्या
सेवा तवेति भावः तस्यां अभिलताम् आसक्तस्त्वां यास्यति स्वयमेव
त्वां प्रति अनुरक्तो भविष्यतीति भावः । मुरारेः कृष्णस्य अभिनव-
प्रवेशे यस्यां पुरि इतीत्थं पथि पथि प्रतिपथं नारीणां स्वैरं स्वच्छन्दं
रतिरभसेन अनुरागावेशेन जल्पाः आलापाः ववनिरे अभवन्नित्यर्थः ।
अत्र पञ्चभिः कुलकम् ॥ ३९ ॥

सखे इति । हे सखे ! यत्र पुर्य्यां साक्षात् प्रत्यक्षीभूतस्य
दामोदरवदनचन्द्रस्य कृष्णमुखचन्द्रस्य अवकलनेन अवलोकनेन स्फुरत्

अथ क्रामं क्रामं क्रमघटनया सङ्कटतरान्
निवासान् वृष्णीनामनुसर पुरीमध्यविशिखान्।
मुरारातेर्यत्र स्थगितगगनाभिर्विजयते
पताकाभिः सन्तर्पितभुवनमन्तःपुरवरम् ॥ ४१ ॥

यदुत्सङ्गे तुङ्गस्फटिकरचिताः सन्ति परितो
मराला माणिक्यप्रकरघटितत्रोटिचरणाः।
सुहृद्बुद्ध्या हंसाः कलितमधुरस्याम्बुजभुवः
समर्य्यादा येषां सपदि परिचर्य्यां विदधति ॥ ४२ ॥

प्रसरन् यः प्रेमानन्दप्रकरः प्रेमानन्दसमूहः तस्य लहर्य्याः तरङ्गेण चुम्बिता आक्रान्ता धीर्यासां तथोक्ताः आभीरीणां गोपीनां समुदयस्य सङ्घस्य शिरःसु न्यस्ता अर्पिता विपदः दुःखानीति भावः याभिः तथाभूताः पौरवनिताः पुरनार्य्यः तव अलोकाचक्षुषोः आनन्दं पुरा विदधति जनयिष्यन्तीत्यर्थः, पुरायोगे भव्ये लट्प्रयोगः ॥ ४० ॥

अथेति। अथ अनन्तरं यत्र पुरि क्रमघटनया क्रमानुसारेण पुरीमध्ये विशिखा रथ्या, रथ्या प्रतोली विशिखेत्यमरः। सङ्कटतरान् निविडानित्यर्थः वृष्णीनां यादवविशेषाणां निवासान् क्रामं क्रामम् अतीत्य अतीत्य मुरारातेः कृष्णस्य अन्तःपुरवरम् अन्तःपुरश्रेष्ठं स्थगितम् आच्छादितं गगनं याभिः तथाभूताभिः पताकाभिः वैजयन्तीभिः सन्तर्पितं प्रीणितं भुवनं जगत् येन तथाभूतं यत् विजयते सर्वोत्कर्षेण वर्त्तते तत् अनुसरेत्यन्वयः ॥ ४१ ॥

यदिति। यस्याः पुरः उत्सङ्गे क्रोड़े मध्ये इति भावः तुङ्गेन उन्नता स्फटिकेन रचिताः निर्मिताः माणिक्यप्रकरेण माणिक्यनिचयेन घटिताः रचिताः त्रोटयः चञ्चवः चरणाश्च येषां तथोक्ताः मरालाः हंसाः परितः समन्तात् सन्ति तिष्ठन्ति, कलिता प्राप्ता मधुरा मधुरा येन तथाभूतस्य कृष्णादृर्गतायं मधुरामागतस्येत्यर्थः अम्बु-

चिरान्मृग्यन्तीनां पशुपरमणीनामपि कुलै-
रलभ्यं कालिन्दीपुलिनविपिने लीनमभितः।
मदालोकोल्लासिस्मितपरिचितास्यं प्रियसखि!
स्फुरन्तं वीक्षिष्ये पुनरपि किमग्रे मुरभिदम्॥ ४३॥
विषादं मा कार्षीर्द्रुतमवितथव्याहृतिरसौ
समागन्ता राधे! धृतनवशिखण्डस्तव सखा।
इति ब्रूते यस्यां शुकमिथुनमिन्द्रानुजकृते
यदाभीरीवृन्दैरुपहृतमभूदुद्धवकरे॥ ४४॥

युग्मकम्।

नभुवः मनुष्याः हंसाः वाहनभूता इति भावः समर्य्यादाः मर्य्यादाशालिनः सदाचारविद इति भावः अतएव सुहृद्बुद्ध्या बन्धुबोधेन सपदि तत्क्षणम् आगम्येति भावः येषां स्फटिकरचितहंसानां परिचर्य्यां सेवां विदधति कुर्वन्ति॥ ४२॥

चिरादिति विषादमिति च। हे प्रियसखि! चिरात् मृग्यन्तीनाम् अन्विष्यन्तीनां पशुपरमणीनां गोपाङ्गनानां कुलैः अपि अलभ्यम् अप्राप्यं कालिन्दीपुलिने यमुनासैकते यत् विपिनं वनं तस्मिन् अभितः सर्वतः लीनं निभृतस्थितमित्यर्थः मम आलोकात् दर्शनात् उल्लासि विकसत् यत् स्मितं मन्दहसितं तेन परिचितं ज्ञातम् आस्यं वदनं यस्य तथाभूतम् अग्रे समक्षं स्फुरन्तं राजन्तं मुरभिदं पुनरपि किं वीक्षिष्ये द्रक्ष्यामि? इति प्रश्नः। हे राधे! विषादं शोकं मा कार्षीः न कुरु, अवितथा सत्या व्याहृतिः वचनं यस्य तथोक्तः सत्यवादीत्यर्थः धृतनवशिखण्डः नूतनमयूरपिच्छधारी असौ तव सखा द्रुतं शीघ्रं समागन्ता समागमिष्यति। इन्द्रानुजस्य कृष्णस्य कृते निमित्तं तस्य प्रदानार्थमिति भावः आभीरीवृन्दैः गोपनारीसमूहैः उद्धवस्य अस्मत्सान्त्वनाय कृष्णादेशात् आगतस्येति भावः करे हस्ते उपहृतं सम-

घनश्यामा भ्राम्यत्युपरि हरिहर्म्यस्य शिखिभिः
कृतस्तोत्रा मुग्धैरगुरुजनिता धूमलतिका ।
तदालोकाद्धीर ! स्फुरति तव चेन्मानसरुचि-
र्जितं तर्हि स्वैरं जनसहनिवासप्रियतया ॥ ४५ ॥

ततो मध्ये कक्षं प्रतिनवगवाक्षस्तवकितं
चलन्मुक्तालम्बस्फुरितममलस्तम्भनिवहम् ।
भवान् दृष्टा हेमोल्लिखितदशमस्कन्धचरितै-
र्लसद्भित्तिप्रान्तं मुरविजयिनः केलिनिलयम् ॥ ४६ ॥

र्पितं शुकमिथुनं यासां पुरि इति तथं ब्रूते कथयति । युग्मम् ॥ ४३ ॥ ४४ ॥

घनश्यामेति । हरेः कृष्णस्य यत् हर्म्यं सद्म तस्य उपरि घनश्यामा मेघवत् श्यामवर्णा अतएव मुग्धैः मूढैः अमेघं मेघं जानद्भिरिति भावः शिखिभिः मयूरैः कृतं स्तोत्रं स्तवनं यस्याः तथोक्ता मयूराणां मेघोदयात्तोषोल्लासकत्वादिति भावः अगुरुभिः चन्दनविशेषैः जनिता धूमलतिका धूमराजिः भ्राजति राजते, भ्राम्यतीति पाठे घूर्णते इत्यर्थः । हे धीर ! तस्याः धूमलतिकायाः आलोकात् दर्शनात् तव चेत् यदि मानसस्य चित्तस्य रुचिः अनुरागः मानसे अपि रुचिः गमनाभिलाष इत्यर्थः स्फुरति प्रसरति, तर्हि स्वैरं स्वच्छन्दं यथा तथा जनैः सह निवासे अवस्थाने या प्रियता प्रवृत्तिरिति यावत् तया जितं प्रबला सा जनसहनिवासप्रियतेति भावः ॥ ४५ ॥

तत इति । ततः अनन्तरं मध्येकक्षं कक्षायां मध्ये प्रतिनवैः अभिनवैः गवाक्षैः वातायनैः स्तवकितं रञ्जितं चलद्भिः चपलैः वायुसङ्गादिति भावः मुक्तालम्बैः मौक्तिकमालाभिः स्फुरितं राजितम् अमलाः निर्मलाः स्तम्भानां निवहाः सङ्घाः यस्मिन् तथोक्तं हेम्ना

अलिन्दे यस्यास्ते मरकतमयी यष्टिरमला
शयालुर्यां रात्रौ मदकलकलापी कलयति ।
निरातङ्कस्तस्याः शिखरमधिरुह्य श्रमनुदं
प्रतीक्षेथा भ्रातर्वरमवसरं यादवपतेः ॥ ४७ ॥

निविष्टः पल्यङ्के मृदुलतरतूलीधवलिते
त्रिलोकीलक्ष्मीणां ककुदि दरसाचीकृततनुः ।
अमन्दं पूर्णेन्दुप्रतिममुपधानं प्रमुदितो
निधायाग्रे तस्मिन्नुपहितकफोणिद्वयभरः ॥ ४८ ॥

उदञ्चत्कालिन्दीसलिलसुगभावुकरुचिः
कपोलान्ते प्रेङ्खन्मणिमकरमुद्रामधुरिमा ।

काञ्चनेन उल्लिखितानि उत्कर्षेण लिखितानि यानि दशमस्कन्धस्य भागवतीयस्येति भावः चरितानि तैः लसन्तः राजन्तः भित्तीनां प्रान्ताः पर्यन्तदेशाः यस्य तादृशं सुरविजयिनः कृष्णस्य केलिनिलयं क्रीडागृहं भवान् द्रुतं द्रक्ष्यति ॥ ४६ ॥

अलिन्दे इति । हे भ्रातः! यस्य केलिनिलयस्य अलिन्दे मरकतमयी मरकतरचिता अमला यष्टिः दण्डः आस्ते तिष्ठति, रात्रौ रजन्यां मदकलः मदमत्तः कलापी मयूरः शयालुः निद्रालुः सन् यां यष्टिं कलयति अधितिष्ठति, त्वं निरातङ्कः निर्भयः सन् तस्याः यष्टेः श्रमनुदं श्रमापहं शिखरं शृङ्गम् अधिरुह्य आश्रित्य यादवपतेः कृष्णस्य वरम् उत्तमम् अवसरं समयं प्रतीक्षेथाः प्रतीक्षस्व पालयेत्यर्थः ॥ ४७ ॥

निविष्ट इति । मृदुलतरा अतिमृद्वी या तूली तद्वत् धवलिते तस्मिन् पल्यङ्के खट्वायां निविष्टः स्थितः त्रिलोकीलक्ष्मीणां त्रिभुवनश्रियां ककुदि श्रेष्ठायामिति यावत् दरम् ईषत् साचीकृता वक्रं स्थापिता तनुः शरीरं येन तथाभूतः त्रिभुवनश्रीसहितोऽञ्जनवपु-

वसानः कौषेयं जितकनकपङ्क्तीपरिमलं
मुकुन्दस्ते साक्षात् प्रमदसुधया सेक्ष्यति दृशौ ॥ ४९ ॥
विकद्रुः पौराणीरखिलकुलवृद्धो यदुपते-
रदूरादासीनो मधुरभणितिर्गास्यति तदा ।
पुरस्तादाभीरीगणभयदनामा स कठिनो
मणिस्तम्भालम्बी कुरुकुलकथां सङ्कलयिता ॥ ५० ॥
शिनीनामुत्तंसः स किल कृतवर्माप्युभयतः

रिति भावः प्रमुदितः प्रफुल्लः, अमन्द [illegible] पूर्णेन्दुप्रतिमं पूर्णचन्द्रबिम्बम् उपधानम् अङ्के निधाय निवेश्य तस्मिन् उपधाने उपहितः अर्पितः कफोणिद्वयस्य कूर्परद्वयस्य भरः येन तथाविधः । उदञ्चत् उद्गच्छत् कालिन्दीसलिलमिव सुभगम्भावुका मनोहारिणी छविः कान्तिः यस्य तथाभूतः । कपोलयोः गण्डयोः अन्ते प्रेङ्खन्तौ दोलायमानौ मणिमकरमुद्रयोः मणिमयमकराकारयोः मधुरिमा माधुर्यं यस्य तथाविधः । जिताः कनकपङ्क्त्याः काञ्चनश्रियाः परिमलः सौरभं सुषमा इति भावः येन तथोक्तं कौषेयं पट्टवसनं वसानः परिदधत् मुकुन्दः कृष्णः साक्षात् मूर्त्तिमत्या प्रमदसुधया तद्दर्शनजनितानन्दामृतेनेति यावत् ते तव दृशौ नयने सेक्ष्यति आर्द्रयिष्यति । युग्मम् ॥ ४८ ॥ ४९ ॥

विकद्रुरिति । अखिलकुलेषु वृद्धः स्थविरः मधुरभणितिः मिष्टभाषी विकद्रुर्नाम यादवः तदा तस्मिन् समये यदुपतेः कृष्णस्य अदूरात् आसीनः उपविष्टः सन् गास्यति सङ्कीर्तनं करिष्यति कृष्णप्रीत्यर्थमिति भावः । पुरस्तात् अग्रतः मणिस्तम्भालम्बी मणिमयस्तम्भाश्रितः आभीरीगणानां गोपाङ्गनानां भयदं नाम यस्य तथोक्तः स कठिनः अक्रूर इति यावत् कुरुकुलस्य युधिष्ठिरादेः कथां सङ्कलयिता संकीर्त्तयिष्यति ॥ ५० ॥

शिनीनामिति । शिनेरपत्यानाम् उत्तंसः श्रेष्ठः सात्यकिः

प्रणेष्येते वालव्यजनयुगलान्दोलनविधिम् ।
स जानुभ्यामष्टापदभुवमवष्टभ्य भविता
गुरोः शिष्यो नूनं पदकमलसंवाहनरतः ॥ ५१ ॥
विहङ्गेन्द्रो युग्मीकृतकरसरोजो भुवि पुरः
कृताशङ्को भावी प्रजविनि निदेशेऽर्पितमनाः ।
छदद्वन्द्वे यस्य ध्वनति मथुरावासिवटवो
व्युदस्यन्ति सामस्वरकलितमन्योन्यकलहम् ॥ ५२ ॥
न निर्वक्तुं दामोदरपदकनिष्ठाङ्गुलिनख-
द्युतीनां लावण्यं भवति चतुरास्योऽपि चतुरः ।

त्यर्थः स किल स च कृतवर्मा अपि उभयतः उभयोः पार्श्वयोरित्यर्थः, स्थिताविति शेषः वालव्यजनयुगलयोः आन्दोलनविधिं चालनव्यापारं प्रणेष्येते करिष्येते । सः गुरोः बृहस्पतेः शिष्यः उद्धव इत्यर्थः जानुभ्याम् अष्टापदभुवं स्वर्णकुट्टिमम् अवष्टभ्य आक्रम्य नूनं निश्चितं पदकमलयोः संवाहने सेवने रतः आसक्तः भविता ॥ ५१ ॥

विहङ्गेन्द्र इति । विहङ्गानां पक्षिणाम् इन्द्रः गरुड़ इत्यर्थः युग्मीकृते करसरोजे करकमले येन तथाभूतः बद्धाञ्जलिरित्यर्थः पुरो भुवि अग्रभूमौ समक्षे इत्यर्थः कृताशङ्कः सतर्कमनाः सन् प्रजविनि प्रकृष्टजवशालिनि निदेशे आज्ञायाम् अर्पितं दत्तं मनो येन तथाभूतः भावी भवितेत्यर्थः । यस्य विहङ्गेन्द्रस्य छदद्वन्द्वे पक्षद्वये ध्वनति गमनकाले स्वनति सति मथुरावासिनः वटवः ब्रह्मचारिणः सामवेदस्य स्वरैश्च कलितं जनितम् अन्योन्यकलहं कश्चित् वदति अयमस्य स्वरः, अपरो वदति नायमस्य स्वर इत्येवं विवादं व्युदस्यन्ति त्यजन्ति स्वस्वपक्षनिरोधादिति भावः ॥ ५२ ॥

नेति । चतुरास्योऽपि चतुर्मुखोऽपि दामोदरस्य कृष्णस्य यत् पदं तस्य या कनिष्ठाङ्गुलिः तस्य ये नखाः तेषां द्युतीनां लावण्यं प्रभा-

तथापि स्त्रीप्रज्ञासुलभतरलत्वादहमसौ
प्रवृत्ता तन्मूर्त्तिस्तवरतिमहासाहसरसे ॥ ५३ ॥
विराजन्ते यस्य व्रजशिशुकुलस्तेयविकल-
स्वयम्भूचूड़ाग्रैर्लुलितशिखराः पादनखराः।
क्षणं यानालोक्य प्रकटपरमानन्दविवशः
स देवर्षिर्मुक्तानपि तनुभृतः शोचति भृशम् ॥ ५४ ॥
सरोजानां व्यूहः श्रियमभिलषन् यस्य पदयो-
र्ययौ रागाढ्यानां विधुरमुदवासव्रतविधिम्।

विशेषं निर्वक्तुं निश्चयेन कथयितुं चतुरः निपुणः शक्त इति यावत् न भवति। तथापि असौ अहं स्त्रीणां प्रज्ञा बुद्धिः तस्याः सुलभं सहजमित्यर्थः यत् तरलत्वं चापल्यं तस्मात् तस्य दामोदरस्य मूर्त्तेः कलेवरस्य स्तवे या रतिः अनुरागः तस्यां यः महान् साहसरसः साहसित्वगुणः तस्मिन् प्रवृत्ता उद्यता, अक्षमापि अहं चपलत्वात् तद्गुणकीर्त्तने साहसं कृतवतीति भावः ॥ ५३ ॥

विराजन्ते इति। यस्य कृष्णस्य पादनखराः व्रजशिशुकुलस्य गोपबालकवृन्दस्य स्तेयेन अपहरणेन विकलः अप्रतिभ इति यावत् यः स्वयम्भूः ब्रह्मा तस्य चूड़ाग्रैः लुलितं स्पृष्टमित्यर्थः शिखरम् अग्र-भागो येषां तथाभूताः सन्तः विराजन्ते शोभन्ते, स देवर्षिर्नारदः क्षणम् अल्पकालं यान् पादनखरान् आलोक्य दृष्ट्वा प्रकटेन उत्कटेन अतिशयिनेत्यर्थः परमानन्देन विवशः विवशः विह्वल इति यावत् सन् मुक्तान् मुक्तिं गतानपि तनुभृतः प्राणिनः भृशम् अत्यर्थं शोचति। एतच्चरणारविन्ददर्शनं मुक्तिमपि अगणयित्वा क्लाम्यन्ते लोका इति भावः ॥ ५४ ॥

सरोजानामिति। सरोजानां पद्मानां व्यूहः समूहः यस्य कृष्णस्य पादयोः श्रियं कान्तिम् अभिलषन् रागाढ्यानां संसारवास-

हिमं वन्दे नीचैरनुचितविधानव्यसनिनां
यदेषां प्राणान्तं दमनमनुवर्षं प्रणयति ॥ ५५ ॥
रुचीनामुल्लासैर्मरकतमयस्थूलकदली-
कदम्बाहङ्कारं कवलयति यस्योरुयुगलम् ।
यदालानस्तम्भद्युतिमवललम्बे बलभृतां
मदादुद्दामानां पशुपरमणीचित्तकरिणाम् ॥ ५६ ॥
सखे ! यस्याभीरीनयनशफरीजीवनविधौ
निदानं गाम्भीर्यप्रसरकलिता नाभिसरसी ।
यतः कल्पस्यादौ सनकजनकोत्पत्तिवडभी-
गभीरान्तःकक्षाधृतभुवनमम्भोरुहमभूत् ॥ ५७ ॥

भावतां विधुरम् अशक्यमिति भावः उदवासः जलमध्ये वासः स एव व्रतं नियमः तस्य विधिः तं ययौ प्राप जलयावद्रूपं तपश्चचारेति भावः । यत् हिमम् अनुवर्षं प्रतिवत्सरम् अनुचितविधानव्यसनिनाम् अशक्यव्यापारनिरतानां कृष्णपदद्युत्यभिलाषेण हैमव्रतनिष्ठानामिति भावः एषां सरोजानां प्राणान्तं दमनं शासनं प्रणयति करोति तत् हिमं नीचैः नम्रतया वन्दे युक्तं छलबलेनेति प्रशंसामीति यावत् ॥ ५५ ॥

रुचीनामिति । यस्य कृष्णस्य ऊरुयुगलं रुचीनां लावण्यानाम् उल्लासैः विकासैः मरकतमयानां स्थूलकदलीकदम्बानां पीवरकदली-समूहानाम् अहङ्कारं कवलयति ग्रसति तादृशकदल्यः यस्योरुयुगलेन साम्यं नायान्तीति भावः । यत् ऊरुयुगलं बलभृतां बलवतां मदात् कृष्णप्रियताजनिताहङ्कारादित्यर्थः उद्दामानाम् उद्भटानां पशु-परमणीचित्तकरिणां गोपाङ्गनामानसहस्तिनाम् आलानस्तम्भद्युतिं बन्धनस्तम्भकान्तिम् अवललम्बे प्राप ॥ ५६ ॥

सखे इति । हे सखे ! यस्य गाम्भीर्यप्रसरेण गभीरताति-

द्युतिं धत्ते यस्य त्रिवलिलतिकासङ्कटतरं
सखे! दामश्रेणीचयपरिचयाभिन्नमुदरम्।
यशोदा यस्यान्तः सुरनरभुजङ्गैः परिवृतं
मुखद्वारा वारद्वयमवलुलोके त्रिभुवनम्॥ ५८॥
उरो यस्य स्फारं स्फुरति वनमालावलयितं
वितन्वानं तन्वीजनमनसि सद्यो मनसिजम्।
मरीचीभिर्यस्मिन् रविनिवहतुल्योऽपि वहते
सदा खद्योताभां भुवनमधुरः कौस्तुभमणिः॥ ५९॥

शयेन कलिता युक्ता नाभिसरसी नाभिह्रदः आभीरीणां गोपीनां नयनान्येव शफर्यः क्षुद्रमत्स्यविशेषाः तासां जीवनविधौ जीवनविधाने निदानं कारणम्। कल्पस्य आदौ सृष्टिप्रारम्भे यतः नाभिसरस्याः सनकजनकस्य ब्रह्मणः उत्पत्तिरेव वल्गुभी आधारदारु-विशेषः यस्यास्तथाभूता गभीरा दुरधिगमेत्यर्थः या अन्तःकक्षा कक्षान्तरं तस्यां इदं भुवनं जगत् यत्र तादृशम् अम्भोरुहं पद्मम् अभूत्॥ ५७॥

द्युतिमिति। हे सखे! यस्य त्रिवलिलतिका त्रिवलिरूपा या लता तया सङ्कटतरं युक्तमिति भावः दामश्रेणीनां रज्जुराजीनां यशोदया बन्धनार्थमानीतानामिति भावः चयपरिचयस्य समूहकालिक-बन्धस्य अभिन्नम् उदरं द्युतिं कान्तिं धत्ते दधाति, यशोदा यस्य उदरस्य अन्तः अभ्यन्तरे सुरनरभुजङ्गैः देवमानवपन्नगैः परिवृतम् आकीर्णं त्रिभुवनं मुखद्वारा मुखेन वारद्वयम् अवलुलोके अवलोकया-मास॥ ५८॥

उर इति। यस्य कृष्णस्य तन्वीजनानां कृशोदरीणामित्यर्थः मनसि सद्यः दर्शनमात्रेणेति भावः मनसिजं कामं वितन्वानं प्रकटयत् वनमालया वलयितं विराजितमिति भावः स्फारं विशालम् उरः

समन्तादुन्मीलद्वलभिदुपलस्तम्भयुगल-
प्रभाजैत्रं केनापि द्विजलुलितकेयूरललितम् ।
स्मरक्लाम्यद्गोपीपटलहठकण्ठग्रहपरं
भुजद्वन्द्वं यस्य स्फुटसुरभिगन्धं विजयते ॥ ६० ॥
जिहीते साम्राज्यं जगति नवलावण्यलहरी-
परीपाकव्यात्तमुर्दितमदनावेशमधुरम् ।
नटद्भ्रूवल्लीकं स्मितनवसुधाकेलिसदनं
स्फुरन्मुक्तापङ्क्तिप्रतिमरदनं यस्य वदनम् ॥ ६१ ॥

वक्षःस्थलं स्फुरति राजते । मरीचीभिः मयूखैः रविनिवहतुल्यः बहुसूर्यप्रतिमः अतएव भुवनेषु मधुरः मनोहरोऽपि कौस्तुभमणिः यस्मिन् उरसि सदा खद्योताभां खद्योतकान्तिं वहते दधाति उरसः प्रभया तिरोहितत्वादिति भावः ॥ ५८ ॥

समन्तादिति । समन्तात् सर्वतः उन्मीलन्ती स्फुरन्ती वलभिदुपलस्य इन्द्रनीलमणेः स्तम्भयुगलस्य या प्रभा कान्तिः तस्या जैत्रं विजेतृ केनापि द्विजेन लुलितं दष्टं केयूरललितम् अङ्गदभूषितञ्च तत्, स्मरेण कामेन क्लाम्यतां गोपीपटलानां हठेन सहसा यः कण्ठग्रहः कण्ठालिङ्गनं तत्परं तत्र निरतमित्यर्थः स्फुटः सुव्यक्तः सुरभिः शोभनः गन्धो यस्य तादृशं यस्य भुजद्वन्द्वं विजयते सर्वोत्कर्षेण वर्त्तते ॥ ६० ॥

जिहीते इति । व्यात्तमुर्दितेन विकसितेन मदनावेशेन मधुरं मनोहरं नटन्ती नृत्यन्ती भ्रूवल्ली भ्रूलता यस्मिन् यस्य वा तत्, स्मितमेव नवसुधा तस्याः केलिसदनं क्रीड़ागृहं स्फुरन् राजन् मुक्तापङ्क्तिप्रतिमः मुक्ताहारनिभः रदनः दन्तः यस्मिन् यस्य वा तादृशं यस्य कृष्णस्य वदनं जगति नवा नूतना या लावण्यलहरी लावण्यतरङ्गः तस्याः परिपाकस्य परीणामस्य साम्राज्यं जिहीते प्राप्नोति ॥ ६१ ॥

किमेभिर्व्याहारैः कलय कथयामि स्फुटमहं
सखे! निःसन्देहं परिचयपदं केवलमिदम्।
परानन्दो यस्मिन्नयनपदवीभाजि भविता
त्वया विज्ञातव्यो मधुररव! सोऽयं मधुरिपुः॥ ६२॥
विलोकेथाः कृष्णं मदकलमरालीरतिकला-
विदग्धव्यामुग्धं यदि पुरवधूविभ्रमभरैः।
तदा नास्मान् ग्राम्याः श्रवणपदवीं तस्य गमयेः
सुधापूर्णं चेतः कथमपि न तक्रं मृगयते॥ ६३॥
यदा वृन्दारण्यस्मरणलहरीहेतुरमलं
पिकानां वेवेष्टि प्रतिहरितमुच्चैः कुहुरुतम्।

किमिति। हे सखे! हे मधुररव! मिष्टभाषिन्! एभिः व्याहारैः उक्तैः किम्? न किमपि प्रयोजनमित्यर्थः। कलय अवधारय, अहं स्फुटं कथयामि निःसन्देहं निःसंशयं केवलं परिचयपदम् अभिज्ञानचिह्नम् इदं, यस्मिन् जने नयनपदवीभाजि नेत्रगोचरे सति परः महान् आनन्दः भविता, त्वया सोऽयं मधुरिपुः कृष्णः विज्ञातव्यः विशेषेण ज्ञेयः॥ ६२॥

विलोकेथा इति। हे मदकलमरालीरतिकलाविदग्ध! मदमत्तहंसीरतिकलाचतुर! यदि कृष्णं पुरवधूनां नागरिकाणां विभ्रमभरैः विलासातिशयैः व्यामुग्धं विशेषेण आसक्तं विलोकेथाः पश्येः, तदा ग्राम्याः अस्मान् तस्य कृष्णस्य श्रवणपदवीं न गमयेः अस्माकं कथाः तत्समीपे मा वदेति भावः। तथाहि सुधापूर्णम् अमृतास्वादसुदितमिति यावत् चेतः कथमपि तक्रं न मृगयते न वाञ्छति। अर्थान्तरन्यासः॥ ६३॥

यदेति। यदा वृन्दारण्यस्य स्मरणलहरी स्मरणतरङ्गः तस्या हेतुः कारणभूतम् अमलं मधुरं पिकानां कोकिलानाम् उच्चैः कुहुरुतं

वहन्ते वा वाताः स्फुरितगिरिमल्लीप्रविमला-
स्तदैवास्माकीनां गिरमुपहरेथा मुरभिदि ॥ ६४ ॥
पुरा तिष्ठन् गोष्ठे निखिलरमणीभ्यः प्रियतया
भवान् यस्यां गोपीरमण ! विदधे गौरवभरम् ।
सखी तस्या विज्ञापयति ललिता धीरललित !
प्रणम्य श्रीपादाम्बुजकनकपीठोपरिसरे ॥ ६५ ॥
प्रयत्नादाबाल्यं नवकमलिनीपल्लवकुलै-
स्त्वया भूयो यस्याः कृतमहह संवर्द्धनमभूत् ।
चिराद्धीभारास्फुरणमरिमाक्रान्तजघना
बभूव प्रष्ठौही मुरमथन ! सेयं कपिलिका ॥ ६६ ॥

प्रतिस्फुरितं प्रतिदिशं वेगेण पुनः पुनः ध्वनतीत्यर्थः, स्फुरिताभि-विकसिताभिः गिरिमल्लीभिः प्रविमलाः अतिसुरभयः वाताः वा वहन्ते, तदैव आस्माकीनां गिरं वाचं मुरभिदि कृष्णे उपहरेथाः प्रापयेः ॥ ६४ ॥

पुरेति। हे गोपीरमण ! भवान् पुरा पूर्वं गोष्ठे तिष्ठन् निखिलरमणीभ्यः सर्वगोपाङ्गनाभ्यः प्रियतया वल्लभतया यस्यां गोपाङ्गनायां राधायामित्यर्थः गौरवभरं सम्मानातिशयं विदधे चकार, हे धीरललित ! निश्चिन्तो मृदुर्नित्यं कलापरो धीरललितः स्यादित्युक्तलक्षणनायक इत्यर्थः तस्याः राधायाः सखी ललिता श्रीपादाम्बुजयोः भवच्चरणारविन्दयोः यत् कनकपीठं तस्य उपरिसरे उपरिभागे प्रणम्य प्रकर्षेण नत्वा विज्ञापयति ॥ ६५ ॥

प्रयत्नादिति। हे मुरमथन ! मुरारे ! त्वया आबाल्यम् आशैशवं प्रयत्नात् प्रकृष्टं यत्नमाश्रित्येत्यर्थः नवकमलिनीनां पल्लव-कुलैः पत्रनिचयैः यस्याः भूयः पुनः पुनः संवर्द्धनं सम्यक् पालनं कृतम् अभूत्, अहह खेदे, सेयं प्रष्ठौही प्रथमगर्भिणी कपिलिका

समीपे नीपानां त्रिचतुरदला हन्त गमिता
त्वया माकन्दस्य प्रियसहचरी भावनियतिम् ।
इयं सा वासन्ती गलदमलमाध्वीकपटली-
मिषादग्रे गोपीरमण ! रुदती रोदयति नः ॥ ६७ ॥
प्रसूतो देवक्या मुरमथन ! यः कोऽपि पुरुषः
स जातो गोपालाभ्युदयपरमानन्दवसतिः ।
धृतो यो गान्दिन्या कठिनजठरे सम्प्रति ततः
समन्तादेवास्तं शिव शिव गता गोकुलकथा ॥ ६८ ॥

कपिलाधेनुः ऊधोभारस्य स्तनभारस्य आस्फुरणेन सम्यक्वर्द्धनेन यः गरिमा गौरवं तेन आक्रान्तं जघनं कटिपुरोभागः यस्याः तथा-भूता बभूव ॥ ६६ ॥

समीपे इति । हे गोपीरमण ! नीपानां कदम्बानां समीपे त्रिचतुरदला निर्गतत्रिचतुरपत्रा वासन्ती माधवीलता त्वया माकन्दस्य चूतस्य प्रियसहचरीभावे नियतिं स्थितिं गमिता प्रापिता, हन्त खेदे, सेयं वासन्ती अग्रे अस्माकं समक्षमित्यर्थः गलन्ती चरन्ती अमला या माध्वीकपटली मकरन्दराजिः सा एव मिषं व्याजः तस्मात् रुदती सती नः अस्मान् रोदयति क्रन्दयति । अपह्नुति-रलङ्कारः ॥ ६७ ॥

प्रसूत इति । हे मुरमथन ! मुरारे ! देवक्याः प्रसूतः यः कोऽपि पुरुषः, सः गोपालानाम् अभ्युदयस्य परमानन्दस्य च वसतिः स्थानम् तेन गोपाला अभ्युदयं परमानन्दञ्च नीता इति भावः । यः गान्दिन्या कठिने जठरे उदरे धृतः, सम्प्रति ततः तस्मात् अक्रू-रादित्यर्थः समन्तात् एव गोकुलस्य कथा वार्त्ता अस्तं गता नाशं प्राप्ता अक्रूरेणैव गोकुलं निहतमिति भावः । शिव शिवेति खेदसूचकम् ॥ ६८ ॥

अरिष्टेनाहूताः पशुपसुदृशो यान्ति विपदं
तृणावर्त्ताक्रान्त्या रचयति भयं चत्वरचयः।
अमी व्योमीभूता व्रजवसतिभूमीपरिसरा
वहन्ते नस्तापं मुरहर! विदूरं त्वयि गते ॥ ६९ ॥
त्वया नागन्तव्यं कथमिह हरे! गोष्ठमधुना
लताश्रेणी वृन्दावनभुवि यतोऽभूद्विषमयी।
प्रसूनानां गन्धं कथमितरथा वातनिहितं
भजन् सद्यो मूर्च्छां वहति निवहो गोपसुदृशाम् ॥७०॥
कथं सङ्गोऽस्माभिः सह समुचितः सम्प्रति हरे!
वयं ग्राम्या नार्य्यस्त्वमसि नृपकन्यार्चितपदः।

अरिष्टेनेति। हे मुरहर! त्वयि विदूरं गते सति अरिष्टेन तदाख्येन असुरेण आहूताः पशुपानां गोपानां सुदृशः रमण्यः विपदं यान्ति प्राप्नुवन्ति। चत्वरचयः अङ्गणनिचयः तृणावर्त्तस्य तदाख्यस्य असुरस्य आक्रान्त्याः परिभवात् भयं रचयति करोति, अमी व्योमीभूताः शून्यीभूताः व्रजवसतिभूमिपरिसराः वृन्दावन-भूप्रदेशाः नः अस्माकं तापं वहन्ते जनयन्ति दुरवस्थादर्शनेनेति भावः ॥ ६९ ॥

त्वयेति। हे हरे! अधुना त्वया कथमपि इह वृन्दावने गोष्ठं गोचारणस्थानं न आगन्तव्यम्। यतः यस्मात् वृन्दावनभुवि लताश्रेणी विषमयी अभूत्, इतरथा अन्यथा यदि विषमयी न स्यात्तदेति भावः गोपसुदृशां गोपाङ्गनानां निवहः समूहः वातेन वायुना निहितम् आनीतं प्रसूनानां तत्तल्लताजातानामिति भावः पुष्पाणां गन्धं भजन् आजिघ्रन् सद्यः तत्क्षणं मूर्च्छां वहति प्राप्नोति ॥ ७० ॥

कथमिति। हे हरे! सम्प्रति अस्माभिः सह सङ्गः ते इति

गतः कालो यस्मिन् पशुपरमणीसङ्गमकृते
भवान् व्यग्रस्तस्थौ तमसि गृहवाटीविटपिनः ॥ ७१ ॥
वयं त्यक्ताः स्वामिन्! यदिह तव किं दूषणमिदं
निसर्गः श्यामानामयमतितरां दुष्परिहरः ।
कुहूकण्ठैरण्डावधिसहनिवासात् परिचिता
विसृज्यन्ते सद्यः कलितनवपक्षैर्बलिभुजः ॥ ७२ ॥
अयं पूर्वो रङ्गः किल विरचितो यस्य तरसा
रसादाख्यातव्यं परिकलय तन्नाटकमिदम् ।

शेषः कथं समुचितः ? नैवेत्यर्थः । यतः वयं ग्राम्याः ग्रामवासिन्यः अविदग्धा इति भावः नार्यः, त्वं नृपकन्याभिः राजकुमारीभिः अर्चितपदः सेवितचरणः असि । स कालः गतः, यस्मिन् काले भवान् पशुपरमणीनां गोपीनां सङ्गमकृते सङ्गमार्थं व्यग्रः समुत्सुकः सन् गृहवाट्यां यो विटपी वृक्षः तस्य तमसि अन्धकारे सतिमिरे तत्तले इति यावत् तस्थौ स्थितः ॥ ७१ ॥

वयमिति । हे स्वामिन् नाथ ! यत् यदि वयं त्यक्ताः त्वयेति शेषः, इह जगति तव इदम् अस्मत्त्यागरूपं कार्यं किं दूषणम् ? न दूषणमित्यर्थः । श्यामानां मलिनात्मकानामिति ध्वनिः अयं निसर्गः स्वभावः अतितराम् अतिशयेन दुष्परिहरः अहार्यः अपरित्याज्य इत्यर्थः, तथाहि कुहूकण्ठैः कोकिलैः श्यामैरिति भावः कलितनवपक्षैः धृतनूतनपक्षैः सद्भिः अण्डावधिसहनिवासात् आशैशवादिति च ध्वनिः परिचिताः बलिभुजः काकाः सद्यः उड्डयनशक्तिप्राप्तिमात्रमेवेति भावः विसृज्यन्ते परित्यज्यन्ते ॥ ७२ ॥

अयमिति । यस्य नाटकस्य अभिनेयस्य वस्तुनः अयं पूर्वो रङ्गः मङ्गलाचरणरूपाङ्गविशेषः । तदुक्तं दर्पणे, यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥ इति तरसा

मया प्रष्टव्योऽसि प्रथममिति वृन्दावनपते!
किमाह्वो राधेति स्मरसि कृपणं कर्णयुगलम् ॥ ७३ ॥
अये कुञ्जद्रोणीकुहरगृहमेधिन्! किमधुना
परोक्षं वक्ष्यन्ते पशुपरमणीदुर्नियतयः।
प्रवीणा गोपीनां तव चरणपद्मेऽर्पितमना
ययौ राधा साधारणसमुचितप्रश्नपदवीम् ॥ ७४ ॥
त्वया गोष्ठं गोष्ठीतिलक! किल चेद्विस्मृतमिदं
न तूर्णं धूमोर्णापतिरपि विधत्ते यदि कृपाम्।
अहह्न्दं वृन्दावनकुसुमपालीपरिमलै-
र्दुरालोकं शोकास्पदमथ कथं नेष्यति सखी ॥ ७५ ॥

संक्षेपेणेति भावः विरचितः वर्णितः किल मयेति शेषः। इदानीं रसात् रसमाश्रित्य आख्यातव्यं वाच्यं तस्य पूर्वरङ्गस्य इदं नाटकम् अभिनेयं वस्तु परिकलय अवधारय शृणिवत्यर्थः। हे वृन्दावनपते! मया इति प्रथमं प्रष्टव्यः असि, कृपणम् अश्रवणेन दीनमित्यर्थः तव कर्णयुगलं राधेति नाम किमाह्वो किमिति स्मरसि? ॥७३॥

अये इति। अये कुञ्जमेव द्रोणीकुहरं द्रोणीविवरं तदेव गृहं तेन मेधते सङ्गच्छते इति तथोक्तः तत्सम्बुद्धौ, अधुना इदानीं पशुपरमणीनां गोपीनां दुर्नियतयः दुर्भाग्यानि किं वक्ष्यन्ते? न किमपि वक्तव्या इत्यर्थः, तव चरणपद्मे अर्पितमना गोपीनां प्रवीणा श्रेष्ठा राधा अपिरत्राध्याहार्य्यः। साधारणस्य सामान्यस्य समुचितः यः प्रश्नः तस्य पदवीं स्थानम् असाधारणापीति भावः ययौ प्राप। सर्वैरादृतापि सा न केनापि अधुना आद्रियते इति भावः ॥ ७४ ॥

त्वयेति। गोष्ठीतिलक! त्वया चेत् यदि इदं गोष्ठं विस्मृतं किल, यदि च धूमोर्णापतिः यमनः अपि तूर्णं शीघ्रं कृपां न विधत्ते न करोति, अथ तदा सखी राधा वृन्दावने याः कुसुमानां पाल्यः

तरङ्गैः कुर्वाणा श्रमनभगिनीलाघवमसौ
नदीं काञ्चिद्गोष्ठे नयनजलपूरैरजनयत् ।
इतीवास्या द्वेषादभिमतदशाप्रार्थनमयीं
मुरारे ! विज्ञप्तिं निशमयति मानी न शमनः ॥७६॥
कृताकृष्टिक्रीड़ं किमपि तव रूपं मम सखी
सकृद् दृष्ट्वा दूरादहितहितबोधोज्झितमतिः ।
हताशेयं प्रेमानलमनुविशन्ती सरभसं
पतङ्गीवात्मानं मुरहर ! मुहुर्दाहितवती ॥ ७७ ॥
मया वाच्यः किं वा त्वमिह निजदोषात् परमसौ
ययौ मन्दा वृन्दावनकुमुदबन्धो ! विधुरताम् ।

राजयः तासां परिमलैः सौरभैः दुरालोकं दुर्दशम् अतएव शोकास्पदम् अहर्वृन्दं दिवसचयं कथं नेष्यति गमयिष्यति ॥ ७५ ॥

नदीमिति । हे मुरारे ! असौ राधा तरङ्गैः शमनभगिन्याः यमुनायाः लाघवम् अभिभवजनितामिति भावः कुर्वाणा गोष्ठे नयनजलपूरैः काञ्चित् नदीम् अजनयत् । इतीव अस्याः राधायाः द्वेषात् भगिनीपरिभवजनितादिति भावः मानी शमनः अभिमतदशा मृत्युदशा तत्प्रार्थनमयीं विज्ञप्तिं विज्ञापनं न निशमयति न शृणोति ॥ ७६ ॥

कृताकृष्टिक्रीड़मिति । हे मुरहर ! हताशा दुराशा इयं मम सखी कृता आकृष्टा आकर्षणेन क्रीड़ा येन तथाभूतं तव किमपि रूपं सकृत् दृष्ट्वा दूरात् अत्यर्थम् अहितहितयोर्बोधेन उज्झिता हीना मतिर्यस्यास्तथोक्ता हिताहितज्ञानशून्येत्यर्थः पतङ्गीव सरभसं सवेगं प्रेमानलम् अनुविशन्ती प्रविशन्ती आत्मानं मुहुः पुनः पुनः दाहितवती ॥ ७७ ॥

मयेति । हे वृन्दावनकुमुदबन्धो ! वृन्दावनचन्द्र ! मया त्वं

यदर्थं दुःखाग्निर्दहति न तमद्यापि हृदयात्
न यस्माद् दुर्मेधा लवमपि भवन्तं द्रवयति ॥ ७८ ॥
त्रिवक्राहो धन्या हृदयमिव ते स्वं वपुरियं
समासाद्य स्वैरं यदिह विलसन्ती निवसति ।
ध्रुवं पुण्यभ्रंशादजनि सरलेयं मम सखी
प्रवेशस्तत्रासीत् क्षणमपि यदस्या न सुलभः ॥ ७९ ॥
किमाविष्टा भूतैः सपदि यदि वा क्रूरफणिना
क्षतापस्मारेण च्युतमतिरकस्मात् किमपतत् ।
इति व्यग्रैरस्यां गुरुभिरभितो वेणुनिनद-
स्रवाद् विभ्रष्टायां मुरहर ! विकल्पा विदधिरे ॥ ८० ॥

किं वा वाच्यः वक्तव्यः, असौ मन्दा मूढ़ा मत्सखी इह वृन्दावने परं केवलं निजदोषात् विधुरतां व्याकुलतां ययौ । यदर्थं यस्य भवतः निमित्तं दुःखाग्निः दहति हि तापयत्येव, दुर्मेधा दुर्मतिरियम् अद्यापि यस्मात् तं भवन्तं लवमपि अल्पमपि हृदयात् न द्रवयति न दूरीकरोति । हृदयात्तव दूरीकरणे न तस्याः सन्तापः, सा तु तत् कर्त्तुमशक्तेतीदृशी विधुरा जातेति भावः ॥ ७८ ॥

त्रिवक्रेति । अहो त्रिवक्रा त्रिषु स्थानेषु वक्रा कुब्जेत्यर्थः धन्या पुण्यवती, यत् यतः इयं त्रिवक्रा इह मथुरायां हृदयमिव ते तव स्वं वपुः शरीरं त्रिभङ्गमिति भावः समासाद्य प्राप्य स्वैरं स्वच्छन्दं विलसन्ती विहरन्ती सती निवसति । इयं मम सखी पुण्यभ्रंशात् सुकृतक्षयात् सरला अजनि जाता, ध्रुवम् उत्प्रेक्षे, मन्ये शङ्के ध्रुवं प्रायोनूनमित्येवमादयः । उत्प्रेक्षावाचकाः शब्दा इवशब्दोऽपि तादृशः ॥ इति दर्पणः । तत् यतः अस्याः मत्सख्याः तत्र मथुरायां तव हृदये वा क्षणमपि प्रवेशः न सुलभः आसीत् ॥७९॥

किमिति । हे हरहर ! अस्यां मत्सख्यां राधायां वेणुनिन-

नवीनेयं सम्प्रत्यकुशलपरीपाकलहरी
मरीनर्त्ति स्वैरं मम सहचरीचित्तकुहरे।
जगन्नेत्रश्रेणी-मधुरमथुरायां निवसत-
श्चिरादार्त्ता वार्त्तामपि तव यदेषा न लभते ॥ ८१ ॥

जनान् सिद्धादेशान् नमति भजते मान्त्रिकगणान्
विधत्ते शुश्रूषामधिकविनयेनौषधिविदाम्।
त्वदीक्षादीक्षायै परिचरति भक्त्या गिरिसुतां
मनीषा हि व्यग्रा किमपि सुखहेतुं न मनुते ॥ ८२ ॥

दृश्यशात् वंशीरवश्रवणात् विभ्रष्टायां पतितायां सत्यां व्यग्रैः व्यस्तैः गुरुभिः श्वश्र्वादिभिः अभितः समन्तात् इति विकल्पाः तर्काः विदधिरे कृताः। विकल्पप्रकारानाह किमिति, इयं भूतैः वेतालैः आविष्टा किम्, यदि वा अथवा क्रूरफणिना कृष्णसर्पेण क्षता दष्टा, वा अपस्मारेण तदाख्यरोगविशेषेण च्युतमतिः सती अपदि सहसा अपतत् किम्? ॥ ८० ॥

नवीनेति। सम्प्रति मम सहचर्य्याः सख्याः चित्तकुहरे मनोविवरे नवीना नूतना इयम् अकुशलपरीपाकलहरी अमङ्गलपरिणामतरङ्गः स्वैरं स्वच्छन्दं मरीनर्त्ति पुनः पुनः नृत्यति स्फुरतीत्यर्थः। यत् यतः एषा मत्सखी आर्त्ता व्याकुला जगतां नेत्रश्रेण्या मधुरा मनोहारिणी या मथुरा तस्यां तव निवासादिति भावः अथवा जगन्नेत्रश्रेणीमधुर इति पृथक् सम्बोधनपदम्। निवसतः तव चिरात् दीर्घकालादपि वार्त्तां न लभते न प्राप्नोति ॥ ८१ ॥

जनानिति। सिद्ध आदेशो येषां तान् सफलादेशानित्यर्थः जनान् सिद्धपुरुषानित्यर्थः नमति, मान्त्रिकगणान् मन्त्रज्ञगणान् भजते सेवते, ओषधिविदाम् अधिकविनयेन शुश्रूषां सेवां विधत्ते करोति, तव ईक्षा दर्शनमेव दीक्षा व्रतं तस्यै तव दर्शनकामनयेति

पशूनां पातारं भुजगरिपुपत्नप्रणयिनं
स्मरोद्दर्द्दिक्रीड़ं निविड़घनसारद्युतिहरम् ।
सदाभ्यर्णे नन्दीश्वरगिरिभुवो रङ्गरसिकं
भवन्तं कंसारे! भजति भवदाप्त्यै मम सखी ॥ ८३ ॥

भवन्तं सन्तप्ता विदलिततमालाङ्कुररसै-
र्विलिख्य भ्रूभङ्गीकृतमदनकोदण्डकदनम् ।
निधास्यन्ती कण्ठे तव निजभुजावल्लरिमसौ
धरण्यामुन्मीलज्जड़िममनिविड़ाङ्गी विलुठति ॥ ८४ ॥

भावः भक्त्या गिरिसुतां गौरीं परिचरति आराधयति । हि तथाहि अपि विधुरा मनीषा बुद्धिः सुखहेतुं सुखस्य कारणं किमपि न मनुते नावधारयति ॥ ८२ ॥

पशूनामिति । हे कंसारे ! मम सखी भवदाप्त्यै त्वत्प्राप्तये पशूनां पातारं पशुपतिं भुजङ्गानां रिपुर्गरुड़ः स एव पत्नं वाहनं यस्य सः भुजगरिपुपत्नः हरिरित्यर्थः तस्य प्रणयिनं सखायं स्मरस्य कामस्य उद्दर्द्दिनी उद्दीपिनी नाशिनी वा क्रीड़ा यस्य तथोक्तं निविड़ः सान्द्रः यः घनसारश्चन्दनं तस्य द्युतिहरं श्वेताङ्गमित्यर्थः सदा नन्दीश्वरगिरिभुवोः नन्दिपार्वत्योः अभ्यर्णे समीपे रङ्गरसिकं तं भवं हरं भजति सेवते ॥ ८३ ॥

भवन्तमिति । सन्तप्ता असौ मम सखी विदलितस्य भग्नस्य तमालाङ्कुरस्य रसैः भ्रूभङ्ग्या कृतं मदनकोदण्डस्य कामकार्मुकस्य कदनं परिभवः येन तं भवन्तं विलिख्य विशेषेण चित्रयित्वेत्यर्थः तव चित्रितस्येति भावः कण्ठे निजभुजवल्लरिं स्वबाहुमञ्जरीं निधास्यन्ती अर्पयिष्यन्ती धरण्यां भूमौ उन्मीलता प्रसरता जड़िम्ना जाड्येन निविड़ं व्याप्तमित्यर्थः अङ्गं यस्याः तथाभूता सती विलुठति ॥ ८४ ॥

कदाचिन्मूढ़ेयं निविड़भवदीयस्मृतिमदा-
दमन्दादात्मानं कलयति भवन्तं मम सखी ।
तथास्या राधाया विरहदहनाकल्पितधियो
मुरारे ! दुःसाधा क्षणमपि न बाधा विरमति ॥ ८५ ॥
त्वया सन्तापानामुपरि परिमुक्तापि रभसा-
दिदानीमापेदे तदपि तव चेष्टां प्रियसखी ।
यदेषा कंसारे ! भिदुरहृदयं त्वामवयती
सतीनां मूर्द्धन्या भिदुरहृदयाऽभूदनुदिनम् ॥ ८६ ॥
समक्षं सर्वेषां निवससि समाधिप्रणयिनाम्
इति श्रुत्वा नूनं गुरुतरसमाधिं कलयति ।

कदाचिदिति । कदाचित् मूढ़ा इयं मम सखी अमन्दात् अत्य-न्तात् निविड़ा सान्द्रा या भवदीया स्मृतिः तया यो मदः आनन्दः तस्मात् आत्मानं भवन्तं कलयति मनसा भावयतीत्यर्थः । हे मुरारे ! तथा किञ्च, तस्याश्चेतोर्वा विरहदहनेन विच्छेदाग्निना आकल्पिता विविधकल्पनां नीता धीर्यस्यास्तथाभूतायाः अस्याः राधायाः दुःसाधा दुष्प्रतिविधेया बाधा मनःसन्तापः क्षणमपि न विरमति न निव-र्त्तते ॥ ८५ ॥

त्वयेति । हे कंसारे ! प्रियसखी राधा त्वया रभसात् वेगात् सन्तापानाम् उपरि सन्तापसागरे इति भावः परिमुक्ता त्यक्ता पाति-तेत्यर्थः । तदपि तथापि इदानीमपि एतदवस्थायामपि तव चेष्टां त्वत्प्राप्तिप्रयासम् आपेदे प्राप । यत् यस्मात् एषा सतीनां मूर्द्धन्या साध्वीप्रवरा मत्सखी भिदुरं भग्नम् अननुरक्तमिति भावः हृदयं यस्य तथाभूतं त्वाम् अवयती अवगच्छन्ती अनुदिनं भिदुरहृदया विदीर्णहृदया अभूत् ॥ ८६ ॥

समक्षमिति । हे कंसाराते ! त्वं सर्वेषां समाधिप्रणयिनां

सदा कंसाराते ! भजसि यमिनां नेत्रपदवीम्
इति व्यक्तं सज्जीभवति यममालम्बितुमपि ॥ ८७ ॥
मुरारे ! कालिन्दीसलिलचलदिन्दीवररुचे !
मुकुन्द ! श्रीवृन्दावनमदन ! वृन्दारकमणे ! ।
व्रजानन्दिन् ! नन्दीश्वरदयित ! नन्दात्मज ! हरे !
सदेति क्रन्दन्ती परिजनशुचं कन्दलयति ॥ ८८ ॥
समन्तादुत्तप्तस्तव विरहदावाग्निशिखया
कृतोद्वेगः पञ्चाशुगमृगयुवेधव्यतिकरैः ।
तनूभूतं सद्यस्तनुवनमिदं हास्यति हरे !
हठादद्य श्वो वा मम सहचरी प्राणहरिणः ॥ ८९ ॥

योगिनामित्यर्थः समक्षं निवससि, इति श्रुत्वा गुरुतरसमाधिं सम्हालं योगं कलयति अभ्यस्यति नूनमुत्प्रेक्षे । त्वं सदा यमिनां वाह्ये-न्द्रियनिग्रहवतां नेत्रपदवीं भजसि नयनगोचरो भवसि इति हेतोः यमम् वाह्येन्द्रियनिग्रहम् आलम्बितुम् अवलम्बितुमिति ध्वनिः । आलम्बितुम् आश्रयितुमपि सज्जीभवति यतते इति व्यक्तम् उत्प्रेक्षे ॥ ८७ ॥

मुरारे इति । हे मुरारे ! हे श्रीवृन्दावनमदन ! हे वृन्दारक-मणे देवश्रेष्ठ ! हे व्रजानन्दिन् गोकुलानन्दन ! हे नन्दीश्वरदयित हरवल्लभ ! हे नन्दात्मज ! हे हरे ! सदा इति क्रन्दन्ती सखी परि-जनानाम् अस्माकं शुचं शोकं कन्दलयति वर्द्धयति ॥ ८८ ॥

समन्तादिति । हे हरे ! तव विरहदावाग्निशिखया समन्तात् उत्तप्तः सन्तापित इति यावत् पञ्चाशुगः पञ्चशरः काम एव मृगयुः व्याधः तस्य वेधव्यतिकरैः शरप्रहारसमूहैः कृतोद्वेगः जनितपीडः मम सहचर्याः प्राणहरिणः हठात् सहसा अद्य श्वो वा तनूभूतं कृशीभूतम् अतिक्षीणमित्यर्थः इदं तनुवनं शरीरारण्यं सद्यः झटिति हास्यति त्यक्ष्यति ॥ ८९ ॥

पयोराशिस्फीतत्विषि हिमकरोत्तंसमधुरे
दधाने दृग्भङ्ग्या स्मरविजयिरूपं मम सखी ।
हरे दत्तस्वान्ता भवति तदिमां किं प्रभवति
स्मरो हन्तुं किन्तु व्यथयति भवानेव कुतुकी ॥ ९० ॥
विजानीषे भावं पशुप-रमणीनां यदुपते !
न जानीमः कस्मात् तदपि वत मायां रचयसि ।
समन्तादध्यात्मं यदिह पवनव्याधिरलपद्
बलादस्यास्तेन व्यसनकुलमेव द्विगुणितम् ॥ ९१ ॥

पयोराशीति । हे हरे ! मम सखी पयसां दुग्धानां राशिः समूहः तद्वत् स्फीताः प्रवृद्धाः त्विषः कान्तयः यस्य तथाभूते धवलकाये इत्यर्थः हिमकरश्चन्द्र एव उत्तंसः शिरोभूषणं तेन मधुरे मनोहरे चन्द्रशेखरे इति यावत् दृशो ललाटनेत्रस्य भङ्ग्या विकारेण स्मरविजयिरूपं दधाने धारयति हरे दत्तं स्वान्तं मनो यया तथाभूता भवति, तत् तस्मात् स्मरः कामः इमां मत्सखीं स्मरहरसेविनीमिति भावः हन्तुं किं प्रभवति ? समर्था भवति किम् ? नैवेत्यर्थः । किन्तु कुतुकी कौतुकवान् एतादृशावस्थायामपि परिहासशील इत्यर्थः भवानेव व्यथयति पीड़यति ॥ ९० ॥

विजानीषे इति । हे यदुपते ! त्वं पशुपरमणीनां गोपाङ्गनानां भावम् आशयं विजानीषे विशेषेण बुध्यसे । तदपि कस्मात् मायां छलनां रचयसि करोषि, न जानीमः वत खेदे । पवनव्याधिरुद्धवः इह समन्तात् यत् अध्यात्मं परमात्मतत्त्वम् अधिकृत्य अलपत् कृष्णः परमात्मा, तस्मिन् भवतीभिर्मानवबुद्धिर्न कार्य्या इत्यादिरूपमकथयत् तेन अध्यात्मवादेन अस्याः मत्सख्याः बलात् वेगेन व्यसनकुलमेव शोकनिचय एव द्विगुणितं द्विराष्टत्तम् । तादृशेन परमात्मना कृष्णेनाहं रक्षितेति विवेति भावः ॥ ९१ ॥

गुरोरन्तेवासी स भजति यदूनां सचिवतां
सखी कालिन्दीयं किल भवति कालस्य भगिनी ।
भवेदन्यः को वा नरपतिपुरे मत्परिचितो
दशामस्याः शंसन् यदुतिलक ! यस्त्वामनुनयेत् ॥ ९२ ॥
विशीर्णाङ्गीमन्तर्व्रणविलुठनादुत्कलिकया
परीतां भूयस्या सततमपरागव्यतिकराम् ।
परिध्वस्तामोदां विरमितसमस्तालिकुतुकां
विधो ! पादस्पर्शादपि सुखय राधाकुमुदिनीम् ॥ ९३ ॥
विपत्तिभ्यः प्राणान् कथमपि भवत्सङ्गमसुख-

गुरोरिति । हे यदुतिलक ! स गुरोरन्तेवासी बृहस्पतिशिष्यः उद्धवः यदूनां यादवानां सचिवतां मन्त्रितां भजति करोति, इयं सखी कालिन्दी यमुना कालस्य यमस्य भगिनी किल भवति, अतः अन्यः को वा नरपतिपुरे मधुपुरे मम परिचितः विदितः भवेत् ? यः अस्याः मत्सख्याः दशां शंसन् कीर्त्तयन् त्वाम् अनुनयेत् विनयेन बोधयेत्, न कोऽपीत्यर्थः ॥ ९२ ॥

विशीर्णाङ्गीमिति । हे विधो चन्द्र ! गोकुलस्येति शेषः, अन्तर्व्रणस्य सन्तापस्य अन्तर्गतकीटादिक्षतस्य च विलुठनात् विशेषेणाविर्भावादिति भावः विशीर्णाङ्गीं विध्वस्तकलेवरां, सततं भूयस्या महत्या उत्कलिकया उत्कण्ठया तरङ्गेण च परीतां युक्ताम् आन्दोलिताञ्च, अपरागव्यतिकरां विरामपूर्णां वर्णप्रसारहिताञ्च, परिध्वस्तामोदां निरानन्दां सौरभशून्याञ्च, विरमितं निवर्त्तितं समस्तानाम् आलीनां सखीनां कुतुकम् आनन्दः यया तादृशीं, विरमितं समस्तम् अलीनां भ्रमराणां कुतुकं यया तथोक्ताञ्च, राधाकुमुदिनीं पादस्य चरणस्य किरणस्य च स्पर्शादपि सुखय सुखीकुरु ॥ ९३ ॥

विपत्तिभ्य इति । हे शौरे ! मम सहचरी भवतः सङ्गमे यत्

स्पृहाधीना गौरि ! मम सहचरी रक्षितवती ।
अतिक्रान्ते सम्प्रत्यवधिदिवसे जीवनविधौ
हताशा निःशङ्कं वितरति दृशौ चूतमुकुले ॥ ९४ ॥

प्रतीकारारम्भश्लथमतिभिरुद्यत्परिणतै-
र्विमुक्तायाः व्यक्तस्मरकदनभाजः परिजनैः ।
अमुञ्चन्ती सङ्गं कुवलयदृशः केवलमसौ
बलादद्य प्राणानवति भवदाशासहचरी ॥ ९५ ॥

अये रासक्रीडारसिक ! मम सख्यां नवनवा
पुरा बद्धा येन प्रणयलहरी हन्त गहना ।

हखं तस्मिन् या स्पृहा आशा तस्या अधीना सती विपत्तिभ्यः दुःखेभ्यः कथमपि प्राणान् रक्षितवती । सम्प्रति अवधिदिवसे अस्मिन् दिने मया आगन्तव्यमिति त्वया निर्णीते दिने अतिक्रान्ते गते सति जीवनविधौ प्राणनव्यापारे हताशा सती चूतमुकुले आम्राङ्कुरे निःशङ्कं यथा तथा दृशौ नयने वितरति निक्षिपति । चूतमुकुलस्यातीवोद्दीपकत्वात् तद्दर्शनेन शीघ्रं मदनानलदग्धा प्राणान् त्यजासीति धिर्वेति भावः ॥ ९४ ॥

प्रतीकारेति । केवलम् असौ भवदाशासहचरी भवत्प्राप्तिवासनारूपा सखी प्रतीकारस्य आरम्भे करणे श्लथाः याः मतयः ताभिः उद्यत् उदयं गच्छत् परिणतं परिपाकः येषां तैः कथमपि न प्रतिकर्तुं शक्योति स्थिरमतिरिति यावत् परिजनैः अस्माभिरिति भावः विमुक्तायाः त्यक्तायाः व्यक्तं स्फुटं स्मरस्य कामस्य यत् कदनं पीड़नं तद्भाजः तद्युक्तायाः इत्यर्थः कुवलयदृशः नीलोत्पलाक्ष्याः राधायाः सङ्गम् अमुञ्चन्ती अत्यजन्ती अद्य इदानीं बलात् बलमाश्रित्य प्राणान् अवति रक्षति ॥ ९५ ॥

अये इति । अये रासक्रीडारसिक ! येन त्वया पुरा पूर्वं

स चेन्मुग्धापेक्षस्त्वमसि धिगिमां तूलशकलं
यदेतस्या नासानिहितमिदमद्यापि चलति ॥ ९६ ॥

मुकुन्द ! भ्रान्ताक्षी किमपि यदसङ्कल्पितगतं
विधत्ते तद्वक्तुं जगति मनुजः कः प्रभवति ।
कदाचित् कल्याणी विलपति यदुत्कण्ठितमति-
स्तदाख्यामि स्वामिन् ! गमय मकरोत्तंससविधम् ॥ ९७ ॥

अभूत् कोऽपि प्रेमा मयि मुररिपोर्यः सखि ! पुरा
पराद् धर्मापेक्षामपि तदवलम्बादलघयम् ।
तथेदानीं हा धिक् समजनि तटस्थः स्फुटमहं
भजे लज्जां येन त्वयामिह पुनर्जीवितुमपि ॥ ९८ ॥

मम सख्यां नवनवा गहना सान्द्रा प्रणयलहरी प्रेमवीची बभूव इत्यन्तखेदे । स त्वं चेत् यदि मुग्धापेक्षः निरपेक्षः अपि तादृशप्रेमरहितो भवसीत्यर्थः तदा इमां मत्सखीं धिक्, यत् यतः एतस्याः सख्याः तूलशकलं तूलखण्डमिति भावः इदं जीवनमिति शेषः नासानिहितं नासिकाग्रवर्त्तीति भावः सत् अद्यापि चलति नाद्यापि म्रियते इयमिति भावः ॥ ९६ ॥

मुकुन्देति । हे स्वामिन् मुकुन्द ! भ्रान्ताक्षी घूर्णितनयना मोहादिति भावः इयं यत् असङ्कल्पितगतं कदापि मनसा न चिन्तितमिति भावः यत् विधत्ते करोति, जगति कः मनुष्यः तत् वक्तुं प्रभवति समर्थो भवति ? न कोऽपीत्यर्थः । कल्याणी मङ्गलमयी इयं कदाचित् उत्कण्ठितमतिः सती यत् विलपति, तत् आख्यामि कथयामि, मकरोत्तंसस्य मकराङ्कृतस्य कर्णस्येति भावः सविधं समीपं गमय प्रापय तत् स्फलिति भावः ॥ ९७ ॥

अभूदिति । हे सखि ! पुरा मुररिपोः कृष्णस्य मयि यः कोऽपि प्रेमा अभूत्, परात् अत्यन्तात् तस्य प्रेम्णः अवलम्बात्

अमी कुञ्जाः पूर्वं मम न दधिरे कामपि मुदं
द्रुमालीयं चेतः सखि ! न कतिशो नन्दितवती ।
इदानीं पश्यैते युगपदुपतापं विदधते
प्रभौ मुक्तापेक्षे भजति न हि को वा विमुखताम् ॥९९॥

गरीयान् मे प्रेमा त्वयि परमिति स्नेहलघुता
न जीविष्यामीति प्रणयगरिमाख्यापनविधिः ।
कथं नायासीति स्मरणपरिपाटीप्रकटनं
हरौ सन्देशाय प्रियसखि ! न मे वागवसरः ॥ १०० ॥

आश्रयणात् धर्मापेक्षामपि धर्मानुरोधमपि सतीत्वनाशादिति भावः अवधयं लघूकृतवत्यस्मि । हा धिक्, इदानीं तया तटस्थः निःसम्बन्ध इति भावः समजनि जातः स प्रेमेति शेषः, येन पुनः इह संसारे क्षणमपि जीवितुम् अहं स्फुटं स्पष्टं लज्जां भजे प्राप्नोमि ॥ ९८ ॥

अमी इति । हे सखि ! अमी कुञ्जाः पूर्वं मम कां मुदं नापि नैव दधिरे नैव जनयामासुः ? अपितु सर्वामेव मुदं दधिरे इत्यर्थः । इयं द्रुमाली द्रुमश्रेणी कतिशः कतिवारान् न नन्दितवती ? अपितु सततमेव नन्दितवतीत्यर्थः । इदानीं पश्य एते कुञ्जादयः युगपत् समकालम् उपतापं सन्तापं विदधते । प्रभौ नाथे कृष्णे मुक्तापेक्षे निरपेक्षे सति को वा विमुखतां न हि भजति ? सर्व एव भजतीत्यर्थः ॥ ९९ ॥

गरीयानिति । मे मम त्वयि गरीयान् प्रेमा इति स्नेहस्य लघुता लाघवं परं केवलं न जीविष्यामि त्वया विनेति भावः इति उक्तं प्रणयस्य गरिमणः गुरुत्वस्य ख्यापनविधिः प्रकटनप्रकारः । कथं न आयासि न आगच्छसि इति स्मरणस्य परिपाटीप्रकटनं रीति-

ययौ कालः कल्याण्यवकलितकेलीपरिमलां
विलासार्थी यस्मिन्नचलकुहरे लीनवपुषीम् ।
स मां धृत्वा धूर्त्तः कृतकपटरोषां सखि ! हठाद्
अकार्षीदाकर्षन्नुरसि सखिलेखामतन्नताम् ॥ १०१ ॥
कदा प्रेमोन्मीलन्मदनमदिराक्षीसमुदयं
बलादाकर्षन्तं मधुरमुरलीकाकलिकया ।
मुहुर्भ्राम्यच्चिल्लीचुलुकितकुलस्त्रीव्रतमहं
विलोकिष्ये लीलामदमिलदपाङ्गी मुरभिदम् ॥ १०२ ॥

प्रकाशः, हे प्रियसखि ! अतः हरौ कृष्णे सन्देशाय वाचिकाय मे न वागवसरः वाक्यप्रसरः अस्तीति शेषः ॥ १०० ॥

ययाविति । हे कल्याणि ! सखि ! कालः स इति शेषः ययौ गतः, यस्मिन् काले विलासार्थी विलासकामः धूर्त्तः शठः मया अवगणितः निराकृत इति यावत् सः कृष्णः अवकलितः अगणितः केलीपरिमलः क्रीडासौरभं यया तथोक्ताम् अचलकुहरे पर्वतगुहायां लीनवपुषीं गूढकलेवरां कृतकपटरोषां प्रणयकुपितामिति भावः सखिलेखानां सखीश्रेणीनां शतैः वृतां मां हठात् धृत्वा आकर्षन् उरसि वक्षसि अकार्षीत् चकार ॥ १०१ ॥

कदेति । अहं मधुरा मनोहारिणी या मुरलीकाकलिका, वंशीसूक्ष्मरवः तया प्रेम्णा उन्मीलन् विकसन् यः मदनः कामः तेन मदिरौ मत्तखञ्जनाविव अक्षिणी नेत्रे यासां ताः तासां समुदयं समूहं बलात् आकर्षन्तं स्वसमीपमानयन्तं मुहुः पुनः पुनः भ्राम्यन्ती या चिल्ली दृग्भङ्गिविशेषः तया चुलुकितं गण्डूषीकृतं नाशितमित्यर्थः कुलस्त्रीणां व्रतं येन तथोक्तं मुरभिदं कृष्णं लीलया यो मदः तेन मिलन् सङ्गच्छन् अपाङ्गो यस्यास्तथाभूता सती कदा विलोकिष्ये द्रक्ष्यामि ॥ १०२ ॥

रणद्भृङ्गश्रेणीसुहृदि शरदारम्भमधुरे
वनान्ते चान्द्रीभिः किरणलहरीभिर्धवलिते।
कदा प्रेमोद्दण्डस्मरकलहवैतण्डिकमहं
करिष्ये गोविन्दं निविड़भुजबन्धप्रणयिनम्॥ १०३॥
मनो मे हा कष्टं ज्वलति किमहं हन्त करवै
न पारं नावारं किमपि कलयाम्यस्य जलधेः।
इयं वन्दे मूर्द्ध्ना सपदि तमुपायं कथय मे
परामृश्ये यस्माद्धृतिकणिकयापि क्षणिकया॥ १०४॥
प्रयातो मां हित्वा यदि विबुधचूड़ामणिरसौ
प्रयातु स्वच्छन्दं मम समयधर्मः किल गतिः।

रणदिति। कदा अहं रणन्तीनां गुञ्जन्तीनां भृङ्गश्रेणीनां सुहृदि बान्धवे, शरदः आरम्भेण प्रवृत्त्या मधुरे मनोहरे, चान्द्रीभिः चन्द्रसम्बन्धिनीभिः किरणलहरीभिः मयूखतरङ्गैः धवलिते वनान्ते वनसीमायां, प्रेम्णा उद्दण्डः उद्भटः स्मरः कामो यत्र तादृशे कलहे वैतण्डिकं वितण्डावादिनं गोविन्दं, निविड़ेन भुजेन यः बन्धः तस्य प्रणयिनं करिष्ये॥ १०३॥

मन इति। हा कष्टं, मे मम मनः ज्वलति, हन्त खेदे, अहं किं करवै, अस्य जलधेः विरहार्णवस्येति भावः पारं न अपारं न किमपि कलयामि नावधारयामि। इयमहं विपत्सागरपतिताहं मूर्ध्ना शिरसा वन्दे प्रणमामि त्वामिति शेषः, तम् उपायं मे मह्यं कथय, यस्मात् उपायात् यमुपायमाश्रित्येत्यर्थः क्षणिकयापि धृतिकणिकया विनोदलेशेन परामृश्ये स्पृश्ये क्षणमपि विनोदं लभे इति भावः॥ १०४॥

प्रयात इति। यदि विबुधानां देवानां चूड़ामणिः असौ कृष्णः

इदं सोढुं का वा प्रभवति यतः स्वप्नकपटाद्
इहायातो वृन्दावनभुवि बलान्मां रमयति ॥ १०५ ॥
अनौचित्यं तस्य व्यथयति मनो हन्त मथुरां
त्वमासाद्य स्वैरं चपलहृदयं धावय हरिम् ।
सखि ! स्वप्नारम्भे पुनरपि यथा विभ्रममदाद्
इहायातो धूर्त्तः क्षपयति न मे किङ्किणिगुणम् ॥१०६॥
अयि स्वप्नो दूरे निवसतु समक्षं शृणु हठाद्
अविश्वस्ता मा भूरिह सखि ! मनो विभ्रमधिया ।
वयस्यस्ते गोवर्द्धनविपिनमासाद्य कुतुकाद्
अकाण्डे यद्भूयः स्मरकलहपाण्डित्यमकरोत् ॥ १०७ ॥

मां हित्वा त्यक्त्वा प्रवासः गतः, स्वच्छन्दं प्रयातु गच्छतु, समयधर्मः कालधर्मः मृत्युः मम गतिः किम उपाय एव । का वा इदं सोढुं प्रभवति, यतः यत् स्वप्नकपटात् निद्राव्याजेन इह वृन्दावने आयातः सन् बलात् मां रमयति ॥ १०५ ॥

अनौचित्यमिति । हन्त खेदे, तस्य अनौचित्यम् अयुक्ताचरणमित्यर्थः मनः व्यथयति । अतः हे सखि ! त्वं मथुराम् आसाद्य गत्वा स्वैरं स्वच्छन्दं चपलहृदयं हरिं कृष्णं धावय, यथा धूर्त्तोऽसौ स्वप्नारम्भे विभ्रममदात् कामावेशजनितादिति भावः इह वृन्दावने आयातः सन् मे मम किङ्किणिगुणं कटिवसनग्रन्थिमिति भावः न क्षपयति न भ्रंशयति ॥ १०६ ॥

अयीति । अयि सखि ! स्वप्नः दूरे निवसतु तिष्ठतु, समक्षं प्रत्यक्षं शृणु, मनसः विभ्रमः भ्रान्तिरयमिति धिया बुद्ध्या हठात् इह मदुक्ते विषये इत्यर्थः अविश्वस्ता अविश्वासिनी मा भूः न भव । ते तव वयस्यः सखा कृष्णः गोवर्द्धनविपिनम् आसाद्य अकाण्डे

अमर्षाद्धावन्तीं गहनकुहरे सूचितपथां
तुलाकोटिक्वाणैश्चकितपदपातद्विगुणितैः।
दिधीर्षन्मां हर्षोत्तरलनयनान्तः स कुतुकी
न वंशीमग्रासीद्भुवि करसरोजाद्विगलिताम्॥ १०८॥
अशक्तां गन्तव्ये कलितनवचेलाञ्चलतया
लताली‍भिः पुष्पस्मितशबलिताभिर्विरुदतीम्।
परीहासारम्भी प्रियसखि! समालम्बितमुखीं
प्रपेदे चुम्बाय स्फुरदधरबिम्बस्तव सखा॥ १०९॥
ततोऽहं धम्मिल्ले स्थगितमुरलीका सखि! शनै-

सहसा शुल्कात् यत् भूयः समधिकं पुनःपुनर्वा स्मरकलहपाण्डित्यं कामकलहवैदग्ध्यम् अकरोत्॥ १०७॥

अमर्षादिति। हर्षेण आनन्देन उत्तरलः अतिचञ्चलः नयनयोरन्तः यस्य तादृशः कुतुकी कौतुकवान् स हरिः गहन-कुहरे काननाभ्यन्तरे अमर्षात् प्रणयेर्ष्याजनितात् इति भावः धावन्तीं चकितेन निःशब्दसञ्चारेणेति भावः पदपातैः पादविक्षेपैः द्विगुणितैः तुलाकोटिक्वाणैः नूपुरनिनादैः सूचितपथां विदितमार्गां मां दिधीर्षन् धर्तुमिच्छन् करसरोजात् करकमलात् भुवि विगलितां वंशीं न अग्रासीत्॥ १०८॥

अशक्तामिति। हे प्रियसखि! तव सखा कृष्णः परीहासा-रम्भी परिहसन्नित्यर्थः चुम्बाय चुम्बनाय स्फुरत् अधरबिम्बं यस्य तादृशः सन् पुष्पाण्येव स्मितानि तैः शबलिताभिः विचित्राभि-रित्यर्थः लतालीभिः लताश्रेणिभिः कलितम् आक्रान्तं नवं चेलाञ्चलं वसनप्रान्तः यस्याःतस्या तया गन्तव्ये अशक्ताम् अक्षमां विरुदतीं समा-लम्बितं समाकृष्टं मुखं यस्याः तथाभूतां मां प्रपेदे प्राप॥ १०९॥

तत इति। हे सखि! ततः अनन्तरम् अहं धम्मिल्ले संयत-

स्खलीकामर्षेण भ्रमदविरलभ्रूरुदचलम् ।
कचाकृष्टिक्रीडाक्रमपरिचिते चौर्य्यचरिते
हरिर्लब्धोपाधिः प्रसभमनयन्मां गिरिदरीम् ॥ ११० ॥

कदाचिद्वासन्ती कुहरभुवि धृष्टः सरभसं
हसन् पृष्ठालम्बी स्थगयति कराभ्यां मम दृशौ ।
दिधीर्षौ जातेर्ष्ये मयि सखि ! तदीयाङ्गुलिशिखां
न जाने कुत्रायं व्रजति कितवानां कुलगुरुः ॥ १११ ॥

अतीतेयं वार्त्ता विरमतु पुरः पश्य सरले !
वयस्यस्ते सोऽयं स्मितमधुरिमोन्मृष्टवदनः ।
भुजस्तम्भोल्लासादभिमतपरीरम्भरभसः
स्मरक्रीडासिन्धुः क्षिपति मयि बन्धूककुसुमम् ॥ ११२ ॥

केशे स्थगिता गोपिता सुरली यया तादृशी सती स्खलीका-मर्षेण स्खलितयेर्ष्यया भ्रमन्ती घूर्णमाना अविरला घना भ्रूर्यस्याः तथोक्ता शनैः मन्दं मन्दम् उदचलं प्रस्थितास्मि । ततः कचानां केशानाम् आकृष्टिराकर्षणं तया या क्रीड़ा तस्याः क्रमः नियमः परिचितः विदितः यस्मिन् तादृशे चौर्य्यचरिते लब्धोपाधिः लब्ध-प्रतिष्ठः नवनीतचौर्य्यस्य प्रसिद्धत्वादिति भावः हरिः प्रसभं बलात् मां गिरिदरीं पर्वतगुहाम् अनयत् ॥ ११० ॥

कदाचिदिति । हे सखि ! कदाचित् कितवानां धूर्त्तानां कुल-गुरुः धृष्टः चपलः अयं हरिः वासन्तीकुहरभुवि नवमल्लिकाभ्यन्तरदेशे हसन् पृष्ठालम्बी पृष्ठदेशमागतः सन् कराभ्यां मम दृशौ नयने स्थग-यति तिरोधत्ते । जातेर्ष्ये सेर्ष्यमित्यर्थः यथा तथा मयि तदीया-ङ्गुलिशिखां तस्याङ्गुल्यग्रभागं दिधीर्षौ धर्त्तुमिच्छौ सत्यां कुत्र व्रजति गच्छति, न जाने ॥ १११ ॥

अतीतेयमिति । हे सरले ! इयम् अतीता गता वार्त्ता विर-

तदुत्तिष्ठ क्रीड़ावति ! निविड़मुक्तावलिकया
बधानैनं धूर्त्तं सखि ! मधुपुरीं याति न यथा ।
इति प्रेमोन्मीलद्भवदनुभवारूढ़जड़िमा
सखीनामाक्रन्दं न किल कतिशः कन्दलयति ॥ ११३ ॥
अहो कष्टं बाल्यादहमिह सखीं दुष्टहृदया
मुहुर्मानग्रन्थिं सहजसरलां ग्राहितवती ।
तदारम्भाद् गोपीगणरतिगुरो ! निर्भरमसौ
न लेभे लुब्धापि त्वदमलभुजस्तम्भरभसम् ॥ ११४ ॥

सतु तिष्ठतु, पुरः अग्रतः पश्य, स्मरक्रीड़ासिन्धुः कामक्रीड़ारससागरः सोऽयं ते तव वयस्यः स्मितस्य मधुरिमणा माधुर्य्येण उन्मृष्टम् उत्फुल्लं वदनं यस्य तथाभूतः अभिमते इष्टे परीरम्भे आलिङ्गने रभसो वेगो हर्षो वा यस्य तादृशः सन् भुजौ स्तम्भाविव सहस्वादिति भावः तयोः उल्लासात् मां प्रति प्रक्षेपजनिष्यमाणानन्दात् हेतोः मयि बन्धूककुसुमं क्षिपति इङ्गितार्थमिति भावः ॥ ११२ ॥

तदिति । हे क्रीड़ावति ! सखि ! तत् तस्मात् उत्तिष्ठ, निविड़या सान्द्रया मुक्तावलिकया मौक्तिकहारेण एनं धूर्त्तं बधान, यथा मधुपुरीं न याति न गन्तुं शक्नोतीत्यर्थः । इतीत्थं प्रेम्णा उन्मीलन् उद्भवन् यः भवदनुभवः त्वमजनितं मदीयमाचरणमिति भावः तेन आरूढ़ः जातः जड़िमा जाड्यं मोह इति यावत् यस्याः तथाभूता सती कतिशः कतिवारं सखीनाम् अस्माकमिति भावः आक्रन्दं न किल कन्दलयति नैव वर्द्धयति ? अपितु सततमेव कन्दलयतीत्यर्थः ॥ ११३ ॥

अहो इति । अहो कष्टं हा कष्टं, दुष्टहृदया अहं बाल्यात् शैशवात् शैशवमारभ्येत्यर्थः आरभ्यार्थे पञ्चमी । इह वृन्दावने सहजसरलां स्वभावऋजुं सखीं मुहुः पुनःपुनः मानग्रन्थिं ग्राहित-

अलिन्दे कालिन्दीकमलसुरभौ कुञ्जवसते-
र्वसन्तीं वासन्तीनवपरिमलोद्गारचिकुराम् ।
त्वदुत्सङ्गे लीनां मदमुकुलिताक्षीं पुनरिमां
कदाहं सेविष्ये किसलयकलापव्यजनिनी ॥ ११५ ॥

धृतानन्दां वृन्दावनपरिसरे शारदनिशा-
विलासोल्लासेन श्लथितकबरीभ्रष्टकुसुमाम् ।
तव स्कन्धोपान्ते विनिहितभुजां गोपरमणीं
कदा कुञ्जे लीना रहसि विहसिष्यामि सुमुखीम् ॥ ११६ ॥

यतो धिक्कृतवती । हे गोपीगणरतिगुरो ! त्वदारम्भात् तस्य मान-मन्थरारम्भात् आचरणात् असौ मदनो लब्धापि वाञ्छापि तव अमलेन चारुणा भुजेन यः स्कन्धः बन्धनम् आलिङ्गनमिति यावत् तेन रभसम् आनन्दं निर्भरं सम्यक् यथा तथा न लेभे न प्राप ॥ ११४ ॥

अलिन्दे इति । कदा अहं किसलयकलापव्यजनिनी नव-पल्लवनिचयेन वीजयन्ती सती कालिन्दीकमलसुरभौ यमुनासरोज-सुगन्धे कुञ्जवसतेः [illegible] अलिन्दे बहिर्भूमौ वसन्तीं वासन्तीनां माधवीलताकुसुमानां नवं परिमलं सौरभम् उद्गिरन्तीति तथोक्ताः चिकुराः केशाः यस्याः तथोक्तां माधवीलताकुसुमखचितकेशामिति भावः तव उत्सङ्गे क्रोडे लीनां स्थितां मदेन मद्यपानेन सौभाग्य-गर्वेण वा मुकुलिते सङ्कुचिते अक्षिणी यस्याः तथाभूताम् इमां मत्सखीं पुनः सेविष्ये परिचरिष्यामि ॥ ११५ ॥

धृतानन्दामिति । कदाहं कुञ्जे लीना निभृतस्थितेत्यर्थः वृन्दा-वनपरिसरे शारदी शरत्कालीना या निशा तस्यां यो विलासः रासलीला तस्य उल्लासेन धृतः जनितः आनन्दो यस्याः तां, श्लथि-तायाः कबर्याः केशपाशात् भ्रष्टानि विच्युतानि कुसुमानि यस्याः तथोक्तां, तव स्कन्धोपान्ते स्कन्धस्य प्रान्तदेशे विनिहितौ विन्यस्तौ

विदूरादाहर्त्तुं कुसुममुपयामि त्वमधुना
पुरस्तीरे तीरे कलय तुलसीपल्लवमिदम् ।
इति व्याजादेनां विदितभवदीयस्थितिरहं
कदा कुञ्जे गोपीरमण ! गमयिष्यामि समये ॥ ११७ ॥
इति श्रीकंसारेः पदकमलयोर्गोकुलकथां
निवेद्य प्रत्येकं भज परिजनेषु प्रणयिताम् ।
निजाङ्के कादम्बीसहचर ! वहन् मञ्जुनतया
स यात्युच्चैः प्रेमप्रवणमनुजग्राह भगवान् ॥ ११८
मिलद्‌भृङ्गीं हंसीरमण ! वनमालां प्रथमतो

अर्पितो भुजो यया तादृशीं कुसुमीं तत्कान्तीं गोपरमणीं रहसि एकान्ते विहारयिष्यामि ? ॥ ११६ ॥

विदूरादिति । हे गोपीरमण ! कदाहं कुञ्जे विदिता भव-दीया स्थितिर्यया तथोक्ता कुञ्जे स्थितं भवन्तं जानतीत्यर्थः विदूरात् कुसुमम् आहर्त्तुम् उपयामि गच्छामि, त्वम् अधुना पुरः अग्रतः तीरे तीरे इदं तुलसीपल्लवं तुलसीपत्रं कलय संचिनु, इतीत्थं व्याजात् छलात् एनां मत्सखीं समये सङ्केतभूमाविति भावः गम-यिष्यामि प्रेषयिष्यामि ? ॥ ११७ ॥

इतीति । हे कादम्बीसहचर ! मरालीवल्लभ ! निजाङ्के मञ्जुनतया भूषणतया वहन् कादम्बीमिति शेषः त्वम् इतीत्थं श्रीकंसारेः कृष्णस्य पदकमलयोः पादपद्मयोः गोकुलकथां निवेद्य प्रत्येकं परिजनेषु सदीयेष्विति भावः प्रणयितां भज गच्छ । कथमि-त्याह स इति, भगवान् कृष्णः यं प्रेमप्रवणं प्रणयपरायणम् अनुज-ग्राह, स उच्चैः याति उन्नतिं प्राप्नोति । एतद्दौत्यकरणे तव भाविनी उन्नतिरिति भावः ॥ ११८ ॥

मिलद्‌भृङ्गीमिति । हे हंसीरमण ! प्रथमतः आदौ मिलन्तः

मुदा क्षेमं पृच्छन्निदमुपहरेथा मम वचः ।
चिरं कंसारातेरुरसि सहवासप्रणयिनीं
किमेनामेणाक्षीं गुणवति ! विसस्मार भवती ॥ ११९ ॥
इदं किं वा हन्त स्मरसि रसिके ! खण्डनरुषा
परीताङ्गी गोवर्द्धनगिरिनितम्बे मम सखी ।
भिया संभ्रान्ताक्षं यदिह विचकर्ष त्वयि बलाद्
गृहीत्वा विभ्रश्यन्नवशिखिशिखं गोकुलपतिम् ॥१२०॥
ततः सम्भाषेथाः श्रुतिमकरमुद्रामिति मुदा
भवत्यां कर्त्तव्यः किमिति कुशलप्रश्नजडिमा ।

गुञ्जन्तः भृङ्गाः यस्यां तादृशीं वनमालां कण्ठवर्त्तिनीमिति भावः मुदा आनन्देन क्षेमं कुशलं पृच्छन् सन् इदं मम वचः उपहरेथाः ब्रूहि । किमित्याह चिरमिति, हे गुणवति ! भवती कंसारातेः कृष्णस्य चिरम् उरसि वक्षसि सहवासेन यथा त्वं वससि तथा इयमपि वसतीति भावः प्रणयिनीम् एनाम् एणाक्षीं मृगनयनां राधां किं कथं विसस्मार विस्मृतवती असि ॥ ११९ ॥

इदमिति । हे रसिके ! मम सखी खण्डनरुषा अन्यासङ्गजनितेर्ष्याकोपेन, ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति मम्मटः । परीताङ्गी युक्तदेहा सती इह गोवर्द्धनगिरेः नितम्बे मेखलायां भिया भयेन सम्भ्रान्ताक्षं चकितनेत्रं विभ्रश्यन्ती नवा शिखिनः मयूरस्य शिखा यस्मात् तथोक्तं गोकुलपतिं गृहीत्वा बलात् त्वयि यत् विचकर्ष आकृष्टवती, इदं किं वा स्मरसि ? हन्त खेदे ॥ १२० ॥

तत इति । ततः वनमालाप्रश्नानन्तरं मुदा हर्षेण श्रुतिमकरमुद्रां कर्णस्थितमकरभूषणाम् इति सम्भाषेथाः आलपेः । भवत्यां त्वयि कुशलप्रश्नजडिमा मङ्गलप्रश्नेन जाड्यं मूर्खत्वमित्यर्थः किमिति कथं

रुचिस्मेरा या त्वं रचयसि बलाच्चुम्बनकलाम्
अपाङ्गेन स्पृष्टा सखि! मुररिपोर्गण्डकुहरे ॥ १२१ ॥

निवासस्ते देवि! श्रवणलतिकायामिति धिया
प्रयत्नात्त्वामेव प्रणयहृदया यामि शरणम्।
परोक्षं दृष्टीनां निभृतनिभृतं कर्णकुहरे
हरेः काकूम्मिश्रां कथय सखि! राधाविधुरताम् ॥१२२॥

परीरम्भं प्रेम्णा मम सविनयं कौस्तुभमणौ
ब्रुवाणः कुर्वीथाः पतगवर! विज्ञापनमिदम्।
अगाधा राधायामपि तव सखे! विस्मृतिरभूत्
कथं वा कल्याणं वहति तरले हि प्रणयिता ॥ १२३ ॥

कर्त्तव्यः कृष्णदर्शनेऽपि कुशलप्रश्नः सर्व्वविवर्जितमिति भावः। किं तत् कुशलमित्याह रुचिस्मेरेति, हे सखि! रुच्या कान्त्या स्मेरा हसन्तीवेति भावः या त्वम् अपाङ्गेन स्पृष्टा सती मुररिपोः कृष्णस्य गण्डकुहरे कपोलाभ्यन्तरे बलात् हठात् चुम्बनकलां चुम्बनशिल्पं रचयसि करोषि, इतः परं कुशलं किमिति कुशलप्रश्नो जाड्यमिति भावः ॥ १२१ ॥

निवास इति। हे सखि! देवि! श्रवणलतिकायां श्रोत्रलतायां हरेरिति शेषः ते तव निवासः स्थितिः, इति धिया बुद्ध्या प्रणयः हृदये यस्याः तथाभूता सप्रणयमिति भावः अहं प्रयत्नात् त्वामेव न त्वन्यमित्यन्यव्यवच्छेदक एवशब्दः। शरणं यामि गच्छामि। त्वं दृष्टीनां यादवानां परोक्षम् असाक्षात् निभृतनिभृतम् अतिनिभृतं यथा तथा हरेः कृष्णस्य कर्णकुहरे काकूम्मिश्रां विनयपूर्णामित्यर्थः राधायाः विधुरतां कातरतां कथय ॥ १२२ ॥

परीरम्भमिति। हे पतगवर! पक्षिश्रेष्ठ! कौस्तुभमणौ हरिवक्षःस्थलस्थिते इति शेषः प्रेम्णा मम परीरम्भम् आलिङ्गनं

मुहुः कूजत्काञ्चीमणिवलयमञ्जीरमुरली-
रवालम्बी भ्राम्यद्युवतिकलगीतैः सुरमणे ! ।
स किं साक्षाद्भावी पुनरपि हरेस्ताण्डवरसै-
रमन्दः कालिन्दीपुलिनभुवि तौर्य्यत्रिकभरः ॥ १२४ ॥

नवीनस्त्वं कम्बो ! पशुपरमणीभिः परिचयं
न धत्से राधाया गुणगरिमगन्धेऽपि न कृती ।
तथापि त्वां याचे हृदयनिहितं दोहदमहं
वहन्ति हि क्रान्ते प्रणयमवदातप्रकृतयः ॥ १२५ ॥

अन्वायः सन् सविनयम् इदं विज्ञापनं कुर्वीथाः । हे सखे ! राधायामपि तव अगाधा निरतिशया विस्मृतिः अभूत् । किं तयापि कल्याणं मङ्गलं वर्त्तते गच्छति अभ्युदयशालिनीति भावः तरले चपले जने कथं वा प्रणयिता सख्यं तिष्ठतीति शेषः नैव तिष्ठतीत्यर्थः, कौस्तुभस्य च वक्षसि आन्दोलितत्वेन चापल्यमिति भावः । अर्थान्तरन्यासः ॥ १२३ ॥

मुहुरिति । हे सुरमणे ! देवमणे ! कौस्तुभ ! मुहुः पुनः पुनः कूजन्तीनां काञ्चीनां रशनानां मणिवलयानां मञ्जीराणां नूपुराणां मुरल्याः वेणोश्च रवम् आलम्बते आश्रयतीति तथोक्तः तत्तद्ध्वनिमिश्र इत्यर्थः भ्राम्यन्तीनाम् इतस्ततः सञ्चरन्तीनां युवतीनां कलं मधुरं गीतं येषु तादृशैः ताण्डवरसैः नृत्यविलासैः अमन्दः महान् कालिन्दीपुलिनभुवि यमुनाकूलदेशे स तौर्य्यत्रिकभरः नृत्यगीतवाद्यमय उत्सवातिशयः किं पुनरपि हरेः कृष्णस्य साक्षात् समक्षं भावी भविष्यति ? तव दिव्यत्वादेतद्भाविविषयज्ञानं युज्यते इति त्वां प्रति प्रश्नावसर इति भावः ॥ १२४ ॥

नवीन इति । हे कम्बो ! शङ्ख ! शङ्खः स्यात् कम्बुरस्त्रियामित्यमरः । त्वं नवीनः साम्प्रतं छतत्वादिति भावः । पशुपरमणीभिः

गृहीत्वा गोविन्दं जलधिहृदयानन्दन ! सखे !
सुखेन श्रीवृन्दावनपरिसरे नन्दतु भवान्।
कथं वा ते गोष्ठं भवतु दयितं हन्त बलवान्
यदेतस्मिन् वेणोर्जयति चिरसौभाग्यमहिमा ॥ १२६ ॥

इति प्रेमोद्गारप्रभवमनुनीय क्रमवशात्
वरीवारान् भ्रातर्नियमयति चानूरमथने।
पुनः कोपोद्भिन्नप्रणयचटुलं तस्य निकटे
कथामाचक्षीथा दशभिरवतारैर्विलसिताम् ॥ १२७ ॥

गोपाङ्गनाभिः परिचयं न भजसे न धारयसि। तथा राधायाः गुणानां यो गरिमा गौरवं तस्य गन्धोऽपि न सतीनामिव इत्यर्थः। तथापि निःसम्बन्धेऽपीत्यर्थः अहं त्वां हृदयनिहितं मनोगतं दोहदम् अभिलाषं याचे प्रार्थये। हि यतः अवदाता विशुद्धा प्रकृतिर्येषां तादृशाः जनाः क्षान्ते विपन्ने जने प्रणयं दयामिति भावः वहन्ते कुर्वन्तीति यावत्। मधुपस्य च स्वच्छत्वात् अवदातप्रकृतित्वमिति बोध्यम्। अर्थान्तरन्यासः ॥ १२५ ॥

गृहीत्वेति। हे जलधिहृदयानन्दन ! जलधिजातत्वादिति भावः, हे सखे ! भवान् गोविन्दं गृहीत्वा सुखेन श्रीवृन्दावनपरिसरे नन्दतु आनन्दमनुभवतु। यदि वदसि गोष्ठं मे प्रियं किं यत् तस्मात् गच्छामीत्याशङ्क्याह कथमिति, गोष्ठं कथं वा ते तव दयितं भवतु ? हर्षे खेदे वा अपितु प्रियमेव भवितेति भावः। यत् यतः एतस्मिन् गोष्ठे बलवान् वेणोः चिरसौभाग्यस्य गरिमा गौरवं जयति सर्वोत्कर्षेण वर्त्तते, तस्मात् मत्कृदुर्वंशीरवस्मरणे तव एतत्समं सुखदं स्थानं नास्तीति प्रतीतिर्भविष्यतीति धिया तवैतत् अतीव प्रियं भविष्यतीति भावः ॥ १२६ ॥

इतीति। हे भ्रातः ! इतीत्थं प्रेम्णः प्रणयस्य उद्गारः प्रकटनं प्रभवः हेतुर्यस्मिन् तद् यथा तथा चानूरमथने कृष्णे नियमयति

ग्रहीतुं त्वां प्रेमामिषपरिवृतं चित्तवडिशं
महामीनं क्षिप्रं व्यधित रसपूरे मम सखी ।
विवेकाख्यं छित्त्वा गुणमथ तदग्रासि भवता
हताशेयं किं वा शिव शिव ! विधातुं प्रभवति ॥१२८॥

वराकीयं दृष्ट्वा सुभग ! वपुषो विभ्रमभरं
तवाभ्यर्णं भेजे परमकुतुकोल्लासितमतिः ।
तिरोधाय स्वाङ्गं प्रकटयसि यत्त्वं कठिनतां
तदेतत् किं न स्यात् तव कमठमूर्त्तेः समुचितम् ॥१२९॥

प्रवर्त्तिते सति क्रमवशात् क्रमेण परीवारान् परिजनान् लब्ध्वेति भावः अनुनीय तोषयित्वा पुनस्तस्य चानूरमथनस्य निकटे कोपेन उद्भिन्नः प्रकटितः यः प्रणयः तेन चटुलं स्फुटं यथा तथा दशभिरवतारैः मीनकूर्म्मादिभिः विलसितां विजृम्भितां कथाम् आचक्षीथाः कथय ॥ १२७ ॥

ग्रहीतुमिति । मम सखी महामीनं त्वां ग्रहीतुं धर्त्तुं रसपूरे रागप्रवाहे प्रेम एव आमिषं मांसादिरूपं तेन परिवृतम् आवृतं चित्तवडिशं मनोरूपं वडिशं क्षिप्रं सत्वरं व्यधित निहितवती निक्षिप्तवतीत्यर्थः । अथ अनन्तरं वडिशक्षेपपश्चात् परमित्यर्थः भवता विवेकाख्यं गुणं सूत्रं छित्त्वा तत् वडिशम् अग्रासि कवलितम् । शिव शिवेति खेदे, हताशा इयं मम सखी किं वा अतःपरमिति भावः विधातुं कर्त्तुं प्रभवति शक्नोति ? न किमपीत्यर्थः ॥ १२८ ॥

वराकीति । हे सुभग ! इयं वराकी तपस्विनी अनुकम्पार्हेति भावः वपुषः शरीरस्य विभ्रमभरं विलासातिशयं दृष्ट्वा परमेण महता कुतुकेन उल्लासिता मतिः यस्याः तथाभूता सती तव अभ्यर्णं सान्निध्यं भेजे सिषेवे । किन्तु त्वं स्वाङ्गं स्वं शरीरं तिरोधाय गोपायित्वा यत् कठिनतां प्रकटयसि, तत् एतत् कमठमूर्त्तेः तव समुचितं सम्यक् उचितं किं न स्यात् अपि तु स्यादेवेत्यर्थः ॥ १२९ ॥

सदा कंसाराते ! स्फुरति चिरमद्यापि भवतः
स्फुटं क्रोडाकारे वपुषि निविड़प्रेमलहरी ।
यतः सा सैरिन्ध्री मलयरुहपङ्कप्रणयिनी
त्वया क्रोड़ीचक्रे परमरभसादात्मदयिता ॥ १२० ॥
चिरादन्तर्भूता नरहरिमयी मूर्त्तिरभित-
स्तदीयो व्यापारस्तव हि न ययौ विस्मृतिपथम् ।
विनीतप्रह्लादस्त्वमिह परमक्रूरचरित-
प्रयुक्तो यद्भूयः परहृदयभेदं जनयसि ॥ १२१ ॥
यदात्मानं दर्पादगणितगुरुर्वामन ! मुदा

सदेति । हे कंसाराते ! अद्यापि भवतः क्रोड़ाकारे वराहरूपे वपुषि निविड़ा घना प्रेमलहरी सदा सततं चिरं व्याप्य स्फुटं सुव्यक्तं यथा तथा स्फुरति राजते, यतः त्वया मलयरुहपङ्कप्रणयिनी चन्दनानुरागा सा सैरिन्ध्री नारी पृथिवीत्यर्थः । परमरभसात् परमहर्षात् आत्मनः स्वस्य दयिता प्रणयिनी कान्तेति भावः क्रोड़ीचक्रे क्रोड़े कृता ॥१२०॥

चिरादिति । नरहरिमयी नृसिंहरूपा मूर्त्तिः चिरात् अन्तर्भूता मनसि मग्ना तवेति शेषः, हि यतः तदीयः नरहरिसम्बन्धीत्यर्थः व्यापारः क्रिया तव विस्मृतिपथं न ययौ । तत् यतः विनीतः सान्त्वितः प्रह्लादः येन तथोक्तः पक्षे विनीतः अपनीतः प्रह्लादः प्रकृष्टानन्दः अस्माकमिति भावः येन तादृशः त्वम् इह संसारे परम् अत्यर्थम् अक्रूरम् अनिष्ठुरं यत् चरितं सदयचरितमित्यर्थः तेन प्रयुक्तः व्यापारितः तद्वश इति यावत् प्रह्लादं प्रतीति भावः । पक्षे परमेण क्रूरेण निष्ठुरेण चरितेन अथवा परं केवलम् अक्रूरस्य चरितेन दुराचरणेन प्रयुक्तः सन् भूयः पुनः पूर्व्वमसुरराजभेदस्य कृतत्वादिति भावः परेषां माहशानामिति भावः हृदयभेदं हृद्विदारणं जनयसि करोषीत्यर्थः ॥ १२१ ॥

यदिति । हे वामन ! प्रियसखी कवितया सौन्दर्यातिशय-

मनोवाच्यं नाथ्यं त्वयि बलितया कल्पितवती।
प्रपेदे तस्येदं फलमुचितमेव प्रियसखी
विदूरे यत् क्षिप्ता व्यसनकुलपाशैर्निगडिता ॥ १३२ ॥

इयं नाथ! क्रूरा भृगुपतनमाकांक्षति ततो
यदस्यां काठिन्यं तव समुचितं तद् भृगुपतेः।
इयं ते दुर्बोधाकृतिरथ भवद्विस्मृतिपथं
यतो यातः साक्षाद् गुरुरपि स नन्दीश्वरपतिः ॥१३३॥

रूपवलयावित्वेन पक्षे बलिर्विरोचनसुतोऽसुरराजः तत्सेवा भक्तावत-
ताभिरुत्वेन वा हेतुना इयतैव अहङ्कारात् कल्पिताः गुरवः बृहस्पत्यादयः
यया तथाभूता पक्षे कल्पितः गुरुः असुराचार्य्यः शुक्रः येन
तथोक्तः। पुरा शुक्रेणोक्तम्, असुरराज! अयं कपटवामनाय
त्रिपदां भूमिं प्रार्थितां मा प्रयच्छेति, तां वचनं तदनपेक्षिता वामनाय
त्रिलोकीं दत्त्वा कृतघ्नः पातालमगमदिति पुराणम्। मुदा
आनन्देन आत्मानं मन एव वाच्यं यस्य तादृशे त्वयि यत् नाथ्यं कल्पित-
वती, तस्य इदम् उचितमेव फलं प्रपेदे प्राप। यत् यस्मात् व्यसन-
कुलपाशैः विपत्समूहरूपैः पाशैः रज्जुभिः निगडिता संयता विदूरे
क्षिप्ता पातिता त्वयेति शेषः॥ १३२॥

इयमिति। हे नाथ! इयं क्रूरा निष्ठुरा कठिनहृदयेति
भावः भृगुपतनं भृगोः पर्वतपतनस्थानात्, प्रपातस्त्वतटो भृगुरित्यमरः।
पतनम् आकाङ्क्षति इच्छति, ततः कारणात् अस्यां यत् काठिन्यं
नैष्ठुर्यं त्वदप्राप्तिजनितमिति भावः तत् भृगुपतेः परशुरामस्य तव
समुचितम्। इयं ते तव आकृतिः दुर्बोधा अयोग्यस्त्वेत्यर्थः, अथेति
पादपूरणार्थमव्ययम्। यतः आकृतेः सः गुरुरपि महानपि नन्दी-
श्वरपतिः मधुरः साक्षात् स्वयं भवतः परमात्मस्वरूपस्येति भावः
विस्मृतिपथं विस्मरणं यातः प्राप्तः। मोहयेयं भवन्तं दृष्ट्वा हरः

न रागं सर्वज्ञ ! क्वचिदपि विधत्से नरपतिं
मुहुर्दृष्टिं द्रोहं कलयति बलादिष्टविषये ।
चिरं ध्यानासक्ता निवसति सदासौ गतरति-
स्तथाप्यस्यां हंहो सदयहृदयस्त्वं न द्रवसे ॥ १२६ ॥

परिक्लेशक्लेच्छान् समदमधुपालीमधुरया
निकृन्तन् नेत्रान्तप्रणयरचनाखड्गलतया ।
त्वमासन्नः कल्किन्निह च तुरगोपाहितरुचिः
सदेशं कुर्वीथाः परिमुदितधोराधिकमिदम् ॥ १२७ ॥

राधाम्, अतः शरदः शरत्कालस्य आकाशवर्णिताम् आकाशसदृशीं स्वच्छामिति भावः कान्तिं वपुषि शरीरे वितन्वानः विस्तारयन् त्वम् इदं वृन्दावनं किं कथं न भजसि नाश्रयसि ? ॥ १२५ ॥

नेति । हे सर्वज्ञ बुद्ध ! असौ मत्सखी क्वचिदपि विषये रागम् अनुरागम् आसक्तिमिति यावत् न विधत्ते न करोति, नरपतिं राजानं मुहुः पुनःपुनः दृष्टिं नाभिलषतीति भावः, इष्टविषये इष्टसाधनाय बलात् द्रोहम् अनिष्टोत्पादनाचरणमिति यावत् कलयति करोति त्वत्तोऽन्यस्य इष्टस्याभावादिति भावः, गतरतिः सन्तोषरहिता चिरं ध्यानासक्ता निवसति, तथापि सदयहृदयः त्वम् अस्यां मत्सख्यां न द्रवसे नानुकम्पसे इत्यहो आश्चर्यम् । बुद्धोऽपि क्वचिदपि विषये रागम् आसक्तिमिति यावत् न विधत्ते न करोति, सर्वत्र समदर्शित्वादिति भावः, नरपतिं मुहुः दृष्टिं निन्दति विषयादिरतत्वादिति भावः, इष्टविषये बलात् द्रोहं कलयति करोति तस्य इष्टानिष्टोभयराहित्यादिति भावः, सदा गतरतिः सन् चिरं ध्यानासक्तः तिष्ठतीति द्रष्टव्यम् ॥ १२६ ॥

परिक्लेशक्लेच्छानिति । हे कल्किन् ! इह वृन्दावने संसारे च समदा मदमत्ता या मधुपाली भ्रमरपङ्क्तिः तद्वत् मधुरा मनोहरा तया

इति प्रेमोद्गाढस्खपुटितवचोभङ्गिरखिलं
त्वमावेद्य क्लिद्यन्मुखपरिसरो लोचनजलैः ।
ततो गोविन्दस्य प्रतिचरणमाध्वीकपदवीम्
उपासीनो दृग्भ्यां क्षणमवदधीथाः खगपते ! ॥१२८॥

नेत्रान्तेषु नेत्रप्रान्तेषु या प्रणयरचना प्रेमस्फुरणं या वक्रगतता इव तया नेत्रविलासेन प्रेमरूपासिना अस्माकं परिक्लेशाः सन्तापा एव म्लेच्छाः तान् निकृन्तन् नाशयन् पक्षे परितः क्लेशदायिनो ये म्लेच्छाः तान् नेत्रान्तप्रणयरचना इव वक्रता या खड्गलता असिलता तया खण्डयन् निकृन्तन् तथा चतुरेषु गोपेषु उपाहिता निहिता रुचिरनुरागो येन तथोक्तः पक्षे च इति पृथक्पदं, तुरगेण अश्वेन रेवन्तेनेति भावः उपाहिता जनिता आरोहणेनेति भावः रुचिः कान्तिर्यस्य तथोक्तः अश्वारूढः सन्नित्यर्थः, त्वम् यादवः उर्व्यास्थितः अवतीर्णश्च इमं स्वदेशं गोकुलम् आर्य्यदेशञ्च परिरक्षिता प्रहृष्टा धीर्यस्याः तथाभूता राधिका यत्र तादृशं पक्षे परिरक्षिताः प्रहृष्टाः धीराः साधवः अधिकाः यत्र तादृशं कुर्वीथाः कुरु म्लेच्छलक्षणञ्च । गोमांसभक्षको यस्तु विरुद्धं बहुभाषते । सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥ १२७ ॥

इतीति । हे खगपते ! पक्षिराज हंस ! त्वम् इतीत्थं प्रेमणा प्रणयेन उद्गाढा पूर्णा स्खपुटिता समविषमभावापन्ना वचसां भङ्गिः यस्य तथाभूतः, यत्र मृदुना प्रस्तोतव्यं तत्र तथैव, यत्र औद्धत्येन प्रस्तोतव्यं तत्र तथैव प्रेमपूर्णवाग्भङ्गिमानिति भावः, अखिलं समस्तं लोचनजलैः नयनवारिभिः क्लिद्यन् आर्द्रीभवन् मुखस्य परिसरः आयतनं यस्य तथाभूतः सन् आवेद्य निवेद्य ततः अनन्तरं निवेदनात् परमित्यर्थः गोविन्दस्य कृष्णस्य चरणयोः माध्वीकपदवीं मधुमयीं पद्धतिं प्रति दृग्भ्यां नयनाभ्याम् उपासीनः चरणयोरर्पितनेत्र इति भावः क्षणम् अल्पकालम् अवदधीथाः सावधानं तिष्ठेरित्यर्थः प्रतिवचनं प्रार्थयेति भावः ॥ १२८ ॥

प्रणेतव्यो दृष्टेरनुभवपथं नन्दतनयो
विधेया गोपीनां स्मरपरिहतानामुपकृतिः।
इयं यामैर्गम्या चतुर! मथुरापि त्रिचतुरै-
रिति द्वैधं गन्तः कलय कलहंसीकुलपते! ॥ १३९ ॥
अपूर्वा यस्यान्तर्विलसति मुदा सारसरुचि-
र्विवेक्तुं शक्नोति सपदि मिलिते येन पयसी।
कथङ्कारं युक्तो भवतु भवतस्तस्य कृतिनो
विलम्बः कादम्बीरमण! मथुरासङ्गमविधौ ॥ १४०
प्रपन्नः प्रेमाणं भगवति सदा भागवतभाक्
पराचीनो जन्मावधि भवरसाद्भक्तिमधुरः।

प्रणेतव्य इति। हे चतुरः कलहंसीकुलपते! नन्दतनयः कृष्णः दृष्टेरनुभवपथं प्रणेतव्यः प्रकर्षेण प्रापयितव्यः द्रष्टव्य इति यावत्, स्मरपरिहतानां कामार्त्तानां गोपीनाम् उपकृतिः उपकारः विधेया कार्या। इयं मथुरापि त्रिचतुरैः यामैः प्रहरैः न तु बहुभिर्दिनैरिति भावः, गम्या प्राप्या नातिप्रवासस्तत्र गमने इति भावः। इतीत्थं विचार्येति शेषः अन्तः मनसि द्वैधं गच्छामि वा न वेति संशयं न कलय न कुरु ॥ १३९ ॥

अपूर्वेति। हे कादम्बीरमण हंसीपते! यस्य तव अन्तः मनसि मुदा हर्षेण अपूर्वा अद्भुता सारसा सरोवरभिमजिनी या सा प्रसिद्धा रसरुचिः अनुरागवासना विलसति स्फुरति, येन त्वया सपदि तत्क्षणा मिलिते पयसी जलक्षीरे इत्यर्थः विवेक्तुं पृथक् कर्तुं शक्यते, तस्य कृतिनः कार्यकुशलस्य भवतः मथुरासङ्गमविधौ मथुरागमनविषये विलम्बः कथङ्कारं युक्तः उचितः भवतु? नैवोचित इत्यर्थः ॥ १४० ॥

प्रपन्न इति। भगवति कृष्णे प्रेमाणं प्रपन्नः प्रेमवानित्यर्थः

चिरं कोऽपि श्रीमान् जयति विदितः साक्षरतया
धुरीणो धीराणामभिधरणि वैयासकिरिव ॥ १४१ ॥
रसानामाधारैरपरिचितदोषः सहृदयै-
र्मुरारातिक्रीडाविविधघटनारूपसहितः ।
प्रबन्धोऽयं बन्धोरखिलजगतां तस्य सरसां
प्रभोरन्तः सान्द्रां प्रमदलहरीं पल्लवयतु ॥ १४२ ॥
इति श्रीरूपगोस्वामिविरचितं हंसदूताख्यं काव्यं समाप्तम् ।

---

# पदाङ्कदूतः ।

---

गोपीभर्तुर्विरहविधुरा काचिदिन्दीवराक्षी
उन्मत्तेव स्खलितकबरी निःश्वसन्ती विशालम् ।

यद्वा भागवतभाक् भगवद्भक्तिभागित्यर्थः जन्मावधि आजन्म भवरसात् संसारानुरागात् पराचीनः पराङ्मुखः भक्तिमधुरः अतीवभक्तः साक्षरतया सद्वंशीयतया विदितः परिचितः वैयासकिरिव व्यास-तनय शुकदेव इव धीराणां धुरीणः अग्रणीः कोऽपि श्रीमान् अभि-धरणि धरण्यां जयति सर्वोत्कर्षेण वर्त्तते ॥ १४१ ॥

रसानामिति । रसानाम् आधारैः रसिकैरित्यर्थः सहृदयैः अपरिचितः अविदितः दोषः यत्र तथोक्तः, मुरारातेः क्रीड़ासु या विविधा घना घटना तस्याः रूपेण सहितः युक्तः अयं प्रबन्धः अन्यः अखिलजगतां बन्धोः तस्य प्रभोः कृष्णस्य अन्तः मनसि सान्द्रां घनां सरसां चातुरीमां प्रमदलहरीं महर्षतरङ्गं पल्लवयतु विस्तारयतु ॥१४२॥

---

गोपीति । गोपीभर्त्तुः कृष्णस्य विरहेण विधुरा व्याकुला इन्दी-

अत्रैवास्ते मुररिपुरिति भ्रान्तिदूतीसहाया
त्यक्त्वा गेहं झटिति यमुनामञ्जुकुञ्जं जगाम ॥ १ ॥
अप्राप्यैव व्रजपतिसुतं तत्र कालं कियन्तं
मूर्च्छाप्राणप्रियतमसखीसङ्गता सङ्गमय्य ।
तस्योपान्ते कुलिशकमलस्यन्दनाङ्कादियुक्तं
पद्माकारं मुरहरपदस्याथ चिह्नं ददर्श ॥ २ ॥
तस्मिन्नुद्यन्नवजलधरध्वानमाकर्ण्य भूयः
कन्दर्पेण व्यथितहृदयोन्मत्ततुल्या ययाचे ।
प्रज्ञाहीनं वचनरहितं निश्चलं श्रोत्रहीनं
दौत्यं कर्त्तुं मुरहरपदो लक्ष्मणं पक्ष्मलाक्षी ॥ ३ ॥

वराक्षी नीलोत्पलनयना उन्मत्तेव क्षिप्तेव स्खलितकबरी श्लथितवेषा विषादम् आयतं निःश्वसन्ती काचित् गोपीति शेषः अत्रैव वृन्दावने मुररिपुः आस्ते तिष्ठति इति भ्रान्तिर्भ्रम एव दूती सहायः यस्याः तथाभूता सती गेहं त्यक्त्वा झटिति शीघ्रं यमुनायाः मञ्जु मनोहरं कुञ्जं जगाम । अस्मिन् प्रबन्धे मन्दाक्रान्तावृत्तम् । मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ गौ ययुग्ममिति तल्लक्षणात् ॥ १ ॥

अप्राप्येति । तत्र कुञ्जे व्रजपतिसुतं कृष्णम् अप्राप्यैव मूर्च्छा एव प्राणानां प्रियतमा या सखी तया सङ्गता मूर्च्छितेति यावत् कियन्तं कालं सङ्गमय्य अतीत्य तस्य कुञ्जस्य उपान्ते कुलिशकमलस्यन्दनाङ्कादियुक्तं वज्रपद्मरथरूपचिह्नादिसहितं पद्माकारं कमलनिभं मुरहरपदः कृष्णचरणस्य चारु मनोहरं चिह्नं ददर्श ॥ २ ॥

तस्मिन्निति । तस्मिन् प्रदेशे उद्यतः उदयमानस्य नवजलधरस्य ध्वानं गर्जितम् आकर्ण्य श्रुत्वा भूयः पुनः अधिकं वा कन्दर्पेण कामेन व्यथितहृदया आर्त्तमनाः अतएव उन्मत्ततुल्या क्षिप्तेव वाष्पाक्ल-वाक्षी नवलोमपूर्णनयना गोपी प्रज्ञाहीनं बुद्धिरहितं वचनरहितं

रम्यं यावन्मुरहरपदे शोभते तावदेव
त्वय्यप्यास्ते कुलिशकमलस्यन्दनाङ्काङ्कुशादि।
गोपीदौत्यप्रकटनभिया सन्निधौ चक्रपाणे-
र्याने धीरप्रमुख! मुखरो नूपुरो नो ग्रहीतः॥ ४॥
युक्तं चैतत् त्वयि मधुपुरीं प्रस्थिते पुण्यशीलाः
कीलालोत्थैः सुरभिकुसुमैरर्चयन्तोऽपि भक्त्या।
पश्यन्तस्त्वां नयनसुभगं साश्रुधाराक्षियुग्मं
यास्यन्त्युच्चैः पुलकिततनुप्रेमधारामुदाराम्॥ ५॥

निश्चलं शोलशीलनम् अचेतनमिति भावः मुरहरपदः कृष्णचरणस्य अच्युतं चिह्नं दौत्यं कर्तुं दौत्यायेत्यर्थः यथाचे प्रार्थितवती॥ ३॥

रम्यमिति। हे धीरप्रमुख! धीरप्रवर! मुरहरपदे कृष्णपदे यावत् रम्यं रमणीयं वस्तु शोभते, त्वयि अपि तावत् समस्तमित्यर्थः कुलिशकमलस्यन्दनाङ्काङ्कुशादि कुलिशं वज्रं कमलं पद्मं स्यन्दनः रथः ते अङ्काश्चिह्नाः अङ्कुशादि च आस्ते तिष्ठति, गोपीनां दौत्यस्य प्रकटनं प्रकाशः तस्मात् या भीः भयं तया हेतुना चक्रपाणेः कृष्णस्य सन्निधौ याने गमने मुखरः वाचालः शब्दन इति यावत् नूपुरः नो गृहीतः त्वयेति शेषः। गोपीनां दौत्यार्थं मया कृष्णसन्निधौ गन्तव्यं तस्य च प्रकाशो मा भूदिति धिया तव नूपुराग्रहणं प्रतीयते इत्याशयः॥४॥

युक्तमिति। एतत् युक्तं, त्वयि मधुपुरीं प्रस्थिते गते सति पुण्यशीलाः जनाः नयनसुभगं सुदर्शनमित्यर्थः त्वां साश्रुधारं साश्रु-धारासहितम् अक्षियुग्मं नयनयुगलं यस्मिन् तद् यथा तथा पश्यन्तः अवलोकयन्तः तथा कीलालोत्थैः जलजैरित्यर्थः सुरभिकुसुमैः सुगन्ध-कमलैरित्यर्थः भक्त्या अर्चयन्तः पूजयन्तः अपिरत्र समुच्चयार्थः। उदारां महतीं पुलकिता रोमाञ्चिता तनुर्यस्यां तथाभूता या प्रेम-धारा प्रेमप्रवाहः ताम् उच्चैरतिशयेन यास्यन्ति प्राप्स्यन्ति॥ ५॥

चेतः प्रस्थापितमथ तया दौत्यकर्मोपयुक्तं
तत्रैवास्ते मुरहरपदद्वन्द्वमासाद्य कृष्णम्।
आकाङ्क्षेयं तनुगुरुतया नैव गन्तुं समर्था
कोऽन्यो गच्छेदिह मधुपुरीं गोपिकानां हिताय॥ ६॥
आगन्तव्यं झटिति मथुरामण्डलाद् गोपकान्ते।
शान्तेति त्वं भव मधुरिपुः प्रस्थितः प्रोच्य चेदम्।
वाक्यं तच्च श्रवणमभवत् तेन मेने कृशाङ्गि!
प्रायः सत्यं मतमिदमहो कारणं कार्य्यमेव॥ ७॥

ननु चेतः प्रस्थाप्यतां कोऽयं मयि यत्न इत्याह, चेत इति। अथ तया सूक्ष्मतया दौत्यकर्मोपयुक्तं दौत्यकर्मणि योग्यमित्यर्थः दौत्यकर्मणः अल्पपरिश्रमादिसाध्यत्वात् स्थूलाङ्गानां तत्रानुपयोगितेति भावः चेतः मनः प्रस्थापितं प्रेषितं यत् तत्रैव मथुरायामेव सुरहरस्य कृष्णस्य पदद्वयम् आसाद्य प्राप्य सुखं कर्त्तव्यविमूढं सत् आस्ते तिष्ठति, तेन दौत्यं न कृतमिति भावः। तर्हि आकाङ्क्षा प्रेष्यतामित्याशङ्क्याह, आकाङ्क्षेति। इयम् आकाङ्क्षा अस्मदभिलाष इति यावत् तनुगुरुतया शरीरगौरवेण आकाङ्क्षाया महत्त्वादिति भावः गन्तुं नैव समर्था शक्ता। अतः गोपिकानां हिताय अन्यः कः मधुपुरीं गच्छेत् वद कथय, अन्यः कोऽपि गमनोपयुक्तो नास्तीति त्वां प्रार्थये इति भावः॥ ६॥

आगन्तव्यमिति। हे गोपकान्ते! झटिति शीघ्रं मथुरामण्डलात् आगन्तव्यं मयेति शेषः, त्वं शान्ता भव इति प्रोच्य कथयित्वा मधुरिपुः कृष्णः प्रस्थितः गतः। इदञ्च तत् वाक्यं श्रूयते अस्मादिति श्रवणम् आकाशं शून्यमित्यर्थः अभवत्, हे कृशाङ्गपादपचिह्न! कारणं कार्य्यमेव इदं मतं प्रायः बाहुल्येन सत्यम् अहो आश्चर्य्यम्। आकाशं शब्दस्य कारणं किन्त्वत्र मधुरिपुवाक्यरूपशब्दस्य आकाशत्वमिति कार्य्यस्य शब्दस्य कारणरूपतेति भावः॥ ७॥

तूर्णं तस्यां गमनमुचितं तेन मे तद्वियोग-
व्याधेः शान्तिस्तव च भविता तत्पुरीस्पर्शपुण्यम् ।
वृन्दारण्याद्भवतु सुकृतं भूरि तेनैव किं स्यात्
नाकाङ्क्षा किं भवति विपुलश्रीमतोऽर्थान्तरेषु ॥ ८ ॥

अक्रूरस्य व्रजकुलवधूप्राणपानोद्यतस्य
प्रीतिर्भूयो भवतु भवतो दर्शनात्तेन किं वा ।
कार्य्यासिद्धिर्भवति यदतो मादृशां दुःखहेतु-
र्नैवौन्नत्यं सकलभुवनप्रार्थनीयं रिपूणाम् ॥ ९ ॥

तूर्णमिति । तस्यां मधुपुर्य्यां तूर्णं शीघ्रं गमनम् उचितं तवेति शेषः, तेन त्वद्गमनेन मे मम तस्य कृष्णस्य वियोगव्याधेः विच्छेदव्यथायाः शान्तिः निवृत्तिः, तव च तस्याः पुर्य्याः स्पर्शेन पुण्यं भविता भविष्यति । ननु वृन्दारण्ये एव मम सुकृतमस्ति तत् कथं तत्र गम्यते इत्यत आह, वृन्दारण्यादिति । वृन्दारण्यात् भूरि प्रभूतं सुकृतं पुण्यं भवतु, तेनैव किम् ? एषा आपत्तिर्न समीचीनेति भावः । तथाहि विपुलश्रीमतः महर्द्धिसम्पन्नस्य जनस्य अर्थान्तरेषु अपरेषु धनेषु किम् आकाङ्क्षा न भवति ? अपितु भवत्येव, तस्मात् अत्र पुण्यसत्त्वेऽपि अपरपुण्यसञ्चयाय तत्र गन्तव्यमिति भावः ॥ ८ ॥

ननु मद्गमने युष्माकं मनोरक्रूरस्य प्रीतिः स्यात् सा तु युष्माकमप्रीतिकरी तदत्र मम गमनं नोचितमित्यत आह, अक्रूरस्येति । भवतः तव दर्शनात् व्रजकुलवधूनां प्राणपाने जीवननाशने उद्यतस्य अक्रूरस्य भूयः अधिकं यथा तथा प्रीतिः भवतु, तेन किं वा, तस्य प्रीतिभवने नास्माकं कापि बाधेति भावः । यत् यस्मात् कार्य्यस्य दौत्यकार्यस्य असिद्धिः अनिष्पत्तिः मादृशां गोपिकानामिति भावः दुःखहेतुः अप्रीतिकारणम्, अहो कष्टम् ! सकलभुवनानां प्रार्थनीयं रिपूणां शत्रूणाम् औन्नत्यं नैव दुःखहेतुरिति पूर्वेणान्वयः । रिपोः

सन्त्येवास्मत्कलुषकारिणः कोटिशो यावदीया-
स्तेऽप्यस्माभिः स्मृतिकरवरेणाद्य ते स्फोटनीयाः।
स्वच्छन्देन व्रज मधुपुरीं को भवेद्वा विरोधी
गोपीभर्तुर्विरहजलधिं गोपकन्यास्तरन्तु ॥ १० ॥
आस्ते नूनं यदुषु मथुरामण्डले चक्रपाणिः
कूजद्भृङ्गैरमलकमलैराकुले गोकुले वा।
तस्मात्तच्छेरतिलघु पुरीं तात्र जन्मावनीवद्
बालक्रीडां रचयति मुहुर्यत्र तत्रानुरागः ॥ ११ ॥

प्रीतिर्भवतु वा न वा तत्र नास्माकं कापि विप्रतिपत्तिः, अस्माकन्तु कार्य्यसिद्धिरेवेष्टेति भावः ॥ ९ ॥

सन्तीति। अस्माकं कलुषकारिणः पापकारिणः दुरदृष्टरूपाः येन कृष्णविच्छेदो जात इति भावः कोटिशः बहव इति यावत् सन्त्येव, तेऽपि कलुषकारिणः स्मृतिकरवरेण तव स्मरणरूपकरस्पर्शेन ते तव अद्य वं छिन्नावनदण्डविशेषैरिति यावत् स्फोटनीया वार-णीयाः ताडनीयाः अस्माभिरिति शेषः, येन तव विघ्नं नाचरन्तीति भावः। तस्मात् स्वच्छन्देन मधुपुरीं व्रज गच्छ, को वा जनः विरोधी गमनप्रतिबन्धी भवेत्? न कोऽपीत्यर्थः। गोपकन्याः गोपी-भर्त्तुः कृष्णस्य विरहजलधिं विच्छेदसागरं तरन्तु पारयन्तु त्वद्गमने-नेति भावः ॥ १० ॥

आस्ते इति। चक्रपाणिः कृष्णः मथुरामण्डले मधुपुर्य्यां यदुषु यादवेषु मध्ये कूजन्तः गुञ्जन्तः भृङ्गाः येषु तादृशैः अमलकमलैः निर्मलपद्मैः आकुले आकीर्णे गोकुले वा नूनं निश्चितम् आस्ते तिष्ठति। तस्मात् अतिलघु अतिशीघ्रं पुरीं मथुरां तत्र गोकुल-मित्यर्थः गच्छेः यायाः। ननु कथं मया मधुपुर्य्यां गन्तव्ये गोकुलं गन्तव्यमित्यत्राह, जन्मावनीवदिति। जन्मावनीवत् जन्मभूमाविव यत्र

आस्तां मध्ये तरणितनया भीषणा भूरिनक्रै-
रावर्त्ताद्यैर्नयनभयदैस्तां तरिष्यस्यवश्यम् ।
संसाराब्धिं तरति सहसा यत् क्षणं चिन्तयित्वा
तस्यासाध्यं भवति किमहो पारयानं तटिन्याः ॥१२॥
दृष्ट्वैव त्वां विदितमधुना पूर्ववत् पद्मनाभं
प्राप्यावश्यं विरहजलधेः पारमासादयिष्ये ।
मोदिष्ये च क्षणमपि हरेरास्यचन्द्रामृतेन
प्रातप्राप्ता सुरभिकुसुमामोदिते मञ्जुकुञ्जे ॥ १३ ॥

बालक्रीड़ां घोषवल्लीनां मुहुः पुनःपुनः रचयति करोति जन इति शेषः, तत्र अनुरागो भवतीति शेषः । तस्मात् मधुपुर्य्यां न तिष्ठति तदा गोकुले तिष्ठत्येवेति तत्र गन्तव्यमिति भावः, उन्मत्तप्रलाप एष इति नात्र दोषः । कृष्णस्य जन्मभूमिर्मथुरा, गोकुलस्य बालक्रीड़ा-स्थानमिति बोध्यम् ॥ ११ ॥

ननु मध्ये यमुना अस्ति, कथं सा मया उत्तार्य्येति यमुनां निरस्यति, आस्तामिति । भूरिभिः प्रभूतैः नक्रैः कुम्भीरादिभिः तथा नयनभयदैः दृष्टिभीषणैः आवर्त्ताद्यैः जलभ्रमादिभिः, स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः । भीषणा भयङ्करी तरणितनया यमुना मध्ये आस्तां तिष्ठतु, तां यमुनाम् अवश्यं तरिष्यसि तरीतुं शक्ष्यसि । यत् त्वां क्षणं चिन्तयित्वा ध्यात्वा संसाराब्धिं संसारसमुद्रं सहसा अनायासेनेत्यर्थः तरति लोक इति शेषः, तस्य तव तटिन्याः नद्याः पारयानं पारगमनं किम् असाध्यं भवति ? अहो आश्चर्य्यं नैव असाध्यं भवतीत्यर्थः ॥ १२ ॥

दृष्ट्वैवेति । त्वां दृष्ट्वैव विदितं ज्ञातं मयेति शेषः, अधुना इदानीं पूर्ववत् पद्मनाभं कृष्णं प्राप्य अवश्यं विरहजलधेः विच्छेदसागरस्य पारम् आसादयिष्ये प्राप्स्यामि । हरेः कृष्णस्य आस्यचन्द्रामृतेन

सम्पर्कात्ते तरणितनयातीरसोपानवृन्दं
राज्ञः पन्थास्त्वमपि सरोजार्चितं पद्मरागैः ।
शोभां यास्यत्यचिरमतुलां स्वीयकाम्यानुरोधाद्
उक्तैरेतैर्मुहुरपि सखे ! तत्र न खेदमेव ॥ १४ ॥
ये वीक्षन्ते सततममुना श्रीपतेरङ्घ्रिपद्मं
मञ्जीराद्यैः कनककलितैर्भूषणैर्भूषितञ्च ।
तेषां च त्वं किमु न भविता लोचनप्रीतिहेतु-
र्व्यक्तैरेतैः कुलिशकमलस्यन्दनाद्यादिचिह्नैः ॥ १५ ॥

सुधाचन्द्रपीयूषेव प्राप्तप्राया यतो यथमपि सुरभिकुसुमैः चार्वोष्ठिते मञ्जु कुञ्जे वनोदरनिकुञ्जे क्रीडिष्ये च आनन्दमनुभविष्यामि च ॥१३॥

सम्पर्कादिति । हे सखे ! तरणितनयायाः यमुनायाः तीरसोपानवृन्दं, राज्ञः पन्थाः राजमार्गः, पद्मरागैः चर्चितं यद् सरोत्वञ्च अचिरं तत्क्षणम् अतुलां अद्भुतां शोभां यास्यति प्राप्स्यति तव शोभनार्थं तद्दर्शाविभिन्नतत्प्रदेशाः शोभनीया भविष्यन्तीति भावः । किन्तु उक्तैः कथितैरेतैः सुदर्शनैर्वस्तुभिरिति यावत् हेतुभिः तत्तद्दर्शनशोभार्थमिति भावः स्वीयकाम्यं हेतुं तस्य अनुरोधात् तत्र तेषु तेषु प्रदेशेषु इत्यर्थः सखे पुनः पुनः नैव खेदं नयात्वे विलम्बसम्भवादिति भावः ॥ १४ ॥

ये इति । अधुना इदानीं ये जनाः कनककलितैः स्वर्णनिर्मितैः मञ्जीराद्यैः भूषितम् अथच तं श्रीपतेः कृष्णस्य अङ्घ्रिपद्मं पादपद्मं सततं वीक्षन्ते पश्यन्ति, तेषाञ्च त्वं व्यक्तैः स्फुटैः एतैः कुलिशकमल-स्यन्दनादिचिह्नैः लोचनयोः नयनयोः प्रीतिहेतुः आनन्दजनकः किमु न भविता ? अपितु भविष्यस्येव । अत्र भवितेति भूधातोर्लुडन्तप्रयोगो बोध्यः ॥ १५ ॥

यस्यासङ्गादलभत तनुं मानुषीं गौतमस्त्री
ध्यानेनैव प्रथितमहिमा श्रीपतिं नारदादिः।
तस्माज्जाते त्वयि मधुरिपोरङ्घ्रिपद्माद्विचित्रः।
किं दीनानामुपरि करुणालिङ्गितो दृष्टिपातः॥ १६॥

एकं चिह्नं हरिपदभवं पन्नगस्योत्तमाङ्गे
तादृक्शोभामपि खगपतेर्निर्भयत्वं चकार।
चिह्नेनान्यत्तरणिरभवद् घोरसंसारसिन्धौ
ध्यातं तादृक् त्वमपि महतां जन्म विश्वोपकृत्यै॥१७॥

यस्येति। यस्य श्रीपतेरासङ्गात् चरणस्पर्शादिति भावः गौतमस्त्री अहल्या मानुषीं तनुं शरीरम् अलभत प्राप। पुरा शाप्याम् अहल्याम् इन्द्रेण भक्तां विज्ञाय त्वं पाषाणमयी भवेति पतिः शशाप। ततस्तयानुनीतश्च यदा रामो दाशरथिस्त्वां चरणेन स्प्रक्ष्यति तदा त्वं शापमुक्ता स्वशरीरं प्राप्स्यसीति प्रसादवाक्यं च। ततश्च भगवदवतारेण रामेण सा चरणस्पर्शेनानुगृहीतेति रामायणम्। नारदादिः महर्षिगण इति शेषः यस्य श्रीपतेः ध्यानेनैव प्रथितमहिमा विख्यातमहिमा आसीदिति शेषः। तस्मात् मधुरिपोरङ्घ्रिपद्मात् पदकमलात् जाते उत्पन्ने त्वयि सति दीनानां दुःखितानाम् उपरि करुणालिङ्गितः दयास्पृष्टः सदय इत्यर्थः दृष्टिपातः तवेति भावः विचित्रः आश्चर्यः किम्? नैवाश्चर्यम् इत्यर्थः। दयामयाङ्घ्रिसम्भूतानां दयावत्त्वमुचितमेवेति भावः॥ १६॥

एकमिति। पन्नगस्य कालियस्य उत्तमाङ्गे शिरसि हरिपदभवम् एकं चिह्नं तादृक्शोभां तादृशीं श्रियं खगपतेः गरुडात् निर्भयत्वञ्चापि चकार। अन्यत् हरिपदभवं चिह्नमित्यर्थः गयासुरशिरसि निहितमिति भावः घोरसंसारसिन्धौ तरणिः अभवत्। त्वमपि चिह्नं ध्यातं चिन्तितं सत् तादृक् जगतामुपकारकमिति

उत्फुल्लानामतिसुरभयः सौरभैरम्बुजानाम्
अम्भोलेशैस्तरणिदुहितुः शीतलैः शीतलाश्च ।
अद्यावश्यं सततगतयः स्वैरमाधूतबर्हा
वर्त्तिष्यन्ते भवदभिमतप्रीतये लाञ्छनाथ ! ॥ १८ ॥

त्यक्तव्येयं चिरपरिचिता जन्मभूमीति बुद्ध्वा
मा खिद्यस्व त्रिभुवनजनत्राणहेतो ! क्रमाङ्क ! ।
किं न त्याज्यं भवति महतां चेत् परस्योपकारो
वाराणस्या मुनिरपि गतो दक्षिणामाशमगस्त्यः ॥१९॥

भावः। तथाहि महतां जन्म उत्पत्तिः विश्वेषां जगताम् उपकाराय भवतीति शेषः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १७ ॥

उत्फुल्लानामिति। हे लाञ्छनाथ पदाङ्कप्रवर ! अद्य उत्फुल्लानाम् अम्बुजानां पद्मानां सौरभैः अतिसुरभयः सुगन्धशालिनः तरणिदुहितुः यमुनायाः शीतलैः अम्भोलेशैः जलकणैः शीतलाः आधूताः, कम्पितानि बर्हाणि मयूरपिच्छानि यैः तथोक्ताः, पिच्छबर्हे नपुंसके इत्यमरः। सततगतयः वायवः भवतस्तव अभिमतप्रीतये इष्टसुखाय अवश्यं स्वैरं मन्दं यथा तथा अथवा तव इच्छारूपं यथा तथा वर्त्तिष्यन्ते सञ्चरिष्यन्ति ॥ १८ ॥

त्यक्तव्येति। हे त्रिभुवनजनानां त्राणहेतो ! परित्राणकारण ! हे क्रमाङ्क ! पदाङ्क ! इयं चिरपरिचिता चिराभ्यस्ता जन्मभूमी त्यक्तव्या इति बुद्ध्वा मा खिद्यस्व खेदं मा गच्छ। चेत् यदि परस्य उपकारः भवतीति शेषः तदा महतां जनानां किं वस्तु न त्याज्यं भवति ? सर्वमेव त्याज्यं भवतीत्यर्थः। तथाहि मुनिरगस्त्योऽपि देवैः जगदुपकारार्थं प्रार्थित इति शेषः वाराणस्याः विश्वेश्वरक्षेत्रात् दक्षिणाशां दक्षिणां दिशं गतः। पुरा मेरुस्पर्द्धी-

कर्पूरादेः सलिलमभवत् वैतरण्यम्बुतुल्यं
वाक्यागम्यं नदति कठिनं कोकिलः षट्पदोऽपि।
वृन्दारण्ये किरति गरलं दुःसहं शीतरश्मि-
र्नैतद् वाच्यं सकृदपि सखे! सन्निधौ केशवस्य॥ २०॥

प्रस्थानं ते कुलिशकलनाविश्चितं पण्डिताद्यै-
श्चित्तेऽस्माकं तदपि रमते याहि याहीति वाणी।
अप्रामाण्यं जनयति सदा नन्दसूनोर्वियोगो
व्याप्यज्ञानाद् व्रजकुलभुवां व्यापकस्यापि सिद्धौ॥२१॥

यथा सूर्यपथं प्रतिरुन्धानं विन्ध्याद्रिं वारयितुमशक्ता देवा वाराणसीस्थितं विन्ध्याद्रिगुरुमगस्त्यं विन्ध्योन्नतिवारणाय प्रार्थयामासुः। स तथेति तेषां वचःप्रतिपालनाय वाराणसीं त्यक्त्वा विन्ध्यमुपगम्य, वत्स! यावदहं दक्षिणाशायाः न निवर्त्ते तावत्त्वया न वर्द्धितव्यं, तथा सति मम पुनःप्रत्यागमनेऽविघ्नो भावीति तं प्रणतमुक्त्वा प्रस्थितः। स च गिरिः गुरोराज्ञया अद्यापि तथैवास्ते इति पुराणम्। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ १९॥

कर्पूरादेरिति। हे सखे! वृन्दारण्ये कर्पूरादेः सलिलं कर्पूरादिवासितं जलमित्यर्थः वैतरण्याः यमालयसान्निध्यस्थिताया नद्याः अम्बुना जलेन तुल्यं, यमद्वारे महाघोरे तप्ता वैतरणी नदीति पुराणम्। कोकिलः षट्पदः भ्रमरः अपि वाक्यागम्यम् अवाच्यं कठिनं कर्कशं नदति शब्दायते। शीतरश्मिश्चन्द्रः दुःसहं गरलं विषं किरति वर्षति। एतत् सर्वं केशवस्य कृष्णस्य सन्निधौ [illegible] न वाच्यं न वक्तव्यम्। एतत्कथने क्लेशजनकं स्थानमिदं [illegible] बुद्ध्वा तेन पुनर्नागन्तव्यमिति भावः॥ २०॥

प्रस्थानमिति। पण्डिताद्यैः [illegible] कलनात् वज्र-धारणात् ते तव प्रस्थानं [illegible] निश्चितम्।

उक्तप्रायं तरणितनयानागयोस्तत्कथायाम्
आस्ते को वा जगति भवतां भीतिहेतुः क्रमाङ्ग ! ।
किञ्च स्वान्ते क्षणमपि भवत्पङ्कमे याति दूरं
भीतिर्मृत्योरपि किमगनिं लोकरीत्या दधासि ॥२२॥
येनारूढं विषधरशिरो भूरि वक्तव्यमव्यत्
किं वाकारि स्तनगिरिवरारोहणं च श्रुतञ्च ।
उत्पन्नस्य प्रियतमपदा तेन भीतिस्तवास्ते
को वा ब्रूयादिति हि सदृशं कारणेनैव कार्य्यम् ॥२३॥

तदपि तथापि अस्माकं चित्ते याहि याहि इति वाणी वाक् रमते प्रसरतीत्यर्थः । व्याप्यस्य कार्य्यस्य ज्ञानात् व्यापकस्य कारणस्य सिद्धा-वपि नन्दसूनोः कृष्णस्य वियोगः व्रजकुलभुवां व्रजाङ्गनानां सदा अप्रामाण्यं जनयति अप्रमाणमेतत् यत् व्याप्यज्ञानात् व्यापकस्य सिद्धिरिति बोधयतीति भावः । यथा पर्वतो वह्निमान् धूमादित्यत्र धूमरूपकार्य्यज्ञानेन पर्वते वह्नेरनुमानं तथा कुलिशधारणरूपकार्य्येण मथुरागमनरूपकारणस्य अनुमाने सिद्धेऽपि अस्माकं विरहोत्कण्ठा त्वां पुनःपुनर्गमनाय व्यापारयतीति भावः ॥ २१ ॥

उक्तप्रायमिति । तरणितनयानागयोः यमुनाकालिययोः कथायां पूर्वोक्तायां संसाराब्धिं तरतीति कथायाम् एकं चिह्नं हरि-पदभवमिति कथायाञ्च तत् तव निर्भयत्वमिति भावः उक्तप्रायं प्राये-णोक्तम् । हे क्रमाङ्ग ! जगति को वा भवतां भीतिहेतुः भयकार-णम् आस्ते ? न कोऽपीत्यर्थः । किञ्च स्वान्ते मनसि क्षणमपि भवत्पङ्कमे तव कारणे कृते इति शेषः मृत्योरपि भीतिः दूरं याति, अतः लोकरीत्या लोकाचारवशात् अगनिं कुलिशं किं दधासि धारयसि ? ॥ २२ ॥

येनेति । येन प्रियतमस्य पदा चरणेन विषधरस्य कालियस्य शिरः आरूढं, येन वा स्तनौ एव गिरिवरौ तयोरारोहणं पूतनाया

घातं घातं कुलिशसदृशं चिह्नमेतन्न वज्रं
नो चेदेवं जनयति कथं लोचनप्रीतिधाराम् ।
दूरस्थञ्च ग्लपयति मनो निस्वनो यस्य तस्मा-
न्नेत्रप्रीतिप्रदमिति वचो न श्रुतं क्वापि केन ॥ २४ ॥
आस्ते चैवं नवजलधरो यं विलोक्य प्रमोदान्
नृत्यन्त्युच्चैर्विषधरभुजो निस्वनोऽप्यस्य भीमः ।
मिथ्यैवायं यदवधि मया वीक्षितस्त्वादृशोऽयं
कन्दर्पो मां तदवधि दहत्येव बाणैरसह्यैः ॥ २५ ॥

इति भावः अकारि कृतम् अन्यत् भूरि प्रभूतं वक्तव्यम् अस्तीति शेषः तत् श्रुतञ्च अस्माभिरिति शेषः, तेन प्रियतमपदा ङ्कदर्शनेन जातस्य तव भीतिः भयम् आस्ते इति को वा ब्रूयात् ? न कोऽपि वक्तुं शक्नुयादित्यर्थः । हि यतः कार्य्यं कारणेनैव सदृशं तुल्यं भवतीति शेषः कारणगुणाः कार्य्यगुणमारभन्ते इति न्यायादिति भावः । कारणं कृष्णपदं यदि निर्भयं तदा तत् कार्य्यं पदचिह्नमपि तथैव निर्भयमिति तव न भयस्यावकाश इति समुदायार्थः ॥ २३ ॥

घातमिति । एतत् चिह्नं कुलिशसदृशं वज्रतुल्यं न वज्रं घातं घातं, नो चेत् वज्रञ्चेदित्यर्थः कथं लोचनयोः प्रीतिधारां जनयति ? यस्य वज्रस्य निस्वनः शब्दः दूरस्थञ्च दूरस्थमपि मनः ग्लपयति ग्लानिं नयति, तदेतत् नेत्रयोः प्रीतिप्रदं स्यात् इति वचः क्वापि कुत्रापि केन श्रुतम् ? न केनापीत्यर्थः ॥ २४ ॥

ननु निस्वनस्य भयङ्करत्वेऽपि मेघोदये मयूराणां हर्षात् नृत्यं प्रसिद्धं तत् कथं मम कुलिशधारणेऽपि न प्रीतिदायकत्वमित्यत्राह, आस्ते इति । एवं भीषण इति भावः नवजलधरः आस्ते च तिष्ठति च, यं नवजलधरं विलोक्य दृष्ट्वा विषधरभुजः पन्नगाशिनः मयूरा इत्यर्थः प्रमोदात् हर्षात् उच्चैरतिशयेन नृत्यन्ति, किन्तु अस्य निस्व॰

क्रोशस्यान्ते चरणयुगलं चालयन् सूरजायां
याया: किञ्च क्षणमपि तरोर्मूलमासाद्य तिष्ठे: ।
उत्कृष्टं यज्जनयति पदं सेवकानां जनानां
पद्भ्यां हीनं तदिति जगतां प्रत्यय: कूर्मलोम ॥ २६ ॥
आरुह्यास्मत्‌हृदयमथवा गच्छ तुङ्गं तुरङ्गं
सौरं तेज: सजलजलदच्छायया वारणीयम् ।
दृष्टिं नैव त्वदुपरि करिष्यत्ययं चण्डरश्मि:
खेदाशङ्की सरसिजसखस्त्वद्धृताभीरुहस्य ॥ २७ ॥

सोऽपि भीम: भयावह: । अयं प्रवाद इति शेष: मिथ्यैव अलीक एव, यत: यदवधि मया तादृश: नवजलधर: अयं मेघ इति शेष: वीक्षित: दृष्ट:, तदवधि कन्दर्प: मां असह्यै: दु:सहै: बाणै: शरैरित्यर्थ: दहति एव ज्वालयत्येव । तस्मात्तद्दर्शने मयूराणां नृत्यप्रवादो व्यर्थेति भाव: ॥ २५ ॥

क्रोशस्येति । क्रोशस्य अन्ते अवसाने क्रोशमिते मार्गे गते इति भाव: सूरजायां यमुनायां चरणयुगलं क्षालयन् याया गच्छे:, क्रोशगमनात् चरणक्षालनस्य शास्त्रविद्भिरुपदिष्टत्वादिति भाव: । किञ्च तरोर्मूलं वृक्षतलम् आसाद्य आश्रित्य क्षणमपि अल्पकालमपि तिष्ठे: विश्रामार्थं स्थितिं कुर्वित्यर्थ: । ननु पदाङ्कोऽहं कथं मे चरण: येनाहं तत्र गमिष्यामीत्याशङ्क्याह, उत्कृष्टमिति । यत् पदचिह्नं सेवकानां जनानाम् उत्कृष्टं पदं जनयति ददातीत्यर्थ:, तत् पद्भ्यां हीनम् इति जगतां प्रत्यय: विश्वास: कूर्मलोम, कूर्मस्य लोम यथा अविश्वसनीयम् असम्भवात्, तथैष: प्रत्यय इति भाव: ॥ २६ ॥

आरुह्येति । अथवा पक्षान्तरे पादगमनाभावपक्षे इति भाव: तुङ्गम् उन्नतं तुरङ्गम् अश्वभूतमिति भाव: अस्माकं हृदयं मन: आरुह्य गच्छ । सजलस्य जलदस्य छायया सौरं तेज: सूर्यातप: वारणीयं

एतेन क्वापि मधुपुरगतिः केन मे पङ्किलोऽभूत्
पन्था नन्दव्रजकुलभुवां लोचनाम्भोभिरच्चैः।
नो वा शुष्को हरिविरहजोत्तापितोऽपीन्दुवक्त्रे!
नित्योत्पत्तेर्नयनपयसां वाक्यमेतन्निरस्तम्॥ २८॥
अङ्गिस्ताभिस्तरणितनया पीनतां नैव लब्धा
गोपीभर्तुर्विरहदहनैः प्रत्युत क्षीणतां च।

परिहरणीयं, सजलजलदोदयेन तव सूर्य्यातपजः क्लेशो न भवितेति भावः। अयं चण्डरश्मिः सूर्य्यः सरसिजसख्यः कमलबन्धुः अतएव त्वया धृतं यत् अम्भोरुहं कमलं तस्य खेदाशङ्की क्लेशं शङ्कमान इत्यर्थः तव उपरि दृष्टिम् अति अत्यर्थं नैव करिष्यति। अतो दृष्ट्युत्पातोऽपि ते न सम्भवतीति भावः। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति शास्त्रेण सूर्य्यस्य वृष्ट्यधिपतित्वमुक्तमिति बोध्यम्॥ २७॥

एतेनेति। मधुपुरे गतिः केन प्रकारेणेति शेषः मे मम स्यात् भवेत्, यतः नन्दव्रजस्य कुलभुवां कुलकामिनीनाम् उच्चैरतिशायिभिः लोचनाम्भोभिः नयनजलैः पन्थाः पङ्किलः अभूत्। अतः पङ्कमये पथि कथं गन्तव्यमिति भावः। ननु हरिविरहेण उत्तापात् पथः शुष्कत्वं जातं तत् कथं न गन्तव्यमित्यत्राह, नो इति। हे इन्दुवक्त्रे! चन्द्रवदने! हरिविरहेण उत्तापितोऽपि पन्था इति शेषः नयनपयसां नित्योत्पत्तेः हेतोः नो वा नैव शुष्कः, अतः कथं गम्यते इति भावः। एतेन वक्ष्यमाणवचसा एतत् वाक्यं निरस्तं निराकृतम्॥ २८॥

अङ्गिरिति। तरणितनया यमुना ताभिरङ्गिः नयनसलिलैरिति भावः पीनतां स्थूलत्वं नैव लब्धा नैव प्राप्ता, प्रत्युत वैपरीत्ये गोपीभर्तुः कृष्णस्य विरहदहनैः विच्छेदानलैः क्षीणतां कार्श्यञ्च

नो चेदेवं सलिलतरसा गोकुले मास्तु किन्तु
प्रस्थानं ते किल मधुपुरे निर्विरोधं क्रमाङ्क ! ॥ २९ ॥
क्षीणैवास्ते तरणितनया वस्तुतस्तद्वियोगे
का वा पीना भवति वचनं कस्यचिन्नेति युक्तम् ।
गोपस्त्रीणां नयनसलिलैर्वर्द्धते सा विशीर्णा
अन्ये नन्दव्रजपुरजना नूनमत्यर्थकं यत् ॥ ३० ॥
सामग्री चेन्न फलविरहो व्याप्तिरेवेति तत्त्वं
तत्त्वं गोपीनयनसलिले केवलेऽप्यस्ति नैवम् ।
उत्कण्ठायां हृदि न कुरुते कारणानां सहस्रं
लक्षं वापि क्षणमपि यतः पीवरत्वं जनानाम् ॥ ३१ ॥

अस्त्विति शेषः । एवं मदुक्तमिति भावः नो चेत् न सत्यं यदीत्यर्थः तदा सलिलतरसा नयनवारिवेगेन गोकुले मा अस्तु ते गमनमिति शेषः, गोकुलस्यास्माकं लोचनवारिभिः पङ्किलत्वात् तेषाञ्च नित्योत्पत्ते-रशुष्कत्वाच्चेति भावः । किन्तु, हे क्रमाङ्क ! पदाङ्क ! मधुपुरे ते तव प्रस्थानं गमनं निर्विरोधं किल निर्विघ्नमेव तत्पथस्यापङ्किलत्वादिति भावः ॥ २९ ॥

क्षीणेति । वस्तुतः तत्त्वतः तस्य कृष्णस्य वियोगे तरणितनया यमुना क्षीणैव आस्ते, का वा पीना भवति ? नैव कापीत्यर्थः । गोपस्त्रीणां नयनसलिलैः सा यमुना वर्द्धते वृद्धिं गच्छति, अन्ये नन्दव्रजपुरजनाः नूनं निश्चितम् अत्यर्थकम् अत्यन्तं विशीर्णाः क्षीणा इति यत् कस्यचित् वचनं तत् न युक्तं नोचितम् ॥ ३० ॥

सामग्रीति । चेत् यदि सामग्री कारणकूटः विद्यते इति शेषः, तदा फलस्य कार्य्यस्य विरहः असद्भावः न भवतीति शेषः इति व्याप्तिरेव सिद्धान्त एव तत्त्वं स्थिरेति यावत् । केवलेऽपि गोपीनां

तस्मात्तस्या विरतिरथवा हेतुरन्यादृशोऽस्या
न स्यादेव क्वचिदपि फलं कारणासन्निधाने।
नष्टे हेतौ प्रभवति कुतः कार्य्यमित्यप्ययुक्तं
यागेऽदृष्टादिव जनकता द्वारतस्तस्य सिद्धा॥ ३२॥
क्लेशोऽस्माकं मलयपवनैर्मूर्च्छया चोपकार-
स्तस्मात् सर्वं किल विधिकृतं कारणं कारणं न।
अम्भोजानाममृतकिरणज्योतिषा ग्लानिरुच्चै-
रुग्रज्योतिःकिरणमिलनाज्जायते च प्रकाशः॥ ३३॥

नयनसलिले तत्त्वं तस्य कारणकूटस्य भावः अस्ति, एवं मा न भवतीति शेषः, यतः हृदि उत्कण्ठायां सत्यामिति शेषः कारणानां बहुत्वं बत्वं वापि चरणमपि जनानां पावरत्वं पानत्वं न कुरुते न जनयति, तथाच गोपीनां नयनसलिलैः पीवरत्वसम्भावनायामपि यमुनायाः कृष्णविरहोत्कण्ठायाः सत्त्वात् क्षीणत्वमिति भावः॥ ३१॥

तस्मादिति। तस्मात् तस्याः उत्कण्ठायाः विरतिः विरामः अभावः अथवा अस्याः उत्कण्ठायाः अन्यादृशः अन्यरूपः हेतुः पीनत्वे इति भावः न स्यादेव नास्त्येव, कारणस्य असन्निधाने असद्भावे क्वचिदपि फलं भवति? न भवत्येव। नष्टे हेतौ कुतः कार्य्यं प्रभवति इत्यपि अयुक्तं नैव कार्य्यं प्रभवतीति भावः। यागे नष्टेऽपीति शेषः अदृष्टादिव यागजन्यशुभादृष्टादेव तस्य यागस्य जनकता फलोत्पादककारणत्वं द्वारतः परम्परयेत्यर्थः सिद्धा निष्पन्ना॥ ३२॥

क्लेश इति। मलयपवनैः अस्माकं क्लेशः, मूर्च्छया मोहेन च उपकारः भवतीति शेषः। तस्मात् सर्वं वस्तु विधिकृतं दैवाधीनम् अतः कारणं कारणं नियतफलोत्पादकं न। तथाहि अम्भोजानां कमलानाम् अमृतकिरणस्य चन्द्रस्य ज्योतिषा आलोकेन उच्चैर्भृशं

स्त्रीभिः प्रेम प्रियतमकृतं नैव शक्यं विहातुं
याचेऽतस्त्वां किल मधुपुरीं चङ्क्रमाय क्रमाङ्क ! ।
दग्धेनापि व्यथितहृदया पञ्चबाणेन बाणैः
क्रूरैस्त्वन्मदनरमणी तत्कृते रोदिति स्म ॥ २४ ॥

आस्ते चित्ते किल कलयितुं वासना शम्बरारे-
रेकैकेन व्रजकुलवधूप्राणमेकैकमङ्क ! ।
बाणेनातः सततमतनुर्जातकोपाहितुल्यैः
क्रूरैरस्मान् दहति कुसुमैः शायकैः पञ्चसंख्यैः ॥ २५ ॥

ग्लानिः, उपज्योतिषः सूर्यस्य किरणमिलनात् प्रभावत्वात् प्रकाशश्च जायते ॥ २३ ॥

स्त्रीभिरिति । हे क्रमाङ्क ! स्त्रीभिः नारीभिः प्रियतमे कृतं प्रेम नैव विहातुं त्यक्तुं शक्यम् । अतः मधुपुरीचङ्क्रमाय मथुरागमनाय त्वां याचे प्रार्थये । ननु प्रियतमेन युष्माकमीदृशी दशा कृता तत् कथं तस्यानुरक्तिरित्यत आह, दग्धेनेति । दग्धेन भस्मीकृतेनापि पञ्चबाणेन क्रूरैः बाणैः शरैः व्यथितहृदया पीडितमानसा मदनरमणी रतिः तत्कृते तस्य मदनस्य कृते उच्चैः रोदिति स्म । अप्रियकारी अपि प्रियतमो न त्याज्य इति भावः ॥ २४ ॥

आस्ते इति । हे अङ्क ! शम्बरारेः कामस्य चित्ते एकैकेन बाणेन एकैकं व्रजकुलवधूनां प्राणं कलयितुं नाशयितुं वासना अभिलाषः आस्ते किल । अतः कारणात् अतनुः अनङ्गः सततं जातः कोपो येषां तादृशाः ये अहयः सर्पाः तेषां तुल्यैः क्रूरैः दारुणैः पञ्चसंख्यैः कुसुमैः शायकैः शरैः अस्मान् दहति ज्वालयति, अस्माकं गोपाङ्गनानां बाहुल्यात् एकैकशरप्रहारे कर्त्तव्ये अधिकविलम्ब इति प्रतिवारं पञ्चसंख्यकशरप्रयोगेन पञ्चानामेव गोपीनां नाशः स्यात्, तथा सति शीघ्रमेव पञ्चपञ्चशरप्रहारेण सर्वासामेव नाशः भविष्यतीति धियेति भावः ॥ २५ ॥

यल्लोकानामपकृतिभयात् कालकूटोऽपि पीत-
स्तानेवायं दहति गरलैस्तादृशैराचितेन।
बाणेनेति त्रिपुररिपुणा जातकोपेन दग्धो
नेत्रोत्थेन प्रबलशिखिना निर्दयं शम्बरारिः॥ २६॥
नैवं न्यूनः स गरजगरः शम्बरारेः शरस्य
ब्रह्मादीनामयमपि यतो धैर्यविध्वंसहेतुः।
एतद्वाक्यं गिरिशचरणैः खण्डितं मण्डिताच्चै-
रन्यासङ्गाद् व्यथितहृदयैर्निर्दयं दग्धकामैः॥ २७॥

यदिति। येषां लोकानाम् अपकृतिभयात् अपकारशङ्कया कालकूटोऽपि हलाहलोऽपि पीतः त्रिपुररिपुणेति शेषः, तानेव लोकान् अयं शम्बरारिः कामः तादृशैः कालकूटसदृशैः गरलैः आचितेन व्याप्तेन युक्तेनेति यावत् बाणेन दहति, इति हेतोः जातकोपेन त्रिपुररिपुणा हरेण नेत्रोत्थेन तृतीयनयननिर्गतेन प्रबलेन शिखिना अग्निना निर्दयं यथा तथा दग्धः भस्मीकृतः॥ २६॥

नैवेति। शम्बरारेः कामस्य शरस्य सः प्रसिद्धः गरजगरः विषजज्वाला नैव न्यूनः नैवाल्पः अत्यन्त इति यावत्, यतः कारणात् अयं गरजवरः ब्रह्मादीनामपि धैर्यस्य विध्वंसे हेतुः कारणम्। ब्रह्मादयोऽपि यज्ज्वालया धैर्यच्युता अभवन्निति भावः। मण्डिताच्चैः भूषितपदाच्चैः अन्यासङ्गात् अन्यस्य नारीजनस्येति भावः आसङ्गात् व्यथितं हृदयं येषां तैः नारीसङ्गं कर्त्तुमनिच्छद्भिरिति भावः अतएव निर्दयं यथा तथा दग्धकामैः गिरिशचरणैः शङ्करपादैः एतत् वाक्यं ब्रह्मादीनामपि धैर्यध्वंसहेतुरिति वचनं खण्डितं निराकृतम्। पुरा खलु धैर्यध्वंसार्थं कृतोद्यमं कामं भगवान् हरः नेत्रानलेन भस्मीचकारेति पुराणम्॥ २७॥

उत्तापोऽयं मदनजनितो वर्द्धते नित्यमुच्चै-
र्वृन्दारण्ये वसतिरधुना केवलं दुःखहेतुः ।
किञ्चास्माकं नयनसलिलैर्वर्द्धते चेन्नदीयं
केन स्थेयं द्रुतगतिजलैराचिते कुञ्जमध्ये ॥ ३८ ॥

यस्य ध्यानं जनयति सुखं यादृशं तादृशं न
स्वर्लोकादावपि किमपरं ब्रह्मसाक्षात्कृतौ च ।
श्रेयश्चैतन्मुनिवरमुखाम्भोजतः कीदृशी ते
बुद्धिस्तादृग्जनकविषये दर्शने नास्ति यत्नः ॥ ३९ ॥

वक्तव्यं यन्मदनजनितं दुःखमस्माकमेतद्
भूयोभूयः प्रियतमपदे गोपयित्वा स्वदेहम् ।

उत्ताप इति । अयं मदनजनितः उच्चैः महान् उत्तापः नित्यं सततं वर्द्धते । अतः अधुना वृन्दारण्ये वसतिः केवलं दुःखहेतुः क्लेशकारणम् । किञ्च चेत् यदि अस्माकं नयनसलिलैः इयं नदी यमुना वर्द्धते, तदा द्रुतगतिजलैः वेगगामिभिः सलिलैराचिते आप्लाविते कुञ्जमध्ये केन स्थेयम् ? न केनापीत्यर्थः ॥ ३८ ॥

यस्येति । यस्य कृष्णस्य ध्यानं चिन्तनं यादृशं सुखम् आनन्दं जनयति, स्वर्लोकादौ स्वर्गादौ अपि ब्रह्मसाक्षात्कृतौ परमात्मसाक्षात्कारे च तादृशं सुखं न भवतीति शेषः अपरं किम् ? वक्तव्यमिति शेषः । एतच्च कृष्णध्यानजं सुखमित्यर्थः मुनिवराणां महामुनीनां मुखाम्भोजतः मुखपद्मात् श्रेयं न त्वन्यस्मादिति भावः । ते तव कीदृशी बुद्धिः, यत् तादृक् तथाविधः जनकः उत्पादकः विषयो यस्य तथोक्ते दर्शने तादृशप्रियदर्शने इति यावत् ते तव यत्नः आग्रहः नास्ति । यत्साक्षात्कारो महानन्दनिदानं तस्मिन् तव अनास्थेति महदाश्चर्यमिति भावः ॥ ३९ ॥

वक्तव्यमिति । अस्माकं मदनेन कामेन जनितं यत् दुःखम्,

दृष्टे तेन त्वयि नयनयोर्निस्तुलप्रीतिहेतौ
यास्यत्येव क्षणमपि मनस्त्वत्कथायां न तस्य ॥ ४० ॥
वक्तव्यं च स्फुटमिति यदा निर्जनस्थो मुकुन्दः
पद्माद्यङ्कैरतिसुललितैरङ्कितं तत् पदाब्जैः।
वृन्दारण्यं स्मरसि न कथं श्रीपते! मञ्जु कुञ्जं
ख्यातं ख्यातं यदिह न परीरम्भणं कुब्जिकायाः ॥ ४१ ॥
आकाङ्क्षा या ग्लपयति मनो मादृशां वासना सा
प्रारब्धे धर्मे सति न भविता हानिरेव क्रमाङ्क!।

एतत् त्वया स्वदेहं गोपयित्वा अप्रकाश्येति यावत् अलक्ष्यभावेन स्थित्वेति भावः प्रियतमपदे कृष्णचरणे भूयः भूयः पुनः पुनः वक्तव्यम्। ननु स्वदेहगोपनं कथमित्यत्राह, दृष्टे इति। नयनयोः निस्तुला निरुपमा या प्रीतिः तस्याः हेतौ कारणे त्वयि तेन कृष्णेन दृष्टे सति तस्य कृष्णस्य मनः त्वद्दर्शनानन्दनिमग्नमिति भावः त्वत् कथायां अस्मद्दुःखवार्त्तायामिति यावत् क्षणमपि न यास्यत्येव। न त्वत्-कथायां शुश्रूषा भाविनीति भावः ॥ ४० ॥

वक्तव्यमिति। यदा मुकुन्दः कृष्णः निर्जनस्थः एकान्ते स्थितः भविष्यतीति शेषः, तदा इति वक्ष्यमाणं वचनं स्फुटं स्पष्टं यथा तथा वक्तव्यम्, हे श्रीपते! अतिसुललितैः अतिमनोहरैः पद्मादि अङ्क-चिह्नं येषां तादृशैः पदाब्जैः पादपद्मैः अङ्कितं चिह्नितं तत् वृन्दा-रण्यं, तत्र मञ्जु मनोहरं कुञ्जञ्च कथं न स्मरसि? ख्यातं ख्यातं यत् यतः इह वृन्दारण्ये मञ्जुकुञ्जे कुब्जिकायाः परीरम्भणम् आलिङ्गनं न भवतीति शेषः अतः कथं स्मर्यते इति भावः। वोल्लुण्ठनोक्ति-रियम् ॥ ४१ ॥

आकाङ्क्षेति। हे क्रमाङ्क! पदाङ्क! या आकाङ्क्षा कृष्णप्राप्त्यभि-लाष इत्यर्थः मादृशां गोपाङ्गनानामिति यावत् मनः ग्लपयति

साकाङ्क्षोक्त्या मुरहरपदे सर्वमेतन्निवेद्यं
नो चेत्तस्य प्रमितिजनने केन हेतुस्त्वदुक्तिः ॥ ४२ ॥

आगन्तव्यं सरसिजदृशा बोधितेन त्वदुक्त्या
नाप्रत्यक्षं प्रमितिकरणं वाक्यमेतन्न युक्तम् ।
स्वीकर्तव्यं नयनविरहापत्तिभीत्येति सर्वै-
र्मानाभावाद् दृशि न हि भवेन्मानमन्यद्द्वितीयात् ॥ ४३ ॥

ग्लानिं नयति क्षपयतीत्यर्थः, सा वासना संस्काररूपो मानसो धर्म इत्यर्थः शाब्दे शब्दसम्बन्धिनि शब्दांशे इति यावत् धर्मे सति आकाङ्क्षायाः शब्दधर्मत्वे सतीत्यर्थः हानिः क्षतिः अस्माकमिति शेषः नैव भविता, शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यते इति न्यायात् कृष्णशब्दश्रवणकरणयोरेव यदि अस्माकं तृप्तिः, तदा तदानयनार्थं यत्नेन किम् ? मनोधर्मतयैवास्माकं तदानयने यत्न इति भावः । किन्तु साकाङ्क्षा शब्दधर्मविशेषयुक्ता या उक्तिः सोपपत्तिकं सुसङ्गतञ्च वचनमित्यर्थः तया मुरहरपदे कृष्णचरणे एतत् सर्वम् अस्माकं दुःखमिति भावः निवेद्यं ज्ञापनीयम् । नो चेत् यदि साकाङ्क्षोक्तिर्नेत्यर्थः तदा तस्य कृष्णस्य प्रमितिः प्रमा अभ्रमा प्रतीतिरिति यावत् तत्-करणे तव उक्तिः वचनं केन कथं हेतुः भवतीति शेषः, नैव भवतीत्यर्थः प्रमितिं प्रति सोपपत्तिकं सुसङ्गतञ्च वच एव हेतुरित्यतस्त्वया भवता निवेदनीयं यथा अस्माकं दुःखोक्तौ तस्य दृढा प्रतीतिर्भवतीति भावः ॥ ४२ ॥

आगन्तव्यमिति । तव उक्त्या वचनेन बोधितेन ज्ञापितेन सत्वं गोपाङ्गनानां मद्विरहेण दुःखं जातमिति निश्चितमतिनेति भावः सरसिजदृशा कमललोचनेन कृष्णेन आगन्तव्यम् । ननु मत्कथवाक्ये कथं प्रमितिरित्यत आह, नाप्रत्यक्षमिति । प्रमितेः करणं साधनं न, एतत् वच इति शेषः न युक्तं नोचितम् । दृशि चक्षुषि प्रत्यक्षे इति यावत् प्रत्यक्षमेव प्रमाणं नान्यदित्यत्र मानाभावात् प्रमाणराहित्यात्

बौद्धस्यैतच्छतविटपिनो मूलमाच्छादितं स्यात्
सद्भिस्तस्यानृतवचनतो यन्मया पूर्वमुक्तम् ।
यद्यस्माकं सततमतनोः सायकस्पृष्टदेहः
प्रामाण्ये स्यात् कुसुमविशिखोऽस्तीति वाक्ये न साक्षी ॥४४॥
मूर्खा एव क्षणिकमनिशं विश्वमाहुर्न धीराः
तापोऽस्माकं हरिविरहजः सर्वदैवास्ति चित्ते ।

सर्वैः जनैः नयनविरहे नयनाभावे या आपत्तिः नयनविहीनस्य न कस्मिन्नपि विषये प्रमितिर्न स्यादित्येवंरूपेति भावः तद्भीत्या वस्तुतस्तस्य प्रमितिर्दृश्यते इति भयेन इति प्रत्यक्षमपि वचनं प्रमितिकरणं स्वीकर्त्तव्यम् अङ्गीकर्त्तव्यम् । द्वितीयात् उक्तरूपात् अप्रत्यक्षादपि साकाङ्क्षवाक्यादिति भावः अन्यत् अपरं मानं प्रमाणं न हि भवेत् नैव स्यात् ॥ ४३ ॥

बौद्धस्येति । यत् मया पूर्वम् उक्तम् आगन्तव्यं झटिति मथुरामण्डलात् गोपकान्ते इति वाक्ये इति भावः तस्य कृष्णस्य तस्मात् अनृतवचनतः असत्यवचनात् बौद्धस्य बुद्धधर्मनिर्णीतस्य शतविटपिनः सिद्धान्ततरोः एतत् मूलं नाप्रत्यक्षं प्रमाणमित्येवंरूपमिति भावः सद्भिः सत्तिकाभिः आच्छादितं खण्डितमिति यावत् । अप्रत्यक्षोक्तं तदीयप्रत्यागमनम् अगमनतया पर्य्यवसानात् तद्वचः असत्यत्वात् अप्रत्यक्षरूपं प्रमाणं भूतमिति भावः । यदि अस्माकं सततं निरन्तरम् अतनोः अनङ्गस्य सायकेन शरेण स्पृष्टदेहः प्रामाण्ये स्यात् प्रमाणता स्वीक्रियते चेदित्यर्थः तदा कुसुमविशिखः कामः अप्रत्यक्ष इति भावः अस्तीति वाक्ये न साक्षी न प्रमाणम् आवश्यकमिति शेषः कार्य्येणैव कारणस्यानुमानादिति भावः । एतेन प्रत्यक्षभिन्नं प्रमाणमस्तीति बौद्धमतं निराकृतमिति पर्य्यवसितोऽर्थः ॥ ४४ ॥

मूर्खा इति । मूर्खा एव जनाः अनिशं सततं विश्वं जगत् क्षणिकं क्षणस्थायि आहुः कथयन्ति, धीराः पण्डिताः न, यतः

मान्यः शब्दो वचनमपि मयाद्यं तस्य किन्तु
प्रेमैवास्मत्प्रियतमकृतं तत्र गोपाङ्गनासु ॥ ४५ ॥
शाके सायकवेदषोड़शमिते श्रीकृष्णशर्मापयन्
आनन्दप्रदनन्दनन्दनपदद्वन्द्वारविन्दं हृदि ।
चक्रे कृष्णपदाङ्कदूतरचनं विद्वन्मनोरञ्जनं
श्रीलश्रीयुतरामजीवनमहाराजाधिराजादृतः ॥ ४६ ॥

इति महामहोपाध्यायश्रीकृष्णसार्वभौमविरचितं
पदाङ्कदूतकाव्यं समाप्तम् ।

---

अस्माकं चित्ते मनसि हरिविरहजः कृष्णविच्छेदजनितः तापः सर्वदैव अस्ति, यदि चिह्नं स्वाधिकं तदा चित्तान्तर्गतानाम् अस्माकं तापः कथं अधिको न स्यादिति मूर्खवचनमेतदित्याशयः । शब्दः अन्यः परमः तृतीय इत्यर्थः न प्रमाणमिति शेषः, यत् यतः तस्य कृष्णस्य वचनमपि वाक्यमपि आचरणं दूरापास्तमित्यपिशब्दार्थः । तादृशम् अन्यत्वमित्यर्थः । अतः कथं शब्दस्य प्रामाण्यमिति भावः । किन्तु अस्माकं प्रियतमेन कृष्णेन कृतं गोपाङ्गनासु तत्र पादपूरणार्थस्तत्कारः । प्रेमैव प्रमाणमिति शेषः । अन्यथा कथं न तापनिवृत्तिरित्यनुमानस्य प्रामाण्यं न तु शब्दस्येति भावः ॥ ४५ ॥

शाके इति । सायकवेदषोड़शमिते १६४५ शाके शकनृपतेरब्दे श्रीकृष्णशर्मा श्रीलश्रीयुतरामजीवनमहाराजाधिराजेन आदृतः आनन्दप्रदं यत् नन्दनन्दनस्य कृष्णस्य पदद्वन्द्वारविन्दं हृदि मनसि अर्पयन् निदधत् विदुषां मनोरञ्जनं कृष्णस्य पदाङ्कदूतरचनं चक्रे कृतवान् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४६ ॥

---

# उद्धवदूतः।

---

गोपीबन्धोरनवधिकृपादाक्ष्यदाक्षिण्यसिन्धो-
रादेशेन प्रणयपटुना प्रापितं गोकुलाय।
गोधुग्वृन्दव्यसनविसरालोकदुःस्थं रहःस्थं
मध्येकृत्य प्रियसहचरीमुद्धवं काचिदूचे ॥ १ ॥

कस्त्वं साधो! कुवलयदलश्यामविस्तीर्णदृष्टे!
दृष्टे सद्यो भवति भवति स्निग्धमत्यन्तमन्तः।
किं वा प्रश्नैरहह मथुरानाथभुक्तं तदेतत्
यत्ते मौलौ कनककपिशं सौरभोद्गारि वासः ॥ २ ॥

गोपीबन्धोरिति। काचित् गोपी प्रियसहचरीं मध्येकृत्य अनवधिः असीमा या कृपा तस्यां यत् दाक्ष्यं नैपुण्यं चातुर्य्यमित्यर्थः तेन यत् दाक्षिण्यम् औदार्य्यं तस्य सिन्धुः सागरः तस्य गोपीबन्धोः कृष्णस्य प्रणयपटुना प्रणयपूर्णेन आदेशेन आज्ञया गोकुलाय प्रापितम् उपस्थापितं गोधुग्वृन्दानां गोपानां व्यसनविसरस्य दुःखातिशयस्य आलोकेन दर्शनेन दुःस्थं दुःखितं रहःस्थं विजनस्थितम् उद्धवम् ऊचे उवाच। अस्मिन् प्रबन्धे मन्दाक्रान्तावृत्तम्। मन्दाक्रान्ताम्बुधि-रसनगैर्मो भनौ गौ ययुग्ममिति तल्लक्षणात् ॥ १ ॥

क इति। हे कुवलयदलवत् नीलोत्पलपत्रवत् श्यामा विस्तीर्णा आयता दृष्टिर्यस्य तथाभूत साधो! कस्त्वम्? भवति दृष्टे सति अन्तः अन्तःकरणं सद्यः झटिति अत्यन्तं स्निग्धं भवति आर्द्रीभवतीत्यर्थः। प्रश्नैः पृच्छाभिर्वा किम्? न किमपि प्रयोजनमित्यर्थः। अहह इति खेदे, यत् यस्मात् तत् एतत् कनककपिशं काञ्चनकान्ति

तत् त्वं तस्य मधुपुरपतेर्लब्धलोभ्यप्रसाद-
स्तद्विस्रम्भस्थलमतिमहन्नेह सन्देहलेशः।
यद्यस्त्येतन्मम च किमिदं कथ्यते दृश्यते वा
जातं यस्मादखिलमधुना हन्त हास्यास्पदं नः॥ ३॥

प्रस्थानं ते भवतु भगवन्नत्र वाप्यन्यतो वा
गम्भीरत्वं भजतु स भवानित्थमुत्तानतां वा।
यद्वा तद्वा भवतु विधिना वञ्चितेयं वराकी
यत्ते विज्ञापयति निमिषं पातनीयोऽत्र कर्णः॥ ४॥

सौरभोद्गारि सौमनस्ययावीत्यर्थः मथुरानाथेन कृष्णेन भुक्तं व्यवहृतं वासः ते तव मौलौ शिरसि वर्त्तते इति शेषः। अतोऽस्माभिस्त्वं कृष्णस्य परिजन इति भावः॥ २॥

तदिति। तत् तस्मात् त्वं मधुपुरपतेः कृष्णात् लब्धः प्राप्तः लोभ्यः लोभनीयः प्रसादः वसनरूपपुरस्कार इति यावत् येन तथाविधः। अतिमहत् तस्य कृष्णस्य विस्रम्भस्थलं विश्वासपात्रं, त्वं निश्चय इत्यर्थः, इह अस्मिन् विषये सन्देहलेशः अल्पोऽपि संशयः न अस्तीति शेषः। मम यद्यपि हृदये एतत् वर्त्तते इति शेषः, इदं हृदयस्थितं वस्त्विति शेषः किं कथ्यते? दृश्यते वा? यस्मात् इदानीं नः अस्माकम् अखिलं समस्तं हास्यास्पदं जातं हन्तेति खेदसूचकम्। अस्माकं हृदयस्थस्य साम्प्रतं कथनं प्रदर्शनञ्च विफलं प्रत्युत हास्यास्पदमिति भावः॥ ३॥

प्रस्थानमिति। हे भगवन्! अत्र वृन्दावने वा, अन्यतो वापि अन्यस्मिन् प्रदेशे वापि ते तव प्रस्थानं गमनं भवतु, स भवान् इत्थम् एवम्प्रकारं गम्भीरत्वम् उत्तानतां चपलत्वं वा भजतु प्राप्नोतु, धीरो वा चपलो वा भवत्विति यावत्, यद्वा तद्वा भवतु, विधिना दैवेन वञ्चिता विप्रलब्धा इयं वराकी तपस्विनी दुःखिनीति भावः ते तुभ्यं यत् विज्ञा-

क्वैषा योषित् प्रकृतिचपला पामरी कातरा च
ज्यायान् यातो यदुकुलपतेर्वल्लभत्वं क्व च त्वम्।
विज्ञप्तो मे तदपि भवता भव्य! नोदासितव्यं
सानुक्रोशं वहति हि मनो दुर्गते दुर्जनोऽपि॥५॥

त्वं कल्याणी ननु कुलवधूः सार्द्धमन्येन पुंसा
संलापस्ते सपदि समुदाचारसेतुं भिनत्ति।
जल्पन्नेवं न हि जहि घनश्यामदास्योन्मदानां
लोकातीतं किमपि चरितं केन नालोकितं नः॥६॥

प्रयति निवेदयति, अत्र विज्ञापने निमित्तम् अन्यथा कर्णः पातनीयः, श्रोतव्यमस्या विज्ञापनमिति भावः॥४॥

क्वेति। प्रकृतिचपला स्वभावलोला पामरी मूर्खा कातरा दीना एषा योषित् नारी क्व? यदुकुलपतेः कृष्णस्य वल्लभत्वं प्रियत्वं यातः प्राप्तः अतएव ज्यायान् माननीय इति भावः त्वञ्च क्व? नानयोः संयोगो युज्यते इति भावः। हे भव्य! साधो! तदपि तथापि भवता मे मम विज्ञप्तौ विज्ञापने न उदासितव्यम् अमनोयोगो न कर्त्तव्य इति यावत्। हि यतः दुर्जनोऽपि का वार्त्ता सुजनस्येत्यपिशब्दार्थः, दुर्गते दुःखिते जने सानुक्रोशं सदयं मनः वहति। अर्थापत्तिरलङ्कारः। तदुक्तं दर्पणे। दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते इति॥५॥

त्वमिति। ननु भोः त्वं कल्याणी कुलवधूः, अन्येन पतिव्यतिरिक्तेनेत्यर्थः पुंसा सपदि सहसा ते तव संलापः मिथोभाषणं समुदाचारसेतुं सदाचारपद्धतिं भिनत्ति नाशयति, परपुंसा सह सहसालापो न कर्त्तव्य इति भावः। एवम् इत्थं जल्पन् कथयन् त्वं घनश्यामस्य कृष्णस्य दास्ये कैङ्कर्ये उन्मदानाम् उत्सिक्तानां नः अस्माकं केन नालोकितं केनाप्यदृष्टं लोकातीतम् अलौकिकं किमपि अनिर्वचनीयं चरितं न हि जहि नैव नाशय नैव दूषयेत्यर्थः॥६॥

अभ्रश्यामं स्मरसि न मनागित्थमुद्भाविणीनां
प्राणत्राणप्रवणमनसो गोदुहो गेहिनीनाम्।
एताः शश्वत् कुसुमशयने शाययित्वा सखीव
मन्दं मन्दं सरसबिसिनीपल्लवैर्वीजयन्ति ॥ ७ ॥
सिंहव्याघ्रप्रभृतिभिरपि प्रेक्ष्यमाणाः प्रवाष्पै-
राक्रन्देषु प्रखरकुररीसंसदं शिक्षयन्त्यः।
एकाकिन्यस्तरुणतिमिरास्तत्पदस्पर्शपुण्ये
वृन्दारण्ये कति युवतयो यामिनीर्यापयन्ति ॥ ८ ॥
पश्यन्नक्षिद्वयमविरलस्यन्दमानाश्रुधारा-
क्लिन्नाभोगं मम च किमभूर्लङ्घितो विस्मयेन।

अभ्रश्याममिति। अभ्रश्यामं जलदश्यामं कृष्णं मनाक् अल्पमपि न स्मरसि इत्थम् उद्भाविणीनाम् अन्योन्यमालपन्तीनां गेहिनीनां नारीणां प्राणानां त्राणे रक्षणे प्रवणं समासक्तं मनो येषां तथाविधाः एते गोदुहः गोपाः सखीव कुसुमशयने शाययित्वा स्वाः स्वा योषित इति शेषः शश्वत् निरन्तरं सरसाः जलार्द्राः ये बिसिनीपल्लवाः पद्मपत्राणि तैः मन्दं मन्दं वीजयन्ति ॥ ७ ॥

सिंहेति। कति युवतयः एकाकिन्यः असहायाः सिंहव्याघ्रप्रभृतिभिः हिंस्रैर्जन्तुभिरपीति भावः प्रवाष्पैः सजलनयनैः प्रेक्ष्यमाणाः दृश्यमानाः आक्रन्देषु रोदनेषु प्रखराणाम् उच्चैः रुवतीनां कुररीणां पक्षिविशेषाणां संसदं समाजं समूहमित्यर्थः शिक्षयन्त्यः एवमेवं रोदितव्यमित्युपदिशन्त्यः सत्यः तस्य कृष्णस्य पदस्पर्शेन पुण्ये पवित्रे वृन्दारण्ये तरुणानि प्रवराणि घनानीति यावत् तिमिराणि यासु ताः यामिनीः रात्रीः यापयन्ति गमयन्ति ॥ ८ ॥

पश्यन्निति। अविरलं स्यन्दमानाभिरश्रुधाराभिः क्लिन्नः सिक्तः

गोगोपानां विरमतु कथा नेह भीरस्ति गत्वा
शारङ्गाणामपि वनजुषां पश्य कीदृक्षमक्षि । ९ ॥
राधे ! मन्युं परिहर हरिः पादमूले तवायं
जातं दैवादसदृशमिदं वारमेकं क्षमस्व ।
एतानाकर्णयसि भगवन् ! कुञ्जकीरानुवादान्
एभिः क्रूरैर्वयमविरतं वञ्चिता वञ्चिताः स्म ॥ १० ॥
त्वञ्चेदस्मैरिह विमुखतामत्र बाले तमाले
प्राणान्मोक्ष्ये वनलतिकया कण्ठमुद्बध्य सद्यः ।

आभोगो विस्तारो यस्य तथाभूतं मम अक्षिद्वयं नेत्रयुगलं पश्यन् किं कथं विस्मयेन लङ्घितः आक्रान्तः अभूः ? विस्मयो न कार्य्य इति भावः । गवां गोपानाञ्च कथा विरमतु तिष्ठतु, इह वृन्दारण्ये भीर्भयं नास्ति हिंस्रजन्तुभ्य इति शेषः, विपत्सामान्ये कोऽपि कमपि न हिनस्तीति भावः । गत्वा वनजुषां काननवासिनां शारङ्गाणां मृगाणामपि अक्षि नयनं कीदृक्षं कीदृशम् अम्बुजवादृशमिति भावः पश्य अवलोकय ॥ ९ ॥

राधे इति । हे राधे ! मन्युं कोपं परिहर, अयं हरिः तव पादमूले चरणतले वर्त्तते इति शेषः, दैवात् इदम् असदृशं व्यलीकम् अपराध इति यावत् जातम्, एकं वारं क्षमस्व, हे भगवन् भीतिघ्न ! एतान् कुञ्जकीराणां कुञ्जस्थितशुकानाम् अनुवादान् वृन्दादूत्यादिभिः पूर्वं राधासान्त्वनाय उदीरितानामनुरूपवचनानीत्यर्थः आकर्णयसि शृणोषि, क्रूरैः निष्ठुरैः एतदनुवादेन अस्माकं व्यथामुद्दीपयद्भिरिति भावः एभिः शुकैः अविरतं सततं वयं वञ्चिताः वञ्चिताः पुनः पुनर्वञ्चिताः व्यथिता इति यावत् स्म भवाम ॥ १० ॥

त्वमिति । चेत् यदि त्वम् इह मदुक्ते इति भावः विमुखतां वैमुख्यम् अनवधानतामिति भावः अस्मैः गच्छेः यदि मदुक्तां वाभि-

आतङ्को वा क इह भवतां सेवकास्तस्य यूयं
यस्योद्देश्यं न खलु किमपि स्त्रीवधादन्यदस्ति ॥ ११ ॥
पीतप्राणा प्रथममसुना पूतना स्तन्यदात्री
दिष्टस्यान्तं कति न गमिता वेणुगीतेन गोप्यः ।
तस्य प्रीत्या जगति विदितं यत् कृतं यज्ञपत्न्या
स्वातन्त्र्येण प्रविशति मनस्तत्र तत् किं करोमि ॥१२॥
अश्रुस्निग्धं नयनयुगलं रूढरोमाञ्चराजि
प्रत्यङ्गं ते तदलमनया देव ! दुःशङ्कया नः ।

निवेशं न रुणत्सीति भावः, तदा अत्र बाले क्षुद्रे तमाले वनलति-कया वनलतया कण्ठम् उद्बध्य सद्यः झटिति प्राणान् मोक्ष्ये त्यक्ष्यामि । ननु तत्र का हानिरस्माकमित्यत्राह, आतङ्क इति, इह मत्प्राणपरित्यागे भवतां को वा आतङ्कः भयं न भयमस्तीत्यर्थः, यतः यूयं, यस्य स्त्रीवधात् अन्यत् किमपि उद्देश्यं न खलु नैव अस्ति, तस्य सेवकाः दासाः, दासाः प्रभोरभिमतं सम्पादयन्तीति भावः ॥ ११ ॥

ननु स्त्रीवधः कृतोऽनेनेत्युक्तं भवत्या, न श्रुतमस्माभिस्तदित्यत्राह, पीतेति । असुना कृष्णेन प्रथमं स्तन्यदात्री पूतना पीताः प्राणाः यस्याः तथाभूता अभूदिति शेषः । कति गोप्यः वेणुगीतेन वंशीनादेन दिष्टस्यान्तं पञ्चत्वं न गमिताः ? अपितु गमिता एवेत्यर्थः । तथा यज्ञपत्न्या यज्ञे याज्ञिकपत्न्या तस्य कृष्णस्य प्रीत्या यत् कृतं, तत् जगति विदितं प्रसिद्धम् । पुरा काचित् याज्ञिकपत्नी कृष्णप्रीत्या पत्या निषि-द्धापि कृष्णाय सानुचराय चतुर्विधं अन्नादं ददौ । तेन कोपात् पतिपरित्यक्ता प्राणान् तत्याजेति भागवती वार्त्तानुसन्धेया । किन्तु स्वातन्त्र्येण मनः तत्र कृष्णे प्रविशति, तत् तस्मात् किं करोमि ? ॥१२

अश्रुस्निग्धमिति । ते तव नयनयुगलम् अश्रुभिः स्निग्धं तथा प्रत्यङ्गं रूढरोमाञ्चराजि सञ्जातरोमाञ्चनिचयं दृश्यते इति शेषः,

एतद्दीनोद्धरणपटवे तुभ्यमभ्यर्थनीयं
मत्सन्दिष्टं मुदिरमहसि प्रेयसि प्रापयेति ॥ १३ ॥
नन्दो न त्वां त्यजति निमिषं नापि देवी यशोदा
श्रीदामाद्या अपि न शिशवो नापि पौराः सदाराः ।
स त्वं लब्धो रहसि च मया केनचिन्नापि दृष्ट-
स्तन्निर्णीतं किमपि सुकृतं शिष्टमस्माकमस्ति ॥ १४ ॥
छिन्नानत्रावससि दिवसानास्पदं घोषभर्त्तु-
स्तेनाशङ्के पुरमिदमसि प्रेषितो माधवेन ।
एतद्बीजं किमपि बहुधा मद्विधा भावयन्त्य-
स्तस्यातत्त्वं किमपि न पुनः कृत्यमालोकयन्ति ॥१५॥

अस्माकं दुःखशान्तिश्रवणादिति भावः, हे देव ! तत् तस्मात् अनया नः अस्माकं दुःखबहुतया प्राणसंशयेनेति भावः अलं प्राणसंशयो न कार्य्य इत्यर्थः। मुदिरमहसि स्निग्धतेजसि प्रेयसि कृष्णे मम सन्दिष्टं वाचिकं प्रापय इत्येतत् दीनानां दुःखितानाम् उद्धरणे परित्राणे पटुः समर्थः तस्मै तुभ्यम् अभ्यर्थनीयं प्रार्थनीयम् ॥ १३ ॥

नन्द इति। नन्दस्त्वां निमिषं क्षणमपीति भावः न त्यजति, देवी यशोदा नापि त्यजतीत्यनेनान्वयः। श्रीदामाद्याः शिशवः अपि न, सदाराः सस्त्रीकाः पौराः ग्रामवासिन इत्यर्थः नापि त्यजन्तीति शेषः। स सर्वस्पृहणीय इत्यर्थः त्वं मया रहसि एकान्ते लब्धः केनचित् नापि नैव दृष्टश्च लक्षितश्च, तत् तस्मात् अस्माकं किमपि अल्पमपीत्यर्थः शिष्टम् अवशिष्टं सुकृतं पुण्यम् अस्तीति निर्णीतं निश्चयेन ज्ञातमित्यर्थः, नो चेत् कथं त्वादृशस्य एकान्ते लाभ इति भावः ॥ १४ ॥

छिन्नानिति। अत्र वृन्दावने छिन्नान् दिवसान् घोषभर्त्तुः नन्दस्य आस्पदम् आलयम् आवससि, अधितिष्ठसि, तेन हेतुना माधवेन

तेन प्राप्तौ सपदि जनकौ पोषकाभ्यां किमाभ्यां
किं गोरक्षैः सखिभिरधुना राजपुत्राः सखायः ।
तस्य द्वारे कति करटिनस्तर्णकादेः क्व चिन्ता
हन्ताभीरीः स्मरतु स कथं संवृतो नागरीभिः ॥ १६ ॥

आस्तामेतन्मम किमनया कूटतत्त्वानुवृत्त्या
सारं फल्गु प्रियमथ परं पथ्यमन्यादृशं वा
धर्माधीनैरिति मम वचः पुण्डरीकाक्षसाक्षाद्
आख्यातव्यं यदनुकरणे कुतश्चिन्नैव दोषः ॥ १७ ॥

कृष्णेन दूतं पुरं प्रेषितोऽसीति आशङ्के मन्ये । पुनः किन्तु एतस्य तवागमनस्य बीजं कारणं किमपि बहुधा भावयन्त्यः चिन्तयन्त्यः सर्वविधाः मादृशाः जनाः तस्य कृष्णस्य अन्तस्थं किमपि तत्त्वं कार्यं न आलोकयन्ति न पश्यन्ति ॥ १५ ॥

तेनेति । तेन कृष्णेन सपदि मथुरागमनमात्र एव जनकौ पितरौ देवकीवसुदेवौ प्राप्तौ, अतः पोषकाभ्यां पालकाभ्याम् आभ्यां यशोदानन्दाभ्यां किम् ? न किमपि प्रयोजनमित्यर्थः । अधुना गोरक्षैः गोपालैः सखिभिः श्रीदामादिभिः किम् ? न किमपि प्रयोजनमित्यर्थः, यतः राजपुत्राः सखायः प्राप्ता इति शेषः । तस्य कृष्णस्य द्वारे करटिनः हस्तिनः कति, बहव इत्यर्थः, अतः तर्णकादेः गोवत्सादेः चिन्ता क्व ? कुत्र युज्यते ? नैव चिन्तेत्यर्थः । हन्त खेदे, सः कृष्णः नागरीभिः संवृतः परिवृतः, अतः कथम् आभीरीः गोपनारीः स्मरतु ? नागरिकासम्भोगिनः ग्राम्यासु नैव रुचिर्भवतीति भावः ॥ १६ ॥

आस्तामिति । एतत् कथनमिति शेषः आस्तां तिष्ठतु, अनया कूटस्य कपटस्य तत्त्वानुवृत्त्या वाक्यानुसरणेन किम् ? न किमपि प्रयो-जनमस्तीत्यर्थः । धर्माधीनैः धर्मपरतन्त्रैः भवद्भिरिति शेषः पुण्डरीका-

विख्यातोऽभूद्दिनकतिपयं नन्दसूनुर्यशोदा-
नेत्रानन्दो व्रजजनपतिर्वल्लभो बल्लवीनाम्।
अद्य ख्यातो मधुपुरपतिर्माधवीप्राणनाथः
सूनुः शौरेरगणितगुणो देवकीनन्दनोऽसि ॥ १८ ॥

गोपीषूडुष्विव तव समो भोगकालः कलानां
भर्तुः कर्तुर्निखिलनयनानन्द! इन्दोरिवासीत्।
तासां मध्ये तदपि रमणी रोहिणीव प्रसिद्धा
सा तां नत्वा रहसि परमाकिञ्चना किञ्चिदाह ॥१९॥

अस्य कृष्णस्य साक्षात् समक्षं सारं फल्गु असारं प्रियम् अथवा परम् अप्रियं, पथ्यं हितं वा अन्याहृग्यम् अहितामित्यर्थः इति वक्ष्यमाणं मम वचः आख्यातव्यं वक्तव्यम्। ननु कथं प्रभोः समक्षं यथा तथा वाक्यं कथं प्रयोक्तव्यमित्यत्राह, यदिति। यत् यतः कुत्र-चित् अनुकरणे अनुवादे दोषः नैव अस्तीति शेषः, स्वयम् अयथा-कथन एव दोषः परोक्तौ न दोषः इति भावः॥ १७॥

विख्यात इति। दिनकतिपयं कियतो दिवसान् नन्दसूनुः यशोदायाः नेत्रानन्दः व्रजजनानां पतिः बल्लवीनां गोपीनां वल्लभः विख्यातः प्रथितः अभूः। अद्य इदानीं मधुपुरपतिः माधवीप्राण-नाथः शौरेः शूरसुतस्य वसुदेवस्य सूनुः पुत्रः अगणिताः गुणाः यस्य तथाभूतः निर्गुणश्चेति ध्वनिः, देवकीनन्दनः ख्यातः प्रथितः असि भवसि॥ १८॥

गोपीष्विति। हे निखिलनयनानन्द! कलानां अमादीनां भर्तुरिन्दोरिव चन्द्रस्येव कलानां चतुःषष्टिकलाविद्यानां कर्त्तुः तव उडुषु तारासु अश्विन्यादिषु इव गोपीषु भोगकालः सम्भोगसमयः समः तुल्यः। तदपि तथापि तासां गोपीनाम् अश्विन्यादीनामिव मध्ये रोहिणीव प्रसिद्धा या रमणी अस्तीति शेषः परमाकिञ्चना

इत्यत्यल्पैरुपधिभिरपि स्निग्धसम्बोधनं ते
जायेतारुन्तुदमुदयिनी रीतिरन्याद्य वः।
प्राक्संस्कारास्तदपि यदि मां तेऽनुबध्नन्ति दोषः
क्षन्तव्योऽयं भवतु भवता वाचिकप्रक्रियासु ॥ २० ॥

वाक्चातुर्य्यं त्वयि बत वृथा सन्ततान्तश्चरेण
ज्ञातं चेतश्चरितमखिलं मन्मथेन त्वया च।
विज्ञप्तिर्मे तदपि मथुरानाथ! नेयं विरुद्धा
सन्तप्तायावचसि विदितं पौनरुक्त्यं न दोषः ॥ २१ ॥

अतिदीना सा राधेति भावः त्वां नत्वा रहसि विनये किञ्चित् आह ॥ १९ ॥

इतीति। अत्यल्पैः एतत्स्थानजातैरुपधिभिः उपाधिभिः गोपालेत्यादिभिरिति यावत् ते तव स्निग्धसम्बोधनमपि स्नेहसम्बोधनमपि इतीदानीम् अरुन्तुदम् अन्तःक्लेशकरं जायेत भवेत्, यत् यतः अद्य वः युष्माकम् अन्या भिन्नप्रकारेत्यर्थः उदयिनी अभ्युदयशालिनी रीतिः नियमः सम्बोधनस्येति शेषः महाराजेत्यादिशब्दप्रयोगविषय इति भावः चलतीति शेषः। तदपि तथापि यदि ते प्राक्संस्काराः पूर्वसंस्काराः गोपननवनीतचौर इति सम्बोधनप्रयोजका इति भावः माम् अनुबध्नन्ति अनुसरन्ति, तदायं वाचिकप्रक्रियासु सन्देशप्रयोगेषु दोषः भवता क्षन्तव्यः सोढव्यः भवतु, नास्मापराधो ग्राह्य इति भावः ॥ २० ॥

वाक्चातुर्य्यमिति। बत खेदे, त्वयि वाक्चातुर्य्यं वचनप्रयोगनैपुण्यं वृथा निरर्थकम्। यतः सन्ततान्तश्चरेण निरन्तरान्तर्वर्त्तिना मन्मथेन त्वया च अखिलं समस्तं चेतश्चरितं मनोवृत्तं ज्ञातं, तदपि तथापि हे मथुरानाथ! मे मम इयं विज्ञप्तिः विज्ञापनं न विरुद्धा न दुष्टा, यतः सन्तप्तायाः पीडितायाः वचसि पौनरुक्त्यं न दोषः इति विदितं ज्ञातम् ॥ २१ ॥

गोरक्षत्वं समजनि यदा तावकीनं तदैव
स्वच्छन्दत्वं तव तिरयितुं नाथ ! मा भूम शक्ताः ।
वश्यः कस्य त्वमथ जगतामीशिता किन्तु वाचा-
माविष्कारैरशठ ! हृदयग्रन्थिमुद्घाटयामि ॥ २२ ॥

किन्ते जन्मान्तरमुपगतं पारसञ्चारकाले
धौतं नद्याः किमिदमथवा कार्मणी माथुरीणाम् ।
विस्मर्त्तव्यं यदिह न तनौ यत्र बन्धः पशोर-
प्यत्र प्रेम्णि त्वमब्दकतिपयैर्नाथ ! निर्लेपकोऽसि ॥२३॥

कर्त्ता कृष्णो नियतमधुना गोकुलं राजधानी
बन्धुभ्योऽपि प्रगुणममुना गोदुहो माननीयाः ।

गोरक्षत्वमिति । हे नाथ ! यदा तावकीनं त्वदीयं गोरक्षत्वं गोपालत्वं समजनि जातं, तदैव तव स्वच्छन्दत्वं स्वाधीनत्वं स्वेच्छाचारित्वमित्यर्थः तिरयितुम् अपनेतुं शक्ताः समर्थाः मा भूम । त्वं कस्य वश्यः अधीनः ? न कस्यापीत्यर्थः । अथ यतः जगताम् ईशिता ईश्वरः असीति शेषः । हे अशठ ! किन्तु वाचाम् आविष्कारैः प्रयोगैः हृदयग्रन्थिम् उद्घाटयामि शिथिलयामीत्यर्थः ॥ २२ ॥

किमिति । हे नाथ ! ते तव इदं प्रेम किं जन्मान्तरं पुनर्जन्म उपगतं प्राप्तं वा पारसञ्चारकाले यमुनातरणसमये नद्या यमुनया धौतं क्षालितम् ? अथवा माथुरीणां मथुरावासिनीनां कार्मणो मिश्र-नैपुण्यं किम् ? यत् प्रेम इह तनौ न विस्मर्त्तव्यं यत्र प्रेम्णि पशोरपि बन्धः पशवोऽपि येन प्रेम्णा बद्धा इत्यर्थः, अब्दकतिपयैः अल्पसमयेनेति भावः अत्र ईदृशे प्रेम्णि निर्लेपकः उदासीनः असि ॥ २३ ॥

कर्त्तेति । अधुना इदानीं कृष्णः कर्त्ता अधिपतिः राजेति यावत्, नियतं निश्चितं गोकुलञ्च राजधानी भविष्यतीति शेषः, अमुना

काचिद् गोपी भवति महिषीत्युक्तमस्ते न वा कै-
स्त्वद्वैदग्ध्येन तु पिटकमप्रेतवत् कारिताः स्म ॥ २४ ॥
नीते नामन्यपि च भवतः प्रस्नुवाना स्तनाभ्यां
बिभ्रत्यङ्के पुलकिनि भवद्वेणुवेत्रप्रतोदान् ।
सोरस्ताडं न वहतु तवाक्रन्दमम्बा कथं वा
यस्मादद्य प्रशमितपरो राजराजेश्वरोऽसि ॥ २५ ॥
तैरुत्साहैः क्व खलु चलितं कुत्र ते नर्मवादाः
कण्ठो भग्नः कवचकरणैस्तात ! कृष्णेति शब्दैः ।
पर्वस्वन्तः किमपि विरजग्राममात्रानुकारी
विच्छेदस्ते तमपि कृतवान् नन्दमस्पन्दमेव ॥ २६ ॥

कृष्णेन गोदुहः गोपाः बन्धुभ्यः पित्रादिभ्योऽपि प्रभुत्वं समधिकमिति यावत् माननीयाः, काचित् गोपी महिषी राजपत्नी भवति च भविष्यतीत्यर्थः । इति अपि कैः जनैः न वा उक्तम् ? सर्वैरेवोक्तमित्यर्थः, तु किन्तु तव वैदग्ध्येन चातुर्येण पिटकमप्रेतवत् प्रस्थान यथा इव कारिताः स्म ॥ २४ ॥

नीते इति । अम्बा माता यशोदा भवतः नामनि च नीते प्रापिते श्रोत्रमिति शेषः स्तनाभ्यां प्रस्नुवाना प्रक्षरन्ती पुलकिनि रोमाञ्चवति अङ्के भवतः तव वेणुवेत्रप्रतोदान् वंशीं वेत्रं गोताडनदण्डञ्चेत्यर्थः बिभ्रती सती सोरस्ताडं वक्षस्ताडनसहितं तव आक्रन्दं कृष्ण रे क्व त्वमित्युच्चैः रोदनं कथं वा न वहतु न प्राप्नोतु न करोत्विति यावत् ? अपितु करोत्येवेत्यर्थः । यस्मात् अद्य इदानीं प्रशमितः शान्तिं नीतः परः शत्रुः येन तथाभूतः सन् राजराजेश्वरः असि भवसि ॥ २५ ॥

तैरिति । ते तव तैः उत्साहैः एवमेवं कर्त्तव्यमित्येवंरूपैः उद्यमैरित्यर्थः क्व खलु चलितं कुत्र गतम् ? ते तव नर्मवादाः परि-

दोहः प्रायो न भवति गवां दोहनं चेन्न पाकः
क्षीराणां स्यात् स भवति यदा दुर्लभं तद्दधित्वम् ।
दध्नः सिद्धौ क्व खलु मथनं मन्थने क्वोपयोग-
स्तक्रादीनामिति गतिरभूत्तस्य गोधुग्गृहेषु ॥ २७ ॥
तत्र क्षौणीक्षुरविलिखनं वप्रभङ्गो न शृङ्गै-
र्नैवास्पर्द्धी नवजलमुचां घोरहम्बानिनादः ।
कामोन्मादैरुदयति न वा सोपचर्य्यासपर्य्या
नामी वाहा मधुपुरपथादन्यदालोकयन्ति ॥ २८ ॥

ह्रावचनानि कुत्र ? गता इति शेषः, कलकलवर्णैः अतिदीनैरित्यर्थः तात कृष्ण इति शब्दैः कण्ठः मन्नः यशोदादीनामिति शेषः । पर्य्यन्तु देहपन्थिषु अन्तः मध्ये किमपि अनिर्वचनीयं यथा तथा विक्षरन् विध्यन् नाममालानुकारी कृष्णेति केवलेन नाम्ना समुत्तेजित इति भावः ते तव विच्छेदः तमपि अतिधीरमिति भावः नन्दं सतता-नन्दयोगित्वात् तदाख्यं तव पितरम् असन्दमेव कृतवान् ॥ २६ ॥

दोह इति । प्रायः बाहुल्येन गवां दोहः दोहनं न भवति, चेत् यदि दोहनं स्यादिति शेषः तदा क्षीराणां पाकः न स्यात्, यदा स क्षीरपाकः भवति तदा तस्य दधित्वं दुर्लभम् । दध्नः सिद्धौ निष्पत्तौ मथनं क्व खलु ? नैव मथनमित्यर्थः । मन्थने कथञ्चि-न्निष्पन्ने इति शेषः तक्रादीनाम् उपयोगः क्व ? नोपयोग इत्यर्थः । तस्य गोदुहां गोपानां गृहेषु इति इत्थं गतिः अवस्था अभूत् ॥२७॥

तत्रेति । तत्र क्षौण्यां भूमौ खुराभ्यां विलिखनं कुट्टनं न, निर्बलत्वादिति भावः, शृङ्गैः वप्राणां तत्कूटानां भङ्गः विदारणं न, तथा जलमुचां मेघानाम् आस्पर्द्धी प्रतिस्पर्द्धी घोरहम्बानिनादः नैव, अस्तीति सर्व्वत्र योज्यम् । कामेन ये उन्मादाः तैः या प्रसिद्धा उपचर्य्यायाः चिकित्सायाः सपर्य्या सेवा सरजस्कगवि अभिगमनरूपेति

वत्सालोकक्षरणसुलभप्रस्नवप्लावनीयं
धूलीजालं नयनसलिलैरध्वसु प्लावयन्त्यः ।
त्वामन्विष्य व्रजपुरसरित्तीरभूषु भ्रमन्त्यः
सद्योजातानपि सुरभयो नार्भकान् पाययन्ति ॥ २९ ॥

निःप्रेमाणो ललितयवसश्यामसीमन्यरण्ये
न्यस्य न्यस्य त्वदनुसृतये चक्षुषी दिक्षु दिक्षु ।
आजिघ्रन्ति व्यथितमनसः किञ्च सिञ्चन्ति बाष्पैः
क्रीडानीपं तव यदुपते ! वत्सका वत्सतर्य्यः ॥ ३० ॥

भावः न वा उदयति नैव चलतीति यावत् । किञ्च अमी वाहाः बलीवर्दाः मधुपुरपथात् अन्यत् न आलोकयन्ति न पश्यन्ति ॥२८॥

वत्सेति । सुरभयः धेनवः अध्वसु पथिषु वत्सानां स्वशावकानां क्षरणेन सुलभः अनायासलभ्यः यः प्रस्नवः क्षीरक्षरणं तेन प्लावनीयं प्लावनयोग्यं पूर्वं प्रायेण प्लावितमिति यावत् धूलीजालं रजोनिचयं नयनसलिलैः अश्रुधाराभिः प्लावयन्त्यः त्वाम् अन्विष्य त्वदुद्देश्यकमनुसन्धानं कृत्वा व्रजपुरे या सरित् नदी यमुनेत्यर्थः तस्याः तीरभूषु तटदेशेषु भ्रमन्त्यः सत्यः सद्योजातानपि अर्भकान् शिशून् न पाययन्ति ॥ २९ ॥

निःप्रेमाणा इति । किञ्च, हे यदुपते ! वत्सकाः स्तनन्धयाः वत्सतर्य्यः ललितैः सुन्दरैः यवसैः घासैः श्यामा सीमा यस्य तादृशे अरण्ये निर्गतं प्रेम अनुरागो यासां तथाभूताः तदनिच्छन्त्य इति यावत् तव अनुसृतये अनुसरणाय दिक्षु दिक्षु प्रतिदिशं चक्षुषी न्यस्य न्यस्य निक्षिप्य निक्षिप्य व्यथितं मनो यासां तथाविधाः सत्यः तव क्रीडानीपं केलिकदम्बम् आजिघ्रन्ति बाष्पैः अश्रुभिः सिञ्चन्ति च ॥ ३० ॥

भास्वत्कन्याकमलविपिनं कर्णिकाभेरमेतद्
वृन्दारण्यद्रुमकिशलयाः पाण्डुपत्त्रीभवन्ति ।
ग्रस्यैः पत्त्रैः पिहितमभितस्त्वद्विलासानुकूलं
मूलं धत्ते स तव कमलाकान्त ! केलीकदम्बः ॥ २१ ॥
ये वै गोवर्द्धनधर ! तव स्निग्धगम्भीरघोषैः
केकावाचः स्तिमितनयनास्तेनिरे ताण्डवानि ।
अद्य प्रावृड्घनघनघटागर्जितेऽपि प्रवृत्ते
भुग्नग्रीवाः किमपि न हि ते पुच्छमुल्लासयन्ति ॥ २२ ॥
यस्य स्कन्धो मलयसुरभिस्तावकैरङ्गसङ्गै-
र्यैतास्माकं सिचयनिचयं चोरयन्नुत्थितोऽसि ।

भास्वदिति । हे कमलाकान्त ! एतत् भास्वत् कन्यायाः यमुनायाः कमलविपिनं पद्मवनं कर्णिकाभेरं बीजकोषावशिष्टं जातमिति शेषः वृन्दारण्यस्य ये द्रुमाः वृक्षाः तेषां किशलयाः पल्लवाः पाण्डुपत्त्रीभवन्ति पक्वपत्त्रा भवन्ति । सः प्रसिद्धः तव केलीकदम्बः तव विलासानुकूलं विहारोपयोगि मूलम् अभितः समन्तात् ग्रस्यैः हृष्टैः पत्त्रैश्च पिहितम् आवृतं धत्ते धारयति ॥ २१ ॥

ये इति । हे गोवर्द्धनधर ! ये वै केकावाचः मयूराः तव स्निग्धगम्भीरघोषैः स्निग्धगम्भीरनादैः स्तिमितनयनाः निश्चलनेत्राः सन्तः ताण्डवानि नृत्यानि तेनिरे कृतवन्त इत्यर्थः तव नवजलधरमूर्त्तित्वात् तादृशनादवत्त्वाच्चेति भावः, अद्य इदानीं ते प्रावृषः वर्षाकालस्य घना निविड़ा या घनघटा मेघमाला तस्याः गर्जिते प्रवृत्ते प्रारब्धेऽपि किमपि अनिर्वचनीयं यथा तथा भुग्ना वक्रा ग्रीवा येषां तथाभूताः सन्तः पिच्छं बर्हं न हि उल्लासयन्ति नैव विस्तारयन्ति ॥ २२ ॥

यस्येति । हे देव ! तावकैः त्वदीयैः अङ्गसङ्गैः देहस्पर्शैः यस्य

यस्याधस्तात्तव चरणयोश्चक्रचिह्ना धरित्री
धन्यो नीपः समभवदसौ देव ! दोग्धुं दृशौ नः ॥२३॥

पाण्डुच्छायाः कुसुमरजसा भृङ्गमालाजटालाः
संवीताङ्गाः किशलयरुचा पाटलेनाम्बरेण ।
भोगाभावादपगतरुचः पावनाभ्यासभाजः
सर्वे वृन्दावनविटपिनो योगिचर्य्यां चरन्ति ॥ २४ ॥

शृङ्गस्वानप्रियसखसमाहूतिगोरक्षदक्षाः
प्रत्याख्याय व्रजपुरपथस्योपकण्ठे विविश्य ।
स्रोतद्बाष्पाः सहसुरभयो गोपतोकादयस्ते
सायं प्रातर्नगरसरणौ चौरवत् सञ्चरन्ति ॥ २५ ॥

स्कन्धः वाताङ्कः मन्दपवनसुरभिः चिक्कणः सुगन्धस्त्वित्यर्थः, अस्माकं शिवयनिचयं वसनसमूहं चोरयन् यत्र उत्थितः आरूढः असि, यस्य अधस्तात् तलेषु धरित्री भूमिः तव चरणयोः चक्रेण चिह्नं यस्यास्तथाभूता, असौ धन्यो नीपः कदम्बः नः अस्माकं दृशौ नयने दोग्धुं निःसरत्सलिले कर्त्तुमिति भावः समभवत्, अस्य दर्शनेनास्माकं अश्रुपातो जायते इति भावः ॥ २३ ॥

पाण्डुच्छाया इति । सर्वे वृन्दावनविटपिनः वृन्दावनतरवः कुसुमानां रजसा परागेण पाण्डुच्छायाः पाण्डुरकान्तयः, भृङ्गाणां माला एव जटा तद्वन्तः किशलयरुचा नवपल्लवकान्त्या पाटलेन रक्तेन अम्बरेण आकाशेन वस्त्रेणेति भावः संवीताङ्गाः आच्छादितदेहाः, भोगाभावात् अपगताः नष्टाः रुचः कान्तयः येषां तथोक्ताः, पावनः पवित्रताजनकः यः अभ्यासः तं भजन्ते इति तथाविधाः अतएव योगिचर्य्यां योगिनाम् आचारं चरन्ति अनुतिष्ठन्ति ॥ २४ ॥

शृङ्गेति । ते गोपतोकादयः गोपबालकादयः सह-सुरभयः गोचारणनियुक्ता इति भावः, शृङ्गस्य स्वानेन

विस्मृत्य त्वन्मधुपुरगतिं वासरान्ते पुरान्तः
औदामादौ विशति विशती हस्तहैयङ्गवीना ।
वत्स ! क्वासि क्व च मम सुतेत्युन्मदेव भ्रमन्ती
त्वामप्राप्य व्रजपतिवधूः क्रन्दयत्यश्मनोऽपि ॥ ३६ ॥
वीतासङ्गाः शयनवसनस्नानपानाशनादौ
गायन्त्यस्त्वच्चरितगुम्फिताः सन्ततं गीतगाथाः ।
औदासीन्यं किमपि सकला बन्धुवृन्दे वहन्त्यो
गोप्यो लीलाक्षितिषु भवतो योगिनीवत् भ्रमन्ति ॥३७॥

नादेन प्रियसखस्य कृष्णस्य समाहूतिः समाह्वानं गोरक्षे गोचारणे याः छिक्काः सङ्केतशब्दविशेषाः ताः प्रत्याख्याय परित्यज्य व्रजपुरपथस्य उपकण्ठे विशिष्य विशेषं कृत्वा श्रीतद्दामाख्याः चरदश्रवः सन्तः सायं प्रातः नगरसरणौ पुरमार्गे चौरवत् तस्करा इव सञ्चरन्ति भ्रमन्ति ॥ ३५ ॥

विस्मृत्येति । व्रजपतिवधूः यशोदा तव मधुपुरे गतिं गमनं विस्मृत्य वासरान्ते दिनान्ते सायंकाले इत्यर्थः औदामादौ पुरान्तः नगरमध्ये विशति प्रविशति सति हस्ते हैयङ्गवीनं नवनीतं यस्यास्तथाभूता विशती प्रविशती गृहमिति शेषः हे वत्स ! क्वासि हे सुत ! मम त्वं क्व च इति इत्यम् उन्मदेव उन्मत्तेव भ्रमन्ती सती त्वाम् अप्राप्य अश्मनोऽपि प्रस्तरानपि क्रन्दयति रोदयति ॥ ३६ ॥

वीतासङ्गा इति । सकलाः गोप्यः शयनवसनस्नानपानाशनादौ गार्हस्थ्यव्यापारे इति भावः वीतासङ्गाः गतस्पृहा इत्यर्थः, तव चरितगुम्फिताः चरित्रगुम्फिताः गीतगाथाः, गायन्त्यः तथा बन्धुवृन्दे पतिभ्रात्रादौ किमपि औदासीन्यं निःसङ्गतां वहन्त्यः सत्यः भवतस्तव लीलाक्षितिषु क्रीडाभूमिषु निकुञ्जेष्वित्यर्थः योगिनीवत् योगरता इव भ्रमन्ति पर्यटन्ति ॥ ३७ ॥

स्वार्थं नैतत् समुचिततया वच्मि कर्मातितीव्रं
सद्यं यस्मिन्नजनि समये नाथ ! यातः स कालः ।
अद्य त्वत्त्रिभुवनवशीकारमाधुर्यधुर्ये
त्वच्चातुर्ये न भवति यथा लाञ्छनं तद्विदध्याः ॥२८॥
एकैकाभिर्विहितमसकृत् तत्तवेहानुगत्यं
यस्मै कस्मिन्नपि गणयति क्रीतमात्मानमन्यः ।
धिग्वैदग्ध्यं तव तदिह ताः सिन्धुपारे विहाय
स्वैरी वैरी परम इव यन्निर्भरं निर्वृतोऽसि ॥ २९ ॥
कूलक्रोडे तपनदुहितुः श्यामपङ्के निमग्नं

स्वार्थमिति । एतत् मदुक्तमिति भावः स्वार्थं निजप्रयोजनकं न, समुचिततया सम्यक् औचित्येन वच्मि ब्रवीमि, यस्मिन् काले अतितीव्रम् अतिदारुणं कर्म तव असत्सु व्यलीकमिति भावः सद्यम् अजनि भूतं, हे नाथ ! स कालः समयः यातः गतः । अद्य इदानीं त्वत्तः बिभ्यतः दुष्टात्तत्रयाऽऽसन्नादिति भावः त्रिभुवनस्य वशीकारे प्रावल्येन स्वायत्तीकरणे यत् माधुर्यं चतु माहात्म्यं तस्य धुर्ये धुरन्धरे तच्छालिनीति भावः तव चातुर्ये कार्यदक्षतायां यथा लाञ्छनं कलङ्कः न भवति तत् विदध्याः कुर्याः ॥ २८ ॥

एकैकाभिरिति । एकैकाभिः अस्माभिः इह वृन्दावने असकृत् पुनःपुनः तत् तव आनुगत्यं सेवनं विहितं यस्य आनुगत्यस्य एकस्मि-न्नपि कृते इति शेषः अन्यः आत्मानं क्रीतं गणयति मन्यते । तव तत् वैदग्ध्यं चातुर्यं धिक् निन्दामि, धिगुक् निर्भर्त्सननिन्दयो-रित्यमरः । इह अस्मिन् सिन्धुपारे नदीपारे ताः अस्मानित्यर्थः विहाय त्यक्त्वा स्वैरी स्वेच्छाचारी सन् परमः वैरी शत्रुरिव यत् निर्भरं सम्यक् निर्वृतः निश्चिन्तः सुखीति यावत् असि ॥ २९ ॥

कूलेति । मद्विधाः मादृशाः गोप्य इति यावत् तपनदुहितुः

यत्नादुत्थापितमथ कृतोपस्कृयं कौशलेन।
न्यस्तं पीठे तव चरणयोश्चक्रचिह्नं पदं तत्
शालग्रामोपलमिव सदा मद्विधाः पूजयन्ति ॥ ४० ॥
युक्त्वा सर्वात्मनि मयि मनः सच्चिदानन्दरूपे
चेतस्तापं जहित न हितः कश्चिदेवाङ्ग सङ्गः।
इत्युद्देशान् कथयसि वृथा मादृशां बालिशानाम्
एते हि त्वद्विरहशिखिनः सान्निधेनीं भजन्ति ॥ ४१ ॥
वेशे वाम्यं तदपि मुदिरश्याम! सावर्ण्यतस्ते
मुग्धा हस्ते मरकतमयी कङ्कणश्रेणिरीदृक्।
अङ्गालेपो मृगमदरसैः स्निग्धनीलं दुकूलं
सर्वाङ्गीनं व्रजपुरजुषामङ्गनानामिदानीम् ॥ ४२ ॥

यमुनायाः श्यानपङ्के शुष्ककर्दमे कूलस्य तटस्य क्रोडे उत्सङ्गे निमग्नं निपतितं यत्नात् उत्थापितम् उद्धृतम्, अथ उद्धारानन्तरं कौशलेन नैपुण्येन कृता उपस्क्रिया परिष्कारो यस्य तादृशं पीठे न्यस्तं तव चरणयोः तत् चक्रचिह्नं पदं पदाङ्कमिति भावः शालग्रामोपलमिव शालग्रामशिलामिव सदा सततं पूजयन्ति अर्चयन्ति ॥ ४० ॥

युक्त्वेति। सर्वात्मनि सर्वेषां जगताम् आत्मनि परमात्मनि सच्चिदानन्दरूपे मयि मनो युक्त्वा चेतसः मनसः तापं जहित त्यजत, अङ्ग भोः कश्चिदेव सङ्गः आसक्तिः न हितः, मादृशां बालिशानां अज्ञानां गोपीनाम् इति इत्यम् उद्देशान् आलापान् वृथा निरर्थकं कथयसि। हि यतः एते तव विरहशिखिनः विरहाग्नयः सान्निधेनीं समन्त्रकाग्निसन्धुक्षणमन्त्रविशेषं भजन्ति लभन्ते। मदीयविरहार्तानामस्माकमुपदेशो वृथेति भावः ॥ ४१ ॥

वेशे इति। हे मुदिरश्याम स्निग्धश्याम! इदानीं व्रजपुरजुषां व्रजवासिनीनामित्यर्थः अङ्गनानां नारीणां वेशे परिच्छदे वाम्यं प्राति॰

साक्षाद्दीक्षां घटयति घनश्याम ! यत्ते कुतस्तत्
तल्लावण्यं प्रथय कृतिना केन चित्रेषु लेख्यम् ।
अक्रूरस्यागमनदिवसान्निद्रया नाथ ! नष्टं
कुत्र स्वप्नः शिव शिव ! दृशौ वाष्पवत्यौ परं नः ॥४३॥
दृष्टस्वप्नो भवति यदि मे दर्शनीयः कदाचित्
बर्हापीडं मधुरमुरलीधाम तद्धाम दृश्याः ।

कृत्स्नम् अनिच्छेति भावः तदपि किञ्चिदपीत्यर्थः वेशविधानमिति भावः ते तव लावण्यं तः समवर्णत्वेन, मलिनमिति भावः, इस्ते लुब्धा मनोहारिणी मरकतमयी कङ्कणश्रेणी ईदृक् मलिनेति यावत्, मृगमदरसैः कस्तूरीरसैः अङ्गलेपः अङ्गरागः मलिन इति भावः, तथा सर्वाङ्गीणं सर्वाङ्गव्यापकं दुकूलं वसनं स्निग्धनीलं तव साम्यादिति भावः । सर्वमेवास्माकं तव लावण्यात् अद्भुतमिति तात्पर्य्यम् ॥ ४२ ॥

चित्रदर्शनादयो विरहिणां विनोदाः साम्प्रतं नाना ह । साक्षादिति । हे घनश्याम ! ते तव यत् लावण्यं साक्षात् प्रत्यक्षम् ईक्षां दर्शनं घटयति घटयामासेत्यर्थः भूते वर्त्तमानवदुपचारः । साक्षात् दृष्टमिति भावः तत् लावण्यं केन कृतिना निपुणेन चित्रकरेणेति शेषः लेख्यं लिखितं शक्यम् ? कथय, न केनापि शक्यमित्यर्थः । एतेन चित्रदर्शनमपास्तम् । शिव शिवेति खेदे, हे नाथ ! अक्रूरस्य आगमनदिवसात् आगमनदिनमारभ्येत्यर्थः, ल्यबर्थे पञ्चमी । निद्रया नष्टं पलायितं, नास्ति निद्रेत्यर्थः । अतः स्वप्नः निद्रावस्थायां दर्शनं कुत्र ? नैव दर्शनमित्यर्थः । नः अस्माकं दृशौ नयने परं केवलं वाष्पवत्यौ अश्रुवर्षणाय वर्त्तेते इति शेषः । एतेन स्वप्नदर्शनमप्यपास्तम् ॥ ४३ ॥

दृष्टेति । यदि कदाचित् दृष्टस्वप्नः सन् मे मम दर्शनीयो

अस्मादन्यद् यदि वितनुषे दीयते दिव्यमुग्र
पादस्पर्शः पुरमृगदृशां दुर्लभस्तस्य स्यात् ॥ ४४ ॥
मद्भावेन स्थिरमथ चरं भावयन्त्यो भवत्यः
सन्तुष्यन्तु त्वमिति बहुधा तत्त्वमस्मानवादीः ।
आख्यातव्यं किमिह भवतः किञ्चिदूनो न वासौ
नैवास्माकं मदयति मनो नाम नीलाम्बरोऽपि ॥ ४५ ॥
व्यक्तीभूतः स्वयमयमसि श्लाघनीयः समृद्ध्या
कृच्छ्रेषु त्वं कथमिह परीतोषमस्मासु यायाः ।
तत्तद्बन्धुप्रकरपुरतस्तत्र कापि विवक्षा
धृत्वा यत्त्वामधिनिवसनं नाथ ! निष्पीचकार ॥ ४६ ॥

भवसि, तदा बर्हापीडं शिखिपिच्छभूषणं मधुरमुरलीधाम मनो-
हरवंशीधरं तत् धाम शरीरं दध्याः धारयेः । यदि अस्मात् अन्यत्
वितनुषे करोषि, तत् तदा पुरमृगदृशां नगरवासिनीनां कान्तानां
पादस्पर्शः तव दुर्लभः स्यात् इति उग्रं दारुणं दिव्यं दीयते ॥४४॥

मद्भावेनेति । भवत्यः मद्भावेन मद्रूपेण स्थिरम् अथ किंवा
चरं स्थावरजङ्गमं जगदिति यावत् भावयन्त्यः चिन्तयन्त्यः सत्यः
सर्वं विष्णुमयं जगदिति शास्त्रादिति भावः सन्तुष्यन्तु, त्वम् इतीत्थं
बहुधा तत्त्वं परमतत्त्वम् अस्मान् अवादीः उक्तवानसीत्यर्थः इह
अस्मिन् विषये किम् आख्यातव्यं वक्तव्यम् ? न किमपि वक्तव्यमस्ती-
त्यर्थः । भवतः किञ्चिदूनः असौ नीलाम्बरोऽपि बलदेवोऽपि अस्माकं
मनः नैव मदयति न वा, नैव मदयत्येवेत्यर्थः । सोऽपि अस्मान् न
तारतीति भावः ॥ ४५ ॥

व्यक्तीभूत इति । स्वयं व्यक्तीभूतः राजरूपे प्रकटीभूतः अयं
त्वं समृद्ध्या सम्पदा श्लाघनीयः असि, इह वृन्दावने कृच्छ्रेषु कष्ट-
दासु अस्मासु कथं परितोषं यायाः गच्छेः । हे नाथ ! यत् यतः

गव्यस्तेनः प्रथममुदभूर्वत्सपालश्च पश्चात्
तत्रेदानीं तदनु तदनु छिद्रनौकर्णधारः ।
लुण्ठाकोऽभूरथ कुलवधूजातिजीवार्थसार्थे
धिग्धातारं भवति निहितो येन भूचक्रभारः ॥ ४७ ॥
भक्तिप्रीतिप्रणयसहितं मानदम्भाद्यपेतं
चेतोऽस्माकं गुणवदगुणं गोदुहां देहमेतत् ।
विक्रीतं ते युगपदुभयं स्वीकृतञ्च त्वयाथो
हृद्गृह्णासि त्यजसि च वपुर्नाथ ! कोऽयं विचारः ॥४८॥

तत्र मथुरायां तत्तद्बन्धुप्रकरपुरतः तेषां तेषां बन्धुसमूहानां पुरतः अग्रतः क्वापि त्रिवक्रा कुब्जेत्यर्थः अधिनिवसनम् अधिगृहं त्वां धृत्वा निर्मोचकार अधोऽञ्चकार ॥ ४६ ॥

गव्येति । प्रथमं त्वं गव्यस्तेनः नवनीततस्करः उदभूः आसीः, पश्चात् कियद्दिनानन्तरं वत्सपालः वत्सानां रक्षकः, तदनु तदनु ततस्ततः छिद्रनौकर्णधारः सच्छिद्रतरणिनाविकश्च उदभूरित्यनेनान्वयः । अथ अनन्तरं कुलवधूनां जातिरेव सतीत्वमेवेत्यर्थः जीवः जीवनं स एव अर्थसार्थः धनसमूहः तत्र लुण्ठाकः दस्युरिति यावत् अभूः कुलवधूनामस्माकं सतीत्वं नाशितवानसीत्यर्थः । इदानीं तत्र तस्मिन् भवति त्वयि येन भूचक्रभारः भूमण्डलभारः निहितः समर्पितः, तं धातारं धिक् ॥ ४७ ॥

भक्तीति । भक्तिप्रीतिप्रणयसहितं मानदम्भादिभिः अपेतं विरहितम् अतएव गुणवत् अस्माकं गोदुहां गोदोहिनीनां चेतः मनः अगुणं गुणरहितम् एतत् देहञ्च उभयं युगपत् समकालं ते तव समाये विक्रीतं त्वया स्वीकृतञ्च गृहीतञ्च, अथो इदानीं हे नाथ ! त्वं हृद् हृदयं गृह्णासि, वपुः शरीरं त्यजसि च, अतः कोऽयं विचारः ? का विवेचना एषेत्यर्थः ॥ ४८ ॥

यत्राधर्मः प्रभवतितरां यत्र भूयाननर्थो
यत्राकामः स परमुदयी यत्र ते नास्ति मोक्षः ।
त्याज्ये तस्मिन्नपि परिजने गोचरे यत् त्वमर्थी
तस्मादर्थो भवति विदुषां पौरुषव्यत्ययेऽपि ॥ ४९ ॥

शैलोद्धर्त्ता दमितभुजगः पीतदावाग्निचक्रो
माद्यन्नागायुतबलगजाधीशभोजेन्द्रहन्ता ।
स त्वं दोषेऽप्यसति कुरुषे किङ्करीणामभद्रं
वक्तुं नास्ते जन इति न भोः कर्त्तुमेवं युनक्ति ॥ ५० ॥

यत्रेति । यत्र यस्मिन् परिजने भक्ते इति शेषः अधर्मः प्रभवतितराम् अतिशयेन प्रभवतीत्यर्थः, यत्र भूयान् महान् अनर्थः अर्थनाशः, यत्र परं केवलं सः प्रसिद्धः अकामः उदयी वर्द्धनशीलः, यत्र ते तव मोक्षः नास्ति, त्याज्ये त्यागार्हे तस्मिन्नपि परिजने कुब्जायामिति भावः गोचरे दृष्टिविषयं प्राप्ते यत् यतः त्वम् अर्थी अभिलाषुकः, धर्मार्थकाममोक्षशून्यविषयं यतस्त्वं कामयसे इति भावः, तस्मात् विदुषां विद्यावतां पौरुषव्यत्ययेऽपि पुरुषार्थराहित्येऽपि अर्थः प्रयोजनं भवति । सर्वेषामेव त्वत्पथानुवर्त्तित्वादिति भावः ॥४९॥

शैलोद्धर्त्तेति । त्वं शैलोद्धर्त्ता गोवर्द्धनधरः, दमितः भुजगः कालियः येन तादृशः कालियशास्तेत्यर्थः पीतं दावाग्निचक्रं दवानल-मण्डलं येन तथाभूतः दावाग्नेः शमयितेत्यर्थः माद्यतः मदमत्तस्य नागायुतबलस्य दशसहस्रहस्तिबलशालिनः गजाधीशस्य कुवलया-पीडस्य भोजेन्द्रस्य कंसस्य च हन्ता । स एतादृशमहापुरुषस्त्वं दोषे असति अपि किङ्करीणां दासीनाम् अभद्रम् अकुशलं पीडनमित्यर्थः कुरुषे, भोः एवं कर्त्तुं न युनक्ति न युज्यते इति वक्तुं जनः न आस्ते ? न तिष्ठति ? त्वया इत्थमसदृशे आचरिते कोऽपि एतादृशो जनो नास्ति यस्मात् अनुचितमिदं न कर्त्तव्यमित्येवमुपदिशतीति भावः ॥ ५० ॥

लोकातीतं य इह कुरुते कर्म किं धर्मदारा
तेन त्याज्या किमिह विहितं श्रीमता राघवेण ।
त्यक्ता सीता तदपि सुचिरं सैव हैमी प्रियाभूत्
त्यक्ता यस्मिन्नहनि तु वयं तत्र कुब्जारतोऽसि ॥ ५१ ॥

व्यावर्त्तध्वं स्वभवनमितः कुत्र रे याथ मुग्धा !
ऋज्वीरद्य स्पृशतु स कथं वल्लभः कुब्जिकायाः ।
सम्भूय त्वच्चरणकमलस्पर्शलोभेन यान्ती-
रित्थं गोपीः पथि पथि बलादध्वगा अप्यरुन्धन् ॥५२॥

पीयूषात्मा तव कुलगुरुर्जन्मदातावदातो
माता याभूदियमपि जगत्पावनीति प्रसिद्धा ।

लोकातीतमिति । इह जगति यः लोकातीतम् अलौकिकं कर्म कुरुते, तेन किं धर्मदारा धर्मपत्नी त्याज्या त्यक्तव्या । इह राघवेण रामेण अलौकिककर्मकारिणेति भावः किं विहितं कृतम् ? सीता त्यक्ता, तदपि तथापि हैमी स्वर्णनिर्मिता सैव सीतैव प्रिया अभूत् । तु किन्तु यस्मिन् अहनि वयं त्यक्ताः त्वयेति शेषः, तत्र तस्मिन्नेव दिने कुब्जायां रतः आसक्तः असि ॥ ५१ ॥

व्यावर्त्तध्वमिति । रे मुग्धाः मूढाः ! इतः अस्मात् प्रदेशात् स्वभवनं व्यावर्त्तध्वं प्रतिगच्छत । कुत्र याथ गच्छथ ? सः कृष्णः अद्य कुब्जिकायाः वल्लभः ऋज्वीः सरलाः युष्मान् कथं स्पृशतु स्पष्टत्वात् नैव तेन यूयं ग्रहीतव्या इति भावः । सम्भूय मिलित्वा तव चरण-कमलस्पर्शलोभेन पथि पथि प्रतिपथं यान्तीः गच्छन्तीः गोपीः इत्थम् अनेन प्रकारेण अध्वगाः पथिकाः अपि बलात् अरुन्धन् निवर्त्तयामासुः ॥ ५२ ॥

पीयूषात्मेति । हे देव ! तव कुलगुरुः वंशजनकः पीयूषात्मा अमृतमयः चन्द्र इत्यर्थः यदूनां चन्द्रवंशीयत्वादिति भावः जन्मदाता

एकैकन्ते जयति जगदानन्दि चित्रं चरित्रं
कस्मादेवं विरहदहने देव ! दासीर्जुहोषि ॥ ५३ ॥
स्वामी वामी भवति यदि तत्सन्निधौ सञ्चरिष्णुः
पथ्यं प्रत्याययति समयः सोऽयमीशानयानाम् ।
लोकद्विष्टं किमपि भवते कुर्वते युक्तवादी
साधुस्तस्मिन्न किमु मथुरामण्डले कश्चिदस्ति ॥ ५४ ॥
येनागत्य त्वमपि मथुरां यानमारोप्य नीतो
यश्चाविष्टस्तव चरणयोश्चक्रचिह्ने लुलोठ ।
अस्माकं त्वद्गमनसमये सा दशा येन दृष्टा
सोऽपि स्वामिन् ! किमपि करुणाकातरो न ब्रवीति ॥५५॥

पिता वसुदेवः अवदातः विशुद्धः, या च माता असूत इयमपि देवकी अपि जगतां पावनी पवित्रताकारिणी उद्धारिणीति यावत्, इति प्रसिद्धा विश्रुता । ते तव एकैकं चरित्रं चित्रम् आश्चर्यं जगताम् आनन्दि आनन्दजनकं सत् जयति सर्वोत्कर्षेण वर्त्तते । अतः कस्मात् दासीः अस्मान् एवम् इत्थं विरहदहने जुहोषि निक्षिपसि ॥ ५३ ॥

स्वामीति । हे देव ! स्वामिन् ! यदि स्वामी वामी प्रतिकूलः भवति, तदा तस्य स्वामिनः सन्निधौ सञ्चरिष्णुः पार्श्वचर इत्यर्थः अयं सः अनयानां दुर्नयानां समयः आचार इति उक्तेति शेषः पथ्यं न्याय्यं प्रत्याययति बोधयति अकार्य्यात् निवर्त्त्य प्रभुं हिते नियोजयतीति भावः । किन्तु तस्मिन् मथुरामण्डले लोकद्विष्टं लोकनिन्दितं किमपि कर्म कुर्वते भवते तुभ्यं युक्तवादी न्यायवादी कश्चिदपि साधुः नास्ति किमु ? यस्त्वां दुर्नयात् निवर्त्त्य सुनीतिमुपदिशतीति भावः ॥ ५४ ॥

येनेति । येनापि आगत्य यानं रथम् आरोप्य त्वं मथुरां नीतः,

अस्मन्मर्मच्छिदुरमकरोत् क्रत्यमत्युत्कटं यत्
कंसस्तेन त्रिभिरपि दिनैस्तत्फलं साधु लेभे।
त्वामुत्थाप्य त्वरिततुरगं येन यानं वितेने
किञ्चित्तस्य प्रभुवर! कुतः श्रूयते नाधुनापि॥ ५६॥
श्यामं तेजः प्रकृतिविमलत्वेन संक्रान्तसर्वं
प्रत्यक्षञ्च व्यवधिबहुलं विश्वरूपप्रकाशि।
आन्ध्यं जन्मावधि जनयताग्रिमलोकैकरत्नं
हाहा तेन त्वमपि मुषितं तारकं चक्षुषोर्नः॥ ५७॥

यश्च आविष्टः अवहितः सन् तव चरणयोर्वज्रचिह्ने लुलोठ लुठित-वान्, येन तव गमनसमये अस्माकं सा दशा अवस्था भूलुण्ठनादि-रूपेति भावः दृष्टा, हे स्वामिन्! सोऽपि अक्रूरोऽपि करुणायां दयायां कातरः सन् किमपि न ब्रवीति? तेनावश्यं किमपि अस्म-दर्थं वक्तव्यमिति भावः॥ ५५॥

अस्मदिति। कंसः यत् यतः अस्माकं मर्मच्छिदुरम् अरुन्तुदम् अत्युत्कटम् अतिदारुणं कृत्यं त्वदानयनरूपमिति भावः अकरोत् चकार, तेन हेतुना त्रिभिरपि दिनैः तस्य अस्माकं दुःखदानस्येति भावः फलं साधु सम्यक् यथा तथा लेभे प्राप, ममारेति भावः। येन अक्रूरेण त्वाम् उत्थाप्य नीत्वा त्वरिततुरगं यानं गमनं वितेने कृतं, हे प्रभुवर! तस्य किञ्चित् अमङ्गलमिति शेषः अधुनापि कुतः कस्मात् न श्रूयते? शीघ्रं तस्यामङ्गलवार्ताश्रवणे अस्माकं ताप-शान्तिः स्यादिति भावः॥ ५६॥

श्याममिति। हाहा इति खेदसूचकमव्ययम्। जन्मावधि यावज्जीवनमित्यर्थः आन्ध्यम् अन्धत्वं जनयता तेन अक्रूरेण श्यामं श्यामवर्णं तेजसः प्रकृतेः स्वभावस्य विमलत्वेन नैर्मल्येन संक्रान्तसर्वं सर्वसञ्चारीत्यर्थः प्रत्यक्षम् अक्षिगोचरं व्यवधिबहुलं बहुव्यवधाने

सूक्ष्मं सूक्ष्मादपि च कलयन्नन्धवच्चेष्टते यो
मान्ध्यं तस्मान्न तिरयति रसैरश्विनीनन्दनोऽपि ।
विज्ञातः स त्वमपि रचयन्नेवमङ्ग ! व्यवस्थां
अङ्गीकार्य्यः कथमिव वृथा किं परं दूषयामि ॥ ५८ ॥

तत्ते चित्तं शरणमपि नः सर्वतो भद्ररूपं
व्याहृत्यास्मान् वसति बलवन्नागरीवृन्दमध्ये ।
वैदग्ध्यं ते किमिदमधुना तद्बहिर्वीथिकान्ते
वासो रासोत्सवनट विभो ! दुर्लभो यन्ममापि ॥ ५९ ॥

स्थितमित्यर्थः विश्वस्य जगतः रूपं प्रकाशयतीति तथोक्तं विश्वरूपं जगन्मयं प्रकाशि प्रकाशमानञ्चेति वार्थः अशेषलोकानां सर्वजगताम् एकम् अद्वितीयं रत्नं मणिस्वरूपं नः अस्माकं चक्षुषोः तारकं ताराभूतं त्वमपि मुषितम् अपहृतम् । महानपकारः कृतस्तेनेति भावः ॥ ५७ ॥

सूक्ष्ममिति । यः सूक्ष्मात् अपि सूक्ष्मम् अतिसूक्ष्ममित्यर्थः कलयन् पुनःपुनरवलोकयन् अन्धवत् अन्ध इव चेष्टते व्यवहरति, अश्विनीनन्दनोऽपि स्वर्गवैद्योऽपि रसैः औषधविशेषैः तस्मात् आन्ध्यम् अन्धत्वदोषं न तिरयति न अपनयति । अङ्ग भोः ! एवं व्यवस्थाम् अस्मासु व्यवहारमिति भावः रचयन् कुर्वन् त्वमपि सः अन्धः विज्ञातः विदितः त्वमन्धोऽसीति भावः । अङ्गीकार्य्यः कथमङ्गीकार्यः तथान्धत्वदोषादस्मासु दृष्टिर्नास्तीति स तव एव कलङ्क इति भावः । कथमिव केन प्रकारेण किं वृथा निरर्थकं परम् अन्यम् अक्रूरादिकं दूषयामि ? नान्यापरस्य दोष इति भावः ॥ ५८ ॥

तदिति । तत् ते तव भद्ररूपं साधुरूपं चित्तं सर्वतः सर्वैः प्रकारैः नः अस्माकं शरणमपि आश्रयमपि अस्मान् व्याहृत्य विहाय अत्र मथुरायां बलवत् प्रबलम् आसाद्य इति भावः यत् नागरीवृन्द

किं नो वृष्ट्या न किमशनिभिर्भूभृता वा हताः स्मः
किं न प्लुष्टा दवहुतवहैर्दंशिताः किं न सर्पैः ।
प्रेम प्रौढं किमपि जनयन् न व्यलीकांश्च मुञ्चन्
ग्रन्थनेवं कथमपयशो घोरमङ्गीकरोषि ॥ ६० ॥
अस्मत्प्राणास्तव पदनखच्छायनीराजनाय
त्वं यातोऽभूः सपदि यदि ते यान्ति को वा विषादः ।
एकं किन्तु व्यथयति मनश्छद्मना किङ्करीणां
प्राणाञ्छिन्दे यदुपतिरिति त्वद्गता किंवदन्ती ॥ ६१ ॥

नगरवासिनीमङ्कुः तेषां मध्ये वसति, इदानीं तव चित्तं नागरिकासु संलग्नम् इति भावः । हे रासोत्सवनट विभो ! ते तव अधुना किमिदं वैदग्ध्यं चातुर्य्यम् ? यत् तस्य मनसः वल्लि-वीथिकान्ते वाह्यकक्षान्ते ममापि राधाया अपि वासः दुर्लभः ? का कथान्यासां गोपीनामित्यर्थः ॥ ५८ ॥

किमिति । वृष्ट्या सप्ताहं वर्षणेन किं नो, अशनिभिः वज्र-पातैः किं न, भूभृता पर्वतेन वा किं न हताः स्म नाशिताः भयाम । दवहुतवहैः दावाग्निभिः किं कथं न प्लुष्टाः न दग्धाः, सर्पैः कालियाद्यैः किं न दंशिताः वयमिति शेषः, वृष्ट्यादिषूत्पातेषु कथं वयं रक्षिता भवतेति भावः । किमपि अनिर्वचनीयं प्रौढ़ं निरतिशयं गाढ़मिति यावत् प्रेम जनयन् व्यलीकांश्च दुराचारांश्च न मुञ्चन् अत्यजन् कुर्वन्निति यावत् एवम् ग्रन्थन् व्यवहरन् कथं घोरम् उत्कटम् अयशः अकीर्त्तिम् अङ्गीकरोषि स्वीकरोषि ? ॥ ६० ॥

अस्मदिति । अस्माकं प्राणाः तव पदयोः ये नखाः तेषां छाया तत् तस्य नीराजनाय सेवनाय सन्तीति तव पादच्छायां संसेव्य तिष्ठन्तीति भावः । त्वं सपदि सहसा यदि यातः अभूः, तदा ते प्राणा यान्ति गच्छन्ति, अत्र को वा विषादः दुःखम् ? नैवास्माकं

सङ्कोचो यस्तव गुरुजने यश्च पौराङ्गनासु
व्यक्तीभूतं तदुभयमभूत् कुब्जिकोपग्रहेण ।
अस्मानेव क्षिपसि सहसा देव ! दूरात्स्वकीयः
कर्त्तुं यः पारयति स कृती किं करोत्येवमेव ॥ ६२ ॥
एतस्मादप्यधिकमधिकं यत्तदस्मासु कुर्य्या
न स्वप्नेऽपि त्वयि विसदृशं चिन्तयत्येतदन्तः ।
दन्ते कृत्वा तृणमिति महासभ्यमभ्यर्थयामि
स्वामिन्नेवं न हि मधुपुरीक्षीणमध्यां विदध्याः ॥६३॥

विषाद इत्यर्थः। किन्तु यदुपतिः छद्मना छलेन किङ्करीणां दासीनां प्राणान् निन्ये जहार इति त्वद्गता खामाकृदा किंवदन्ती लोकापवादः, किंवदन्ती जनश्रुतिरित्यमरः। एवं केवलं मनः अस्माकमिति शेषः व्यथयति क्लेशयति ॥ ६१ ॥

ननु गुरूणां पौराङ्गनानां परतन्त्रोऽहं कथं युष्मान् प्रति प्रेम आविष्करोमीत्यत आह, सङ्कोच इति। तव गुरुजने पित्रादौ यः, पौराङ्गनासु स्वयोग्यास्विति भावः यश्च सङ्कोचः कुण्ठितता, तदुभयं कुब्जिकायाः उपग्रहेण प्रश्रयेण व्यक्तीभूतं प्रकाशितम् अभूत्। हे देव ! अस्मानेव सहसा दूरात् स्वकीयः सुदूरे देशे इति यावत् क्षिपसि त्यजसि। ननु सर्वतोमुखी प्रभुता मम, तत् यदहमिच्छामि तत् करोमीत्यत आह, कर्त्तुमिति। यः कर्त्तुं पारयति शक्नोति, स कृती शक्तिमान् जनः किम् एवमेव करोति ? नैव करोतीत्यर्थः, शक्तिरस्तीति मत्वा नैव परद्रोहः कर्त्तव्य इति भावः॥ ६२ ॥

एतस्मादिति। एतस्मादपि द्रोहादिति भावः अधिकम् अधिकं यत् अस्तीति शेषः, तत् अस्मासु कुर्य्याः विदध्याः। एतत् अन्तः अन्तःकरणं स्वप्नेऽपि विसदृशम् अशुभमिति यावत् न चिन्तयति। इत्ते तृणं कृत्वा महासभ्यं भवन्तमिति शेषः इति अभ्यर्थयामि याचे,

द्रोणीरादौ मलयजयुताः मोचिताः सञ्चिनुध्वं
वापीर्निम्नीकुरुत शतशो नालमेवालपूर्णाः।
सख्यं सख्यो मधुपुरपतौ याति तोये तदानीं
प्रेष्यो वश्यो मिलति यदि तन्माथुरीर्वन्दयिष्ये ॥ ६४ ॥
सौभाग्येन व्रजकुलवधूसार्थसीमन्तरत्नं
या कंसारेरतिगुणवती स्कन्धमप्यारुरोह।
सेयं राधा किमिदमिति मामुद्दिशन्तोऽङ्गुलीभिः
लोकानत्र स्नपितनयनान् शाखिनो रोदयन्ति ॥ ६५ ॥

हे स्वामिन्! मधुपुरीश्रोणमध्यां मथुरावासिनीं कृशोदरीं कुब्जामिति भावः एवं मद्विधां नैव विदध्याः कुर्याः, तां प्रति मेवं व्यवहरेति भावः ॥ ६२ ॥

द्रोणीरिति। हे सख्यः! आदौ मलयजयुताः चन्दनपूर्णाः अधुना मोचिताः अस्माकं व्यवहाराभावादिति भावः द्रोणीः काष्ठाम्बुवाहिनीः मथुरावासिनीकुब्जाक्रान्तत्वादिति भावः सञ्चिनुध्वं संगृह्णीत, शतशः बह्वीरित्यर्थः नालमेवालपूर्णाः वापीः सरांसि निम्नीकुरुत आयत्तीकुरुत, मधुपुरपतौ सख्यं सादृश्यं याति गच्छति कृष्णतुल्यश्यामवर्णे तोये जले वश्यः वशंवदः प्रेष्यः दासः श्रीकृष्णः यदि मिलति तदा तन्माथुरीः तस्य कृष्णस्य मथुरावासिनीः नारीरिति शेषः वन्दयिष्ये प्रणंस्यामि ॥ ६४ ॥

सौभाग्येनेति। व्रजकुलवधूनां सार्थस्य समूहस्य सीमन्तरत्नं शिरोरत्नभूता अतिगुणवती या राधा कंसारेः कृष्णस्य स्कन्धमपि आरुरोह, सेयं राधा किमिदं कथमेवंदशेति भावः, इति अङ्गुलीभिः पल्लवरूपाभिरिति भावः माम् उद्दिशन्तः प्रदर्शयन्तः शाखिनोऽपि वृक्षा अपि अत्र वृन्दावने लोकान् स्नापितनयनान् अश्रुक्लिन्ननेत्रान् कृत्वेति शेषः रोदयन्ति ॥ ६५ ॥

र्यो विद्यायां तपसि भवतो ज्येष्ठ एवादिदेवो
माद्यन्मायाविभव ! भवता वञ्चितः सोऽपि दृष्टः ।
या त्वामम्बा शरणमविशद् वञ्चकस्तापि तस्या-
स्त्वामुद्दामा कथय न कथं लोकलज्जा रुणद्धि ॥ ६६ ॥

आदावेव क्षणसुखकरं कृष्ण ! कल्पान्तभोग्य-
क्लेशारम्भि त्वयि मम महत् पातकं प्रेम मन्ये ।
प्रायश्चित्तं भवति न च मे दुर्गताया विधेयं
तेनैव त्वामहमविरतं सानुतापा स्मरामि ॥ ६७ ॥

य इति । हे माद्यन् मायाविभवो यस्य तथोक्तः तत्सम्बुद्धौ, महामायाशालिन्नित्यर्थः, यः आदिदेव. महादेवः विद्यायां तपसि च भवतः ज्येष्ठ एव, भवता सोऽपि वञ्चितः प्रतारितः दृष्टः लोकै-रिति शेषः । या अम्बा माता त्वां शरणम् आश्रयम् अविशत् प्राप, त्वं तस्याः यशोदाया अपि वञ्चकः प्रतारकः, अतः उद्दामा उत्कटा लोकलज्जा त्वां कथं न रुणद्धि न निवर्त्तयति दुष्टाचारादिति भावः, कथय । ६६ ॥

आदाविति । हे कृष्ण ! त्वयि मम प्रेम आदावेव प्रथममेव क्षणसुखकरं क्षणिकसुखदं, किन्तु कल्पान्तभोग्यम् आप्रलयभोग्यं क्लेशम् आरभते उत्पादयतीति तादृशम् अतएव महत् पातकं पापं मन्ये । दुर्गतायाः दुरवस्थायाः मे मम प्रायश्चित्तं पापशुद्धि-जनकं कर्म चान्द्रायणादिकं विधेयं कर्त्तव्यं कर्त्तुं शक्यमित्यर्थः न च भवति, तेनैव हेतुना सानुतापा अनुतापिनी सती अविरतं सततं त्वां स्मरामि । पश्चात्तापानुतापेन शुद्धिर्भवति पापिनामिति शास्त्रात् अनुतापरूपं नाम्नो हि यावती शक्तिः पापनिर्हरणे हरेः । तावत् कर्त्तुं न शक्नोति पातकं पातकी नर इति वचनात् त्वन्नामस्मरणरूपस्य प्रायश्चित्तं करोमीति भावः ॥ ६७ ॥

मातुर्नापि स्मरणमियता सूचितं लौकिकं ते
धर्माधीनो वदसि तदपि व्यक्तमेतावतैव ।
किञ्च ब्रूते तव रसिकतां निग्रहः कामिनीनां
को जानीते कितव ! भवतः कुत्र तात्पर्य्यमस्ति ॥६८
तत्त्वज्ञानं कथय शतधा प्रेषय प्रेष्यलक्षं
चिन्तारत्नं वितर कुरु वा सानुतापप्रसङ्गान् ।
यावद्दोर्भ्यां तव नवघनश्यामलं धाम गाढं
नाश्लिष्यामि त्रुटति न हि मे तावदेवैष तापः ॥६९॥

मातुरिति । मातुः यशोदाया अपि न स्मरणं मातापि न स्मर्य्यते त्वयेति भावः, इयता एतेन ते तव लौकिकं लोकाचारः शिष्टव्यवहार इति यावत् सूचितं अनुमितम् । यच्च धर्माधीनः धर्मपरतन्त्रः असि, तदपि धर्माधीनत्वमपि एतावतैव मातुरस्मरणे-नैवेत्यर्थः व्यक्तं प्रकाशितम् । किञ्च हे कितव ! धूर्त्त ! कामिनीनां निग्रहः पीड़नं तव रसिकतां ब्रूते प्रकटयति, अतः भवतः कुत्र कस्मिन् विषये तात्पर्य्यं आशयः अस्ति, तत् कः जानीते ? न कोऽपीत्यर्थः ॥ ६८ ॥

तत्त्वज्ञानमिति । त्वं तत्त्वज्ञानं शतधा बहुधेत्यर्थः कथय उप-दिश, प्रेष्यलक्षं लक्षसंख्यान् प्रेष्यान् प्रेषय, चिन्तारत्नं चिन्तामणिम् अभिमतरत्नमित्यर्थः वितर देहि, सानुतापप्रसङ्गान् न मयेदं भद्रं कृतं, क्षमध्वं यूयमित्येवंरूपानिति भावः कुरु वा, यावत् दोर्भ्यां भुजाभ्यां तव नवघनश्यामलं धाम शरीरं गाढं न आश्लिष्यामि नालिङ्गामि, तावत् एष मे मम तापः न हि त्रुटति नैव शाम्यतीत्यर्थः ॥ ६९ ॥

लक्ष्मीकान्तं कतिचन चिदानन्दमन्ये विदुस्त्वां
मायाकारं कतिचिदपरे साधकाः स्निग्धमाहुः ।
यो वाऽन्यो वा भव नवघनश्याम ! तस्यैव धाम्नो
दासीभूता वयमिति परे बन्ध्यकल्पा विकल्पाः ॥७०॥
नायासि त्वं न च नयसि मामात्मनः पादमूलं
नो वा दूतं विसृजसि न वा लेखलेशं ददासि ।
निःश्वासाग्निर्निपतति न ते काचिदाश्वासवार्त्ता
कस्मिन्नाशामुपहितवती जीवितं धारयामि ॥ ७१ ॥
यत् पूर्वेद्युर्गमनदिवसान्मानभङ्गाभिलाषी
लक्ष्मीकान्त ! त्वमपि पतितः पादमूले ममासीः ।

लक्ष्मीकान्तमिति । कतिचन जनाः त्वां लक्ष्मीकान्तम्, अन्ये चिदानन्दं ज्ञानानन्दं विदुः जानन्ति, कतिचिदपरे साधकाः मायाकारं त्वां स्निग्धम् आहुः । हे नवघनश्याम ! त्वं यो वा अन्यो वा भव, तस्यैव सुरलीधरश्यामस्यैवेत्यर्थः धाम्नः कलेवरस्य वयं दासीभूता इति परे अन्ये विकल्पाः विभिन्नकल्पाः कल्पितानि विविधानि रूपाणीति भावः बन्ध्यकल्पाः प्रायेण विफला इत्यर्थः ॥ ७० ॥

नेति । त्वं न आयासि नागच्छसि, न च माम् आत्मनः पादमूलं नयसि, दूतं वार्त्तावहं वा नो विसृजसि न प्रेषयसि लेखलेशम् अल्पमपि लेख्यं न वा ददासि, ते तव निःश्वासाग्निः उष्णनिःश्वास इत्यर्थः मादृशां दुःखानुस्मरणादिति भावः न निपतति, ते तव काचित् कापि आश्वासवार्त्ता न अस्तीति शेषः, अतः कस्मिन् विषये आशाम् आशामित्यर्थः उपहितवती प्राप्तवती सती जीवितं धारयामि ? ॥ ७१ ॥

यदिति । हे लक्ष्मीकान्त ! गमनदिवसात् पूर्वेद्युः पूर्वस्मिन्

स्पृष्टोऽकृत्वा तदपि न मया नापि नेत्रान्तपीतः
चित्ते शल्यं सविषमिव तन्मामके लग्नमस्ति ॥ ७२ ॥
को जानाति त्वदपहरणक्रूरमक्रूरमाप्तं
कः प्रत्येति त्वमपि सहसा गोकुलं त्यक्ष्यसीति ।
त्यक्त्वा नायास्यसि पुनरिदं नाथ! केनाप्रमेयं
मद्दुर्दैवान्यहह सुमहादुर्घटं साधयन्ति ॥ ७३ ॥
भूयस्त्वञ्चेद्विलसि महिलासम्प्रदायं विहाय
द्वाभ्यां दृग्भ्यां युगपदपि तद्रूपमाद्यौ ग्रहीष्ये ।
आश्लिष्य त्वामहह तदनु स्पन्दसम्बन्धहीना
कल्पक्रूरामपि निमिषतां यामिनीं यापयिष्ये ॥ ७४ ॥

दिने मानभङ्गाभिलाषी मम मानापनयनार्थी ननु त्वमपि मम पाद-मूले पतितः आसीः, तदपि पादपतनेऽपि मया अकृत्वा पादस्येति शेषः न स्पृष्टः, नापि नेत्रान्तेन अपाङ्गेन पीतः दृष्टः । मामके चित्ते लग्नं सविषं शल्यमिव अस्ति ॥ ७२ ॥

क इति । तव अपहरणेन क्रूरं निष्ठुरम् अक्रूरम् आप्तम् आगतं कः जानाति ? न कोऽपीत्यर्थः । त्वमपि सहसा हठात् गोकुलं त्यक्ष्यसीति कः प्रत्येति विश्वसिति ? न कोऽपीत्यर्थः । हे नाथ ! इदं गोकुलं त्यक्त्वा पुनः न आयास्यसि नागमिष्यसि, एतत् केन मेयम् अनुमेयम् ? न केनापीत्यर्थः । अहह खेदे मम दुर्दैवानि दुर्भाग्यानि सुमहादुर्घटं सुमहत् व्यसनं घटयन्ति जनयन्ति । अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तदुक्तं दर्पणे । हेतोर्वाक्य-पदार्थत्वे काव्यलिङ्गं निगद्यते इति ॥ ७३ ॥

भूय इति । चेत् यदि महिलासम्प्रदायं माथुरीष्टन्दमिति भावः विहाय परित्यज्य त्वं भूयः पुनः विलसि सङ्गच्छसे, तदा द्वाभ्यां

यात्राकाले क्षणमपि चलन्नन्दपत्नीकराब्ज-
व्यस्तन्यस्तेन च सुरुचिरं रोचनाचित्रकेण ।
आशीर्दूर्वाचितचितमनुधार्यमाणं मुखं ते
सर्वक्लेशापहमपि जगन्नाथ ! मर्म छिनत्ति ॥ ७५ ॥

न स्मर्तव्यस्त्वयमदयः कर्हिचिद्बर्हचूड़ो
निश्चित्येति स्पृहयति मनो यावदर्थान्तराय ।
किं ते वैरं विहितमव रे कृष्ण ! कृष्णेत्यनाख्य-
धारावाहिस्मरणपदवीं गाहसे तावदेव ॥ ७६ ॥

दृग्भ्यां नेत्राभ्याम् आदौ तव रूपं सुरवीथरश्यामलमिति यावत् युगपदपि समकालमेव पास्योष्ये पास्यामि, यथा न पुनर्विच्छेदः स्यादिति भावः । अहह खेदे, त्वाम् आश्लिष्य आलिङ्ग्य तदनु आश्लेषानन्तरं सन्दसम्बन्धहीना असन्देति यावत् सती कल्पकूटामपि अतिदीर्घामपीति भावः यामिनीं रजनीं निमिषताम् अल्पमात्रक्षणत्वम् यापयिष्ये प्रापयिष्ये नेष्यामीत्यर्थः ॥ ७४ ॥

यात्रेति । हे जगन्नाथ ! यात्राकाले मथुरागमनसमये क्षणमपि भाविपुत्रविरहादिति भावः चलता अस्थिरेण नन्दपत्न्याः यशोदायाः कराब्जेन करकमलेन व्यस्तं विपरीतं यथा तथा न्यस्तं निहितं तेन रोचनाचित्रकेण गोरोचनया चित्रीकरणेन सुरुचिरं सुमनोहरम् आशिषि आशीर्वादे प्रयुज्यमानं यत् दूर्वाचितं तेन चितं युक्तं ते तव मुखम् अनुधार्यमाणं सत् सर्वक्लेशापहमपि सर्वसन्तापहरमपि मर्म छिनत्ति व्यथयति अस्माकमिति शेषः ॥ ७५ ॥

नेति । तत् तस्मात् तव स्मरणस्य सन्तापहेतुकत्वादिति यावत् अयम् अदयः निष्ठुरः बर्हचूड़ः मयूरपिच्छधरः न स्मर्तव्यः न स्मरणविषयीकर्तव्य इति निश्चित्य मनः चित्तं यावत् अर्थान्तराय अन्यस्मै कार्याय स्पृहयति, रे कृष्ण ! ते तव किं वैरं आत्मनः

गुञ्जाहारं कतिचन तदा पल्लवस्रञ्जि केचित्
केचिद् वर्हस्तवकमपरे वेत्रमन्ये प्रतोदम् ।
वंशीं काचित् त्वदधरसुधासारसौरभ्यरम्यां
निन्युर्धन्या निजमविदुषी दीर्घमायुर्मृतास्मि ॥ ७७ ॥
आयास्यामि स्वयमिति पुरः प्रस्थितौ यत् त्वयोक्तं
मय्येवाम्बुप्लुतमिव तदा नाथ ! निक्षिप्तमक्षि ।
आस्थामत्र प्रणिहितवती प्राणिमि प्राणबन्धो !
चिन्ताबन्धोऽभवदथ भवेः सत्यसन्धो न वेति ॥ ७८ ॥

अपराध इति भावः कृतम्, अत्र रत्न अश्मानि[illegible] शेषः तावदेव अन्तः अन्तःकरणं कथ्यंचिव कार्य्यान्तरात् आकर्षंचिव धारावाहिनी या स्मरणपदवी तां गाहसे पुनःपुनः स्मरणपदवीमारोहसीत्यर्थः ॥ ७६ ॥

गुञ्जाहारमिति । तदा तस्मिन् काले तव यात्राकाले इत्यर्थः कतिचन गोपा इति शेषः गुञ्जाहारं, केचित् गोपाः पल्लवस्रञ्जि पर्णनिर्मितानि स्रञ्जि, केचित् वर्हस्तवकं शिखिपिच्छनिचयम्, अपरे वेत्रम्, अन्ये प्रतोदं गोवत्समयासनदण्डमित्यर्थः तथा काचित् धन्या नारी तव अधरसुधासारस्य सौरभ्येण सौगन्ध्येन रम्यां वंशीं निन्युः लब्धुः । अहन्तु निजं दीर्घम् आयुः अविदुषी अजानती मृता अस्मि मृत्युकालोऽयं ममेति मत्वा विमूढा अतिष्ठमिति भावः ॥ ७७ ॥

आयास्यामीति । हे नाथ ! प्रस्थितौ प्रस्थानकाले आया-स्यामि आगमिष्यामि स्वयमिति पुरः अग्रतः यत् यदा त्वया उक्तं तदा मय्येव अम्बुप्लुतमिव वाष्पाष्टतमिव अक्षि नयनं निक्षिप्तम् अर्पितं त्वयेति शेषः हे प्राणबन्धो ! अत्र अस्मिन् आस्थाम् आशां प्रणि-हितवती अर्पितवती अहं प्राणिमि जीवामि । कथं तादृशदृष्टि-निक्षेपेण मां प्रति प्रेमातिरेकप्रदर्शनात् कदापि स न त्यक्ष्यतीति

सेयं सिन्धुर्विकचकमला काननं फुल्लमेतन्-
नीपश्चायं कुसुमनमितः श्रूयते भृङ्गगीतम् ।
स त्वं साहं स च रतिपतिः किं वदामः परन्ते
भावो भिन्नः सपदि विदधे सर्वमन्यादृगेव ॥ ७९ ॥
योषिन्मध्यं रमय दमय द्वेषिणो दुर्विनीतान्
सम्राडेधि प्रणय सुमुखो बन्धुवृन्दं पुराणम् ।
क्लेशानेषा वहतु बहुशः कान्त ! किं तेन वार्त्ता
कल्याणी ते भवतु मम तु श्रोतुमेवेदमायुः ॥ ८० ॥

आशया प्राणधारणं करोमीति तात्पर्य्यम् । अथ अनन्तरं सत्य-सन्धः सत्यप्रतिज्ञः भवेः न वा इति चिन्तासन्धः चिन्ताप्रवरः अभ-वम् ॥ ७८ ॥

सेयमिति । सा इयं विकचकमला प्रस्फुटितपद्मा सिन्धुर्नदी यमुनेत्यर्थः, एतत् फुल्लं विकसितं काननम्, अयञ्च कुसुमनमितः पुष्प-भारावनत इत्यर्थः नीपः कदम्बः, भृङ्गाणां गीतं श्रूयते । स त्वं, सा अहं, स च रतिपतिः कामः, परम् अन्यत् ते तुभ्यं किं वदामः, भिन्नः भावः आशयः सपदि सहसा सर्वम् अन्यादृगेव अन्यविधमेव विदधे कृतवान् ॥ ७९ ॥

योषिन्मध्यमिति । हे कान्त ! योषितां नारीणां मध्यं रमय रत्या आनन्दय, दुर्विनीतान् दुष्टान् द्वेषिणः शत्रून् दमय शाधि, सम्राट् राजाधिराजः एधि भव यासि यस्याज्ञया राज्ञः स सम्राडिति कथ्यते इति कोषः । सुमुखः अनुकूलः सन् पुराणं बन्धुवृन्दं चाति-वृद्धं प्रणय संवर्द्धय । एषा अहमिति भावः बहुशः बहुविधान् क्लेशान् वहतु, तेन एतस्याः क्लेशेन किम् ? न कापि क्षतिरिति भावः । तु किन्तु मम इदम् आयुः जीवनकालः ते तव कल्याणी

यत्तन्मेऽस्तु त्वयि तु चरितं युक्तिवर्त्मव्यतीतं
सम्पश्यन्ती किमपि किमपि प्राणबन्धो ! बिभेमि ।
दीना याचे विधिमहमतस्त्वत्कृते मन्यन्ते
यद् गर्गाद्याः किमपि निपुणे तद्वचः सत्यमस्तु ॥ ८१ ॥
आगः कश्चिदहनि न कृतं तिष्ठतापि त्वयेह
प्रस्थानेन प्रकटितमहो वीर ! वैरं वरीयः ।
कृच्छ्रत्वं नो न जयितुमियानेव यत्नस्तवाभूद्
एतच्चेतस्त्वयि तु न गुणादन्यदङ्गीकरोति ॥ ८२ ॥

मादृशीं वार्त्तां श्रोतुमेव भवतु, तव मङ्गलवार्त्ताश्रवणेनैवाहं हृष्टा भविष्यामीति भावः ॥ ८० ॥

यदिति । यत् तत् मे मम अस्तु भवतु हे प्राणबन्धो ! त्वयि तु युक्तिवर्त्मव्यतीतम् उपपत्तिरहितं किमपि किमपि अनिर्वचनीयमित्यर्थः अलौकिकमिति यावत् चरितं सम्पश्यन्ती सती बिभेमि त्रासं गच्छामि । अतोऽहं दीना कातरा सती तव कृते निमित्तं विधिं विधातारं याचे प्रार्थये, निपुणे चतुरे त्वयि गर्गाद्या मुनयः यत् वचः, जगतां भारापनयनार्थमेषः कृष्णः अवतीर्णः महत् कार्यं करिष्यतीत्यादिरूपं मन्त्रयन्ते संवदन्ति, तत् सत्यम् अस्तु भवतु ॥ ८१ ॥

आग इति । त्वया इह तिष्ठतापि कस्मिन् अहनि दिवसे आगः अपराधः न कृतं, नित्यमेव त्वया अस्माकं व्यलीकं कृतमित्यर्थः । हे वीर ! अहो इदानीं प्रस्थानेन वरीयः श्रेष्ठं वैरं प्रकटितं प्रकाशितम् । तव कृच्छ्रत्वं निष्ठुरत्वं जयितुं निवारयितुं नः अस्माकम् इयान् यत्नः नाभूदेव, त्वयि एतत् चेतः अन्तःकरणं गुणात् अन्यत् दोषमित्यर्थः न अङ्गीकरोति न गृह्णाति ॥ ८२ ॥

तुभ्यं दातुं विषमुपनता पूतनाघानि युक्तं
विश्वोन्माथिष्वपि समुचितो निग्रहः पूरुषेषु ।
मुग्धा योषित् प्रकृतिकृपणानन्यवृत्तिश्च या ते
तस्योन्माथे किमपयशसः पातकाद्वान्यदस्ति ॥ ८३ ॥
सम्भोग्योऽभूर्दिनकतिपयं मादृशीनामथ त्वं
माथुर्यस्त्वां दिनकतिपयं भुञ्जते सह्यमेतत् ।
अस्माभिर्यो भवदनुभवः सोऽपि सर्वात्मना यन्-
निःसंस्कारः समजनि मनो दग्धमेतावतैव ॥ ८४ ॥
तुल्याकारं समनुभवतोरत्र दुःखं सुखञ्च

तुभ्यमिति । तुभ्यं विषं दातुम् उपनता उपस्थिता पूतना अघानि हता युक्तमेतदिति शेषः, विश्वोन्माथिषु जगदुपद्रवकारिषु पूरुषेषु कंसादिष्विति भावः निग्रहः समुचितः सम्यक् युक्तः । मुग्धा प्रकृतिकृपणा स्वभावदीना अनन्यवृत्तिः अनन्यपरायणा त्वदेकशरणेति भावः या ते तव योषित् नारी, तत्र तस्याम् उन्माथे पीड़ने अपयशसः अकीर्त्तेः पातकाद्वा अन्यत् किम् अस्ति ? नैवास्तीत्यर्थः ॥ ८३ ॥

सम्भोग्य इति । त्वं दिनकतिपयं मादृशीनां गोपाङ्गनानामिति भावः सम्भोग्यः अभूः आसीः, अथ इदानीं माथुर्य्यः मथुरावासिन्यः दिनकतिपयं चेत् यदि त्वां भुञ्जते, तदेतत् सह्यम् । किन्तु यः अस्माभिः सह भवतः अनुभवः प्रणय इति यावत् सोऽपि सर्वात्मना सर्वथा यत् निःसंस्कारः संस्कारः बोधः तद्रहितः अभूतपूर्ब इवेति भावः यद्वा भवता अनु सह भवः जन्म यस्य तथोक्तः बलदेव इत्यर्थः सोऽपि सर्वात्मना निःसंस्कारः निःसम्बन्धः समजनि जातः, एतावतैव मनः दग्धम् ॥ ८४ ॥

क्रीड़ाकारी त्वमहमिति नौ शब्दभेदोऽपि जातः ।
स त्वं योषित्कुलरतिगुरुः साहमेव वराकी
सा किं नाहं त्वमसि न स किं नाथ ! किं जातमेतत् ॥ ८५ ॥

धैर्य्यात् काचित् कतिचन सखीशिक्षया लज्जयान्या
भीत्या काचित् कतिचन रुषा काचिदालस्यतोऽपि ।
स्वाधीनेऽपि त्वयि रतिगुरौ केलिकुञ्जावलम्बि-
न्यस्वाध्यायाः कति कति निशा मादृशामेव नासन् ॥ ८६ ॥

तुल्याकारमिति । अत्र वृन्दावने तुल्याकारं तुल्यरूपं दुःखं सुखञ्च समनुभवतोः आवयोः मध्ये त्वं क्रीड़ाकारी सुखविहारी, अहम् इति शब्दभेदः अपि जातः, स अस्मदभिन्न इति भावः त्वं योषितां कुलस्य रतिगुरुः सुरताचार्य्यः, सा त्वदभिन्ना इति भावः अहम् एवं वराकी दुःखिनी, सा अहं किं न, स त्वम् असि न, हे नाथ ! किं जातं घटितम् एतत् ॥ ८५ ॥

धैर्य्यादिति । अत्र स्वाधीने रतिगुरौ सुरताचार्य्ये त्वयि केलिकुञ्जावलम्बिनि अपि मादृशां गोपाङ्गनानां काचित् निशेति शेषः धैर्य्यात् मदनव्यथासहनशीलत्वादिति भावः, कतिचन निशा इति शेषः सखीनां शिक्षया, एवमेवं मानः कर्त्तव्य इत्युपदेशेनेति भावः अन्या निशेति शेषः लज्जया कथ परपुरुषेण सह रतिः करणीयेति त्रपया, काचित् निशेति शेषः भीत्या गुरुजनेभ्य इति भावः, कतिचन निशा इति शेषः रुषा कोपेन, काचित् निशेति शेषः आलस्यतः अपि, इत्थं कति कति निशाः अस्वाध्यायाः स्वाध्यायो वेदाध्ययनं तद्रहिताः भवत्सम्भोग एवात्र स्वाध्याय इति भावः न आसन् न अभवन् ? अधिका एव रजन्यः भवत्सम्भोगाभावात् विफला जाताः तत् भवन्तं विना अस्माकं न गतिरित्यपि न बोद्धव्यमिति भावः । साभिमानोक्तिरियम् ॥ ८६ ॥

दूरं दूरादपि च विषमं कश्चिदेव प्रहारं
कुर्वन्नेकं पशुमिव जगन्नाथ ! किं नावधीर्माम् ?।
वाटीसीमप्रसरणपटु श्रूयमाणैरजस्रं
किं दुःशीलप्रहरणशतैरङ्गमङ्गं लुनासि ॥ ८७ ॥
सोढव्यं ते सकलमधुना सम्भृतब्रह्मचर्य्यो
राजर्षित्वं कलयसि यदि स्वीयवंशानुरूपम्।
लक्ष्मश्रोणिः पुरयुवतिषु श्रूयमाणा नवीना
किं कुर्य्याम स्पृशति हृदयं शासिता सर्वदैव ॥ ८८ ॥
यान्ति प्राणा न हि वहिरमी नुद्यमानाश्च गाढं

दूरमिति। हे जगन्नाथ ! दूरादपि च दूरात् अतिदूरादित्यर्थः एत्य आगत्य एकं केवलं विषमम् अतिदारुणं प्रहारं कुर्वन् पशुमिव मृगमिव मां किं न अवधीः ? हतवानसि ? प्रहारोऽत्र वेणुरवेण मनःक्षोभनमिति भावः। हे दुःशील ! वाटीसीमनि स्वगृहपरिसरे प्रसरणेन पटु स्पष्टमित्यर्थः यथा तथा प्रहरणशतैः राधे राधे इति ध्वनद्भिः वेणुरवैरिति भावः अजस्रं श्रूयमाणैः पूर्वसंस्कारवशात् अधुनापि श्रूयमाणैरियेति भावः किं कथम् अङ्गम् अङ्गम् प्रत्यङ्गं लुनासि छिनत्सि ? ॥ ८७ ॥

सोढव्यमिति। यदि त्वम् अधुना सम्भृतब्रह्मचर्य्यः सम्भृतं स्वीकृतं ब्रह्मचर्य्यं दारत्यागरूपं व्रतमिति भावः येन तथाभूतः सन् स्वीयवंशानुरूपं राजर्षित्वं राजमुनेराचरणमित्यर्थः कलयसि करोषि, तदा ते तव सकलम् अस्माकं प्रति व्यलीकमिति भावः सोढव्यम् अस्माभिरिति शेषः। किन्तु पुरयुवतिषु नगरकामिनीषु मध्ये लक्ष्मश्रोणिः सुलक्षणनितम्बा श्रूयमाणा नवीना कापीति शेषः कुब्जेति भावः सर्वदैव शासिता भर्त्सितापि हृदयं स्पृशति किं कुर्य्याम ॥ ८८ ॥

सत्यं गत्यन्तरमपि न मे किञ्चिदस्ति प्रसक्ताः ।
मग्नं चेतः कुलिशकठिने त्वय्यनुद्धार्यमेतत्
तेनैवाहं भवदनुगतिं संश्रिता किं करोमि ॥ ८९ ॥
किं नो दण्डप्रहररजनीपक्षिणीपक्षरीत्या
स्फीतस्फीतां विरहविपदं साहयन्मामहासीः ।
दत्तो यस्यै न खलु निमिषो दृष्टिविघ्नोऽपि तस्यै
दूरस्थित्यै वितरसि विभो ! यौगपद्याद् युगानि ॥ ९० ॥

यान्तीति । अमी प्राणाः गाढं नुद्यमानाश्च ताड्यमाना अपि नहि बहिः यान्ति नैव निर्गच्छन्ति, तत् अस्वत्या जीवन्त्या मे मम किञ्चिदपि गत्यन्तरं नास्ति सत्यं निश्चितम् । कुलिशकठिने वज्र-निष्ठुरे त्वयि मग्नम् एतत् चेतः मनः अनुद्धार्यम् उद्धर्तुमशक्यम् । तेनैव हेतुना अहं भवतः अनुगतिम् अनुगमनं संश्रिता, त्वदर्थं प्रयते इति यावत् किं करोमि त्वदनुगतिं विना नान्यत् किञ्चित् करणीय-मस्ति मे इति भावः ॥ ८९ ॥

किमिति ! हे विभो ! दण्डः षष्टिपलात्मकः समयः, प्रहरः अहोरात्राष्टमो भागः रजनी रात्रिः पक्षिणी आगामिवर्त्तमानाह-र्युक्ता निशा पक्षः पञ्चदशदिनात्मकः समयः तेषां रीत्या नियमेन स्थित्येति यावत् स्फीतस्फीताम् अतिदीर्घां विरहविपदं साहयन् वर्धयन् त्वं किं मां नो अहासीः न त्यक्तवानसि ? अपितु त्यक्तवान-स्येवेत्यर्थः यस्यै निमिषोऽपि दृष्टिविघ्नः न दत्तः निमेषमात्रमपि यस्या दर्शनं न त्यक्तमिति भावः दूरे स्थितिर्यस्याः तथाभूतायै तस्यै मह्य-मिति शेषः यौगपद्यात् समकालत्वात् समकालत्वेनेति भावः युगानि वितरसि ददासि, अधुना दण्डप्रहरादयो युगवत् प्रतीयन्ते इति भावः ॥ ९० ॥

स्वामिन्नेकं वचसि भवतः स्वान्तविश्रान्तमन्यत्
कर्मण्यन्यन्मधुरिदमभिव्यक्तमन्योऽपि वेद ।
भूयोभूयस्तदतिसुषिता नाम गृह्णामि किं ते
तिष्ठत्यस्मिन् जगति यदि नो जीवनस्थानमन्यत् ॥८१॥
त्वत्सेवासु स्खलनमभवन्माट्टशः कस्य किं वा
सेवाधर्मो गहन इति यन्नीतिनिष्ठाः पठन्ति ।
तेन त्यागः किमयमुचितो वच्मि सङ्कोचहीना
पान्थो यत्र त्वमसि रसिकैरीचितो नैष पन्थाः ॥८२॥
पाण्डुक्षामं वपुरिदममी कुन्तलाः क्लान्तभारा

स्वामिन्निति । हे स्वामिन् ! भवतः वचसि वाक्ये एकम्, अन्यत् स्वान्ते मनसि विश्रान्तं, कर्माणि अन्यत्, तव वचनं मानसं कार्यञ्च पृथक् पृथगिति भावः । अन्योऽपि सुरभिदं त्वाम् अभिव्यक्तं स्पष्टं वेद जानाति । यदि अस्मिन् जगति नो अस्माकम् अन्यत् जीवनस्थानं तिष्ठति तत् तदा अतिसुषिता अतिविप्रलब्धापि किं कथं भूयोभूयः पुनः पुनः ते तव नाम गृह्णामि, गत्यन्तरसत्त्वे तव नाम न ग्रहीतव्यमिति भावः ॥ ८१ ॥

त्वदिति । माट्टशः मद्विधस्य कस्य जनस्येति शेषः तव सेवासु किं वा स्खलनं त्रुटिः अभवत् ? न किमपि स्खलनमभवदित्यर्थः सेवाधर्मः सेवावृत्तिः परमगहनः परमदारुण इति नीतिनिष्ठा नीतिज्ञा यत् पठन्ति तत् सत्यमिति शेषः । सेवाधर्मः परमगहनो योगिनामप्यगम्य इति पद्यमत्र साम्येन ज्ञेयम् । तेन स्खलनेन अयं त्यागः किम् उचितः ? सङ्कोचहीना निःशङ्केति यावत् वच्मि ब्रवीमि यत्र पथि त्वं पान्थः पथिकः असि, रसिकैः एष पन्थाः न ईक्षितः न दृष्टः ॥ ८२ ॥

वासोऽप्येवंविधमिति भिदा भिक्षुकीभिः कुतो नः ।
एषा क्रोशाः कति च मथुरा यामि चेदद्य किं तन्-
नेत्रद्वन्द्वं न भवति कृति श्रीमुखालोकनाय ॥ ८३ ॥
कुञ्जद्वाराद्वहिरपि यदि प्राणनाथ ! प्रयासि
प्राणैः स्थेयं क्षणमपि तदा नैव मे सत्यमेतत् ।
भूयोभूयो विलुठितवती त्वामिति ध्वस्तलज्जा
दूराद्दूरं कथमतिचिरादाननं दर्शयिष्ये ॥ ८४ ॥
त्वञ्चेदानीं नगरतरुणीसार्थसर्वस्वभूत-
स्ता अप्येवं तव किमितरास्तुभ्यमद्य स्वदन्ते ।
अत्यौत्सुक्यात्तदपि भवतः सम्मुखी वा यदि स्यां
किं स्यादेतन्न खलु निपुणं भावयन्त्यप्यवैमि ॥ ८५ ॥

पाण्डुक्षामिति । इदं वपुः शरीरं क्षामञ्च, अमी कुन्तलाः केशाः क्लान्तभाराः विपर्यस्तभारा इति यावत् वासोऽपि वसनमपि एवंविधं मलिनमिति भावः इति अस्मात् कारणात् नः अस्माकं भिक्षुभिः भिदा भेदः कुतः ? नैव भेदोऽस्तीति भावः । एषा मथुरा कति च क्रोशाः कति क्रोशान्ते इत्यर्थः ? चेत् यदि अद्य यामि गच्छामि, तत् तदा नेत्रद्वन्द्वं नयनयुगलं श्रीमुखस्य आलोकनाय किं कृति कृतार्थं न भवति ? ॥ ८३ ॥

कुञ्जेति । हे प्राणनाथ ! कुञ्जद्वारात् बहिरपि यदि प्रयासि, तदा मे मम प्राणैः न स्थेयमेव, एतत् सत्यम् इति भूयोभूयः पुनः पुनः त्वां विलुठितवती अहम् इदानीं ध्वस्तलज्जा निर्लज्जा सती कथम् अतिचिरात् दूरात् दूरम् अतिदूरमित्यर्थः स्थितं त्वामिति शेषः आननं मुखं दर्शयिष्ये । एतादृशदीर्घकालेऽपि त्वद्विनाहं जीवामीति लज्जया कथं मुखं दर्शयिष्यामि इति भावः ॥ ८४ ॥

त्वमिति । इदानीं त्वं नगरतरुणीसार्थानां नागरिकयुवति-

न स्यादस्या यदि मम तनोः प्रत्यभिज्ञेयता वा
स्यादेवाथ स्फुटमुभयथा मामकीनो विडम्बः ।
आद्ये नो न स्पृशति भवतो दृष्टिरौदास्यमुद्राम्
अन्यत्रापि प्रणयलघुतातादवस्थ्यं व्यनक्ति ॥ ८६ ॥

साम्मुख्यं ते भवति यदि मे तद्गृहे वा बहिर्वा
सौजन्येन स्मरसि यदि तत् सा कथा दुर्लभैव ।
पूर्वावस्थास्मरणलघिमा दुर्निवारः सभार्या
मुग्धान्ते चेन्नतुरतरुणीसार्धसौहार्दभङ्गः ॥ ८७ ॥

मत्कृाना सर्वस्वभूतः, ता नगरतरुण्यः अपि तव एवं सर्वस्वभूता इति भावः अतः अद्य इदानीम् इतराः ग्राम्याः तुभ्यं किं स्वदन्ते रोचन्ते ? नैवेत्यर्थः । तदपि यदि वा चलात् कृपया आत्मकण्ठावशात् भवतः पश्चात् मम चक्षुर्वर्तिनी स्यां भवेयम्, एतत् किं स्यात् निपुणं स्थिरं भावयन्ती चिन्तयन्ती अपि न खलु अवैमि नैवावधारयामि ॥ ८५ ॥

नेति । यदि वा अस्या मम तनोः शरीरस्य प्रत्यभिज्ञेयता सैवेयमित्यभिज्ञानं न स्यात् भवत इति शेषः अथ यदि स्यादेव प्रत्यभिज्ञेयतेति शेषः उभयथा स्फुटं स्पष्टं मामकीनः मदीयः विडम्बः अवमाननरूप इति भावः भवतीति शेषः । कथमित्याह आद्ये इति आद्ये अप्रत्यभिज्ञाने भवतः दृष्टिः औदास्यमुद्रां निःसम्बन्धरूपम् । नञोरर्थद्वयमित्यर्थः नो स्पृशति इति न अपितु स्पृशत्येव । नैव मयि दृष्टिः पतिष्यतीति भावः । अन्यत्रापि अपरपक्षेऽपि प्रत्यभिज्ञानेऽपीति भावः प्रणयलघुतायाः तादवस्थ्यं तद्रूपा अवस्था व्यनक्ति प्रकाशते ॥ ८६ ॥

साम्मुख्यमिति । ते तव साम्मुख्यम् आनुकूल्यं भवति, तत् तदा गृहे वा बहिर्वा सौजन्येन मे मामित्यर्थः कथं वा कथा । स्मरसि, यदि तत् साम्मुख्यमिति भावः तदा सा कथा मत्स्मरणवार्तेति

दूरादेव स्मिततरसुधासिच्यमानाधरोष्ठं
गण्डोद्यत्पुलककमलाकारविस्फारदृष्टि ।
एह्येहीति स्वयमवगतः प्रेयसः प्रार्थनं या
लेभे तस्यामनतिशयनी माननैवापमृत्युः ॥ ९८ ॥

रूक्षा लोकाः कटुकवचसः स्वालये सर्व एव
क्षीणासि त्वं कथमिति वहिर्ग्राम्यवाचो दहन्ति ।
ग्रामस्यान्ते तपनतनयाकूलमुद्यानमूलं
शून्यं लीलाशरणमपि ते कुत्र तन्निर्विशामि ॥ ९९ ॥

भावः दुर्लभैव । सभायां पूर्वावस्थायाः गोचारणादिरूपायाः चरणेन लघिमा अगौरवमिति यावत् दुर्निवारः निवारयितुमशक्य इत्यर्थः । गृहान्ते अन्तःपुरे चेत् पूर्वावस्थाचरणलघिमा स्यादिति शेषः तदा चतुराणां तरुणीनां सार्थैः समूहैः यत् सौहार्दं तस्य भङ्गः अपगमः स्यादिति शेषः ॥ ९७ ॥

दूरादिति । दूरादेव स्मिततरम् अतिशयेन स्मितं मन्दहासः तदेव सुधा पीयूषं तया सिच्यमानम् अधरोष्ठं यस्मिन् तत् तथा गण्डयोः कपोलयोः उद्यन्ति उद्गच्छन्ति पुलकानि यत्र तत् तथा कमलाकारः विस्फारः विकाशो यस्यास्तादृशी दृष्टिर्यस्मिन् तत् यथा तथा एहि एहि इति स्वयमवगतः स्वस्याप्राधान्येनेति भावः स्थितस्येति शेषः अपरतन्त्रस्येति भावः प्रेयसः प्रियतमस्य प्रार्थनं या लेभे प्राप तस्यां मयीति शेषः अनतिशयनी अतादृशीत्यर्थः मानना सत्कारः अपमृत्युरेव । पूर्वं नितरां सम्मानिता, तस्याः पूर्वसम्मानविरहो-ऽतीवक्लेशाय, तस्मात् स्वयं गमनलाघवे न मम रुचिरिति भावः ॥ ९८ ॥

रूक्षा इति । स्वालये स्वगृहे सर्व एव लोकाः श्वश्र्वादय इति भावः रूक्षाः कर्कशाः कटूनि कुत्सितानि वचांसि येषां तथाभूताः ।

वैमुख्यन्ते किमपि मदनो माद्यति क्रूरकर्म्मा
नर्म्मालापेष्वपि कुवचनैर्बाधते बन्धुवर्गः ।
चेतो नाथ ! त्वयि विनिहितं वाचमुल्लङ्घ्य यासां
तासामुक्तिः स्मितकलुषिता कल्पते किं करोमि ॥१००॥
कुञ्जे कुञ्जे रतिरुपहिता धिक्कृतं धाम धौतं
मग्नं वेणोर्वचसि विहितो बन्धुवाचां विसर्गः ।
दृष्टः स्वामी कपिरिव क्षतः प्राणसारोऽसि जारो
हीनोपाया कथमहममूनद्य भूयो नियोक्ष्ये ॥ १०१ ॥

वह्निः स्वालयादन्यत्रेति भावः त्वं चोपासि कथम् इति ग्राम्याणां ग्रामवासिनां वाचः दहन्ति ज्वालयन्ति । ग्रामस्यान्ते उद्यानस्य मूलम् आदिस्थानं तपनतनयायाः यमुनायाः कूलं ते तव क्रीडागारं क्रीड़ाकुट्टमपि शून्यं त्वदभावादिति भावः तत् तस्मात् कुत्र निर्वृणोमि निर्वृतिं लभे ? न कुत्रापि मम निर्वृतिरिति भावः ॥ ९९ ॥

वैमुख्यमिति । ते तव किमपि अवचनीयमित्यर्थः वैमुख्यं प्रातिकूल्यं जातमिति शेषः । क्रूरकर्म्मा मदनः माद्यति उज्जृम्भते । बन्धुवर्गः श्वश्र्वादिः नर्म्मालापेषु परिहासालापेषु अपि कुवचनैः निष्ठुरवचोभिः बाधते पीड़यति । हे नाथ ! यासां श्वश्र्वादीनां वाचम् उल्लङ्घ्य अतिक्रम्य विहायेत्यर्थः त्वयि चेतः मनः विनिहितं विशेषेण अर्पितम् तासां श्वश्र्वादीनाम् उक्तिः स्मितेन कलुषिता मर्म्मवेधिनीत्यर्थः कल्पते प्रकाशते, किं करोमि ? ॥ १०० ॥

कुञ्जे इति । कुञ्जे कुञ्जे प्रतिकुञ्जं रतिः अनुरागः उपहिता अर्पिता कुञ्जस्थितिरेव रोचते मे इति भावः, धौतं विशुद्धं परिष्कृतमित्यर्थः धाम स्वगृहं धिक्कृतं त्यक्तमिति भावः, वेणोः मुरल्याः वचसि निस्वने मग्नं मयेति शेषः । बन्धुवाचां बन्धूनां श्वश्र्वादीनां वाक्यानां नैवं कर्त्तव्यमित्येवं वचसामित्यर्थः विसर्गः परित्यागः विहितः कृतः ।

एते नित्यं नवपरिमलोद्गारिणः सन्तु कुञ्जाः
सन्तु क्लेशा न च मम तनोरत्र बीभत्सभावात् ।
एतद् दृष्ट्वा रमयति हरिर्गूढमागत्य राधाम्
ह्यद्यापि व्रजयुवतयो मह्यमीर्ष्यां वहन्ति ॥ १०२ ॥

राधे राधे कथय कथय त्वय्यसौ नन्दनो मे
बाल्यादेव प्रभृति कुरुते वत्सलो हृत्प्रकाशम् ।
द्रष्टव्योऽसौ पुनरपि मया मन्यसे कीदृशं वा
मानिन्नम्बा तव च रुदती पृच्छती वन्दतीति ॥ १०३ ॥

अत्रागच्छ त्वरितमथवा तिष्ठ तत्राञ्चलञ्च
शृण्वन्त्वेते जनपदजना मुक्तकण्ठा ब्रवीमि ।

स्वामी कपिरिव वानर इव दृष्टः, जारः उपपतिस्त्वं प्राणसारः प्राणसम इत्यर्थः कृतः, पूर्वमिति शेषः । अद्य इदानीं हीनोपाया अगतिरहं कथम् अमून् स्वाम्यादीन् भूयः पुनः नियोक्ष्ये संयुज्य स्थास्यामीत्यर्थः ॥ १०१ ॥

एते इति । एते कुञ्जाः नित्यं सततं नवपरिमलोद्गारिणः अभिनवसुरतसौगन्ध्यवर्षिणः सन्तु भवन्तु, अत्र एषु कुञ्जेषु बीभत्सभावात् विकृतभावात् मम क्लेशाः दुःखानि न च सन्तु नैव भवन्तु । एतत् दृष्ट्वा हरिः कृष्णः गूढमागत्य राधां रमयति इति मत्वेति शेषः व्रजयुवतयः व्रजाङ्गनाः अद्यापि मह्यम ईर्ष्यां वहन्ति कुर्वन्ति ॥१०२॥

राधे इति । हे राधे ! हे राधे ! कथय ब्रूहि, असौ मे मम नन्दनः त्वयि बाल्यात् प्रभृति वत्सलः स्नेहवान् सन् हृतप्रकाशं मनोऽभिलाषं कुरुते । असौ पुत्रः पुनरपि मया द्रष्टव्यः, कीदृशं वा मन्यसे बुध्यसे, हे मानिन् तव अम्बा माता रुदती सती इति पृच्छती वन्दतीति पुनः पुनरुच्यते ॥ १०३ ॥

अत्रेति । अत्र वृन्दावने त्वरितं शीघ्रम् आगच्छ अथवा तत्र मधु-

यामि स्वर्गं निरयमथवा प्राणिमीह म्रिये वा
श्यामादन्यो नहि नहि नहि प्राणनाथो ममास्ते॥१०४॥
राधाबन्धुर्निखिलगदितो विश्वतो यत् त्वमासीः
साहं साहङ्कृतिरुदभवं यत्तवातिप्रियेति ।
लक्ष्मीकान्त ! प्रणयसुधया सिञ्च वा मां नवा त्वम्
एतज्ज्ञानं ननु मम जनुर्धन्य एतावतैव ॥ १०५ ॥
यान्ति प्राणा मम यदि न ते प्रच्छनीयः पुरोधा
देया मह्यं किशलयरुचा पाणिनैव त्वयापः ।
याचे तव व्यवधिकृतिनः चालनं चारनीरैः
कर्त्तव्यं ते मधुपुरवधूपादलाक्षारसस्य॥ १०६ ॥

रायाम् अहङ्कारवती वर्त्तमाना तिष्ठ, एते जनपदजनाः शृण्वन्तु, सुतकण्ठा सती अहं ब्रवीमि, स्वर्गम् अथवा निरयं नरकं यामि गच्छामि, इह अस्मिन् जगति प्राणिमि जीवामि वा म्रिये, तथापि श्यामात् अन्यः मम प्राणनाथः नहि नहि नहि अस्ते तिष्ठति ॥ १०४ ॥

राधेति । हे लक्ष्मीकान्त ! यत् त्वं विश्वतः विश्वसंसारे राधाबन्धुरिति निखिलगदितः निखिलैः जनैः गदितः आसीः । साहं यत् तव अतिप्रिया अतिप्रेयसीति साहङ्कृतिः अहङ्कारवती उदभवम् आसं त्वं प्रणयसुधया मां सिञ्च वा न वा, ननु भोः मम एतत् ज्ञानम् अस्तीति शेषः, एतावतैव इत्थं ज्ञानेनैव मम जनुर्जन्म धन्यम् ॥ १०५ ॥

यान्तीति । यदि मम प्राणाः यान्ति, ते तव पुरोधाः पुरोहितः न प्रच्छनीयः किं कर्त्तव्यमिति न प्रष्टव्यः । त्वयैव किशलयरुचा ताम्रेण पाणिना हस्तेन मह्यम् आपः सलिलानि देयाः । तव परिचारिकाणां व्यवधिव्यवधानं तव सत्ता दूरास्मीतिरिति याचे तव

सीदत्यङ्गं दलति हृदयं किं नु कुर्वन्ति हन्त
प्राणाः श्यामाशय ! मम बधाभद्रभागी त्वमेव ।
हा धिक् कीदृग् वदसि रसने ! तत्त्वतो यत्तदास्तां
बन्दीभूय स्वयमिह मया मोचितः प्राणनाथः ॥ १०७ ॥
श्याम श्याम ! स्मर सहचरीं मन्दकारीकृतं मे
केनाकस्माद् भ्रमति भुवनं मज्जति घोरवन्यां
काहं क्वाहं क्व मम दयितः कुत्र तस्यैष दासो,
हा हा हा हा ! हरि हरि हरि ! क्षीणमध्य प्रसीद ॥१०८॥

कृतिनः समर्थस्य ते तव कर्त्तरि षष्ठी त्वया इत्यर्थः । मधुपुरवधूनां पादक्षालनस्य क्षालनं क्षारनीरैः लवनाक्तैः नयन जलैः मम मरणनिमित्तकैः अश्रुभिः कर्त्तव्यं इत्यहं याचे प्रार्थये ॥ १०६ ॥

सीदतीति । हे श्यामाशय ! मलिनाशय ! अङ्गं शरीरं सीदति अवसादं प्राप्नोति, हृदयं दलति विदीर्य्यते, हन्त खेदे, नु भोः प्राणाः किं कुर्वन्ति ? अस्थिराः भवन्तीत्यर्थः । त्वमेव मम बधात् अभद्रं पापं तस्य भागी जात इति शेषः । हा धिक्, हे रसने ! कीदृक् वदसि ? तत्त्वतः याथार्थ्येन यत् तत् त्वयि मम मयि तव च प्रीतिरूपं यत्तदस्ति भावः आस्तां तिष्ठतु किन्तु इह स्वयं बन्दीभूय बद्धः स्थित्वेत्यर्थः मया प्राणनाथः मोचितः अस्मात् गोकुलवासरूपात् बन्धनादिति भावः मुक्तिं नीत इत्यर्थः ॥ १०७ ॥

श्यामेति । हे श्याम ! हे श्याम ! सहचरीं मामिति शेषः स्मर, केन हेतुना मे मम मन्दकारीकृतम् अप्रियं कृतं त्वयेति शेषः अकस्मात् भुवनं भ्रमति घूर्णते, घोराकारम् अवन्यां पृथिव्यां मज्जति पतति । अहं का ? अहं क्व कुत्र ? तिष्ठामीति शेषः, मम दयितः प्रियः क्व ? कुत्र तिष्ठति, तस्य दयितस्य एष दासः अहमिति कुत्र ? तिष्ठतीति शेषः, हे क्षीणमध्य ! कृशोदर ! हा हा हा

इत्युद्बाहुर्विमलपुलकाकम्पनासन्नकण्ठी
छिन्ना मूले पतति भुवि सा हैमवल्लीव यावत्।
भृङ्गारैस्तैः शिशिरसलिलैस्तावदेवोद्धवोऽस्याः
सिञ्चन्नास्यं तदुपरि विभोरुत्तरीयं दुधाव ॥ १०९ ॥
चक्रे चेतन्मनसि चतुराश्चेटकाश्चक्रपाणे-
र्लक्षं यस्मात् तदपि यदसौ मामिहैकं न्ययुङ्क्त।
एतत् सम्भावनसमुचितं साध्वभून्नैपुणं मे
यद्दुःखायामहमधिकृतो नाशितेयं मयैव ॥ ११० ॥

हा हरि हरि हरि हरि अतिखेदेन उन्मत्तवदुक्तिः। प्रसीद प्रसन्नो भव ॥ १०८ ॥

इतीति। इतीत्थम् उद्बाहुः ऊर्द्ध्वबाहुः विमलपुलका निर्मल-रोमाञ्चयुतकलेवरा आकम्पना वेपथुमती तथा सन्नकण्ठो समधिक-रोदनेन रुद्धकण्ठी सती सा मूले तले छिन्ना हैमवल्लीव स्वर्णलतेव यावत् भुवि पतति, तावदेव उद्धवः तैः शिशिरसलिलैः शीतलतोयैः भृङ्गारैः अस्याः राधायाः आस्यं मुखं सिञ्चन् क्षालयन् तस्य मुखस्य उपरि विभोः कृष्णस्य उत्तरीयं दुधाव सञ्चालयामास उत्तरीयेण व्यजनमकरोदिति भावः ॥ १०९ ॥

चक्रे इति। एतत् मनसि चक्रे च अकरोच्च चक्रपाणेः कृष्णस्य चतुराः चेटकाः दासाः लक्षं बहव इति भावः यत् यदि चेत्यर्थः स्यात् अस्तीति यावत् तदपि तथापि असौ चक्रपाणिः इह वृन्दावने एतस्याः राधायाः सम्भावने सान्त्वने इति यावत् समुचितं सम्यक् योग्यम् एकं केवलं मां यत् न्ययुङ्क्त नियुक्तवान्, तत्र नियोगकर्मणि मे मम साधु सम्यक् नैपुणं पाटवम् अभूत् यत् अहं दुःखायाम् एतस्या इति शेषः अधिकृतः नियुक्तः स्वामिनेति शेषः किन्तु मयैव इयं नाशिता मद्दर्श-नेनैव सन्दीपितशोकतयेति भावः ॥ ११० ॥

सम्यग्जातं सुचिरविरहज्वालया दूयमाना
सेयं साध्वी विशति परमानन्दधामन्यनन्ते ।
मन्त्री वैज्ञानिक इति तथा मानमासाद्य माद्यन्
अद्य क्षीणां मतिपरिणतिं बुद्धवानुद्धवोऽपि ॥ १११ ॥
शृण्वन्नेतन्मधुपुरपतिर्मंस्यते कीदृशं मां
किं वा भावी कथमिव मया दर्श्यतामास्यमस्मै ।
ध्यायन्नेतत् पुलकमुकुलारम्भि सस्पन्दतारं
पश्यन्नस्या मुखमकथयत् प्राणिति प्राणितीति ॥११२॥
नष्टं प्राप्तं निधिमिव मुखं वीक्षमाणोऽयमस्या
भूयः सिक्तन्मधुपुरपतेरुत्तरीयानिलेन ।

सम्यगिति । सम्यक् जातं संवृत्तम् । सुचिरविरहज्वालया दूयमाना क्लिश्यमाना सा इयं साध्वी परमानन्दधामनि अनन्ते कृष्णे विशति लीयते । मन्त्री कृष्णमन्त्रदीक्षितः वैज्ञानिकः विशेषेण ज्ञानवान् योगनिष्ठ इति तथा मानम् आसाद्य प्राप्य माद्यन् अहङ्कारेणेति भावः उद्धवोऽपि इदानीं मतिपरिणतं बुद्धिपरिणामं बुद्धवान् ज्ञातवान् । अहो अहङ्कारवतां नेदृशी मतिः केवलं तदेकाग्रतैव भगवत्प्राप्तिमूलमिति ज्ञानं लेभे इति भावः ॥ १११ ॥

शृण्वन्निति । मधुपुरपतिः कृष्णः एतत् राधामरणमिति भावः शृण्वन् मां कीदृशं मंस्यते, मनसि धारयिष्यति ? किं वा भावी भविष्यति स इति शेषः, मया कथमिव अस्मै कृष्णाय आस्यं मुखं दर्श्यताम् ? एतत् ध्यायन् चिन्तयन् स इति शेषः पुलकमुकुलारम्भि सम्भवत्पुलकमुकुलं सस्पन्दतारं चलतारकम् अस्याः राधायाः मुखं पश्यन् प्राणिति प्राणिति जीवति जीवतीति अकथयत् अवो-चत् ॥ ११२ ॥

नष्टमिति । अयम् उद्धवः नष्टं प्राप्तं पुनरधिगतं निधिमिव

उच्चैराह श्रुतिपरिसरे किङ्करं कंसशत्रो-
र्दूतं राधे! त्वयि विनिहितं विद्धि मामुद्धवोऽस्मि ॥ ११३ ॥
सातिस्वादुर्दवथुदमनी तुल्यपीयूषवाणी-
वर्णश्रेणिः श्रवणपुटकेनान्तरस्या विशन्ती ।
को जानीते किमकृत परं सत्वरं सापि तन्वी
किङ्किं किङ्किं कथय कथयेत्युत्थिता कौतुकेन ॥ ११४ ॥
आदायास्ये मलयजजलैर्मर्मरीभूतमन्त-
र्म्लानाभोगं नयनपयसः प्रोञ्छनात् साञ्जनस्य ।
किञ्च प्रोतं बहुभिरभितः शुष्कशैवालखण्डैः
सारं शौरेरखिलमपि तद्दर्शयामास भूयः ॥ ११५ ॥

चिरनिखातं धनमिव अस्या राधायाः मुखं वीक्षमाणः पश्यन् मधुपुर-पतेः कृष्णस्य उत्तरीयानिलेन भूयः पुनः पुनः सिञ्चन् वीजयन्निति यावत् श्रुतिपरिसरे श्रोत्रसन्निधे उच्चैः आह अब्रवीत्, हे राधे! कंसशत्रोः कृष्णस्य किङ्करं त्वयि त्वां प्रतीत्यर्थः विनिहितं प्रेषितं दूतं मां विद्धि जानीहि अस्मि अहम् उद्धवः ॥ ११३ ॥

सेति । सा अतिस्वादुः अतिमधुरा दवथुदमनी दुःखनिवारणी तुल्यं समं पीयूषं यस्यास्तथाभूतायाः वाण्याः वाचः वर्णश्रेणिः अक्षर-पङ्क्तिः श्रवणपुटकेन कर्णरन्ध्रेण अस्याः राधायाः अन्तः हृदये विशन्ती प्रवेशं लभमानेत्यर्थः किम् अकृत कृतवती, को जनः जानीते? परं किन्तु सापि तन्वी कृशाङ्गी राधा किं किं किं किं कथय कथय इति उक्त्वेति शेषः सत्वरं कौतुकेन औत्सुक्येन उत्थिता उत्तस्थौ ॥११४॥

आदायेति । मलयजजलैः चन्दनरसैः मर्मरीभूतं साञ्जनस्य कज्जलाक्तस्य नयनपयसः नेत्रजलस्य प्रोञ्छनात् अपनयनात् अन्तर्मध्ये म्लानः मलिनः आभोगः विस्तारः यस्य तादृशं, किञ्च बहुभिः शुष्क-शैवालखण्डैः विरहविनोदनार्थं गात्रक्षिप्तैरिति भावः अभितः

पश्चादूचे पुनरथमिदं चेलवल्लीं धुनान-

स्तस्यास्तथ्याः शपथशतकैः सन्निरुद्धः कथञ्चित् ।

लक्ष्मीर्यस्मान्निवसति बहिस्त्वं तदन्तर्निमग्ना

मन्योरन्या भवतु विषया सा किमेवं विधासि ॥११६॥

धारावाहि व्यसनकथनाकूतवत्याः प्रियायाः

सूक्तासक्तिव्यवधिभयतो यत्र मध्ये मयोक्तम् ।

र्थतः प्रोतं संक्षिप्तमित्यर्थः शौरेः कृष्णस्य अखिलं समस्तं तत् सारं राधाविरहजनितव्यथाया इति भावः आदाय गृहीत्वा अनवद्यमिति यावत् भूयः सम्यक् वर्णयामास, हे राधे! त्वदर्थं कृष्णः निरन्तरं तापमनुभवतीत्येवंरूपं कीर्त्तयामासेत्यर्थः ॥ ११५ ॥

पश्चादिति । तस्मात् पश्चात् तदनन्तरम् अयम् उद्धवः तस्याः राधायाः शपथशतकैः बहुभिः शपथैः यदि त्वं मिथ्या मां प्रतारयसि तदा ते महाननर्थः सम्भविष्यतीत्येवंरूपैरिति भावः कथञ्चित् सन्निरुद्धः अस्मात् लोकात् इति यावत् सन् पुनः चेलवल्लीम् उत्तरीयाञ्चलमिति भावः धुनानः चालयन् उत्तरीयाञ्चलेन वीजयन्नित्यर्थः इदम् अथ उवाच । लक्ष्मीः यस्मात् कृष्णात् बहिः निवसति, त्वं तस्य कृष्णस्य अन्तर्मनसि निमग्ना नियतं स्थिता, अतः मन्योः शोकस्य विषया अन्या अपरा भवतु अपरा लक्ष्मीप्रभृतयः शोचनीया भवन्त्विति भावः, सा इत्थं प्रेयसी त्वं किं कथम् एवंविधा दैन्यविकृतचित्तेति भावः असि भवसि ? अन्यासां वरं शोको भवितुमर्हति, तव तु नैव शोकस्य विषय इति भावः ॥ ११६ ॥

ननु पूर्वं कथं त्वया नैवमुक्तमित्यत आह । धारेति । धारावाहि क्रमागतं यत् व्यसनकथनं दुःखनिवेदनं तदर्थम् आकूतवत्याः आकारितवत्याः मामिति भावः प्रियायाः राधायाः सूक्तस्य मधुरवचनस्य आसक्तिः श्रवणमिति भावः तस्य व्यवधिर्विरामः तस्मात् यत् भयं तस्मात् चरमायां कथायां मध्ये अपरकथया तद्भङ्गे अपराधभया-

मौढ्यादेवं मम किमु महानेव न स्यादनर्थ-
स्तस्यायं चेद्वसनपवनः पावनो नाभविष्यत् ॥ ११७ ॥
यस्ते मग्नो मनसि, हृदये यस्य च त्वं विलीना
मन्यन्ते यच्चरणशरणा भूतिमैन्द्रीं तृणाय।
यस्यालाभात् पुरयुवतयो मालमैबालशय्याः
सूर्य्यापाये ज्वलितवपुषो यामिनीर्यापयन्ति ॥ ११८ ॥
यस्याद्य त्वद्विरहदहनज्वालया पाण्डुभासो
वासो नीलं गमयति भिदामम्ब नीलाम्बरेण।

रिति भावः मध्ये मया यत् न उक्तम् अहं दूत आगतस्त्वत्सका-
शमित्यादि वच इति भावः एवं तदित्यर्थः मौढ्यात् मूर्खत्वात् मूर्खत्व-
विजृम्भितमेतदिति भावः। मम महानेव अनर्थः विपत्पातः किं
न स्यात् ? मूर्खत्वेन पूर्वं मदागमनप्रयोजने निवेदिते इत्थं राधायाः
मरणशङ्का नाभविष्यत् अनिवेदनात् सति मरणे प्रभुसमीपे गमनमेव
दुष्करमिति महति व्यसने अपतिष्यमिति भावः। चेत् यदि तस्य
प्रभोः वसनपवनः उत्तरीयवस्त्रवातः पावनः मम शुद्धिजनकः न
अभविष्यत्। त्वदीयवसनाञ्चलेन वीजनादेवेयं पुनर्जीवितेति भावः
॥ ११७ ॥

य इति। यः ते तव मनसि मग्नः लीनः, त्वञ्च यस्य हृदये
विलीना निमग्ना, यस्य चरणशरणाः चरणाश्रिताः जनाः ऐन्द्रीं
भूतिं सम्पदम् इन्द्रत्वमित्यर्थः तृणाय मन्यन्ते तृणमिव अवजानन्ती-
त्यर्थः, यस्य अलाभात् अप्राप्तेः पुरयुवतयः पौराङ्गनाः सूर्य्यापाये
सूर्य्यस्यास्तमितौ मालं शैवालं जलनीली च शय्या यासां तादृश्यः
तापशान्तये इति भावः ज्वलितवपुषः सन्तप्तशरीराः सत्यः यामिनीः
रात्रीः यापयन्ति गमयन्ति ॥ ११८ ॥

यस्येति। हे अम्ब मातः! नीलं वासः वसनम् अद्य इदानीं
तव विरहज्वालया पाण्डुभासः पाण्डुरकान्तेः यस्य नीलाम्बरेण

दासो रासोत्सवनटगुरोरस्य सोऽहं समोऽहं
स त्वामावेदयति यदिदं मन्मुखेन प्रतीहि ॥ ११९ ॥
दैवादद्य प्रतिपदमितो विभ्रतो बन्धुपाशै-
र्देहेनैव द्विजपदमनुप्रापितः संयतोऽस्मि ।
यस्मिन् बाले ! तपनतनयाकूलकुञ्जान्तराले
चित्तेन त्वं विरमसि न मे किन्तु केलीविनोदः ॥ १२० ॥
साक्षाद्दीक्षा न भवतु चिरं चिन्तिता तेन मा भू-
द्दैवाधीनो गमयति जनः कोऽपि कुत्रापि कालम् ।

बलभद्रेण भिदां भेदं गमयति बोधयति इदानीं तव विरहेण कृष्णो बलदेवसाम्यं प्राप्तः पाण्डुरवर्णत्वात् किन्तु नीलवसनेन बलदेवस्य अनयोः भेदावगम इति भावः अस्य रासोत्सवनटगुरोः कृष्णस्य स प्रसिद्धः दासोऽहम् । अहन्तु समः अभिन्नः तेनेति भावः । स कृष्णः मम मुखेन यत् त्वाम् आवेदयति निवेदयति इदं प्रतीहि अवगच्छ ॥ ११९ ॥

दैवादिति । अद्य इदानीम् इतः अस्मिन् मधुपुरे इत्यर्थः प्रतिपदं पदे पदे विभ्रतः धर्त्तः दैवात् दैवाधीनत्वात् द्विजपदं क्षत्रियपदं राज्यमित्यर्थः अनुप्रापितः सन् देहेनैव न तु मनसेति एवकारार्थः । बन्धुपाशैः ज्ञातिरज्जुभिः संयतः बद्धः अस्मि । हे बाले ! मुग्धे ! त्वं तपनतनयायाः यमुनायाः कूले यत् कुञ्जं तस्य अन्तराले मध्ये यस्मिन् मयि चित्तेन विरमसि विहरसि । किन्तु मे मम केलीविनोदः क्रीडासुखस्थानं न अस्तीति शेषः, तव तु मयि निविष्टमनसः कुञ्जेषु विहारोऽस्ति मम तु त्वयि निविष्टमनसः न तादृक् विनोदस्थानमस्तीति भावः ॥ १२० ॥

साक्षादिति । साक्षाद्दीक्षा साक्षाद्दर्शनं न भवतु, तेन साक्षाद्दर्शनाभावेन चिरं चिन्तिता सन्तापादिति भावः मा भूः न भव । दैवाधीनः जनः कोऽपि कालं गमयति यापयति, किन्तु तव मनः

बन्दीभूतं मयि तव मनस्त्वय्यपीदं ममेति
द्वाभ्यामाभ्यां मिलनमचिराद्रावयोः साधनीयम् ॥१२१॥

राधे ! राधे ! क्व चलसि मनाक् तिष्ठ कल्याणि ! कुञ्जे
प्रातर्जातं न हि न हि निशा सावशेषाधुनापि ।
इत्यावेशप्रलपितशतं मत्कृतं देवि ! दिग्भ्यः
संप्राप्तास्ते कथयितुममी साक्षिणः सन्ति सभ्याः ॥१२२॥

त्यक्ता बन्धुप्रणयपदवी लङ्घिता लोकलज्जा
मूर्द्धि न्यस्तं पदमयशसः शङ्कितो नापमृत्युः ।
मामाराद्धुं किमिव न कृतं दुष्करं त्वादृशीभि-
स्त्यक्ता युष्मान् मम यदुपतेरद्य राज्यं धिगस्तु ॥ १२३ ॥

मयि, मम इदं मनः त्वयि अपि बन्दीभूतम् इति हेतोः द्वाभ्याम् आभ्यां मनोभ्याम् अचिरात् मिलनम् आवयोः साधनीयं सम्पादनीयम् । अचिरेणैव आवयोः सङ्गमो भविष्यतीति भावः ॥ १२१ ॥

राधे इति । हे देवि ! दिग्भ्यः नानादेशेभ्य इति भावः सम्प्राप्ताः समागताः अमी सभ्याः सभासदः, राधे ! राधे ! क्व कुत्र चलसि ? मनाक् किञ्चत्क्षणं कुञ्जे तिष्ठ, हे कल्याणि ! प्रातः प्रातःकालः जातम् ? नहि नहि नैव नैव प्रातर्जातमिति शेषः, अधुनापि निशा सावशेषा अवशिष्टा तिष्ठति, इतीत्यं मत्कृतं मदीयमित्यर्थः आवेशेन त्वदभिनिवेशेन प्रलपितशतं प्रलापशतं ते तुभ्यं कथयितुं साक्षिणः सन्ति वर्त्तन्ते ॥ १२२ ॥

त्यक्तेति । बन्धूनां पित्रादीनां प्रणयपदवी प्रणयस्य समुदाचारः त्यक्ता त्यक्तेत्यर्थः, लोकेभ्यः लज्जा लङ्घिता अतिक्रान्ता अवधीरितेति यावत् । अयशसः पदं मूर्द्ध्नि शिरसि न्यस्तं धृतमित्यर्थः, अपमृत्युः कष्टेन मरणमपीति यावत् न शङ्कितः न तर्कितः । त्वादृशीभिः त्वत्सदृशीभिर्गोपीभिः माम् आराद्धुं सेवितुं वशीकर्त्तुमिति भावः किमिव

रम्या हर्म्यावलिरियममी बान्धवः सानुबन्धाः
निर्वैरेयं जयति नगरी गुम्फिता नागरीभिः ।
एषा सम्पत् किमिह न सुखं किन्तु कान्तारकुञ्जे
युष्माभिर्यः समजनि स मे दुर्लभो हृद्विनोदः ॥ १२४ ॥
नोपष्टम्भो गुणवति ! तव स्यादयं चेत् तदानीं
नाहं नासावविनवघनश्यामलो देहबन्धः ।
दुःखं क्वापि क्वचिदपि सुखं यच्छसि क्वापि मोहं
सर्वत्रैवं स्फुरति मम तु त्वन्मयी दृष्टिरेव ॥ १२५ ॥
कुब्जामृज्वीमकरवमुरीकृत्य यन्निर्घृणत्वं
तत्तात्पर्य्यं विपुलमतयो नापयन्ति क्षतिः का ।

दुष्करं न कृतम् ? विविधमेव दुष्करं कृतमित्यर्थः । अतः अद्य इदानीं युष्मान् त्यक्त्वा यदुपतेः मम राज्यं धिक् अस्तु ॥ १२३ ॥

रम्येति । इयं रम्या मनोहारिणी हर्म्यावलिः अट्टश्रेणिः राजभवनमिति यावत्, अमी सानुबन्धाः सगणाः बान्धवः, नागरीभिः गुम्फिता परिवृता निर्वैराः निष्कण्टका इयं नगरी मथुरा जयति सर्वोत्कर्षेण वर्त्तते । एषा सम्पत् ऐश्वर्य्यम् इह मधुपुरे सुखं सुख-जनकं किं वस्तु न अस्तीति शेषः सर्वमेवास्तीत्यर्थः । किन्तु कान्तार-कुञ्जे काननाभ्यन्तरे युष्माभिः सह यः हृद्विनोदः चित्तानन्दः सम-जनि जातः, सः मे मम दुर्लभः अस्तीति शेषः ॥ १२४ ॥

नेति । हे गुणवति ! चेत् यदि तदानीं न अहम् अभवमिति शेषः, असौ अविनवघनश्यामलः देहबन्धः शरीरधारणञ्च न अभव-दिति शेषः तदा अयं तव उपष्टम्भः दुःखमिति भावः न स्यात् । मम तु त्वन्मयी दृष्टिरेव त्वन्मयी त्वत् प्रतीयमानः संसार एवेत्यर्थः सर्वत्र एवं स्फुरति प्रसर्पति यथा क्वापि त्वं दुःखं, कचिदपि सुखं, क्वापि च मोहं यच्छसि ददासि ॥ १२५ ॥

कुब्जामिति । निर्घृणत्वं निर्दयत्वम् उरीकृत्य स्वीकृत्य कुब्जां वक्रां

यास्यन्त्येता दिनकतिपयैरेव । पक्ष्मभाजोः
सत्यं सत्यं निमिषनिभता आवयोः सुखिता स्याः ॥१२०॥

ख्यातिग्रामो भवति विधृतं बन्धुवर्गो दधाति
व्रीडामन्तर्दधति गुरवो नीरवो धन्यलोकः ।
चित्रीयन्ते किमपि सुजना दुर्जनाः क्रुध्यन्ति
श्लाघन्ते मां सदसि रसिकाः सादरं त्वत्कथासु ॥१२१॥

इत्यादिष्टं भुवनगुरुणा गौरवेण क्रियाणाम्
अत्रागन्तुं किमिव यतितुं भोक्तुमप्यक्षमेण ।
तामौत्सुक्यादिति स कथयन्नात्मनः पादमूले
निष्पासीनः सुरभिश्चिरं निर्भरं किञ्चिदाप ॥१२२॥

अभियान्ति गच्छन्ति । अङ्ग भोः प्रेयसि ! एताः रजन्यः दिनकति-पयैः गतैरिति शेषः पक्ष्मभाजोः पक्ष्मयुक्तयोः आवयोः निमिष-निभता निमेषनिभाः यास्यन्ति सत्यं सत्यं दुःखरजन्यः शीघ्रं यास्यन्तीति भावः । अतः सुखिता स्थिरचित्ता भविष्यसीत्यनयेति भावः स्याः भवेः ॥ १२० ॥

ख्यातिग्राम इति । तव कथासु सतीषु ख्यातिग्रामः ख्यातिसमूहः भवति, बन्धुवर्गः निभृतम् एकान्ते दूरत्वं दधाति निवारयति, गुरवः पित्रादयः अन्तः व्रीडां दधति, धन्यलोकः नीरवः निःशब्दः । सुजनाः साधवः किमपि चित्रीयन्ते आश्चर्ययुक्ता भवन्ति, दुर्जनाः क्रुद्ध-वन्तो तिष्ठन्ति, सदसि सभायां रसिकाः सादरं यथा तथा मां श्लाघन्ते प्रशंसन्ति ॥ १२१ ॥

इतीति । भुवनगुरुणा जगत्पतिना कृष्णेन क्रियाणां कार्याणां गौरवेण अत्र आगन्तुं यतितुं भोक्तुमपि किमपि अनिर्वचनीयमिति भावः अक्षमेण असमर्थेन सता इति आदिष्टं सन्दिष्टम् । औत्सुक्यात् उत्कण्ठातिशयात् ताम् इति कथयन् सः आत्मनः तस्य पादमूले

पश्यन्नेतत् किमिति कथयन्नम्बुधारामुदारां
मन्दाकिन्या इव तनुभृतः सुभ्रुवः सुस्थितायाः ।
हाहा जातं किमिति चकितः सत्वरं प्रोध्य पादौ
भक्तिश्रद्धासपुलकमुपादाय मूर्ध्ना ववन्दे ॥ १२३ ॥
बुद्धा बद्धाञ्जलिपुटमिमां किञ्चिदाख्यातुकामाम्
इत्याचख्यौ विरमतु परं निष्फलो देवि ! खेदः ।
एतद्दासी नयवति ! हरेः श्रीमदङ्काधिरूढं
चेतो मूढं न कुरु करुणासागरे सङ्गतासि ॥ १२४ ॥
भास्वानश्वानयमतिक्रती खेलयन्नम्बराब्ध-
र्धर्मस्थित्यै भ्रमति भुवने तामसोन्मूलनाय ।

चरणस्थानसमीपे निम्नाशोन: भूतलस्य इत्यर्थः सुरभिशिशिरं सुगन्ध-शीतलं किञ्चित् निर्झरम् आप प्रापेति भावः ॥ १२२ ॥

पश्यन्निति । इति कथयन् उद्धवः तनुभृतः मूर्त्तिमत्याः मन्दाकिन्या इव सुस्थितायाः स्थिरायाः सुभ्रुवः राधायाः उदारां महतीं अम्बुधारां पश्यन् किमेतत् इति हाहा किं जातम् इति चकितः प्रोध्य उक्त्वा भक्तिश्रद्धाभ्यां सपुलकं सरोमाञ्चं यथा तथा सत्वरं मूर्ध्ना शिरसा पादौ चरणौ उपादाय गृहीत्वा ववन्दे वन्दितवान् ॥ १२३॥

बुद्धेति । बद्धाञ्जलिपुटं यथा स्यात् तथा इमां किञ्चित् आख्यातुकामां वक्तुकामाम् राधां बुद्धा विज्ञाय इति आचख्यौ उवाच, देवि ! परं केवलं निष्फलः निरर्थकः खेदः विरमतु निवर्त्तताम् । हे नयवति ! नीतिज्ञे ! एतत् दासः वचनं हरेः कृष्णस्य श्रीमत् अङ्कम् अधिरूढम् । चेतः चित्तं मूढं मुग्धं न कुरु, करुणासागरे दयानिधौ सङ्गतासि मिलितासि ॥ १२४ ॥

भास्वानिति । अयम् अतिक्रती अतिसमर्थः भास्वान् दीप्तिमान् सूर्यश्च रागी अनुरागवान् रक्तवर्णश्च विनतानन्दनः गरुडः अरुणश्च

प्रादक्षिण्याज्झटिति विनतानन्दनाधीनयानो
रागी चिन्तां न कुरु कुरुते पद्मिनीनां प्रबोधम् ॥१२५॥
गोपीभावं घुणलिपिनयान्माधवप्रेमपात्रं
मत्वा यत्त्वामनतिशयिनी दृष्टिरग्रे ममासीत् ।
क्षन्तव्यं तद्विधिविधिसुतव्योमकेशाब्धिपुत्री-
मृग्यः पाशे पशुरिव तव प्रेम्णि बद्धो यदस्मि ॥ १२६॥
मातर्मातर्जय जय जगन्मोहनं मोहयन्त्याः

तस्य अधीनं यानं गमनं यस्य तथोक्तः अयं कृष्णः सूर्य्यश्च अम्बरान्तः गगनावकाशे अम्बरात् पालयन् धर्मस्थित्यै धर्मस्य वेदविहितस्य स्थित्यै रक्षणाय तामसानां तमोगुणप्रधानानाम् असुरावताराणा मित्यर्थः तिमिराणाञ्च उन्मूलनाय ध्वंसाय भुवने जगति भ्रमति विचरति, प्रादक्षिण्यात् प्रकर्षेण दक्षिणत्वात् सर्वासु समानुरागत्वात् पद्मिनीनां तदाख्यकामिनीनां कमलिनीनाञ्च प्रबोधं सान्त्वनं विकाशञ्च कुरुते । अत्र प्रस्तुते कृष्णे अप्रस्तुतस्य सूर्य्यस्य व्यवहारसमारोपात् समासोक्तिरलङ्कारः । तदुक्तं दर्पणे । समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति ॥ १२५ ॥

गोपीभावमिति । गोपीभावं घुणलिपिनयात् घुणाक्षरनीत्या माधवस्य कृष्णस्य प्रेमपात्रं मत्वा अग्रे मम यत् त्वां प्रतीति शेषः अनतिशयिनी अनधिका समेति भावः दृष्टिः आसीत्, सर्वा एव गोप्यः मम प्रियाः इति त्वयि विशेषदृष्टिर्न कृतेति भावः, तत् क्षन्तव्यं सोढव्यं, यत् यतः विधेर्ब्रह्मणः विधिसुतानां नारदादीनां व्योमकेशस्य हरस्य अब्धिपुत्र्याः लक्ष्म्याश्च मृग्यः अन्वेषणीयः अहं पाशे पशुरिव तव प्रेम्णि बद्धः अस्मि ॥ १२६ ॥

कस्ते तत्त्वं कलयतु न यद्वेदगर्भोऽपि वेद।
मन्तव्योऽसौ परिजनतया वल्लभस्येति तस्मै
वारं वारं तदनु दधिरे तेन दण्डप्रणामाः॥ १२७॥

सर्वाङ्गीनं पुलकमुदभूदश्रुमग्ने च दृष्टी
कण्ठो भग्नस्वर इव वचः पर्यवस्थानशून्यम्।
तस्यास्तस्याप्यजनि युगपद्यानकाले तदानीं
मुग्धा मूर्द्धन्यभवदुभयोरद्भुता पुष्पवृष्टिः॥ १२८॥

आमन्त्र्यैकस्तदनु सकलं घोषमुत्कण्ठमानः
सद्यो राधारमणचरणप्रेक्षणाय प्रतस्थे।

मातरिति। हे मातः! हे मातः! जय जय सर्वोत्कर्षेण वर्त्तस्वेत्यर्थः, वेदगर्भः विधिरपि यत् न वेद न जानाति, जगन्मोहनं कृष्णं मोहयन्त्यास्ते तव तत् तत्त्वं कः कलयतु? अवधारयतु? न कोऽपीत्यर्थः। असौ अहं वल्लभस्य कान्तस्य परिजनतया मन्तव्यः मान्य इति तेन उद्धवेन तदनु तदनन्तरं वारं वारं दण्डप्रणामाः दण्डवत् चरणे पतनानि दधिरे कृताः॥ १२७॥

सर्वाङ्गीनमिति। तदानीं यानकाले उद्धवयात्राकाले तस्याः राधायाः तस्यापि युगपत् समकालं सर्वाङ्गीनं सर्वाङ्गव्यापकं पुलकं रोमाञ्चः उदभूत् उद्भूतं, दृष्टी अश्रुमग्ने वाष्पपूर्णे। कण्ठः भग्नस्वर इव सगद्गदस्वर इत्यर्थः, वचः पर्यवस्थानशून्यम् अव्यवस्थितमित्यर्थः अजनि आसीदित्यर्थः शेषः। उभयोः मूर्द्धनि अद्भुता मुग्धा मनोहारिणी पुष्पवृष्टिः अभवत्॥ १२८॥

आमन्त्र्येति। तदनु तदनन्तरम् एकः उद्धवः उत्कण्ठमानः सन् सकलं घोषं गोपम् आमन्त्र्य सम्भाष्य सद्यः तत्क्षणात् राधारमणस्य चरणप्रेक्षणाय प्रतस्थे चलितः। परा अन्या राधा चिन्तामणिं कान्तामिव प्रेयसा प्रियतमेन सूक्तं सुभाषितं चिन्तयन्ती ध्यायन्ती

मग्नं चिन्तामणिमिव परा चिन्तयन्ती चिराय
प्रेयःसूक्तं वनभुवि घनानन्दमग्नावतस्थे ॥ १३८ ॥
नानारामप्रणयि-सुमनःसङ्गसौभाग्यभाजा
आद्यापाये सुरभिसमयस्थायिना माधवेन ।
राधाबन्धोरुपहृतमिति प्रेममाध्वीकमेतत्-
निर्विघ्नेन श्रवणपुटकैः पुण्यवन्तः पिबन्तु ॥ १४० ॥
विचारपारदृश्वानः क्षतं क्षुद्रधिया मया ।
करुणार्द्राः करिष्यन्ति शुद्धमुद्धवदूतकम् । १४१ ॥

इति तालितनगरनिवासिश्रीमाधवकवीन्द्रभट्टाचार्य्य-
विरचितमुद्धवदूतं खण्डकाव्यं सम्पूर्णम् ।

सती वनभुवि वृन्दावने घने सान्द्रे आनन्दे प्रियतमध्यानजनिते इति भावः मग्ना अवतस्थे स्थिता ॥ १३८ ॥

नानेति । आद्यापाये शीतर्त्तौरवसाने नानारामेषु विविधोद्यानेषु प्रणयिनां विकसतां सुमनसां सङ्गेन संसर्गेण यत् सौभाग्यम् आनन्दः तद्भाजा तच्छालिना विविधोद्यानपुष्पामोदिनेत्यर्थः यद्वा नाना बहवः ये रामप्रणयिनः रामभक्ताः सुमनसः विद्वांसः साधव इति यावत् तेषां सङ्गेन यत् सौभाग्यं ज्ञानलाभरूपं शुभादृष्टं तद्भाजा तत् प्राप्तवतेत्यर्थः सुरभिसमयस्थायिना वसन्तकालवर्त्तिना माधवेन तदाख्यकविना एतत् प्रेममाध्वीकं प्रेममधुरसस्पृष्टः सन्दर्भ इति यावत् राधाबन्धोः कृष्णस्य उपहृतम् उपहारीकृतम् उपढौकनत्वेन दत्तमित्यर्थः, पुण्यवन्तः जनाः निर्विघ्नेन अनायासेनेत्यर्थः श्रवणपुटकैः कर्णविवरैः पिबन्तु आस्वादयन्तु ॥ १४० ॥

विचारेति । विचारदृश्वानः सुविचारका इत्यर्थः करुणार्द्राः दयार्द्राः सन्तः क्षुद्रधिया मन्दबुद्धिना मया क्षतम् उद्धवदूतकं शुद्धं करिष्यन्ति । अनुष्टुब्वृत्तम् ॥ १४१ ॥

# चौरपञ्चाशिका ।



अद्यापि तां कनकचम्पकदामगौरीं
फुल्लारविन्दवदनां तनुलोमराजीम् ।
सुप्तोत्थितां मदनविह्वललालसाङ्गीं
विद्यां प्रमादगुणितामिव चिन्तयामि ॥ १ ॥
अद्यापि तां शशिमुखीं नवयौवनाढ्यां
पीनस्तनीं पुनरहं यदि गौरकान्तिम् ।

अद्यापीति । अद्यापि इदानीमपि मृत्युकालेऽपीत्यर्थः कनकचम्पकदामवत् काञ्चनचम्पकमालेव गौरी तां पक्षे कनकचम्पकं दीयते अस्यै इति कनकचम्पकदा ताम् अगौरीं कालीं फुल्लं विकसितम् अरविन्दमिव कमलमिव वदनं यस्यास्तथोक्तां तन्वी सूक्ष्मा लोमराजी यस्यास्तथाविधां सुप्तात् निद्रायाः उत्थिता तां पक्षे सुप्त इव सुप्तः शवः तस्मिन् उत्थिता तदुपरिस्थितेत्यर्थः तां मदनेन कामेन विह्वलं विवशं लालसं सतृष्णम् अङ्गं यस्याः तथोक्तां पक्षे मदनं विह्वलयति व्याकुलयति नाशयतीति यावत् इति मदनविह्वलः हरः तस्मिन् लालसं तृष्णम् अङ्गं यस्यास्तां प्रमादेन अनवधानतया गुणितां निर्णीतां ग्रथितामिति च पाठः । विद्यां विद्यामिव महाविद्यामिव विद्यां तदाख्यां राजकुमारीं चिन्तयामि स्मरामि । छन्दोऽस्मिन् वसन्ततिलकं वृत्तम् । सेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् । उपमालङ्कारः ॥ १ ॥

अद्यापीति । अद्यापि शशिमुखीं चन्द्रवदनां पक्षे शशी चन्द्रः

पश्यामि मन्मथशरानलपीडितानि
गात्राणि सम्प्रति करोमि सुशीतलानि ॥ २ ॥
अद्यापि तां यदि पुनः कमलायताक्षीं
पश्यामि पीवरपयोधरभारखिन्नाम्।
सम्पीड्य बाहुयुगलेन पिबामि वक्त्रम्
उन्मत्तवन्मधुकरः कमलं यथेष्टम् ॥ ३ ॥
अद्यापि तां निधुवनक्लमनिःसहाङ्गीम्
आपाण्डु गण्डपतितालककुन्तलालीम्।

मुखे लज्जया तदेकदेशे ललाटे यस्यास्तां नवयौवनाढ्यां नवयौवन-
वतीं पीनस्तनीं पीवरपयोधरां गौरकान्तिं गौरवर्णां पक्षे गौरे
गौरवर्णे हरे कान्तिः कामना अभिलाषः यस्याः तां यदि पुनः पश्या-
मि तदा सम्प्रति इदानीमेवेत्यर्थः तदा मन्मथस्य कामस्य शरानलेन
पीडितानि गात्राणि अङ्गानि सुशीतलानि करोमि। पक्षे व्याख्या-
याः प्रसन्नतालाभे अभिलषितस्य कामिनीसम्भोगस्य सिद्धिरिति भावः
॥ २ ॥

अद्यापीति। अद्यापि यदि पुनः कमले इव आयते विस्तृते
अक्षिणी नेत्रे यस्याः तां पीनयोः पीवरयोः पयोधरयोः स्तनयोः
भारेण खिन्नां तां पश्यामि, तदा बाहुयुगलेन भुजद्वयेन सम्पीड्य गाढ़-
मालिङ्ग्येति यावत् पक्षे सम्पीड्य संयोज्य भुजद्वयं योजयित्वेत्यर्थः
बद्धाञ्जलिर्भूत्वेति यावत् उन्मत्तवत् क्षिप्त इव मधुकरः कमलमिव
वक्त्रं वदनं यथेष्टं पिबामि चुम्बामीत्यर्थः पक्षे वाङ्मयं पश्यामी-
त्यर्थः। उपमालङ्कारः ॥ ३ ॥

अद्यापीति। अद्यापि निधुवनक्लमेन सुरतश्रमेण निःसहं
विवशम् अङ्गं यस्याः तथोक्ताम् आपाण्डुनि गण्डे कपोले पतितैः

प्रच्छन्नपापकृतमन्थरमावहन्तीं
कण्ठावसक्तमृदुबाहुलतां स्मरामि ॥ ४ ॥
अद्यापि तां सुरतजागरघूर्णमानां
तिर्य्यग्वलत्तरलतारकमावहन्तीम् ।
शृङ्गारसारकमलाकरराजहंसीं
व्रीडावनम्रवदनामुरसि स्मरामि ॥ ५ ॥
अद्यापि तां सुरतताण्डवसूत्रधारीं
पूर्णेन्दुसुन्दरमुखीं मदविह्वलाङ्गीम् ।

अलकैः चूर्णकुन्तलैः कुञ्चिते सङ्कोचं नीते अक्षिणी यस्याः तां पक्षे आपापिब्रूति पृथक् पदं प्रच्छन्नपापकृतमित्यस्य विशेषणम् । प्रच्छन्नं निभृतं यत् पापं कौमारे पुरुषसङ्गमजातमिति भावः तेन कृतं यस्याः तत् अन्तरं मनः पक्षे प्रच्छन्नेन गूढेन पापेन पापकार्य्येण वा मयाकृतं वापि निष्ठुरसुरतविक्रमं, अत्र त्वं कुलपालि रक्षभूतासि वे यत इत्थ कृपयेति भावः, कृतं विहितमिति यावत् मन्थरं मनः आवहन्तीं धारयन्तीं कण्ठे सदैवे इति भावः अवसक्ता लग्ना मृद्वी कोमला बाहुलता यस्याः तां पक्षे कण्ठे गले अवसक्ता मालारूपेण स्थिता मृदुः बाहुलता अधराणां भुजयष्टी यस्याः तां स्मरामि चिन्तयामि ॥ ४ ॥

अद्यापीति । अद्यापि सुरतजागरेण घूर्णमानां तिर्य्यक् कौटिल्येनेत्यर्थः वलन्तौ पतन्तौ मयि पक्षे हरे इति भावः तरला चञ्चला तारा यस्य तादृशम् अक्षियुग्मम् । आवहन्तीं शृङ्गारसारः आद्यरससार एव कमलाकरः सरोवरं तस्य राजहंसीं तत्र विचरन्तीमिति भावः व्रीडया लज्जया अवनम्रम् अवनतं वदनं यस्याः ताम् उरसि वक्षसि मम पक्षे हृदयेऽति भावः स्थितामिति शेषः । स्मरामि ॥ ५ ॥

अद्यापीति । सुरतमेव ताण्डवं नृत्यं तस्य सूत्रधारीं प्रवर्त्त-

तन्वीं विशालजघनां स्तनभारखिन्नां
व्यालोलकुन्तलकलापवतीं स्मरामि ॥ ६ ॥
अद्यापि तां मलयचन्दनचर्चिताङ्गीं
कस्तूरिकापरिमलेन विसर्पिगन्धाम् ।
बालेन्दुरेखपरिशीलितभालरेखां
मुग्धाभिरामनयनां शयने स्मरामि ॥ ७ ॥
अद्यापि तां निधुवने मधुपानपात्रीं
लीढाम्बरां कृशतनुं चपलायताक्षीम् ।

नटीमित्यर्थः पूर्णेन्दुवत् सुन्दरं मुखं यस्याः तां मदेन मद्यपानेन विह्वलं विवशम् अङ्गं यस्याः तां तन्वीं कृशाङ्गीं विशालजघनां स्थूलजघनां स्तनभारेण खिन्नां श्रान्तां व्यालोलानां विशृङ्खलेन चञ्चलानां कुन्तलानां कलापः समूहः तद्वतीं पक्षे मुक्तकेशीमित्यर्थः उभयत्र समानम् । तां स्मरामि ॥ ६ ॥

अद्यापीति । अद्यापि मलयेन सुप्रिष्टेन चन्दनेन चर्चितं लिप्तम् अङ्गं यस्याः तां कस्तूरिकायाः मृगनाभेः परिमलेन, विमर्दोत्थे परिमल इत्यमरः । विसर्पी विसरन् गन्धो यस्याः तां बालेन्दुरेखवत् अर्द्धचन्द्रवत् परिशीलिता अच्छा भालस्य ललाटस्य रेखा यस्याः तां पक्षे बालेन्दुरेखेन परिशीलिता अलङ्कृता भालरेखा यस्याः तथोक्ताम् । शयने शय्यायां पक्षे शेते इति शयनः शवः तत्र, मुग्धं सुन्दरं पक्षे सम्मूढम्, अभिरामं मनोहरं नयनं यस्याः तथोक्तां तां स्मरामि ॥ ७ ॥

अद्यापीति । निधुवने सुरते यत् मधुनः अधरामृतस्य पानं तस्य पात्रीम् आधारभूतां पक्षे निधुवने [illegible] विषये यत् मधु मद्यं तत् पिबन्तीति [illegible] पानपायिनामिति यावत्

काश्मीरपङ्कमृगनाभिकृताङ्गरागां
कर्पूरपूगपरिपूर्णमुखीं स्मरामि ॥ ८ ॥
अद्यापि तां श्रमपतन्मदिरापराग-
प्रस्वेदबिन्दुविततं वदनं प्रियायाः।
अन्ते स्मरामि रतिखेदविलोलनेत्रं
राहूपरागपरिमुक्तमिवेन्दुबिम्बम् ॥ ९ ॥
अद्यापि तन्मुखशशी परिवर्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या।

पार्श्वीं रचितोरीम्। लीढं स्पृष्टं न तु आच्छादितमिति भावः अम्बरं वसनं यया तां निधुवनकाले वसनस्य स्खलितत्वात् स्पृष्टमात्रवसना-मिति भावः पक्षे लीढं स्पृष्टम् अम्बरं गगनं यया तादृशीम् अत्युच्च-प्रदेशस्थामित्यर्थः कृशतनुं क्षीणाङ्गीं पक्षे कृशाः क्षीणाः तनवः शरी-राणि अनुरागाणामिति भावः यया ताम्। चपलायताक्षीं चञ्चल-विशालनेत्रां काश्मीरपङ्केन कुङ्कुमद्रवेण मृगनाभिः कस्तूरिका तया च कृतः अङ्गरागः यया तथोक्तां कर्पूरपूगेन कर्पूरयुक्तगुवाकेन परिपूर्णं भृत मुखं यस्याः तादृशीं तां स्मरामि ॥ ८ ॥

अद्यापीति। अद्यापि श्रमेण श्रान्त्या पतन् उद्गच्छन् यः मदिरायाः मद्यपानस्य अपरागः सम्यक् रागः तेन ये प्रस्वेदबिन्दवः घर्मवारिकणानिचयाः तैः विततं व्याप्तं रतिखेदेन सुरतश्रमेण विलोलनेत्रं चञ्चलनयनं तत् प्रियायाः विद्यायाः पक्षे आद्यावि-द्यायाः वदनं राहूपरागात् राहुग्रासात् परिमुक्तं निःसृतम् इन्दु-बिम्बमिव चन्द्रमण्डलमिव अन्ते मृत्युकाले स्मरामि। उभयत्र समानमेतत् ॥ ९ ॥

अद्यापीति। यया क्षितिपालपुत्र्या राजनन्दिन्या रात्रौ मयि

जीवेति मङ्गलवचः परिहृत्य कोपात्
कर्णे कृतं कनकपत्रमनालपन्त्या ॥ १० ॥
अद्यापि तत् कनककुण्डलघृष्टमास्यं
तस्याः स्मरामि विपरीतरताभियोगे।
आन्दोलनश्रमजलस्फुटसान्द्रबिन्दु-
मुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥ ११ ॥
अद्यापि तत्प्रणयभङ्गुरदृष्टिपातं
तस्याः स्मरामि रतिविभ्रमगात्रभङ्गम्।

क्षुतवति नासातः जलनिःसरणार्थं शब्दविशेषं कृतवतीत्यर्थः मयि कोपात् प्रणयकलहात् जीव इति मङ्गलवचः परिहृत्य अनालपन्त्या आलापमकुर्वत्या तया कर्णे कनकपत्रं जीवत्पतिसूचकमिति भावः कृतं दत्तं, कस्यापि क्षवथौ सन्निहितानां जीवेति वचनस्य विहितत्वात् तदवचने प्रत्यवाय इति प्रसिद्धिः। तस्याः स सुखदायी अद्यापि मे परिवर्त्तते सर्वतः दृश्यमान इव प्रस्फुरतीत्यर्थः। पक्षे क्षितिपालपुत्र्या पर्वतराजदुहित्रा कोपात् मत्कृतापराधजनितादिति भावः। कर्णे मदीये इति भावः कनकपत्रम् अलङ्कारविशेषः कृतम् अर्पितं कनकपत्रस्य माङ्गलिकत्वेन जीवेति वचनस्य प्रतिरूपत्वं बोध्यम् ॥१०॥

अद्यापीति। तस्याः प्रियायाः विपरीतरताभियोगे पुरुषायितव्यापारे कनककुण्डलाभ्यां घृष्टं घर्षणं नीतम् आन्दोलनादिति भावः आन्दोलनेन सम्यक् दोलनेन यः श्रमः तेन जलानां स्वेदवारीणामित्यर्थः स्फुटाः प्रकटाः सान्द्राः घनाः ये बिन्दवः कणाः ते एव मुक्ताफलानां प्रकराः निचयाः तैः विच्छुरितं व्याप्तं तत् आस्यं मुखं अद्यापि स्मरामि। रूपकमलङ्कारः॥ ११॥

अद्यापीति। अद्यापि तस्याः सः प्रणयः तत्प्रणयः तेन भङ्गुराः कुटिलाः दृष्टिपाताः यत्र तादृशं, वस्त्राञ्चलेन परिवर्ते परितो

वस्त्राञ्चलेन परिघर्षिपयोधरान्तं
दन्तच्छदं दशनखण्डनमण्डनञ्च ॥ १२ ॥
अद्याप्यशोकनवपल्लवरक्तहस्तां
मुक्ताफलप्रचयचुम्बितचूचुकाग्राम् ।
अन्तःस्मितोच्छ्वसितपाण्डुरगण्डदेशां
तां वल्लभां रहसि संवलितां स्मरामि ॥ १३ ॥
अद्यापि तत् कुसुमरेणुसुगन्धमिश्रं
न्यस्तं स्मरामि नखरक्षतलक्ष्म तस्याः ।
आकृष्टहेमरुचिराम्बरमुत्थिताया
लज्जावशात् करधृतं न कृतो व्रजन्त्याः ॥ १४ ॥

घर्षणं प्राप्तः पयोधरान्तः स्तनावकाशः यत्र तथोक्तं, रतिविभ्रमेण सुरतविलासविशेषेण गात्रभङ्गं, दशनेन यत् खण्डनं दंशनं तच्चिह्न-मित्यर्थः मण्डनं भूषणं यस्य तथाविधं दन्तच्छदम् अधरञ्च स्मरामि ॥१२॥

अद्यापीति । अशोकस्य नवपल्लववत् रक्तः हस्तो यस्याः तां, मुक्ताफलानां प्रचयेन हारेणेत्यर्थः चुम्बितं स्पृष्टं चूचुकाग्रं स्तनाग्रं यस्याः तां, चूचुकन्तु कुचाग्रं स्यादित्यमरः। अन्तःस्मितेन आन्तरमन्द-हासेन उच्छ्वसितः उत्फुल्लः पाण्डुरः विशदः गण्डदेशः यस्याः तथोक्तां, रहसि एकान्ते संवलितां संसक्तां पक्षे समागतां तां वल्लभां प्रियाम् अद्यापि स्मरामि ॥ १३ ॥

अद्यापीति । कुसुमानां रेणुभिः उपरिनिहितैरिति भावः सुगन्धेन मिश्रं युक्तं न्यस्तम् अर्पितं तस्याः तत् नखरक्षतस्य लक्ष्म चिह्नं तया उत्थितायाः न कृतो व्रजन्त्याः कुत्रापि अगच्छन्त्या इत्यर्थः दण्डवत् तिष्ठन्त्या इति यावत् आकृष्टं हेमरुचिरं सुवर्ण-मनोहरं कौसुम्भरागरञ्जितमिति भावः अम्बरं यस्मिन् तत् तथोक्तं लज्जावशात् करधृतं हस्तधारणम् अद्यापि स्मरामि ॥ १४ ॥

अद्यापि तां विधृतकज्जललोलनेत्रां
पृथ्वीप्रभिन्नकुसुमाकुलकेशपाशाम्।
सिन्दूरसंवलितमौक्तिकहारभाराम्
आबद्धहेमकटिकां रहसि स्मरामि॥ १५॥

अद्यापि तां धवलवेश्मनि रत्नदीप-
मालामयूखपटलैर्गलितान्धकारैः।
सुप्ताञ्च मे रहसि हास्यमुखीं प्रसन्नां
लज्जाभरार्द्रनयनां परिचिन्तयामि॥ १६॥

अद्यापि तां गलितबन्धनकेशपाशां
स्रस्तस्रजं स्मितसुधामधुराधरोष्ठीं
पीनोन्नतस्तनयुगोपरि चारु चुम्बन्-
मुक्तावलिं रहसि लोलदृशं स्मरामि॥ १७॥

अद्यापीति। विधृतं कज्जलं याभ्यां तादृशे लोले चञ्चले नेत्रे यस्याः तां, पृथ्व्यां भूमौ प्रभिन्नाः पतिताः कुसुमाकुलाः पुष्पाकीर्णाः केशपाशाः यस्याः तथोक्तां, सिन्दूरेण संवलितः संयुक्तः मौक्तिकहारस्य भारः यस्याः तां तथा आबद्धा परिहिता हेमकटिका काञ्चनकटि-भूषणमित्यर्थः यया तथाभूतां तां रहसि विजने स्मरामि॥ १५॥

अद्यापीति। गलिताः विनष्टाः अन्धकाराः येभ्यः तैः रत्नदीप-मालानां मयूखपटलैः किरणजालैः धवलवेश्मनि आलोकितभवने सुप्तां निद्रितां रहसि विजने मे मम प्रसन्नां हास्यमुखीं लज्जाभरेण आर्द्रे आकुले नयने यस्याः तथोक्ताञ्च अद्यापि परिचिन्तयामि॥१६॥

अद्यापीति। गलितं विश्लथं बन्धनं येषां तादृशाः केशपाशाः यस्याः तथोक्तां, स्रस्ता विच्युता स्रक् माल्यं यस्याः तां, स्मितसुधया मन्दहासामृतेन मधुरौ मनोहरौ अधरोष्ठौ यस्याः तथोक्तां, पीनोन्नत-स्तनयुगस्य उपरि चारु यथा तथा चुम्बन्ती पतन्ती मुक्तावलिः मुक्ता-

अद्याप्यहं विरहवह्निनिपीडिताङ्गीं
तन्वीं कुरङ्गनयनां सुरतैकपात्रीम्।
नानाविचित्रकृतमण्डनमावहन्तीं
तां राजहंसगमनां सुदतीं स्मरामि ॥ १८ ॥

अद्यापि तां विरहितां कुचभारनम्रां
मुक्ताकलापविमलीकृतकण्ठदेशाम्।
तां केलिमन्दिरगतां कुसुमायुधस्य
कान्तां स्मरामि रुचिरोज्ज्वलधूमकेतुम् ॥ १९ ॥

हारः यस्याः तथोक्तां, लोलदृशं चपलाक्षीं ताम् अद्यापि रहसि विजने स्मरामि ॥ १७ ॥

अद्यापीति। अद्यापि अहं विरहवह्निना विच्छेदानलेन निपीडितम् अङ्गं यस्याः तथोक्तां, तन्वीं कृशोदरीं, कुरङ्गनयनां मृगाक्षीं, सुरतस्य एकपात्रीम् एकमात्रावलम्बनभूतां पक्षे सुरता सुरसमूहः तस्याः एका अद्वितीया पात्री रक्षित्री तां, नानाविचित्रं यथा तथा कृतं यत् मण्डनं भूषणं तत् आवहन्तीं धारयन्तीं राजहंसस्येव गमनं यस्याः तथोक्तां मन्दगामिनीमित्यर्थः सुदतीं शोभनदशनां तां स्मरामि ॥ १८ ॥

अद्यापीति। विरहितां मम विरहार्त्तां पक्षे वि पक्षिवरवाहनम-व्ययं तद्रहितां केनाप्यपरिभवनीयामित्यर्थः, कुचयोः पयोधरयोर्भारेण नम्रां मुक्ताकलापेन मौक्तिकहारेण विमलीकृतः उज्ज्वलीकृतः कण्ठदेशः यस्याः तथाविधां कुसुमायुधस्य कामस्य केलिमन्दिरगतां क्रीडागृह-वर्त्तिनीं रुचिरः मनोज्ञः यः उज्ज्वलः शृङ्गारः शृङ्गारः शुचि-रुज्ज्वल इत्यमरः। तस्य धूमकेतुं ध्वजविशेषभूतां तां कान्ताम् अद्यापि स्मरामि ॥ १९ ॥

अद्यापि चाटुशतप्रोल्लसितस्मितन्तु
तस्याः स्मरामि सुरतक्लमविह्वलायाः।
अव्याजनिस्तनितकातरकाकुकण्ठ-
सङ्कीर्णवर्णरुचिरं वदनं प्रियायाः॥ २०॥
अद्यापि तां सुरतघूर्णनिमीलिताक्षीं
स्रस्ताङ्गयष्टिगलितां गुरुकेशनम्राम्।
शृङ्गारवारिकमलाम्बुजराजहंसीम्
जन्मान्तरे निधुवनेऽप्यनुचिन्तयामि॥ २१॥
अद्यापि तां प्रणयिनीं मृगशावकाक्षीं
पीयूषपूर्णकुचकुम्भयुगं वहन्तीम्।

अद्यापीति। अद्यापि सुरते यः क्लमः क्लान्तिः तेन विह्वला कातरा तथोक्तायाः तस्याः प्रियायाः चाटुशतेन मत्कृतेन अनुनयवचननिचयेन प्रोल्लसितम् उद्भासितं स्मितं यस्मिन् तत् अव्याजम् अकपटं यथा तथा निस्तनिता उच्चरिता कातरकाकुः कातर्य्यव्यञ्जकः स्वरविशेषः यस्मात् तादृशे कण्ठे सङ्कीर्णैः वर्णैः अक्षरैः रुचिरं मनोहरं वदनं स्मरामि॥ २०॥

अद्यापीति। अद्यापि सुरते यः घूर्णः घूर्णनं निमीलितञ्च ययोः तादृशे अक्षिणी यस्याः तथोक्तां, स्रस्तायां शिथिलितायां सुरतश्रमादिति भावः अङ्गयष्ट्यां गलिताः पतिताः अगुरवः न सन्ति गुरवो येभ्यः तथाभूताः दीर्घा इति यावत् ये केशाः तैः नम्रा अवनता तां, शृङ्गारा एव वारीणि तेषु कमला लक्ष्मीः शोभा येषां तथाभूतानि यानि अम्बुजानि पद्मानि तेषु राजहंसीं विहारिणीमिति भावः तां जन्मान्तरे निधुवनेऽपि सुरतेऽपि अनुचिन्तयामि स्मरामि॥ २१॥

अद्यापीति। अद्यापि प्रणयिनीं प्रेमवतीं मृगशावकाक्षीं

पश्याम्यहं यदि पुनर्दिवसावसाने
स्वर्गापवर्गनरराज्यसुखं त्यजामि ॥ २२ ॥

अद्यापि तां स्तिमितवस्त्रमिवावलग्नां
प्रौढप्रतापमदनानलतप्तदेहाम् ।
बालां मदेकशरणामनुकम्पनीयां
प्राणाधिकां क्षणमहं न हि विस्मरामि ॥ २३ ॥

अद्यापि तां क्षितितले वरकामिनीनां
सर्वाङ्गसुन्दरतया प्रथमैकरेखाम् ।
संसारनाटकरसोत्तमरत्नपात्रीं
कान्तां स्मरामि कुसुमायुधबाणखिन्नाम् ॥ २४ ॥

मृगपोतनयनां पीयूषपूर्णम् अमृतपूर्णं कुचकुम्भयुगं वहन्तीं तां यदि पुनरहं दिवसावसाने सन्ध्यायां पश्यामि तदा स्वर्गस्य अपवर्गस्य मुक्तेः नरराज्यस्य नराधिपत्यस्य च सुखं त्यजामि तृणाय मन्ये इति भावः ॥ २२ ॥

अद्यापीति । अद्यापि अहं स्तिमितवस्त्रमिव आर्द्रवसनमिव अवलग्ना अङ्गसंगता तां, प्रौढः उत्कटः प्रतापो यस्य तादृशो यः मदनानलः तेन तप्तदेहां सन्तप्तशरीरां, मदेकशरणाम् अहमेव एकम् अद्वितीयं शरणम् आश्रयः यस्याः ताम् अतएव अनुकम्पनीयाम् अनुग्राह्यां प्राणाधिकां तां बालां क्षणमपि न हि नैव विस्मरामि ॥ २३ ॥

अद्यापीति । सर्वाङ्गसुन्दरतया क्षितितले पृथिव्यां वरकामिनीनाम् उत्तमाङ्गनानां मध्ये प्रथमा एका अद्वितीया रेखा यस्यास्ताम् उत्तमाङ्गनागणनायां यस्याः नाम्नि प्रथमा रेखा पात्यते तामिति भावः संसार एव नाटकं तस्य रसः स्वाद एव यत् उत्तमं रत्नं तस्य

अद्यापि तां प्रथमतो वरसुन्दरीं मे
स्नेहैकपात्रघटितावनिनाथपुत्रीम् ।
हे हे जना मम वियोगहुताशतापं
सोढुं न शक्यत इति प्रतिचिन्तयामि ॥ २५ ॥

अद्यापि विस्मयकरी त्रिदशान् विहाय
बुद्धिर्बलाच्चलति तत् किमहं करोमि ।
जानन्नपि प्रतिमुहूर्तमिवान्तकाले
दृष्टा तु वल्लभतरेति ममातिधीराः ! ॥ २६ ॥

अद्यापि तां गमनमित्युदितं मदीयं
श्रुत्वैव भीतहरिणीशिशुचञ्चलाक्षीम् ।
वाचस्खलद्विगलदश्रुकणाकुलाक्षीं
सञ्चिन्तयामि गुरुशोकविनम्रवक्त्राम् ॥ २७ ॥

पात्रीम् आधारभूतां कुसुमायुधस्य कामस्य बाणेन क्षिप्तां विद्धां व्यथितामिति यावत् तां कान्तां स्मरामि ॥ २४ ॥

अद्यापीति । अद्यापि प्रथमतः अग्रतः वरसुन्दरीं स्नेह एव प्रणय एव एकं पात्रम् आधारविशेषः निर्माणावलम्बनविशेषः तेन घटिता निर्मिता या अवनिनाथस्य राज्ञः पुत्री तां हे हे जनाः ! मम वियोगहुताशस्य विच्छेदानलस्य तापं सोढुं न शक्यते अनयेति शेषः इति हेतोः प्रतिचिन्तयामि विशेषेण भावयामि ॥ २५ ॥

अद्यापीति । हे अतिधीराः ! मम विस्मयकरी आश्चर्यमन्यमाना बुद्धिः अन्तकाले त्रिदशान् देवान् विहाय परित्यज्य देवतास्मरणं त्यक्त्वेत्यर्थः दृष्टा कापिना तु किन्तु वल्लभतरा अतिप्रीतिदायिनीति अद्यापि प्रतिमुहूर्त्तं प्रतिक्षणं बलात् चलति तां प्रति धावति तत् जानन्नपि किम् अहं करोमि ॥ २६ ॥

अद्यापीति । अद्यापि मदीयं गमनम् उदितं मया गम्यते

अद्यापि वासगृहतो मयि नीयमाने
दुर्वारभीषणकरैर्यमदूतकल्पैः ।
किं किं तया बहुविधं न कृतं मदर्थे
कर्तुं न पार्यत इति व्यथते मनो मे ॥ २८ ॥

अद्यापि तां क्षणवियोगवियोगमग्नां
शङ्के पुनर्बहुतया भृतशोकधाराम् ।
मज्जीवधारणकरीं मदनालसाङ्गीं
किं ब्रह्मकेशवहरैः सुदतीं स्मरामि ॥ २९ ॥

इति उदितम् उक्तं श्रुत्वैव भीतः यः हरिणशिशुः मृगशावकः तस्येव चञ्चले कातरे अक्षिणी यस्याः तथोक्तां, वाष्पैः स्रवद्भिः विगलद्भिश्च अम्बुकणैः वाष्पबिन्दुभिः आकुले अक्षिणी यस्याः तथाविधां, गुरुणा दुर्भरेण शोकेन विनम्रं विनतं वक्त्रं वदनं यस्याः तादृशीं तां सञ्चिन्तयामि ॥ २७ ॥

अद्यापीति । दुर्वाराः वारयितुमशक्याः भीषणकराः घोरकरा(?)स्ते यमदूतकल्पैः यमकिङ्करसदृशैः जनैरिति शेषः वासगृहतः शयनमन्दिरात् मयि नीयमाने गृह्यमाणे सति तया मदर्थं मम रक्षार्थं किं किं बहुविधं न कृतम् ? कर्तुं न पार्यते न शक्यते च इति हेतोःअद्यापि मे मम मनः व्यथते क्लिश्यति ॥ २८ ॥

अद्यापीति । मम जीवस्य जीवनस्य धारणकरीं मत्प्राणदामित्यर्थः मिलनेनेति भावः, मदनेन कामेन अलसम् अङ्गं यस्याः तादृशीं सुदतीं शोभनदशनां तां पुनः किन्तु क्षणवियोगे क्षणिकविच्छेदे वियोगे दीर्घविच्छेदे इव मग्ना ताम् अल्पवियोगं बहुमन्यमानामिति भावः बहुतया बाहुल्येन भृता अनुभूता शोकधारा शोकपरम्परा यया तथोक्ताम् अद्यापि शङ्के सम्भावयामि स्मरामि च ब्रह्मकेशवहरैः स्मृतैरिति शेषः किं न किमपि प्रयोजनमित्यर्थः ॥ २९ ॥

अद्यापि तां चलचकोरविलोलनेत्रां
शीतांशुमण्डलमुखीं कुटिलाग्रकेशाम् ।
मत्तेभकुम्भसदृशस्तनभारनम्रां
बन्धूकपुष्पसदृशौष्ठपुटां स्मरामि ॥ १० ॥
अद्यापि मे निशि दिवा हृदयं दुनोति
पूर्णेन्दुसुन्दरमुखं मम वल्लभायाः ।
लावण्यनिर्जितमनोहरकामदर्पं
भूयः पुनः प्रतिमुहुर्न विलोक्यते यत् ॥ २१ ॥
अद्यापि तामरहितां मनसापि नित्यं
सञ्चिन्तयामि सततं मम जीवितेशाम् ।
लावण्यभोगनवयौवनभारसारां
जन्मान्तरेऽपि मम सैव गतिर्यथा स्यात् ॥ २२ ॥

अद्यापीति । चलचकोरस्येव विलोले नेत्रे यस्याः तां शीतांशुमण्डलमुखीं चन्द्रमुखीं, कुटिलम् अग्रं येषां तादृशाः केशाः यस्याः तां, मत्तेभकुम्भस्य मत्तहस्तिकुम्भस्य सदृशौ यौ स्तनौ तयोः भारेण नम्रां तां, बन्धूकपुष्पेण सदृशम् ओष्ठपुटं यस्याः तथाभूतां ताम् अद्यापि स्मरामि ॥ २० ॥

अद्यापीति । भूयः यथेष्टं पुनः प्रतिमुहुः प्रतिक्षणमित्यर्थः यत् यस्मात् न विलोक्यते न दृश्यते अतः मम वल्लभायाः प्रियायाः लावण्येन निर्जितः मनोहरः कामस्य दर्पः येन तादृशं पूर्णेन्दुसुन्दरमुखं निशि रात्रौ दिवा दिवसे च मे मम हृदयं दुनोति तापयति ॥ २१ ॥

अद्यापीति । नित्यं सततं मनसा अरहिताम् अत्यक्तामपि मनसि स्थितामपीत्यर्थः, लावण्यस्य भोगः स्थितिर्यस्मिन् तादृशं यत्

अद्यापि तां मलयपङ्कजगन्धलुब्ध-
भ्राम्यद्द्विरेफचयचुम्बितगण्डदेशाम् ।
केशावधूतकरपल्लवकङ्कणान्तां
तां नो दुनोति नियतं सुरतं मदीयम् ? ॥ २३ ॥

अद्यापि सा नखपदं स्तनमण्डलेषु
दत्तं मयैव मधुपानविमोहितेन ।
उद्भिन्नरोमपुलकैर्बहुभिः समन्तात्
जागर्ति रक्षति विलोकयति प्रयत्नात् ॥ २४ ॥

अद्यापि या शशिमुखी न कृतागसं मां
सोच्चैर्वचः प्रतिददाति यदैव नक्तम् ।

नवयौवनं तस्य भारः आतिशय्यं सारो यस्याः तां मम जीवितेशां जीवितेश्वरीं जन्मान्तरेऽपि सैव प्राणेश्वरीव यथा मम गतिः स्यात् तथा सततं संचिन्तयामि ॥ २२ ॥

अद्यापीति । मलयपङ्कात् चन्दनरसात् जायते इति तथोक्तः यो गन्धः तत्र लुब्धानाम् अतएव भ्राम्यतां समन्ततो विचरतां द्विरेफाणां भ्रमराणां चयैः समूहैः चुम्बितः दष्टः गण्डदेशः यस्याः तथोक्ताम् अतएव क्रोधेन तज्जनितेनेति भावः अवधूतेन सञ्चालितेन करपल्लवकङ्कणेन कान्तां रम्यां तां तत् मदीयं सुरतम् अद्यापि नियतं नो दुनोति ? न तापयति ? अपि तु तापयत्येव ॥ २३ ॥

अद्यापीति । अद्यापि सा मधुपानविमोहितेन मद्यपानविमुग्धेन मयैव स्तनमण्डलेषु दत्तं नखपदं नखक्षतचिह्नं समन्तात् सर्वतः बहुभिः उद्भिन्नैः रोमपुलकैः रोमाञ्चैः सहेति शेषः जागर्त्ति तिष्ठति, तत् प्रयत्नात् रक्षति विलोकयति पश्यति च ॥ २४ ॥

अद्यापीति । या सा शशिमुखी चन्द्रवदना उच्चैः अत्यन्तं कृता-

चुम्बामि रोदिमि भृशं पतितोऽस्मि पादे
दासस्तव प्रियतमे! भज मां स्मरामि ॥ २५ ॥
अद्यापि धावति मनः किमहं करोमि
सार्धं सखीभिरभिवासगृहेषु कान्ते!।
कान्तासुगीतपरिहासविचित्रवाद्यैः
क्रीड़ासुखैरिह तु यातु मदीयकालः ॥ २६ ॥
अद्यापि तां न खलु वेद्मि किमीशपत्नी
सा वा शची सुरपतेरथ कृष्णलक्ष्मीः।
धात्रैव किं त्रिजगतां परिमोहनाय
सृष्टा कुले युवतिराजिदिदृक्षयेव ॥ २७ ॥

यत्र कृतापराधं मां नक्तं रात्रौ यदा एव वचः न प्रतिददासि प्रतिवक्षि, तदैव अहं चुम्बामि चुम्बनार्थं यत्नं करोमीति भावः भृशं रोदिमि, हे प्रियतमे! पादे चरणे पतितः अस्मि, तव दासः अहं, मां भज इत्येवम् अद्यापि स्मरामि ॥ २५ ॥

अद्यापीति। हे कान्ते! अद्यापि मनः धावति त्वां प्रतीति शेषः, अहं किं करोमि, अधिवासगृहेषु शयनमन्दिरेषु सखीभिः सार्द्धं कान्तायाः प्रियायाः सुगीतं शोभनं सङ्गीतं परिहासः विचित्रं वाद्यञ्च तैः क्रीड़ासुखैः क्रीड़ानन्दकरैः इह संसारे मदीयकालः यातु गच्छतु ॥ २६ ॥

अद्यापीति। अद्यापि ताम् ईशपत्नी गौरी किमियं? वा सुरपतेरिन्द्रस्य शची इयं? अथवा कृष्णपत्नी लक्ष्मीरियं? वा त्रिजगतां परिमोहनाय युवतिराजिदिदृक्षयेव युवतिनिचयसौन्दर्य्यदिदृक्षयेवेति भावः कुले अस्मद्वंशे इति भावः धात्रा सृष्टा किम्? इति न खलु वेद्मि नावधारयामि ॥ २७ ॥

अद्यापि तां जगति वर्णयितुं न कोऽपि
शक्नोत्यदृष्टसदृशप्रतिरूपलक्ष्मीम्।
दृष्टं तया तु सदृशं खलु तेन रूपं
शक्तो भवेदपि स एव परो न चान्यः ॥ ३८ ॥
अद्यापि निर्मलशरच्छशिगौरकान्ति-
चेतो मुनेरपि हरेत् किमुतास्मदीयम्।
वक्त्रं सुधामयमहं यदि तत् प्रपद्ये
चुम्बामि चाप्यविरतं व्यथते न चेतः ॥ ३९ ॥
अद्यापि ते प्रतिमुहुः प्रतिभाव्यमाना
चेतो हरन्ति हरिणीशिशुलोचनायाः।
अन्तर्निमग्नमधुपाकुलकुन्दवृन्द-
सन्दर्भसुन्दररुचो नयनार्द्धपाताः ॥ ४० ॥

अद्यापीति। अद्यापि जगति कोऽपि अदृष्टं सदृशं प्रतिरूपम् उपमानमित्यर्थः यस्याः तथोक्ता या लक्ष्मीः तां तां वर्णयितुं न शक्नोति, तु किन्तु येन तथा कान्तया सदृशं रूपं दृष्टं स एव परं केवलं शक्तो भवेत् वर्णयितुमिति शेषः, अन्यः अपरः न च वर्णयितुं शक्त इति शेषः ॥ ३८ ॥

अद्यापीति। निर्मलः अकलङ्कः यः शरच्छशी शरत्कालीन-चन्द्रः तद्वत् गौरकान्तिः समुज्ज्वलकान्तिः सा मुनेरपि चेतः चित्तं हरेत् अस्मदीयं किमुत? किं वक्तव्यमिति भावः। अद्यापि सुधा-मयम् अमृतपूर्णं तत् वक्त्रं वदनम् अहं यदि प्रपद्ये प्राप्नोमि, तदा अविरतं चुम्बामि, चेतश्च मे न व्यथते न तप्यते ॥ ३९ ॥

अद्यापीति। प्रतिमुहुः प्रतिक्षणं प्रतिभाव्यमानाः चिन्त्यमानाः हरिणीशिशुलोचनायाः मृगशावाक्ष्याः तस्याः ते अन्तर्निमग्नेन अन्तःस्थितेन मधुपेन भ्रमरेण आकुलं यत् कुन्दवृन्दं कुन्दपुष्पनिकरः

अद्यापि तत्कमलरेणुसुगन्धिगन्धं
तत्प्रेमवारि मकरध्वजतापहारि।
प्राप्नोम्यहं यदि पुनः सुरतैकतीर्थं
प्राणान् त्यजामि नियतं पुनराप्तिहेतोः ॥ ४१ ॥

अद्यापि सा यदि पुनर्नलिनीवनान्ते
रोमाञ्चवीचिविलसच्चपलाङ्गयष्टिः।
कादम्बकेशररुचः कणमात्रसङ्गात्
किञ्चित् क्लमं श्लथयति प्रियराजहंसी ॥ ४२ ॥

तत्सन्दर्भाः ततमहद्भ्यः अतएव सुन्दर्य्यः मनोहारिण्यः रुचः कान्तयः येषां तादृशाः नयनार्द्धपाताः कटाक्षविक्षेपाः अद्यापि मे मम चेतः चित्तं हरन्ति ॥ ४० ॥

अद्यापीति। अद्यापि कमलरेणुः पद्मपरागः तद्वत् सुगन्धिः शोभन इत्यर्थः गन्धो यस्य तादृशं मकरध्वजतापहारि मदनसन्तापहरं सुरतमेव एकम् अद्वितीयं तीर्थम् अवतरणस्थानं यस्य तथाभूतं तत् तस्याः कान्तायाः प्रेमवारि प्रणयसलिलं यदि पुनरहं प्राप्नोमि तदा नियतं पुनराप्तिहेतोः पुनर्लाभाय जन्मान्तरे इति भावः प्राणान् त्यजामि ॥ ४१ ॥

अद्यापीति। सा प्रियराजहंसी यदि पुनः नलिनीवनान्ते पद्मिनीवनसीमायां रोमाञ्च एव वीचयस्तरङ्गाः तैः विलसन्ती विहरन्ती चपला अङ्गयष्टिः यस्याः तथोक्ता सती कादम्बाः कदम्बसम्बन्धिनः ये केशराः किञ्जल्काः तेषां रुचः कान्तेः कणमात्रसङ्गात् किञ्चिन्मात्रसम्पर्कात् किञ्चित् ईषत् क्लमं क्लान्तिं सन्तापमित्यर्थः ममेति शेषः श्लथयति नाशयति तदाहं कृतार्थो भवेयमिति भावः ॥ ४२ ॥

अद्यापि तां नृपतिशेखरराजकन्यां
सम्पूर्णयौवनमदालसभङ्गगात्रीम्।
गन्धर्वयक्षसुरकिन्नरराजकन्यां
स्वर्गादिमां निपतितामिव चिन्तयामि॥ ४३

अद्यापि तत्सुरतकेलिनिबद्धबुद्धि-
रङ्गोपबन्धपतितो नृप ! सन्नहस्तः।
दन्तौष्ठपीड़ननखक्षतरक्तसिक्त-
स्तस्याः स्मरामि रतिबन्धुरगात्रयष्टिम्॥ ४४॥

अद्यापि तां निजवपुःकृतवेदिमध्यां
मत्सङ्गसम्मितसुधां स्तनभारनम्राम्।

अद्यापीति। अद्यापि सम्पूर्णयौवनमदेन अलसभङ्गः यस्य तादृशं गात्रं यस्याः तथोक्तां तामिमां नृपतिशेखरराजस्य राजाधिराजशिरोमणेरित्यर्थः कन्यां स्वर्गात् निपतितां गन्धर्वयक्षसुरकिन्नरराजकन्यामिव गन्धर्वकन्यामिव यक्षकन्यामिव देवकन्यामिव किन्नरराजकन्यामिव चिन्तयामि स्मरामि॥ ४३॥

अद्यापीति। हे नृप ! तस्याः सुरतकेलौ निबद्धा स्थिता बुद्धिर्यस्य तथोक्तः, अङ्गानाम् उपबन्धेन सम्यक् बन्धनेन पतितः भूमौ निपतितः अहं तथा सन्नौ अवसादं गतौ सन्दराहितौ इति भावः हस्तौ यस्य तादृशः, दन्तेन यत् ओष्ठपीड़नं नखक्षतञ्च तस्मात् यत् रक्तं तेन सिक्तोऽहं रत्या अनुरागेण सुरतेन वा बन्धुरा विवशा गात्रयष्टिः अङ्गयष्टिः यस्याः ताम् अद्यापि स्मरामि॥ ४४॥

अद्यापीति। निजवपुः स्वशरीरमेव कृतं वेदिमध्यं परिष्कृतभूमिमध्यं मदधिष्ठानार्थमिति भावः यया तथोक्तां, वेदिः परिष्कृता

नानाविचित्रकृतमण्डनमण्डिताङ्गीं
सुप्तोत्थितां निशि दिवा न हि विस्मरामि ॥ ४५ ॥
अद्यापि तां कनककान्तिमदालसाङ्गीं
व्रीडोत्सुकाभिजनभीषणवेपमानाम् ।
अङ्गाङ्गसङ्गपरिजृम्भितमोहभङ्गि-
सञ्जीवनौषधमिव प्रमदां स्मरामि ॥ ४६ ॥
अद्यापि तां नववधूसुरताभियोगे
सम्पूर्णकेलिविधिना रचितां कदाचित् ।
पूर्णेन्दुसुन्दरमुखीं हरिणायताक्षीं
उन्निद्रकोकनदपत्रनखीं स्मरामि ॥ ४७ ॥

भूमिरित्यमरः । मम सङ्गेन सङ्गत्या सम्मिता समीकृता सुधा अमृतं यया तां स्तनभारेण नम्रां अवनतां नाना विविधं विचित्रं चारु कृतं यत् मण्डनं भूषणं तेन मण्डितम् अलङ्कृतम् अङ्गं यस्याः तादृशीं सुप्तोत्थितां शयनादुत्थितां तां निशि रात्रौ दिवा च न हि नैव विस्मरामि ॥ ४५ ॥

अद्यापीति । कनककान्तिः काञ्चनप्रभा युतं युतं मदेन मद्यपानेन अलसमङ्गं यस्या तां व्रीडोत्सुका विहारार्थिनी किन्तु अभिजनानाम् अभितः समन्तात् जनानां भीषणैः भयप्रदर्शनैः वेपमाना कम्पमाना च ताम् अङ्गाङ्गसङ्गेन प्रत्यङ्गसंसर्गेण तस्या इति भावः परिजृम्भिता आविर्भूता इति यावत् मोहभङ्गिः मोहविन्यासः यस्य तयोक्तः अहं तां प्रमदां कान्तां मम जीवनौषधमिव स्मरामि ॥ ४६ ॥

अद्यापीति । नववधूनां यत् सुरतं तन्निमित्तम् अभियोगः रागः समीपे आवेदनव्यापारः तस्मिन् सम्पूर्णः केलिः विहारः आनन्दः यस्य तादृशः यो विधिः क्रमः तेन कदाचित् रचि तां

अद्यापि तद्विकसिताम्बुजगौरमध्यं
गोरोचनातिलकविन्दुकृतैकदेशम् ।
ईषन्मदालसविघूर्णितदृष्टिपातं
कान्तामुखं नृप ! मया सह गच्छतीव ॥ ४८ ॥

अद्याप्यहं नववधूसुरताभियोगं
शक्नोमि नान्यविधिना रचितुं कदाचित् ।
तद्भ्रातरो ! मरणमेव हि दुःखशान्तौ
विज्ञापयामि भवति त्वरितं सुनीतिः ॥ ४९ ॥

धर्षितां पूर्णेन्दुसुन्दरमुखीं हरिणायताक्षीं मृगायतलोचनाम् उन्निद्राणि विकसितानि यानि कोकनदपत्राणि रक्तोत्पलदलाः तद्वत् नखाः यस्याः तथाविधां ताम् अद्यापि स्मरामि ॥ ४७ ॥

अद्यापीति । हे सखि ! अद्यापि विकसितं यत् अम्बुजं पद्मं तद्वत् गौरं मध्यम् आयतनमित्यर्थः यस्य तादृशं गोरचनायाः यत् तिलकं तस्य विन्दुना कृतः अलङ्कृत इत्यर्थः एकदेशः यस्य तथोक्तम् ईषत् मदेन अलसः विघूर्णितश्च दृष्टिपातो यस्य तथाभूतं तत् कान्तामुखं मया सह गच्छतीव यत्राहं गच्छामि तत्रैव चलतीव ॥ ४८ ॥

अद्यापीति । अद्यापि अहं कदाचित् नववध्वाः नवया इति भावः सुरताभियोगं सुरतव्यापारम् अन्यविधिना अन्येन विधानेन उपायेनेति यावत् रचितुं वक्तुं न शक्नोमि, हे भ्रातरः ! तत् तस्मात् दुःखशान्तौ सन्तापनिवृत्तौ त्वरितं सत्वरं मरणमेव नान्यदित्येवकारार्थः । सुनीतिः सुष्ठु नीतिः भवति इति विज्ञापयामि युष्मानिति शेषः तत् सत्वरं यथा मृत्युः स्यात् तथा विधीयतामिति भावः । दृष्टान्तोक्तिरियम् ॥ ४९ ॥

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्त्ति धरणीं खलु पृष्ठकेन ।
अम्भोनिधिर्वहति दुःसहवाडवाग्निं
अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ५० ॥

चोरकविकृता चौरपञ्चाशिका समाप्ता ।

---

काव्यसंग्रहस्य प्रथमोभागः सम्पूर्णः ।

अद्यापीति । हरः शम्भुः अद्यापि कालकूटं हलाहलं न किल उज्झति नैव त्यजति नैवोद्गिरतीत्यर्थः । कूर्मः पृष्ठकेन धरणीं पृथ्वीं बिभर्त्ति खलु धारयत्येव, अम्भोनिधिः दुःसहवाडवाग्निं दुःसहं वाडवानलं वहति धारयति । तथाहि सुकृतिनः पुण्यवन्तः महान्त इति यावत् अङ्गीकृतं परिपालयन्ति रक्षन्ति न तु त्यजन्तीति भावः । तथाचाहं राजसुतां मरणेऽपि न त्यजामीति भावः ॥ ५० ॥

---

इति बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता काव्यसंग्रह-
प्रथमभागव्याख्या समाप्ता ।